NOTE.

**Pages 1–384** edited by Paṇḍita Vinoda Vihari Bhaṭṭācāryy

**Pages 385–748** edited, and indexes prepared, by MM Sadāśiva Miśra.

# नित्याचारप्रदीपे द्वितीयखण्डस्य

## सूचीपत्रम् ।


अथ द्वितीयभागलक्षणम् ... १
अथातोऽध्ययनाङ्गानि ... १५
अथ स्वाध्यायविधिर्ब्राह्मणानाम् १९
अथानध्यायाः .. २३
अथाध्ययनक्रमः ... ४१
अथोपाकर्म्म ... ४५
अथाध्ययनम् ... ५१
अथ विचारो नाम
द्वितीयो वेदाभ्यासः ... ५३
अथाभ्यासे तृतीयो वेदाभ्यासः ५९
अथ जपरूपश्चतुर्थो वेदा-
भ्यासस्तृतीयभागे कर्त्तव्यः ६०
अथ गायत्रीजपः ... ६२
अथातः काम्यहोमाः ... ६८
अथ गायत्रीन्यासः ... ६९
व्याहृतिन्यासः ... ७०
गायत्र्यक्षरन्यासः ... ७०
अथ शिरमन्त्रन्यासः ... ७०
अथाक्षरदेवताः ... ७१
अथ रक्षार्थं विद्याङ्गानि ७१
अथ जपधर्म्माः ... ७३
अथानेकदिवससाध्ये-
जपे आहारनियमः ... ७६
होमश्च ... ८१
अथ यथेष्टकरण-
मित्यादिप्रयोगविधिः ८३
ऐहिकामुष्मिकसर्व्वकामे-
प्सूनां त्र्यम्बकमन्त्रजपः १००
अथास्य होमविधिः ... १०४
अथ काम्यानि ... १०६
अथ रुद्रजपविधिः ... १११
अथ ऋष्यादिन्यासः ... ११३
अथ रोगशान्तये जपाः १३९
अथ सर्व्वरोगनाशाय
घोषशान्तिः ... १५३
अथ तैत्तिरीयाणां
घोषशान्तिः ... १५४
अथ महासौरशान्तिः १५५
विष्णुधर्म्मे विष्णुपञ्जरस्तोत्रम् १६५
रोगार्त्तेन नामत्रयजपः कार्य्यः १६८
सर्व्वव्याधिसाधारणीं
पूजामाह ... १७२
रोगशान्तये दानानि ... १७७
अथासाध्यसर्व्वरोगसाधारण-
प्रतिमादानम् ... १८०
वायुपुराणे सर्व्वरोगहर-
दक्षिणामूर्त्तिदानम् ... १८२
अथ ज्वरहराणि ... १८८
सर्व्वज्वरहरकुम्भदानम् ... १८८
अथ ज्वरतर्पणम् ... १८९
अथ ब्रह्मपुराणोक्तज्वरबलिः १९१
अथातीसारहरम् ... १९५

अथ ग्रहणीरोगे ... १९६
अर्शोरोगहरम् ... १९७
गुदरोगहरम् ... १९८
श्वासरोगे ... १९८
क्षयरोगहराणि ... २००
शूलरोगे ... २०२
अवच्छिशूलहरम् ... २०३
पाण्डुरोगे ... २०५
शीतोष्णज्वरगुददाहे ... २०६
अन्तर्दाहक्रिमिहरनारायणदानम् २०६
वातरोगहराणि ... २०७
उन्मादे ... २०७
धनुर्वातहरम् ... २०८
पक्षवातहरम् ... २०८
वातहरम्दगदानम् ... २०९
रक्तवातः ... २०९
अथ रक्तवातहराणि ... २१०
वातपित्तहरम् ... २१०
रक्तपित्तहरम् ... २११
अथ शोथहरम् ... २११
अपस्मारे ... २११
व्रणहराणि ... २१२
शिरोरोगे ... २१४
अन्धत्वहरम् ... २१७
विविधरोगे ... २१९
उदरव्याधौ ... २२१
मूत्रव्याधौ ... २२१
प्रमेहे ... २२२
मूत्रमेहे ... २२२
वातप्रमेहः, मधुमेहः,
लिङ्गव्याधिश्च ... २२३
पादरोगे ... २२[illegible]
चर्मरोगे ... २२[illegible]
कामलारोगे ... २२[illegible]
कुष्ठरोगे ... २२[illegible]
अपुष्पवतीत्वहरम् ... २३[illegible]
गर्भस्रावे ... २३[illegible]
योनिस्रावे ... २३[illegible]
स्तन्यस्रावे ... २३[illegible]
अर्बुदरोगे ... २३[illegible]
प्रदरे ... २३[illegible]
मेदवृद्धौ ... २३[illegible]
मृतभार्य्यत्वे ... २३[illegible]
मृतवत्सत्वे ... २३[illegible]
विविधविपाकः ... २३५
पुण्डरीकरोगे ... २३६
अथ ब्रह्मराक्षसत्वहरम् २३[illegible]
अथाध्यापनरूपः पञ्चमो-
वेदाभ्यासः ... २३[illegible]
अथ तृतीयभागकृत्यम् ... २४[illegible]
अथायाचितम् ... २६[illegible]
अथ शूद्रप्रतिग्रहः ... २७[illegible]
अथ देशविशेषेऽग्राह्याणि २८५
प्रतिग्रहविधिः ... २९[illegible]
अथ द्रव्यविशेषेण निषिद्धेभ्यो-
ऽपि प्रतिग्रहानुज्ञा ... २९[illegible]
अध्यापनप्रकरणम् ... ३०[illegible]
याज्यप्रकरणम् ... ३०५
अथ विनिमयः ... ३१[illegible]
अथाग्राह्या वृत्तिः ... ३२[illegible]
अथ गर्हिता वृत्तिः ... ३२[illegible]
अथापत्कालवृत्तयः ... ३२[illegible]

अथ विशेषविहिताः ... ३२८
अथ देवायतन गुरुधार्म्मिक-
ब्राह्मणगृहगमनम् ... ३३१
योगक्षेमार्थमीश्वर-
सन्निधिगमनञ्च ... ३३१
अथ दानम् ... ३४१
अथ प्रासादविशेषाः ... ३७३
अथ प्रासादविशेषे
देवताविशेषाः ... ३७६
अथ जन्माष्टमीव्रतम् ... ४४२
अथ शिवरात्रिव्रतम् ... ४५६
अथ गवांह्निकम् ... ५७०
अथ चतुर्थभागकृत्यम् ... ५८६

---

# नित्याचारप्रदीपः ।

## द्वितीयभागः ।

श्रीगणेशाय नमः । ओं नमः श्रीगोपालाय ।

गोवर्द्धनोद्धरणकर्म्मणि संप्रवृत्ते
गोपेषु सस्मितससम्भ्रमसत्वरेषु ।
ब्रह्माण्डधारणनियन्त्रितरोमकूपः
कृष्णोऽपि सस्मितमुखो भवतः पुनातु ॥

## अथ द्वितीयभागकृत्यम् ।

तत्र दक्षः,—

द्वितीये च तथा भागे वेदाभ्यासो विधीयते ।
वेदस्वीकरणं पूर्व्वं विचारोऽभ्यसनं जपः ।
तद्दानञ्चैव शिष्येभ्यो वेदाभ्यासो हि पञ्चधा ॥
• समित्पुष्पकुशादीनां स कालः समुदाहृतः ।

उपादानस्येति शेषः । तत्र प्रथमाध्ययनं तावदुच्यते ।

मनुः,—

तपोविशेषैर्विविधैर्व्रतैश्च विधिचोदितैः ।
वेदः कृत्स्नोऽधिगन्तव्यः सरहस्यो द्विजन्मना ॥

तपोविशेषा [१]ब्रह्मचारिधर्म्मा गुरुशुश्रूषाग्निपरिचर्य्यादिरूपाः ।

तथा,—

कृतोपनयनस्यास्य व्रतादेशनमिष्यते ।
ब्रह्मणो ग्रहणञ्चैव क्रमेण विधिपूर्व्वकम् ॥

ब्रह्मणो वेदस्य । क्रमेण समाम्नानक्रमेण ।

तथा,—

अनेन क्रमयोगेन संस्कृतात्मा द्विजः शनैः ।
गुरौ वसन् सञ्चिनुयाद् ब्रह्माधिगमिकं तपः ॥

[२][ तथा,— ]

योऽनधीत्य द्विजो वेदमन्यत्र कुरुते श्रमम् ।
स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः ॥

[३][ याज्ञवल्क्यः,— ]

यज्ञानां तपसाञ्चैव शुभानाञ्चैव कर्म्मणाम् ।
वेद एव द्विजातीनां निःश्रेयसकरः परः ॥

लघुव्यासः,—

मेखलाजिनदण्डानां धारिभिर्ब्रह्मचारिभिः ।
वेदः कृत्स्नोऽधिगन्तव्यः सविज्ञानो द्विजातिभिः ॥

(१) B. ब्रह्मचारिणो विहिता गुरुशुश्रूषा ०

(२) A. Omits the portion bracketed.

(३) A. Omits the portion bracketed.

भिक्षाग्निभिर्गुरोर्नित्यं शुश्रूषायां रतैस्तथा।
श्रासमाप्तेर्व्रतं कार्य्यं वेदस्य विधिवद्द्विजैः॥

इत्यादिवचनात् "स्वाध्यायोऽध्येतव्यः" इतिविधेः स्वकीयशाखा-परत्वाच्च सम्पूर्णशाखाध्ययनं नित्यम्।

तथाच बौधायनः ऋणत्वेनावश्यकर्त्तव्यतामाह स्वाध्यायस्य

स्वाध्यायेन ऋषीन् पूज्य सोमेन च पुरन्दरम्।
प्रजया च पितॄन् पूर्व्वान् मृतो दिवि विमोदते॥

श्रुतावपि,—जायमानोह्वै ब्राह्मणस्त्रिभिर्ऋणवान् जायते। इति। ब्रह्मचर्य्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्य इत्यत्र ब्रह्म-चर्य्यग्रहणं स्वाध्यायोपलक्षणार्थमेव। अतएव शतपथश्रुतिः ऋणं हि वाव जायत इत्युपक्रम्य अथ यदेवानुब्रवीत तेन ऋषिभ्यो ऋणं जायते तद्धि तेभ्यः करोति यदानुब्रूत ऋषीणां निधिप इति ह्यनु-गमनमाचक्षते। तदुक्तं जैमिनिना श्रुतिव्याख्यानार्थं "ब्राह्मणस्य तु सोमविद्या प्रजमृणवाक्येन संयोगात्॥" इति ब्रह्मचर्य्यं विद्यात्वेन व्याख्यातम्। नचैकशाखाध्ययनेन ऋणापकर्षं स्वाध्यायोऽध्येतव्य इत्यस्य सम्पूर्णशाखाविषयत्वात्। तदुक्तं भट्टैः स्वाध्यायग्रहणे(न)न एकशाखा हि परिगृह्यते वेदः कृत्स्नोऽधिगन्तव्य इति [1]मानववाचा एकशाखाध्ययने विध्यभावात्। न चाध्ययन-स्यानुष्ठानोपयोगिकर्म्मणां ज्ञानं फलमिति तत्तत्कर्म्मज्ञानार्थं

(१) P. मानत्वाच्च०।

तत्तद्वाक्याध्ययनं विधीयते। न तु वाक्यसमुदायरूपा शाखा तस्य ज्ञानाजनकत्वादिति वाच्यम्। स्यादेवं यदि तत्तज्ज्ञानं फलं श्रूयेत। न तु तदस्ति। किन्तु स्वाध्यायोऽध्येतव्य इति श्रूयते। फलं न श्रूयते। तत्र दृष्टे सत्यदृष्टं न कल्प्यत इति न्यायात् यद्यत् स्वाध्यायाध्ययनजन्यं दृश्यते तत्तत् फलं कल्प्यते। तत्र क्वचित् कर्म्मज्ञानं क्वचिज्जपोपयुक्तमन्त्रादौ स्वरूपज्ञानं क्वचिदुपनिषदादौ पुरुषार्थरूपमात्मज्ञानं यथाफलं कल्प्यते।

तथा,—

अरण्ये नियतो जप्त्वा त्रिर्वै वेदस्य संहिताम्।

मुच्यते ब्रह्महत्यायाः

इत्यादिप्रायश्चित्तविधेः फलार्थवेदपारायणविधेः “अग्र्याः सर्व्वेषु वेदेषु” इत्यादिपंक्तिपावनत्वादिसिद्धेश्च सम्पूर्णशाखाग्रहणसाध्यत्वात् सम्पूर्णशाखास्वरूपग्रहणमपि पुरुषाभिलषितत्वादेव क्रतुज्ञानवद् वेदाध्ययनफलम्। न च पारायणाद्यर्थं पृथक् कृत्स्नशाखाध्ययनविधिरस्ति। नचान्यानि तेन पारायणादिकर्म्माणि भवन्ति। तन्नैतत् स्यात्। विधेरेकत्वेऽपि फलभेदाद् विधेयभेदः। विधेयभेदाच्च विधिवाक्यार्थभेदात् फलतोऽध्ययनविधिनानात्वमिति। तन्न। फलभेदासिद्धेः। पुरुषापेक्षितत्वे सत्यध्ययनजन्यत्वोपाधिना सर्व्वेषामेकरूपेण फलत्वात्। अवान्तरापूर्व्वभेदाच्च वाक्यविशेषाध्ययने धर्म्मविशेषविधिः। यथोपनिषदामरण्याध्ययनमश्वमेधाध्ययनेऽश्वघासदानं वा मैत्रावरुणग्रहाभ्यासे श्रयणविधित्वात्।

यत्तु मनुवचनं,—

यथोदितेन विधिना नित्यं छन्दस्कृतं पठेत्।
ब्रह्मच्छन्दस्कृतञ्चैव द्विजो युक्तो ह्यनापदि॥

मानेन ब्राह्मणाध्ययनं काम्यमुच्यते। किन्तु पूर्व्वमुपाकर्म्म कृत्वाऽर्द्धपञ्चमासपर्य्यन्तं छन्दोऽध्ययनं तदूर्द्धं शुक्ले छन्दः पठनमित्यादिना या वेदाध्ययनेतिकर्त्तव्यता कथिता तस्या एव छन्दस्कृतशब्दवाच्ये मन्त्रभागे नित्यतोच्यते। सम्यक्ग्रहणधारणसामर्थ्यात्मकानापदि ब्रह्म ब्राह्मणं छन्दस्कृतं मन्त्रभागं युक्तः पूर्व्वोक्तोपाकर्म्मादिप्रकारयुक्तोऽधीयीत। आपदि तु सम्यक्ग्रहणधारणाऽसामर्थ्ये ब्राह्मणभागं यथोक्तनियमं विनापि नित्यमधीयीतेति मन्दबुद्धेर्नियममपेक्षमाणस्य प्रधानभूतब्राह्मणाध्ययनबाधापत्तेः। "अङ्गगुणविरोधे च तादर्थ्यात्।" इतिन्यायात्। तेन मलवद्-वासोनिषेधवत् विशेषणस्य यथोक्तविधिरूपस्य मन्त्राध्ययने नित्यतोच्यते। ब्राह्मणाध्ययने च ग्रहणसमर्थस्य सुमेधसो [1]नित्यता। मन्दबुद्धेश्च ब्राह्मणाध्ययने यथोक्तविधेरनियम इति। इत्थमेव मेधातिथिप्रभृतिभिरपि व्याख्यातम्। इत्थमेव लक्ष्मीधरः। आपदि मन्त्रजातं यथोक्तविधिना पठेत्। अनापदि मन्त्रजातं ब्राह्मणञ्च यथोक्तविधिना पठेदित्यर्थः। यत्तु तृतीयाष्टमभाष्ये मनु वेदमधीयीतेति वचनात् कृत्स्नो वेदोऽध्येतव्यः। न वेदावयवेनाधिक्रियत इति। उच्यते। तस्मात् कालान्तरज्ञानमधिकारे नादर्त्तव्यं, सर्व्वे क्रतवः

---

(१) B. यथोक्तविधिनित्यता।

पृथक् पृथक् ज्ञायेरन्निति ज्ञातृत्वस्य वेदस्याध्ययनं युज्यत इति। तथा वार्त्तिके यद्यपि स्वाध्यायग्रहणेन सकलो वेदः परिगृहीतस्तथापि दर्शपौर्णमासौ कुर्व्वाणस्य ज्योतिष्टोममन्त्र-ब्राह्मणं न क्वचिदपि युज्यते इति। तदपि नाधिकारं व्यावर्त्तयति। [1]दृष्टवेदेनैव योग्यतासिद्धेः। तेन तद्याजिन-स्तावानेव स्वाध्यायः। यत्त्वसौ सकलः पठ्यते तन्नित्यकाम्य-नैमित्तिकानां यथोत्पन्नकालत्वान्न ज्ञायते किं कदा करिष्यत इति। यन्न पठितं तत्फलप्रार्थनायामविद्यत्वादशक्तः स्यात् तदानीन्त्वाधीयमानस्य [2]व्रतनियमवद् वेदाध्ययनासम्भवात्कर्म्मभिन्न विशिष्टक्रियोपात्तवेदनिराकाङ्क्षैस्तादृशस्य ग्रहणाद् वैगुण्य-प्रसङ्गः। कामश्रुत्यपरिग्रहाच्च सर्व्वैरनारभ्य वादविधानो वेदो-पेक्षित इत्यवश्यं ब्रह्मचर्य्यकाल एव समस्तोऽध्येतव्यः। यदि तु कथञ्चिदशक्तो नाधीते सकलं अग्निहोत्रदर्शपौर्णमासमात्रं कथञ्चि-दधिगच्छति न तस्य तत्राप्यनधिकारः। तत्रायमाशयः काम-श्रुतिवशादाक्षेपेणाध्ययनकरणे यदा [3]यत्कर्त्तव्यं तदा तदर्थं तस्य वेदभागस्याध्ययनं कर्त्तव्यं स्यात्। अनारभ्यविधिसत्त्वात्तु काम-श्रुतीनामौदासीन्ये [4]सकलवेदस्य ब्रह्मचर्य्ये अध्ययनं नित्यम्। अशक्तस्य सकलवेदाध्ययनाभावे तु नित्यकर्म्मरूपसकलवेदाध्ययन-लोपात् प्रत्यवायोऽस्त्येव। केवलं यावदधीतं तावतोऽर्थज्ञाने यत्

---

(१) P. कश्चिद् वेदेनैव ०।

(२) P. कर्म्मकर्त्तव्यव्रतनियम ०।

(३) B. यत् कर्म्म कर्त्तव्यं ०।

(४) B. सकलस्य वेदस्य।

कर्म्म कर्त्तुं शक्यते तत्राधिकारलोपो नास्तीत्युच्यते। क्रतुविधिभिर्हि स्वस्वज्ञानमेव गृह्यते न क्रत्वन्तरज्ञानमिति।

यत्तु यमवशिष्ठौ—

न शूद्रो वृषलो नाम वेदो हि वृष उच्यते।
यस्य विप्रस्य तेनालं स वै वृषल उच्यते॥
तस्माद् वृषलभीतेन ब्राह्मणेन प्रयत्नतः।
एकदेशोऽप्यध्येतव्यो यदि सर्व्वो न शक्यते॥

इति तदपि प्रत्यवायसत्त्वेऽपि वृषलत्वेन कर्म्माधिकारनिवृत्तिरेकदेशाध्ययने नास्तीत्येवं परमेव। अतएव अजिताकारेण व्याख्यातं इह स्वाध्यायविधिवशेन क्रियमाणमध्ययनं यथाविध्यनुष्ठितं यथाविभागं कर्म्मसूपयुज्यते तस्मात् सकलस्याध्ययनम्। कथञ्चिदनध्ययनेत्विदमुच्यत इति। अष्टतन्त्ररत्ने च 'फलाश्रवणाध्ययनमित्युक्ता आवश्यकजपयज्ञप्रायश्चित्तपारायणाद्युपयोगिग्रन्थावधारणफलत्वादावश्यकमिति सकलाध्ययनस्य नित्यतामाह। केवलं ग्रहं सम्मार्ष्टीत्यादिवत् स्वाध्यायस्याध्ययनसंस्कार्य्यत्वाद् यावतो भागस्य क्रत्वर्थज्ञानजनकत्वं तावतः संस्कारे क्रियमाणेऽपि क्रत्वन्तरज्ञानहेतुवेदभागस्य संस्काराभावो न दोषाय। संस्कार्य्याणामुद्देशनसाहित्याविवक्षणात्। ग्रहान्तरासम्मार्गोऽपि ऐन्द्रवायवसम्मार्गस्य च वैगुण्यादैन्द्रवायवयागाद्यापूर्व्वसिद्धिवत्। ग्रहान्तरासम्मार्गोस्तु परमापूर्व्वसिद्धाभाववत्। सकलाध्ययनाभावे विहिता-

---

(१) B. फलाविधिवशाद्ध्ययनं नित्यमित्युक्ता।

कारणात् प्रत्यवायो भवत्येव सकलाध्ययनस्य विहितत्वात्। अन्यथा पारायणाद्यसम्भवादित्युक्तम्। [1]आधाने तद्द्वितीयाश्रुत्याग्निसंस्कारोऽपि गार्हपत्याहवनीयपरत्वेनाग्निशब्दस्य गार्हपत्याहवनीयशब्दयोरलौकिकत्वेन ज्ञातत्वादज्ञातस्य चोद्देश्यस्यापि यूपं छिनत्तीत्यादिवत् स्वरूपस्य जिज्ञास्यत्वेन विशेषणाकाङ्क्षावशादुद्देश्यविशेषणस्यापि विवक्षावशात् सहितयोरेवाग्न्योराधानसंस्कार्य्यत्वमिति। नैवैकाग्निसिद्ध्यर्थसाधनमिति विशेषः। तेन दर्शपौर्णमासमात्रार्थमन्त्रब्राह्मणाध्ययने दर्शपौर्णमासाधिकारो भवत्येव। तथाच हारीतः क्षत्रियोऽध्ययनयजनदानधर्म्मादेव व्रतैकदेशोति वेदैकदेशाध्यायिनः क्षत्रियस्य यजनं दर्शयति। यानि तु वेदैकदेशाध्ययनानुवादेन वेदार्थज्ञानप्रशंसावाक्यानि

अधीत्य यत्किञ्चिदपि वेदार्थाधिगमे रतः।

इत्यादीनि तान्यर्थवादरूपाणि।

यद्वा यो नाम [2]बुद्धिमान्द्यादिना सम्पूर्णशाखाध्ययने तदर्थविचारे चोभयत्राशक्तः स किमर्थज्ञानमुपेक्ष्य यावज्जीवमक्षराण्यभ्यसेत्। किंवा किञ्चिदधीत्य तदर्थं ज्ञात्वा विचार्य्य क्रत्वनुष्ठानं कुर्य्यात् इति संशये तं प्रति एकदेशाध्ययनपूर्व्वकं तदर्थबोधो विहित इति न्यायसिद्धमुच्यते। निरर्थकसकलाध्ययनात् सार्थकं किञ्चिदध्ययनं यज्ञानुष्ठानहेतुत्वात् श्रेय इति। न चैवमेकदेशाध्ययनं विहितम्। तथाच न प्रत्यवायः स्यादिति वाच्यम्।

---

(१) B. आधाने तु द्वितीयाश्रुत्याग्निसंस्कारत्वेऽपि।

(२) B. बुद्धिमान्द्यादापद्दि वा सम्पूर्ण०।

[1]तथाहि—

वर्णिनां हि वधो यत्र तत्र साक्ष्यनृतं वदेत्।

इति वधानुकूलत्वेन सत्यवदनस्य गुरुतरपापजनकत्वादनृतवदनस्य लघुपापहेतुत्वात् तदेव कृत्वा ततः सारस्वतीष्टिः प्रायश्चित्तं कर्त्तव्येति न्यायसिद्धमुच्यते। एवमिह मर्थज्ञानपूर्व्वकानुष्ठानश्रेयोऽपेक्षया सकलानध्ययनदोषो लघुरित्यवबोध्यते न तु विधीयते।

एवं सति नित्यकर्म्मापेक्षितवेदभागाध्ययनमेव नित्यमितरभागाध्ययनं काम्यमिति स्वरसंस्कारसहिताध्ययनसामर्थ्ये सत्येव काम्यभागाध्ययनं नित्याध्ययने यथाशक्तिकृताङ्गसाहित्येनावैगुण्यमिति स्वराद्यभावेऽपि न दोष इति मतमपास्तम्। उक्तन्यायेन सकलाध्ययनस्य नित्यत्वेन यथाशक्त्युपबन्धेन स्वराद्यसामर्थ्येऽपि प्रधानभूताक्षररूपवेदस्वीकरणस्यावश्यकत्वात्।

यत्तु लघुव्यासवचनम्,—

ऋक्पादमप्यधीयीत मार्गेणानेन धर्म्मवित्।
नत्वेव चतुरो वेदानन्यायेन कदाचन॥

इति तदध्ययनाङ्गप्रशंसार्थमेव। तथा—

वेदविप्लावनात् तेन वरं मौनं समाश्रितम्।
वेदविप्लावनाद् विप्रो नरकं यात्यधोमुखः॥

इति तत्र वेदविप्लावनमनध्यायेऽध्ययनम्। अनध्यायाध्ययनवर्जनं स्नातकव्रतमध्ये लिखितम्। तदतिक्रमेऽयं दोषः। अन्यथाङ्ग-

(१) B. यथाहि।

वैगुण्यस्य प्रधानफलानुगत्यैव चरितार्थत्वात् प्रत्यवायहेतुत्वा-कल्पनात् । तेन शक्तस्यायं दोषः । अशक्तस्य तु प्रधानाध्ययन-मात्रेऽपि प्रत्यवायाभावः ।

यत्तु मिथ्याधीती संवत्सरं ब्राह्मणगृहे भैक्षं चरेत् इति तद-ध्ययनाङ्गवैगुण्यसमाधानार्थं प्रायश्चित्तम् । न तत्र भयेन सकला-ध्ययनत्यागः । एतेन ब्रह्मोज्झिताभयेन एकदेशाध्ययनं प्रत्युक्तम् । एकदेशस्यापि विस्मरणसम्भवे न तदपि नाध्येयं स्यात् । इदं चिन्त्यते । इतराङ्गत्यागवत् ब्रह्मचर्य्यरूपाङ्गत्यागेऽध्ययनं भवति न वेति । [1]तत्र ब्रह्मचर्य्यस्य विध्यन्तरसिद्धत्वात् नित्येषु यथा-शक्त्युपबन्धस्य विध्यन्तरसिद्धाविषयत्वात् तत्र न यथाशक्त्युपबन्धः । यथाहि कर्म्मस्थानं आहवनीयादयश्च विध्यन्तरसिद्धत्वात् यथाशक्ति यावज्जीवमग्निहोत्रं जुहुयादिति विधौ अध्ययनजन्यकर्म्मज्ञानं आहवनीयश्च त्यक्ता नाधिकारः । तत् कस्य हेतोः । यदि जुहुया-दिति प्रयोगविधिना अनुष्ठाप्यते तत्र यथाशक्तीति विशेषः । न चाग्निविद्ययोरनेनानुष्ठानचोदनाऽध्ययनविधिसिद्धत्वात् । एवमिह ब्रह्मचर्य्यस्येति प्रतिभाति । नैवं ब्रह्मचर्य्यस्य [2]विध्यन्तरसिद्धत्वा भावात् । ब्रह्मचर्य्यं हि नामाश्रमः । गुरुगृहवासः । गार्हस्थ्यं स्वगृहे वासः । वानप्रस्थं वने वासः । अनिकेतत्वं सन्न्यासः । तत्र गुरुगृहवासरूपब्रह्मचर्य्यं सामर्थ्यात्मकलिङ्गेन । तत्तु वाक्येया-ध्ययनप्रयोगविधिनैवानुष्ठाप्यत इत्यस्त्येव तत्रापि यथाशक्त्युपबन्धः ।

---

(१) A. इति ।

(२) B. सिद्धत्वात् ।

तथाच मनुः,—

"गुरौ वसन् सञ्चिनुयाद् ब्रह्माधिगमिकं तपः ॥"

"तपोविशेषैर्विविधैर्व्रतैश्च विधिचोदितैः। वेदः कृत्स्नोऽधिगन्तव्यः ॥"

इति तपःशब्दवाच्यब्रह्मचर्य्यरूप-गुरुगृह वासादिनियमस्याध्ययन-प्रयुक्तत्वं दर्शयति ।

तथाच बृहस्पतिः,—

एवं दण्डादिकैर्युक्तैः संस्कृत्य तनयं पिता ।
वेदमध्यापयेद् यत्नाच्छास्त्रं मन्वादिकं तथा ॥

एवञ्च सति ब्रह्मचर्य्ये वेदमुपक्रम्य यदि शरीरक्लेशासहत्वेन प्रधान-रूपाध्ययनविरोधः शङ्क्येत तदा [1]समावर्त्तनानन्तरमपि सकल-शाखाध्ययनं कार्य्यं तथाधीतेन च यथाशक्तिकृताङ्गसहिताध्ययन-जन्यक्रतुज्ञानं क्रत्वधिकारसिद्धये समर्थमेव। एतस्मिन्नेव विषये मनुः—

आ हैव स नखाग्रेभ्यः परमं तप्यते तपः ।
यः स्रग्व्यपि द्विजोऽधीते स्वाध्यायं शक्तितोऽन्वहम् ॥

आ हैव स नखाग्रेभ्यः स्रग्व्यपीति ब्रह्मचर्य्यधर्म्मत्यागेनापीति लक्ष्मीधरः। स्रग्वी गृहस्थोऽपीति मेधातिथिः। न चैतत् ब्रह्मयज्ञपरं प्रथमाध्ययनोपक्रमेऽभिधानात्। [2]यद्वा योऽनधीत्य द्विजो वेदमित्यादिषु प्रथमाध्ययनपरामर्शात्। व्रतस्नातकस्य व्रतं समाप्य वेदञ्चासमाप्य कृतसमावर्त्तनस्य [3]वचनबलाच्चैकदेशाध्ययन

(१) B. समावर्त्तनोत्तरमपि ।
(२) B. P. उपर्य्यपि योऽनधीत्य ०।
(३) B. वचनबलाद् वेदैकदेशा ०।

एव ब्रह्मचर्य्यमङ्गम्। एकदेशान्तरं न ब्रह्मचर्य्यमङ्गमपेक्षत इति विधिबलात् कल्प्यते। विद्यास्नातकस्यैव सकलाध्ययनेन ब्रह्मचर्य्यमङ्गमिति विशेषः।

केचित्तु मन्त्रमात्राध्ययनेऽपि ब्राह्मणाध्ययनं विना कल्पसूत्रादिभ्यः कर्म्मज्ञानेन क्रत्वधिकारसिद्धिः। यथा शाखान्तराध्ययनं कर्म्मज्ञाने वैकल्पिकं एवं कल्पसूत्राध्ययनमपि वैकल्पिकमेव।

तुल्यार्थानां विकल्पस्तु कर्म्मकत्वे भविष्यति।

इति न्यायसाम्यात्। तथाच पारस्करः,—वेदमधीत्य स्नायाद्। विधिर्विधेयस्तर्कश्च वेदः। षड़ङ्गमेके। इत्युक्ता। कामन्तु याज्ञिकस्य। इत्याह। कल्पसूत्रेण [1]यज्ञज्ञानवतः कामं स्नानं न वेदसमापननियम इत्यर्थः। तथा भट्टाचार्य्यैरप्युक्तं—

वेदादृतेऽपि कुर्व्वन्ति कल्पैः कर्म्माणि याज्ञिकाः।

नतु कल्पादृते केचिन्मन्त्रब्राह्मणमात्रकात्॥

इति। [2]स्यादेवं यदि कल्पाध्ययनं वैकल्पिकं स्यात्। कल्पानां वेदाङ्गत्वे वेदाङ्गनिर्णायकरूपोपसंहारार्थत्वेन भिन्नार्थत्वात्। तत्—

उक्तशाखान्तरन्यायस्तुल्याध्येतृकतावशात्।

सर्व्वशाखाविधित्वं हि स्थितमध्येतृभेदतः॥

पिकनेमाधिकरणे। सषड़ङ्गवेदाध्ययनजन्यज्ञानादेव क्रियाफलम्। वेदादज्ञातोऽप्यर्थः कल्पादिभ्यो ज्ञातः क्रियाङ्गं यदा तदा षड़ङ्गरूप-

---

(१) B. यज्ञज्ञानवत इत्येव कामस्नानं।

(२) A P. तस्मादेवं यदि०।

कल्पसूत्राम्नाने वेदादज्ञातोऽपि कर्म्माङ्गमिति साहसम् । तेन पारस्करवचनं मन्त्रान्तराध्ययनं विनापि वेदात् यज्ञज्ञानवत इत्येव योजयितुं न्याय्यम् । यत्तु भट्टाचार्य्यैः कल्पसूत्राधिकरणपूर्व्वपक्षे वेदादृतेऽपीत्युक्तं तच्छाखान्तरीयाङ्गाभिप्रायं वेदादृते काण्वशाखा-ध्यायिनो माध्यन्दिनशाखारूपवेदाभावेऽपि तदुक्ताङ्गं कल्पादवगम्य याज्ञिकाः कर्म्म कुर्व्वन्ति । नतु कल्पादृते काण्वमन्त्रब्राह्मण-मात्रात् शाखान्तरीयाङ्गज्ञानादित्यर्थः । केवलं यो वेदाध्ययनम-कृत्वा सौकर्य्याय प्रथमं कल्पसूत्रेभ्यो यज्ञं ज्ञातवान् स पश्चाद् गुरु-मुखाद् वेदं श्रुत्वा ततो यज्ञं पुनर्जानाति तस्य नाधिकारापायः । अतएव सम्प्रत्यपि शिष्टाः प्रयोगसूत्राद् यज्ञाज्ञानवन्तोऽपि वेदं पुनर्गुरुमुखाच्छ्रुत्वा यज्ञाधिकारं मन्यन्ते । एवञ्च नित्यवत् काम्ये-ऽप्यधिकारः । विध्यन्तरसिद्धयज्ञज्ञानाविशेषात् तस्य च विधेर्नित्य-त्वेनाङ्गवैगुण्येऽपि प्रधानमात्रात् फलोपादानात् । फलञ्च क्रतुज्ञानं तन्नित्यैरिव काम्यैरपि गृह्यते । एवञ्चाध्ययनाङ्गानामध्ययनप्रति-बन्धनिवृत्तिपराऽङ्गत्वाद् वाक्यान्तरेण खादिरादिवद् गुणफल-सम्बन्धात् पुरुषार्थत्वेन चरितार्थत्वात् ब्रह्मचर्य्यं विनाधीतेन काम्य-कर्म्मण्यधिकारसिद्धिः । (१)नह्यनङ्गत्वाद् जायेत वैगुण्यं अध्ययना-ङ्गानि च न काम्यक्रत्वङ्गानि । किन्तु तज्ज्ञानं तच्च यथाशक्त्यङ्ग-सहितानुष्ठितमित्यध्ययनविधिना जातमेव क्रतुज्ञानं क्रतुविधि-प्रयुक्तत्वे ह्यध्ययनाङ्गानां स्यादेवं नतु तदस्तीत्यावेदितम् । अतएव

(१) B. P. नह्यङ्गत्यागो कर्म्मवैगुण्यम् । अध्ययना० ।

हारीतः शूद्रश्रवणकुतर्कोक्तवेदाप्रामाण्याभक्तनधनदानार्थपाठ स्वाध्यायधर्म्मत्यागानभ्यासवेदोक्तरहस्यदेवतादि-ख्यापनास्थानप्रश्नाग्रन्थोपसर्गाः । अव्रताध्ययनानियमाध्ययनगुरुशुश्रूषात्यागक्रिया(?) ध्ययनगुरुद्वेषणमित्यध्ययनोपसर्गाः । अनुपनीताध्यापनपातक्य-ध्यापनख्यातार्थाध्यापनमित्यध्यापनोपसर्गाः । सर्व्वेषामनध्याय-पाठः अशुचिस्थानपाठः अतिविलम्बितपाठः अत्युच्चपाठः अक्षर-वर्णपदपादहीनपाठः परावरोच्चारितग्रहणनैरर्थ्यविच्छेदशून्य-पाठातित्वरितपाठ इति जप्यस्य एते ब्रह्मोपसर्गा इत्युक्ता एतैरुप-सृष्टं ब्रह्मचन(चथा)चममवीर्य्यमतेजस्कमसिद्धमसमृद्धार्थमलावक-मदैवमस्वर्गमल्पफलं(अध्रुवं)भवतीति। अवीर्य्यं रक्षोघ्नादिवीर्य्यशून्यं अतेजस्कं ब्रह्मवर्चसादिरूपफलहीनं असमृद्धार्थं स्तुत्यादिकार्य्ये अशक्तं अलावकं अस्वस्त्ययनादिरूपेण रोगाद्यनिवारकं अदैवं देवताप्रीतौ न क्षमं अस्वर्गं अल्पफलं यं यं क्रतुमधीते तस्य फलं प्राप्नोतीत्येतेन शून्यं अध्रुवमनित्यम् । यथोक्तं

छन्दांस्येनं मृत्युकाले त्यजन्ति ।

तथा,—

उपसर्गविनिर्मुक्तं योऽधीते यं क्रतुं द्विजः ।
तेन तेनेष्टं भवति प्रजापतिवरो यथा ॥

इति । सोपसर्गाध्ययने फलान्तराणामभावं दर्शयति नतु 'ज्ञान-वैगुण्येन क्रतुफलाभावः । अस्वर्गमित्यस्याध्ययनफलस्वर्गाभाव-

(१) B. क्रतुज्ञानवैगुण्येन ।

परत्वादिति। एवञ्च शाखान्तरीयकर्म्मानुष्ठानं तदध्ययनं विनापि स्मृतिकल्पसूत्रेभ्यो ज्ञात्वा कर्त्तव्यम्।

यत्तु,—

कुलान्यकुलतां यान्ति यानि हीनानि मन्त्रतः।

इति मन्त्रमात्राध्ययनेऽपि कुलहानिर्नास्तीति मेधातिथिव्याख्यानं न तेन ब्राह्मणाध्ययनं विना यज्ञाधिकारप्रतिपादनं किन्तु [1]कुलनाशदोषाभावपरमिति सर्व्वमनवद्यम्।

---

## [2]अथातोऽध्ययनाङ्गानि।

मनुः,—

अध्येष्यमाणस्त्वाचान्तो यथाशास्त्रमुदङ्मुखः।
ब्रह्माञ्जलिकृतोऽध्याप्यो लघुवासा जितेन्द्रियः॥

आचमनं सकृदेव।

ब्रह्मारम्भेऽवसाने च पादौ ग्राह्यौ गुरोः सदा।
संहत्य हस्तावध्येयं स हि ब्रह्माञ्जलिः स्मृतः॥
व्यत्यस्तपाणिना कार्य्यमुपसङ्ग्रहणं [3]गुरोः।
सव्येन सव्यः स्प्रष्टव्यो दक्षिणेन तु दक्षिणः॥

---

(१) B. कुलनाशनदोषा०।

(२) B. तत्राध्ययनानि।

(३) B. सदा।

अध्येष्यमाणन्तु गुरुर्नित्यकालमतन्द्रितः।
अधीष्व भो इति ब्रूयाद् विरामोऽस्त्विति चारमेत्॥
ब्राह्मणः प्रणवं कुर्य्यादादावन्ते च सर्व्वदा।

तथा,—

प्राक्कूलान् पर्य्युपासीनः पवित्रैश्चैव पावितः।
प्राणायामैस्त्रिभिः पूतस्तत ॐकारमर्हति॥

गौतमः,—

प्राणोपस्पर्शनं दर्भैः। प्राणायामास्त्रयः पञ्चदशमात्राः। तेन पवित्रैः पावनं मनूक्तम्। कुशैरिन्द्रियस्पर्शनं गौतमसंवादात्। इन्द्रियाणि दश। मात्रा कालाक्षरकालः।

मनुः,—

अकारञ्चाप्युकारञ्च मकारञ्च प्रजापतिः।
[1]वेदत्रयान्निरमहत् भूर्भुवः स्वरितीति च॥
त्रिभ्य एव तु वेदेभ्यः पादं पादमदूदुहत्।
तदित्यृचोऽस्याः सावित्र्याः परमेष्ठी प्रजापतिः॥

तेनादौ ॐकारव्याहृतित्रयगायत्रीजपः कार्य्यः।

गौतमः,—

ॐकारपूर्व्वा व्याहृतयः पञ्च सत्यान्ताः। तथा सावित्रीचोदित-ब्राह्मण आदाने भूर्भुवः स्वः पुरुषः सत्यमिति गौतमनीत्या

---

(१) तद्विरतमतौ, वेदत्रयान्निरदूदुहद् भूरित्यादि। मनुः, २याध्यायः, श्लोकः ७६।

व्याहृतिपञ्चकम्। तथा चानुज्ञात उपविशेत् प्राङ्मुखो दक्षिणतः शिष्य उदङ्मुखो वा।

यमः,—

कृताञ्जलिर्गुरुं ब्रूयादध्येष्ये [1]भगवन् कथम्।

[2][ तथा,—]

ॐकारं प्रथमं कृत्वा ततो ब्रह्म प्रवर्त्तयेत्।

ॐकारञ्च ततः कृत्वा भूमिं स्पृष्ट्वा विरामयेत्॥

पैठीनसिः,—

स्वाध्यायमहरहः प्रयुञ्जीत कर्णावपिधाय पञ्चाक्षराण्यनुजाप्य मस्तकेन पादावालभ्याभिवादयेत्। अनारभ्य [3]गुरुपत्नीम्। पञ्चाक्षराणि ॐ भूर्भुवः स्वः ( पुरुषः सत्यम् )।

आपस्तम्बः,—

ॐकारः स्वर्गद्वारं तस्माद् [4]ब्रह्माध्येष्यमाणस्तदादि प्रतिपद्यते। विकथाञ्चान्यां कृत्वा एवं लौकिक्या वाचा व्यावर्त्तते ब्रह्म॥ वेदव्यतिरिक्तकथा चेन्मध्ये क्रियते पुनः प्रणवमुच्चरेत्। एवं लोकवाचो वेदो विविक्तो भवति।

पारस्करः,—

---

(१) B. भगवन्नहम्।

(२) B. Omits the portion bracketed.

(३) B. गुरुपत्नी।

(४) मुद्रितापस्तम्बीयधर्म्मसूत्रे ( Bühler's edition, Bombay ) ब्रह्माध्येष्य-माण एतदादि प्रतिपद्येत। १। ४। १३। ६।

*अथातोऽधीत्य निराकरणं जपेत् । प्रतीकमेव विचक्षणमित्यादि ।(?)

देवीपुराणे,—

जातिसंस्कारहीनस्य द्रव्यसङ्करकारिणः ।
शूद्रान्नभोजिनो राजन् न वेदाद् विद्यते फलम् ॥
अन्नवृत्तिचरा विप्रा उञ्छकापोतवृत्तयः ।
**कुम्भकौशलिकाहारा वैदिकं प्राप्नुयुः फलम् ॥

अन्नवृत्तिः **कुम्भकौशलवृत्तिश्च तृतीयभागे वक्ष्यते । एतच्च प्रयोगकालविषयं न प्रथमग्रहणकाले ।

तथा,—

नदीसङ्गमगोष्ठेषु विविक्तेषु तटेषु च ।
विविक्तभूमिदेशेषु दर्भदूर्वावृतेषु च ॥
गृहेषु सूपलिप्तेषु विष्णुसूर्य्यगृहेषु च ।
पठितव्यः सदा वेदः स्वरवर्णोपलक्षितः ॥
श्रुतधर्म्मक्रमां कृत्स्नां सानुस्वारां सुलक्षिताम् ।
ऋचमुच्चारयेत् प्राज्ञो न द्रुतं न विलम्बितम् ॥

तथा,—

अपशब्दो महादोषः श्रूयते ऋषिभाषितः ।
इन्द्रस्तं हन्ति वज्रेण योऽपशब्दं समुच्चरेत् ॥

---

* पारस्करे—( Hathuwa maharaja's edition, Benares ) न दृश्यते ।

** अर्थः पाठश्चास्य सम्यङ् न स्फुटः । तृतीयभागे स्फुटीभवितुमर्हति । इदन्तु व्याख्यायते यदत्र "कुशूलधान्यको वा स्यात् कुम्भीधान्यक एव वा ।" इति मनुवचनेन ( अ० ४ । श्लो० ७ । ) सहास्ति कश्चिदर्थगतः पाठगतश्च सम्बन्धः ।

विष्णुः,—

*यश्च विद्यां समासाद्य तामाजीवेन्न सा परलोके फलप्रदा भवति ।

यश्च विद्यया परेषां यशोहन्ति ।

वशिष्ठः,—

इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् ।

बिभेत्यल्पश्रुताद् वेदो मामयं प्रहरिष्यति ॥

समुपबृंहयेत् वर्द्धयेत् । शङ्खलिखितौ,—

[1]न प्राधीत्योपरमेत प्रारभ्याध्ययनं तथा ।

---

## अथ स्वाध्यायविधिर्ब्राह्मणानाम् ।

षण्मासानधीत्योत्सृजेयुः । श्रावण्यां पौर्णमास्यां प्रौष्ठपद्यां वा उपाकृत्य छन्दसामध्ययनम् । उपाकृत्य उपाकर्म्माख्यं कर्म्म कृत्वा । अत्र चोपनयनस्वाध्ययनाङ्गत्वादुपनयनदिन एव वेदारम्भः ।[2]

तथाच मनुः,—

कृतोपनयनस्यास्य व्रतादेशनमिष्यते ।

ब्रह्मणो ग्रहणञ्चैव क्रमेण विधिपूर्व्वकम् ॥

---

* मुद्रितविष्णुस्मृतौ ( Jolly's edition, A. S. B ) यश्च विद्यामासाद्याभिलोके तथा जीवेन्न वा तस्य परलोके फलप्रदा भवेत् । यश्च विद्यया यशः परेषां हन्ति । P. 87.

(१) B. न प्राधीत्योपरमेत्तथा प्रारभ्या० ।

(२) P. Adds एवञ्च इति उपाकर्म्मतत्त्वम् ।

इति [1]चाव्यवेनोपनयनाव्यवहितकाले ब्रह्मणो वेदस्य ग्रहणं दर्शयति।

याज्ञवल्क्योऽपि,—

उपनीय गुरुः शिष्यं महाव्याहृतिपूर्व्वकम्।
वेदमध्यापयेदेनं शौचाचारांश्च शिक्षयेत्॥

इत्युपनयनानन्तरं दर्शयत्यध्ययनं आनन्तर्य्यार्थक्त्वाप्रत्ययात्। एवञ्च सति शङ्खोक्तरीत्या उपनयनदिने वेदमारभ्य षण्मासान्ते उत्सर्गः। मन्वादिस्मृत्यन्तरादापौषे कृत्वा श्रावणी-पर्य्यन्तं शुक्लपक्षे वेदाध्ययनं कृष्णपक्षे [2]चाङ्गाध्ययनं कार्य्यम्। श्रावण्यामुपाकर्म्म तदूर्द्ध्वं शुक्ले कृष्णे च वेदाध्ययनं पौषो यावत्। एवञ्च प्रथमाध्ययन-मुपाकर्म्मविधिनैव। [3]प्रथमाध्ययने च श्रावणीप्राप्तावपि नोपाकर्म्म। उत्सर्गानन्तरं पुनरारम्भ एव उपाकर्म्मविधिः। हारीतो-ऽप्येवं क्रममाह। [4]अर्द्धपञ्चममासानधीत्योत्सृजति। पञ्चार्द्धषष्ठान् वा। त्र्यहमनध्यायः। पञ्चाहमेके। उपाकृत्य प्रतिपदि मधीयीत। प्रतिपदि वेदं प्रारभ्य।

याज्ञवल्क्यः:—

अध्यायानामुपाकर्म्म श्रावण्यां श्रवणेन वा।
[5]हस्तेनौषधीभावे वा पञ्चम्यां श्रावणस्य च॥

---

(१) F. चयव्हेनो०
(२) A. पञ्चाध्ययनं
(३) B. प्रथमार्द्धे (?) च श्रावणीं प्राप्तावपि नोपाकर्म्म। उत्सर्गस्याकृतत्वात्। उत्सर्गानन्तरं०।
(४) B अर्द्धपञ्चमासान०।
(५) A. हस्तेनौषधिभावो वा०।

पौषमासस्य रोहिण्यामष्टकायामथापि वा ।
जलान्ते छन्दसां कुर्य्यादुत्सर्गं विधिवद् द्विजः ॥

अध्यायानां स्वाध्यायशब्दवाच्यानां वेदवाक्यानां उपाकर्म्माख्यं कर्म्मसंस्कारः । विष्णुः,—'उत्सर्गोपाकर्म्मणोर्मध्ये वेदाङ्गाध्ययनम् ।

मनुः,—

'पुष्ये तु छन्दसां कुर्य्यादुत्सर्गं विधिवद् द्विजः ।
माघशुक्लस्य वा प्राप्ते पूर्व्वाह्णे प्रथमेऽहनि ॥
यथाशास्त्रन्तु कृत्वैवमुत्सर्गं विधिवद् द्विजः ।
विरमेत् पक्षिणीं रात्रिं यद्वाप्येकमहर्निशम् ॥
अत ऊर्द्ध्वन्तु छन्दांसि शुक्लेषु नियतः पठेत् ।
वेदाङ्गानि तु सर्व्वाणि कृष्णपक्षे समभ्यसेत् ॥

गौतमः—

---

(१) मुद्रितविष्णुस्मृतौ उत्सर्जनोपा॰ P. 85.

(२) मुद्रितमनौ,—( Visvanātha's edition, Bombay )

पुष्ये तु छन्दसां कुर्य्याद् बहिरुत्सर्जनं द्विजः ।
. ... ... ... ...
यथाशास्त्रन्तु कृत्वैवमुत्सर्गं छन्दसां बहिः ।
विरमेत् पक्षिणीं रात्रिं तदेवैकमहर्निशम् ॥
... ... ... ... ...
वेदाङ्गानि च सर्व्वाणि कृष्णपक्षेषु संपठेत् ॥
अ॰ ४ । श्लो॰ ९६-९८ ।

[1]श्रवणादि वार्षिकं प्रौष्ठपदीं वोपाकृत्याधीयीत च्छन्दांसि । [2]अर्द्धपञ्चमान्मासान् यावद् दक्षिणायनं वा । ब्रह्मचार्युत्सृष्ट-[3]लोमान् मासं भुञ्जीत । द्विमासो वा नियमः । श्रवणानक्षत्रेण संयुक्ता श्रवणा अनित्यत्वात् तद्धिताभावः ।

अयमर्थः—

वार्षिकं वर्षाकाले भवमध्ययनं श्रवणादि श्रावणपौर्णमास्यव-धिकं तत्रोपाकृत्य श्रावण्यामुपाकर्म्म कृत्वा कर्त्तव्यम् । वार्षिका-ध्ययनं प्रति उपाकर्म्माख्यकर्म्मणोऽङ्गत्वात् । कालान्तरमाह प्रौष्ठ-पद्यां वा वार्षिकाध्ययनं उपाकर्म्मपूर्व्वकं प्रारभ्य कार्य्यम् । एवञ्च वेदस्य प्रथमाध्ययनारम्भे नोपाकर्म्माख्यकर्म्मणोऽङ्गत्वम् ।

यत्तु उपाकर्म्माख्यं कर्म्म नाध्ययनाङ्गम् । अध्ययनस्वरूपे तत्फले चानुपयोगात् । फलस्यार्थज्ञानस्य दृष्टरूपस्य उपाकर्म्मा-दृष्टं विनापि सम्भवात् । तेन धनार्ज्जनाश्रितयाजनादिनियमवत् पुरुषार्थरूपं पापक्षयफलकमिति तन्न तुल्यञ्च साम्प्रदायिक-मित्यत्राध्ययनाङ्गानां प्रतिबन्धकपापक्षयद्वारा चाध्ययनस्वरूपो-पकारकत्वेन तदङ्गत्वकथनात् । उपाकृत्य वार्षिकमधीयीतेति

---

(१) मुद्रितगौतमस्मृतौ,—( Bhavanicharana's edition, Calcutta ) श्रवणादि वार्षिकं प्रौष्ठपदीं वोपाकृत्याधीयीतच्छन्दांस्यर्द्धपञ्चमान् मासान् पञ्च दक्षिणायनं वा ब्रह्मचार्युत्सृष्टलोमा न मांसं भुञ्जीत द्वैमास्यो वा नियमः । १६ अध्यायः ।

(२) B. अर्द्धपञ्चमान् वा मासान् ० ।

(३) B. लोमा न मांसं भुञ्जीत । द्विमासो वा नियमः ।

वाक्येनैव वार्षिकाध्ययनं प्रत्यङ्गत्वेन बोधनात्। प्रथमारम्भाङ्गत्वेऽपि तदुत्तराध्ययनेष्वविशार्थत्वेनाङ्गत्वादिति। न फलकल्पनया पुरुषार्थत्वमिति। दक्षिणायनशब्देनात्र भाद्रपदादिषण्मासाः। ब्रह्मचारीत्यादिक[1]मप्यध्ययननियमः। अयमविशार्थ एव। प्रकरणाचाङ्गम्।

---

## अथानाध्यायाः।

तत्र मनुः,—

> इमान् नित्यमनध्यायानधीयानो विवर्ज्जयेत्।[2]
> अध्यापनञ्च कुर्व्वाणः शिष्याणां विधिपूर्व्वकम्॥
> कर्णश्रवेऽनिले रात्रौ दिवा पांशुसमूहने।
> एतौ वर्षास्वनध्यायावध्यायज्ञाः प्रचक्षते॥

वर्षास्वेतावनध्यायौ। रात्रौ कर्णग्रहणयोग्यशब्दकरवायुवहनम्। दिवा च पांसूत्क्षेपणसमर्थवायुवहनमिति।

तथा—

> विद्युत्स्तनितवर्षेषु महोल्कानाञ्च संप्लवे।
> आकालिकमनध्यायमेतेषु मनुरब्रवीत्॥

विद्युदादिषु युगपज्जातेषु। [3]एकवारानेकमहोल्कापाते निमित्तकालादारभ्य पुनः परदिने तत्कालपर्य्यन्तमनध्यायः।

---

(१) P. अप्युपाध्यायनियमः। B उपाध्यायनियमः।

(२) A. B. विवर्जयेत्।

(३) P. एकदानेक०

तथा—

एतांस्त्वभ्युदितान् विद्याद् यदा प्रादुष्कृताग्निषु ।
तदा विद्यादनध्यायमनृतौ चाभ्रदर्शने ॥

प्रादुष्कृताग्निषु होमार्थमग्निप्रकाशकर्म्मकालेषु । अनृतौ वर्षादिभ्योऽन्यत्र अभ्राणां दर्शने । समाचाराद् बहूनामित्यर्थः । सन्ध्यासु विद्युदादिसमस्तान्वये तदा सन्ध्यायामेवानध्याय इत्यर्थः । सन्ध्यासु विद्युदादिप्रत्येकदर्शने तदैवानध्याय इति लक्ष्मीधरः । एवमनृतौ बहुमेघदर्शने तदेव ।

तथा,—

निर्घाते भूमिचलने ज्योतिषाञ्चोपसर्जने ।
एतानाकालिकान् विद्यादनध्यायान् ऋतावपि ॥
प्रादुष्कृतेष्वग्निषु तु विद्युत्स्तनितनिःस्वने ।
सज्योतिः स्यादनध्यायः शेषे रात्रौ यथा दिवा ॥

ऋतावपि वर्षासु । तथा प्रादुष्कृताग्निषु । विद्युत्स्तनितनिःस्वने वर्षासु सज्योतिरनध्यायः । सज्योतिः पूर्व्वसन्ध्यायां दिनमात्रम् । सायं सन्ध्यायां रात्रिमात्रञ्च । विद्युत्स्तनितादन्यत्र निमित्ते रात्रौ दिवाचेत्यर्थः ।

तथा—

नित्यानध्याय एव स्याद् ग्रामेषु नगरेषु च ।
धर्म्मनैपुण्यकामानां पूतिगन्धे च सर्व्वशः ॥[1]

(१) हरितवनो,—वर्मदा । अ० ४ । श्लो० १०७ ।

अतिशयधर्म्मकामस्यायमनध्यायः काम्यः। इतरेषां ग्रामनगरदुर्गदेशाध्ययनं न वैगुण्यकरम्।

गौतमः,—

नित्यमेके नगरे। एतच्च गोमयापर्य्युक्षितविषयम्।

वशिष्ठः,—

नगरे तु कामं गोमयेन पर्य्युक्षिते परिलिखिते वा। नगरग्रहणं ग्रामस्याप्युपलक्षणम्।

मनुः,—

अन्तर्गतशवे ग्रामे वृषलस्य च सन्निधौ।
अनध्यायो रुद्यमाने समवाये जनस्य च॥
उदके मध्यरात्रे च विण्मूत्रस्य विसर्जने।
उच्छिष्टः श्राद्धभुक् चैव मनसाऽपि न चिन्तयेत्॥

वृषलस्याधार्म्मिकस्य। रुद्यमाने रोदनसमये। मध्यरात्रे त्रिचतुर्मुहूर्त्तात्मके। निशायां चतुर्मुहूर्त्तमिति गौतमः।

मनुः,—

प्रतिगृह्य द्विजो [1]नित्यमेकोद्दिष्टस्य केतनम्।
त्र्यहं न कीर्त्तयेद् ब्रह्म राज्ञो राहोश्च सूतके॥

एकोद्दिष्टस्य प्रेतैकोद्दिष्टस्य। राज्ञः सूतके पुत्रजननादौ। राहोः सूतके चन्द्रसूर्य्योपरागे।

---

(१) कुल्लूकभट्टधृते,—विद्वानेकोद्दिष्टस्य०। अ० ४। श्लो० ११०।

तथा,—

यावदेकानुदिष्टस्य स्नेहगन्धश्च तिष्ठति।

विप्रस्य विदुषो देहे तावद्ब्रह्म न कीर्त्तयेत्॥

एतच्च त्रिरात्रादूर्द्ध्वमपि।

तथा,—

शयानः प्रौढ़पादश्च कृत्वा चैवावसक्थिकाम्।

नाधीयीतामिषं जग्ध्वा सूतकान्नाद्यमेव च॥

प्रौढ़पादः आसनाद्यारोपितपादः। अवसक्थिकां जानौ पर्य्यङ्क-बन्धरूपाम्।

नीहारे बाणशब्दे च सन्ध्ययोरेव चोभयोः।

अमावास्याचतुर्द्दश्योः पौर्णमास्यष्टकासु च॥

अमावस्या गुरुं हन्ति शिष्यं हन्ति चतुर्द्दशी।

ब्रह्माष्टकापौर्णमास्यौ तस्मात् ताः परिवर्ज्जयेत्।

बाणशब्दः सततन्त्रिवीणावाद्यो। अष्टकाग्रहणमितराष्टमीष्वल्प-दोषार्थम्। शुक्लचतुर्द्दश्यां सर्व्वाष्टमीषु च अष्टकावर्ज्जं नक्त-मनध्याय इति स्मृत्यन्तरम्।

गौतमः,—

अमावास्यायां द्व्यहं वा। कार्त्तिकी फाल्गुन्याषाढ़ी पौर्णमासीति तिस्रोऽष्टका त्रिरात्रमन्त्यमेके। अमावास्यायां द्व्यहं अमावास्यानन्तरं प्रतिपच्च। कार्त्तिक्यादीनां पुनः कीर्त्तनं

(१) हरिहृतमनो,— मन्वो वेषच०; अ० ४। श्लो० १११।

द्दोषातिशयार्थम्। तिस्रोऽष्टका माघह्रायणसूर्यम्। त्रिरात्रमन्व-मेके अन्वष्टायां त्रिरात्रमनध्यायइत्येके। त्रिरात्रञ्च सप्तमीनवम्या-वन्तर्भाव्येति मेधातिथिः। एवञ्चान्वष्टकायां त्रिरात्रमेकरात्रं वानध्याय इति विकल्पः। अन्ययोस्त्रिरात्रनियमः।

यत्तु,—

प्रजापतिं हि तिष्ठन्ति सर्व्वा विद्याश्च पर्व्वसु।
तस्माद्धर्म्मार्थकामार्थी नैताः पर्व्वसु कीर्त्तयेत्॥

इति काम्यं पर्व्ववर्जनं यमस्मृतावुक्तं तद्वेदातिरिक्तधर्म्मशास्त्रादि-विषयम्।

मनुः,—

पांसुवर्षे दिशां दाहे [1]गोमायुरुदिते तथा।
श्वखरोष्ट्रे च रुदति पंक्तौ च न पठेद् द्विजः॥

पंक्तौ श्वखरोष्ट्रपंक्तौ स्थितायाम्।

वसित्वा मैथुनं वासः श्राद्धिकं प्रतिगृह्य च॥
प्राणि वा यदि वाऽप्राणि यत्किञ्चित् श्राद्धिकं भवेत्।
तदालभ्याप्यनध्यायः पाण्यास्यो हि द्विजः स्मृतः॥
चौरैरुपप्लुते ग्रामे सम्भ्रमे चाग्निकारिते।
आकालिकमनध्यायं विद्यात् सर्व्वाद्भुतेषु च॥
उपाकर्म्मणि चोत्सर्गे त्रिरात्रं क्षेपणं स्मृतम्।
अष्टकासु त्वहोरात्रमृत्वन्तासु च रात्रिषु॥

ऋत्वन्तासु वसन्तादि ऋत्वन्तासु।

---

(1) खाहृतमनौ,—गोमायुविरुते०-श्वखरोष्ट्रे च रुवति०। अ० ४। श्लो० ११५।

तथा,—

नाधीयीताश्वमारूढो न वृक्षं न च हस्तिनम्।
न नावं न खरं नोष्ट्रं नेरिणस्थो न यानगः॥

यानं शकटादि।

न विवादे न कलहे न सेनायां न सङ्गरे।
न भुक्तमात्रे नाजीर्णे न वमित्वा न शुक्तके॥

भुक्तमात्रे यावदार्द्रपाणिरिति स्मृत्यन्तरम्। शुक्तके अम्लोद्गारे।

अतिथिञ्चाननुज्ञाप्य [1]मारुते चाभिवाति वै।

अभिवाति अभिमुखेन वाति।

रुधिरे च स्रुते गात्रात् शस्त्रेण च परिक्षते।

रुधिरस्रावः शस्त्रं विनापि।

सामध्वनावृग्यजुषी नाधीयीत कदाचन।
वेदस्याधीत्य वाप्यन्तमारण्यकमधीत्य च॥

अङ्गिराः,—

सामध्वनौ सत्यपि यज्ञेऽधीयीत अन्तर्भूतत्वात्।

तथा,—

पशुमण्डूकमार्जारश्वसर्पनकुलादिभिः।
अन्तरागमने विद्यादनध्यायमहर्निशम्॥

यमः,—

मार्त्तस्वरे वाद्यमाने गीते वा रुदितेऽध्वनि।
न धाराशनिसम्पाते नाकालस्तनिते तथा॥

---

(1) कुत्सितमनो, :मारुते वाति वा भ्रशम्। अ० ४। श्लो० १२२।

न श्वसृगालसङ्घाते न च चण्डालसंप्लवे।

घ्राणनिर्वेशः। अकालः वर्षाभ्योऽन्यः कालः।

यमः,—

श्लेष्मातकस्य च्छायायां शाल्मलेर्मधुकस्य च।
कदाचिदपि नाध्येयं कोविदारकपित्थयोः॥

तथा,—

न संग्रामे न सेनायां विवाहे कलहे तथा।
शक्रध्वजनिपाते च उल्कापाते तथैव च॥

नाधीयीतेत्यर्थः।

तथा,—

अनध्यायस्त्रिरात्रन्तु भूमिकम्पे तथैव च।

त्रिरात्रन्तु वाक्यभेदाद् भूमिकम्पमात्रविषयम्। याज्ञवल्क्योक्त भूमिकम्पग्रहणं क्षुद्रभूकम्पविषयम्।

याज्ञवल्क्यः,—

अनध्यायस्त्र्यहं प्रेतेः शिष्यर्त्विग्ज्ञातिबन्धुभिः।
उपाकर्म्मणि चोत्सर्गे स्वशाखाश्रोत्रिये मृते॥

तथा,—

अमेध्ये शवशूद्रान्तु श्मशानपतितान्तिके।

नाध्ययनमित्यर्थः।

गौतमः,—

वर्षति चैके वल्मीकसन्ताने। आचार्य्यपरिवेशे। ज्योतिषोश्च।

वल्मीकं स्वहष्ठच्छदि: प्रान्तः । तत्र सन्ततवर्षधारा यदि 'पतति ।
आचार्य्ययोर्गुरुशुक्लयो: परिवेषे मण्डले । ज्योतिषोच सूर्य्या-
चन्द्रमसो: परिधौ नाध्येयमित्येके ।

गौतमः,—

आकालिका भूमिकम्पराहुदर्शनोल्काः । अकृतावित्यर्थः ।
स्तनयित्नुवर्षविद्युत्सु प्रादुष्कृताग्निषु अहः क्षतौ । विद्युति सायं
नक्तं चापररात्रात् । सायंकाले विद्युति सत्यामित्यर्थः । त्रिभागा-
दिषु सर्व्वम् । रात्रेरह्नश्च त्रिभागमारभ्य सायं प्रातः सन्ध्यापर्य्यन्त-
मनुवर्त्तमानायां विद्युति सर्व्वं नक्तं सर्व्वमहरनध्यायः । उल्का
विद्युत्समित्येके । स्तनयित्नुरपराह्णे । अनध्याये विद्युत्समः । 'प्रदोषे-
ऽप्येके । तथा,–सर्व्वं नक्तमर्द्धरात्रात् । अहश्चेत् सज्योतिः । अर्द्ध-
रात्रपर्य्यन्तं भवन् मेघः सर्व्वं नक्तमनध्यायं करोति । अहश्चेत्
प्रागपराह्णादनुवर्त्तते मेघः तदा सर्व्वं दिनमनध्यायः । हारीतः,—
सायं-सन्ध्यायां स्तनिते रात्रावनध्यायः । प्रातः-सन्ध्यायामहोरात्र
मिति । तथा,—विषयस्थे च राजनि प्रेते । अध्ययनदेशाधिपतौ ।
तथा,—विप्रोष्य । शिष्योपाध्याययो: प्रवासे आकालिकोऽन-
ध्यायः । तथा,—श्राद्धमनुष्ययज्ञे भोजनेन अहोरात्रम् ।
मनुष्ययज्ञः अतिथिपूजा । अभितो वार्षिकसर्व्वविद्युत्स्तनयित्नु-
सन्निपाते । वर्षासु सर्व्वविद्युदादिसन्निपात इत्यर्थः । तथा,—
अप्रस्यन्दिनि सन्निपाते त्रिरात्रम् । अप्रस्यन्दिनि वर्षाभ्योऽन्यत्र

---

(१) B. अर्पति । (२) B. P. प्रदोषेऽप्येवम् ।

विद्युदादिसन्निपात इत्यर्थः । अर्द्धं भोजनादुत्सवे । उत्सवे देवताद्युत्सवे भोजनादूर्द्धमनध्यायः । तथाच,—[1]प्राधीतस्य । प्रथमाध्ययनं प्रवृत्तस्य भोजनादूर्द्धमनध्यायः । प्रतिविद्यञ्च यान् स्मरन्ति । विद्याभेदेन येऽनध्यायाः परम्परया शिष्टैः स्मर्य्यन्ते तत्र नाध्येयम् । निर्घातभूमिचलनोल्कापातदिग्दाहपांसुशोणित-मांसास्थिकेशदधिलाजाङ्गारवर्षेषु शान्तिस्वस्त्ययने कृत्वा । एतेषु निमित्तेषु शान्तिस्वस्त्ययनकरणावधिरनध्यायः । [2]प्रशस्तौ शान्ति-करणाभावनिश्चये तदवधि स्वाध्याय इत्यर्थः । तथा,—अभ्युदिताभि-निर्म्मुक्तवान्तस्नातनग्नदुःस्वप्नदर्शनेषु । एकोद्दिष्टसूतकमृतकेष्वाद्य प्रायश्चित्तं कृत्वा । उदये सुप्तः अभ्युदितः । अस्ते सुप्तः अभिनिर्म्मुक्तः । स्नातः स्खलितरेताः । आद्य भुक्त्वा । बहुलं संप्राप्तच्छन्दसोरिति न जश्विरादेशः । एतेषु प्रायश्चित्तकरणावधि-रनध्यायः । प्रायश्चित्ताभावे पूर्व्वोक्ता व्याख्या । पुनर्हारीतः,—चैत्रश्रावणमार्गशीर्षाणामादिप्रतिपदो नित्याः । आदिप्रतिपदः शुक्लप्रतिपदः । नित्या इत्यनेन अन्यासां प्रतिपदां काम्यतोक्ता । पुनर्हारीतः,—

न वृक्षस्थो न तीर्थस्थो [3]नाप्सु कूपसभासु च ।

तीर्थं जलावतरणस्थानम् । पुनर्हारीतः,—बलिश्राद्धमहोत्सवेषु भुक्त्वाऽनध्यायः । श्राद्धमत्र पार्व्वणश्राद्धमपि । एकोद्दिष्टे दोषा-

---

(१) B. प्राधीतस्य च ।

(२) B. अप्रशस्ता ।

(३) B. वापीकूपसभासु च ।

चित्रम् । अहःशेषमत्रानध्याय इति जयस्वामी । पैठीनसिः,—नीललोहितप्रादुर्भावे देवेन्द्रायुधदर्शने । अहोरात्रमनध्ययनम् । बौधायनः,—ऋत्विक्देशपतिश्रोत्रिय[1]प्रायेष्वहोरात्रम् । रात्रि याज्ञवल्क्येन त्रिरात्रानध्यायवचनाद् देशपतिरत्र देशाधिकारी । श्रोत्रियश्च भिन्नशाखीयः । स्वशाखिनि त्रिरात्रविधानात् । पुनर्बौधायनः,—शूद्रापपातदर्शनश्रवणयोश्च तावन्तं कालम् । अपपातश्चण्डालादिः । पुनर्बौधायनः,—अन्येषु चाद्भुतोत्पातेषु अन्यत्र मानसात् । मानसोऽपि जननमरणयोरनध्यायः । अद्भुतोत्पाताः प्रतिमाहसनादयः । मानसोऽपीत्यपिशब्दाद् वाचिकोऽपि । गौतमः,—मनसाऽप्यशुचिर्नाधीयीतेति । पैठीनसिः,—रात्राविन्द्रधनुर्दृष्ट्वा वज्रपतनात् आचार्य्यमरणात् इन्द्रपतनात् सूर्य्याचन्द्रमसोरुपप्लवात् हेतुदर्शनान्निर्घातात् भूमिचलनादेकैकस्मिन् त्रिरात्रमनध्यायः । आपस्तम्बः,—निगमेष्वध्ययनं वर्जयेत् । [2]आनडुहेन शकृत्पिण्डेनोपलिप्ते अधीयीत । निगमो हट्टः । तथा,—श्मशाने सर्व्वतः शम्याप्रासात् । प्रादेशमात्रा रथशम्या यावति दूरे प्रक्षिप्ता पतति तावद्दूरं सर्व्वतः श्मशानात् परित्यज्याध्येयमित्यर्थः । तथा,—ग्रामेणाध्यवसिते क्षेत्रेण वा नानध्यायः । ज्ञायमाने तु तस्मिन्नेव देशे नाधीयीत । श्मशानं क्षेत्रं वा प्राप्ते श्मशाने नानध्यायः । ज्ञायमाने श्मशानत्वेन तस्मिन्नेवानध्यायः । न शम्याप्रासात् ।

---

(१) B. प्रश्न(?)चेष्वहो० ।

(२) हरिदत्तापस्तम्बधर्म्मसूत्रे,—आनडुहेन वा शकृत् ० १ । ३ । ९ । ५ ।

तथा,—श्मशानवच्छूद्रपतितौ। शूद्रायान्तु प्रेक्षणप्रतिप्रेक्षणयोरन-ध्यायः। तथान्यस्यां स्त्रियां वर्णव्यतिक्रान्तायां मैथुने। अधम-वर्णेन मिथुनगतायाः अन्योन्यदर्शने इत्यर्थः। पुनरापस्तम्बः,—[2]यावता कृष्णां रोहिणीमिति शम्याप्रासाद् विजानीयादेतस्मिन्नेव-काले विद्योतमानायां विद्युति सप्रदोषमहरनध्यायः। [3]ईषदन्ध-कारे किञ्चिद्दूरे शुक्लकृष्णाविवेकः। तत्काले विद्युति सत्यां रात्रि प्रथमप्रहरं दिनञ्चानध्यायः। पुनरापस्तम्बः,—[4]दह्रे चापररात्रे स्तनयित्नुना। ऊर्द्धमर्द्धरात्रादित्येके। दह्रेऽल्पावशिष्टेऽपररात्रे तृतीयभागे शब्दवता मेघेन निमित्तेन सप्रदोषमुत्तरदिनमन-ध्यायः। तथा,—[5]गवां घासावरोधेन। वध्यानाञ्च यावता हन्यन्ते। घासावरोधे घासविरोधे। वधायानीतानां हनन-पर्य्यन्तमनध्यायः।

पुनरापस्तम्बः,—

[6]वैरमणे गुरुष्वष्टाक्ये त्र्यहम्। तथा सम्बन्धेषु ज्ञातिषु। मातरि पितरि आचार्य्ये द्वादशाहाः। वैरमणं अध्ययनसमाप्तिः। गुरुषु

---

(१) मुद्रितापस्तम्बीयधर्म्मसूत्रे,—० रेवानध्यायः। १। ३। ८। ११।
(२) ,, उपव्युषं यावता वा ० ......विद्योतमाने सप्रदोषमहरनध्यायः। १। ३। ८। २२।
(३) B. ईषद्दर्यकारो हि किंचद्दूरे ०।
(४) ,, दह्रे पररात्रे ० १। ३। ८। २३।
(५) ,, गवां घासरोधे। १। ३। ८। २५।
(६) ,, वैरमणो गुरुष्वष्टाक्य औपाकरण इति त्र्यहाः। १।३।१०।२।

प्रेतेषु। अष्टाक्ये अष्टकायाम्। मातरि जनन्याम्। पितरि जनके। आचार्य्ये उपनीय साङ्गवेदाध्यापके। आपस्तम्बः,—सर्व्वेषु च अव्दकर्म्मसु यत्र संवृण्येरन्। छर्द्दयित्वा स्वप्नान्तम्। सर्पिर्वा प्राश्य। अव्दकर्म्माणि गीतवाद्यानि तेषु सर्व्वेषु सत्सु। पुनरापस्तम्बः,—प्रोदकयोश्च पाण्योः। प्रचुरोदकयोः। काण्डोपाकरणे चामाढकस्य। काण्डसमापने चापिढकस्य। काण्डोपक्रमे समापने चानध्यायः। यत्काण्डमुपाकुर्व्वीत [1]यदनुवाकमुपाकुर्व्वीत न तदहरधीयीत। तथा,—उपाकरणसमापनयोश्च पारायणस्य तां विद्याम्। पारायणं धर्म्मार्थमादित आरभ्य समाप्तिपर्य्यन्तं पठनम्। तद् यस्या विद्यायास्तामेव तदुपक्रमे समाप्तौ च नाधीयीत। तथा,—[2]मनुष्यप्रकृतियज्ञे भुक्त्वेत्येके। ये मनुष्यदेहेनैव देवत्वं गताः नन्दो(श्वर)प्रभृतयः (।) (यागे) तेषामामद्रव्यस्वीकारे अनध्यायः। पुनरापस्तम्बः,—[3]क्षौरकर्म्मसु। नाधीयीतेत्यर्थः। क्षौरकर्म्माणि पादप्रक्षालनमुत्सादनमनुलेपनमुद्वर्त्तनमभ्यङ्ग कृत्यादीनि। पुनरापस्तम्बः,—मुहूर्त्तं विरते वाते। सत्याहृक्षामिकस्तक इति [4]स्वप्नपर्य्यन्तम्। [5]नक्ताचारण्ये अनरण्ये वा। सत्याहृकौ

(१) उद्धृतापस्तम्बीयधर्म्मसूत्रे यस्य चानुवाक्यं कुर्व्वीत नतत्तदहरधीयीत। १। २। ११। ६

(२) ,, मनुष्यप्रकृतीनां च देवानां यज्ञे भुक्त्वेत्येके। १। २। ११। २

(३) ,, क्षौरकर्म्मसु च। १। २। ११। १२

(४) ,, • स्वप्नपर्य्यान्तम्। १। २। ११। २२

(५) ,, नक्तमुःरण्ये नक्ताभ्छिरण्ये वा। १। २। ११। २४

शृगाली। एकशृक एकचरः शृगालः। एतयोः शब्दे श्रवण-पर्य्यन्तमनध्यायः। पुनः स एव,—अननूक्तं चापर्त्तौ छन्दसो नाधीयीत। [1]प्रदोषे सार्व्वकालिकम्। अननूक्तं अयनात् पूर्व्वं उपाकर्म्मणः पूर्व्वं नाधीयीत। एतच्च प्रथमारम्भव्यतिरिक्त-विषयम्। यतो(ततो)पाकर्म्मोत्तरताविषयत्वस्य न्याय्यत्वात्। वशिष्ठः,—[2]प्रसारितपादोपस्थकृतस्य गुरुसमीपे।

तथा विद्युदर्णव पतननादाङ्गकम्पप्रयातेषु। अर्घं प्रतिमा।

एते उत्पाताश्च। [3]शङ्खलिखितौ,—नगरचतुष्पथमहापथसंक्रमेषु अनध्यायः। राजामात्यमहापुरुषस्वर्य्याणे। अनुकूले मित्रे अतीते। नावभृथयज्ञवाटे। महापुरुष उत्कृष्टगुणशाली। तथा नान्योन्यहस्तसन्धौ कौमुद्यां सर्व्वां रात्रिम्। दोषातिशयार्थ-मेतत्। विष्णुः,—न नरेन्द्रप्रयाणे।

मनुः,—

नाविस्पष्टमधीयीत न शूद्रजनसन्निधौ।
न निशान्ते परिश्रान्तो ब्रह्माधीत्य पुनः स्वपेत्॥

---

(१) ,, प्रदोषे च। सार्व्वकालिकमाम्नातम्। १। २। ११। २६-२७।

(२) मुद्रितवशिष्ठस्मृतौ—Ānandāçrama series स्मृतीनां समुच्चयः) प्रसारित-पादोपस्थकृतस्योपाश्रितस्य च गुरुसमीपे। अ० १२ श्लो० ८। रेखाङ्कितांशा नैव परिस्फुटार्थाः। मुद्रितवशिष्ठस्मृतौ तु "दिङ्नादपर्व्वतनादकम्पप्रपातेषु" इति पाठो दृश्यते। अ० १३ श्लो० ८।

(३) मुद्रितशङ्खलिखितयोर्न दृश्यत एष पाठः।

देवीपुराणे,—

न सङ्कीर्णे जने कुर्य्यात् न च तस्करसन्निधौ ।
न श्मश्रुकरकाकारिक्रकवाकुसमागमे ॥

श्मश्रुकरो नापितः । काकारिः पेचकः । क्रकवाकुः कुक्कुटः ।

तथा,—

इन्द्रोत्सवे च दर्शे च संक्रान्तौ च तथायने ।

नरसिंहपुराणे,—

महानवम्यां द्वादश्यां भरण्यामपि चैव हि ।
तथाक्षयतृतीयायां शिष्यान्नाध्यापयेद् बुधः ।
माघमासे च सप्तम्यां रथाख्यायाञ्च वर्जयेत् ।
अध्यापनमथाभ्यक्तः स्नानकाले च वर्जयेत् ॥
नीयमानं शवं दृष्ट्वा महीस्थं वा द्विजोत्तमः ।

द्वादश्यां शयनोत्थानद्वादश्याम् । रथाख्यायां सप्तम्यामेव ।

अनध्यायानुवृत्तौ शङ्खः,—

देवायतनवल्मीकश्मशानशवसन्निधौ ।

अत्र देवायतनपदं विष्णुसूर्य्यगृहव्यतिरिक्तपरम् । देवीपुराणे विष्णुगृहेषु चेतिविधानात् ।

श्लोकभीष्मः—

चातुर्मास्यद्वितीयासु मन्वादिषु युगादिषु ।
विषुवायनयोर्हन्त शयने बोधने तथा ॥
पक्षादिके त्रयोदश्यां तस्यामेवोत्तरातिथिः ।
दर्शस्य चेद्दिवैव स्यादनध्यायः श्रुतावपि ॥

वृद्धगार्ग्यः,—

आषाढ़्यूर्ज्जे तपस्ये च या द्वितीया विधुक्षये।

चातुर्मास्यद्वितीयास्ताः प्रवदन्ति महर्षयः॥

आषाढ़पौर्णमास्यनन्तरकृष्णद्वितीयायां कार्त्तिकपौर्णमास्यनन्तरकृष्ण-द्वितीयायां फाल्गुनपौर्णमास्यनन्तरकृष्णद्वितीयायामित्यर्थः। तत्र [1]चन्द्रक्षयोपक्रमात्। मन्वादयश्च कार्त्तिकचैत्रज्यैष्ठफाल्गुनपौर्णमास्यः। फाल्गुनदर्शः। आश्विनशुक्लनवमी। कार्त्तिकशुक्लद्वादशी। चैत्रभाद्रपदशुक्लतृतीया। पुष्यसितैकादशी। आषाढ़सितदशमी-पौर्णमास्यौ। श्रावणकृष्णाष्टमी। माघसप्तमीचेति। युगादयः वैशाखशुक्लतृतीया। कार्त्तिकशुक्लनवमी। माघभाद्रकृष्णत्रयोदशी चेत्येता(चेत्येते)युगादयः। विषुवायनयोर्विशेषमाह [2]यमपार्श्वः,—

दिवायने क्रमेद्भानुर्यदि रात्रौ परापरे।

नाधीयीताहनि रात्रावेवं विषुवयोरपि॥

दिवासङ्क्रमे पूर्व्वापरयो रात्र्योरनध्यायः। रात्रिसंक्रमे पूर्व्वो-त्तरयोर्दिनयोः। त्रयोदश्या उत्तरतिथौ चतुर्द्दश्यां दर्शस्य दिवसे किञ्चिद्दर्शनेऽपि त्रयोदश्यामनध्यायः। श्रुतावपि श्रावण-द्वादश्यामप्यनध्याय इत्यर्थः।

आभाकासितपक्षेषु मैत्रश्रवणरेवती:।

द्वादश्यां संस्पृशेयुश्चेत् तत्रानध्ययनं विदुः॥

---

(१) A. B. चन्द्रक्षयोपरमात्।

(२) B. गार्ग्यः।

शौनकीतमः,—

यायाद् यद्यन्तरे व्याघ्रो नैवाधीयीत तायनम् ।

तथा,—

गुर्व्वन्तेवासिनां वेदमध्येतृणां च मध्यतः ।
ययुः श्वश्वसर्पाकाजा नाधीयीताहर्वत्सरम् ॥

विश्वामित्रः,—

विड्ढविड्वराहैश्च ग्रामारण्यभववायसैः ।
कृतेऽन्तराये पञ्चाद्यैरनध्यायस्त्र्यहं मतः ॥

ग्रामारण्यभवा मनूक्ता रजकचर्म्मकारनटकैवर्त्तादयः ।

वृद्धगार्ग्यः—

रात्रौ यामद्वयादर्वाक् सप्तमी च त्रयोदशी ।
प्रदोषः स तु विज्ञेयः सर्व्वविद्याविगर्हितः ॥
रात्रौ नवसु नाड़ीषु चतुर्थी यदि दृश्यते ।
प्रदोषः स तु विज्ञेयो वेदाध्ययनगर्हितः ॥

शिष्टाः पठन्ति,—

रात्रौ यामत्रयादर्वाक् यदि पश्येत् त्रयोदशीम् ।
प्रदोषः स तु विज्ञेयः सर्व्वविद्याविगर्हितः ॥

मनुः,—

द्वावेव वर्जयेन्नित्यमनध्यायौ प्रयत्नतः ।
स्वाध्यायभूमिञ्चाशुद्धामात्मानञ्चाशुचिं नरः ॥

---

(१) शुद्रितमनो ० द्विजः । अ० ४ । श्लो ० १२७ ।

अत इमान् नित्यमनध्यायानिति सर्व्वानध्यायेषु उपक्रमे नित्यता-
भिधानात् पुनर्द्वावेव नित्यं प्रयत्नतो वर्जयेदिति वचनं पूर्व्वान-
ध्यायेषु ग्रहणधारणादि[1]समर्थविषयत्वं नित्यता । भूम्यशौचा-
त्मशौचयोस्तु समर्थासमर्थसर्व्वसाधारण्यं नित्यत्वमिति मन्द-
प्रज्ञोऽप्यशुद्धभूमौ आत्माशुद्धौ च नाधीयीतेति विवेकः ।

अत्राध्ययनाङ्गधर्म्मनियमजातस्य ब्रह्मचारिधर्म्मानध्यायवर्ज-
नादिरूपस्य पुरुषार्थत्वमेव । [2]अध्ययनफलस्यार्थज्ञानदृष्टरूपस्य तेन
विनाऽपि सिद्धेः । श्रुत्याद्यभावाच्च क्रत्वर्थत्वं नास्तीति ब्रह्मचारि-
धर्म्मानध्यायवर्जनादिलोपे न क्रतुवैगुण्यं किन्तु धनार्जनाश्रितया-
जनादिनियमत्याग इव पुरुषस्य प्रत्यवाय इति केचित् । तन्न ।
यद्यपि [3]दृष्टरूपमर्थज्ञानं नियमजातं विना सिध्यति तथापि न
तेन क्रत्वधिकारः । विधिसिद्धस्य ज्ञानस्य क्रतुभिः स्वीकरणात् ।
अध्येतव्य इति कर्म्मव्युत्पन्नतव्यप्रत्ययेन स्वाध्यायस्य यथाशक्ति-
कृताङ्गसहितेनाध्ययनेन संस्कार्य्यत्वप्रतीत्या यथाशक्तिकृताङ्ग-
सहिताध्ययनसंस्कृतेन स्वाध्यायेनार्थं जानीयादिति विधि-
प्रवृत्तिः । तेन चाध्ययनाङ्गधर्म्मजातस्याविघ्नार्थत्वेन स्वाध्यायाप्तौ
सहकारित्वम् । कस्यचिच्च नियमस्य स्वाध्यायाक्षरगतादृष्ट-
रूपातिशयजनकत्वम् । व्रीहिप्रोक्षणादेरिव व्रीहिगतातिशयजनन-
कत्वम् । तेन साङ्गाध्ययनसंस्कृतस्वाध्यायजन्येनैव ज्ञानेन क्रत्व-

---

(१) B. समर्थविषयवर्जितसमयाः ।

(२) B. अध्ययनफलस्यार्थज्ञानस्य दृष्टत्वमस्य तेन विनार्थसिद्धेः ।

(३) B. दृष्टपुरुषार्थ० ।

धिकारः सिध्यति । अङ्गलोपेऽर्थज्ञानमात्रेण न क्रत्वधिकारः ।
अन्यथा विधिं विनापि यथाकथञ्चिद् वेदार्थज्ञानेन शूद्राधि
प्रसङ्गात् । एवञ्च नाध्ययनाङ्गधर्म्मजातस्य पुरुषार्थत्वम् । तत्
जैमिनिना विद्यायां धर्म्मशास्त्रमिति । विद्यायां वेदाक्षरग्रह
धर्म्मशास्त्रम् । भूमिभोजनाब्रघासादिधर्म्मशास्त्रमङ्गमित्यर्थः
भाष्यकारोऽप्याह । यो धर्म्म उक्तो विद्याग्रहणार्थः । स
कर्म्मणः श्रुत्याद्यभावात् विद्यासंयोगाच्च । तथा वार्त्तिकेऽपि
यदि स्वर्गः कल्प्येत पुरुषार्थता स्यात् । अथ 'क्रतुसिद्धिर्दूरस्योप
वारितैव । तस्मात् सम्प्रदायस्याक्षरग्रहणं साधयतो धर्म्मजातमनु
ग्राहकमिति । तथाऽविघ्नसाकाङ्क्षितत्वादर्थद्वारेणाविघ्नार्थत्वेन
सम्प्रदायाङ्गत्वमिति । अतएव ब्रह्मयज्ञपारायणाङ्गत्वर्थमन्त्रपाठादौ
नानध्यायादरः । अक्षरग्रहणार्थत्वादध्ययनाङ्गानाम् । कर्म्माङ्गत्वे
नानाभावाच्चेत्युक्तम् । तदुक्तं विद्यां प्रतिविधानाद्वा सर्व्वकाल
प्रयोगः स्यात् ।

मनुश्च—

नैत्यके नास्त्यनध्यायो ब्रह्मसत्रं हि तत् स्मृतम् ।

इति न्यायप्राप्तमनुवदति ।

तथा—

वेदोपकरणेचैव स्वाध्याये चैव नैत्यके ।
नानुरोधोऽस्त्यनध्याये होममन्त्रेषु चैव हि ॥

(१) P. क्रतुसिद्धिर्दूरस्थो० ।

वेदोपकरणं वेदातिरिक्तविद्याख्यानं तेषु वेदाध्ययनाप्रसक्त कः प्रसङ्ग इति सर्व्वोऽयं न्यायप्राप्तानुवादः। तेन यत्रैव सर्व्वा विद्या न पठेदित्याह तत् वचनं तत्रैव। वेदोपकरणेऽनध्यायो न सर्व्वत्र। ब्रह्मयज्ञे च मनसाऽनध्याय [1]इत्यापस्तम्बीयं वचनम्।

---

## अथाध्ययनक्रमः।

प्रथमारम्भे तु मातृपूजापूर्व्वकमाभ्युदयिकम्। अग्निस्थापनम्। ब्रह्मचारिणमाज्ययाग्नेः पश्चात् तस्य उत्तरत उपवेशनम्। [2]ब्रह्मोपवेशनाद्याज्यभागान्ते। यदि ऋग्वेदारम्भः पृथिव्यै स्वाहाग्नये स्वाहा इति द्वे आहुती। यदि यजुर्वेदारम्भः अन्तरिक्षाय वायवे इति द्वे आहुती। यदि सामवेदारम्भः दिवे सूर्याय इति द्वे। यद्यथर्व्ववेदारम्भः दिग्भ्यश्चन्द्रमसे इति द्वे हुत्वा ब्रह्मणे स्वाहा छन्दोभ्यः स्वाहा इति सर्व्वत्र। अन्याश्च सप्ताहुतयः। प्रजापतये। देवेभ्यः। ऋषिभ्यः। श्रद्धायै। मेधायै। सदसस्पतये। अनुमतये इति च। ततो भूरादिप्राजापत्यान्ता नवाहुतयः। स्विष्टिकृत्। प्राशनम्। मार्जनम्। पूर्णपात्रं वरो वा ब्रह्मणे। ततः प्रारम्भः। [3]शिष्यस्य सकृदाचमनम्। कर्णावपिधाय ॐ भूर्भुवः स्वरित्युक्त्वा

(१) B. इत्यापस्तम्बवचनात्तनिकम्।

(२) B. ब्रह्मोपवेशना०।

(३) B. अध्यस्य सकृदा०।

[1]सव्येन पादावालभ्य व्यत्यस्तपाणिना गुरोः पादोपसङ्ग्रहं अमुकशर्माहं भो अभिवादयामीतिकृत्वा अग्रेस्थित्वा अञ्जलिं कृत्वा अध्येष्ये भगवन्नहमितिवचनम् । अधीष्व भो इति गुरोः प्रतिवचनम् । अनुज्ञातस्य दक्षिणतः प्राङ्मुखस्योदङ्-मुखस्य वा प्रागग्रेषु कुशेषूपवेशनम् । कुशत्रयेण प्राणरसन-चक्षुस्त्वक्श्रोत्रवाक्पाणिपादपायूपस्थानां स्पर्शनम् । कुशत्र-यस्य त्यागः । द्वादशाक्षरमात्रया पञ्चदशमात्रया प्राणायाम-त्रयम् । तत्र हस्तद्वयसङ्घातरूपब्रह्माञ्जलिं कृत्वा गुरु-मुखावलोकनम् । प्रणवव्याहृतित्रयगायत्रीजपः । ॐ भूर्भुवः स्वः पुरुषः सत्यमितिव्याहृतिपञ्चकस्य वा । गुरुमुखे मनश्च-क्षुर्दाने । दक्षिणजानूपरि संहतहस्तद्वयदानम् । एवं साव-धानेन गुरुमुखात्[2]श्रु(स्रु)तस्य तस्य तस्य ग्रहणम् । मध्ये लौकिक-[3]वाक्प्रयोगे पुनः प्रणवोच्चारणम् । [4]भूमिस्पर्शनम् । आचमनम-पीति केचित् । ततोऽधीत्यानिराकरणजपः । प्रतीकं मे विचक्षणं जिह्वा मे मधु यद्वचः । कर्णाभ्यां भूरि शुश्रुवे मा त्वं हार्षीः श्रुतं मयि । ब्रह्मणः प्रवचनमसि ब्रह्मणः प्रतिष्ठान-मसि ब्रह्मकोशोऽसि सनिरसि शान्तिरस्यनिराकरणमसि

(१) B. सव्येन ०

(२) B श्रुतस्य ग्रहणम् ।

(३) B वाक् प्रचारे ।

(४) B. एवं यथायथमध्ययनं समाप्ताने श्रुतप्रणवोच्चारणं भूमिस्पर्शनं आचमनमपि केचित् ।

ब्रह्मकोशं मे विश। वाचा त्वा पिदधामि वाचा त्वा पिदधामीति तिष्ठ प्रतितिष्ठ। स्वरवर्णपदवाक्यगौरसदक्षोच्चग्रहणधारणोच्चारणशक्तिर्मयि भवतु आप्यायन्तु मेऽङ्गानि वाक् प्राणश्चक्षुः श्रोत्रं यशो बलम्। यन्मे श्रुतमधीतं तन्मे मनसि तिष्ठतु तिष्ठत्विति। एवमध्ययनप्रवृत्ताः पौषमासस्य रोहिण्यां मध्यमायां वा अष्टकायामध्यायानामुत्सर्गं कुर्य्युः। यद्यपि पारस्करेणार्द्धषष्ठान् मासानधीत्योत्सृजेयुः। अर्द्धसप्तमान् वेतिकाल उक्तः। प्रथमाध्ययनानन्तरं बोध्यः। पञ्चमासपक्षे षण्मासपक्षे वा उत्सर्गमध्ये श्रावण्योप्राप्तावपि नोपाकर्म्म। उत्सर्गानन्तरमेव पुनरध्ययनार्थमुपाकर्म्म। यथोक्तकाले नद्याद्युदकान्तगमनम्। सर्व्वेषां स्नानम्। समाचारात्। देवागातुविद इति आज्यनिवेदनात् प्राचीनस्य माध्याह्निकस्य तर्पणादेः करणम्। नदीकूले पूर्व्वापरायतनदीर्घस्थाण्डिलपीठकरणम्। लेपनं तत्र प्रथमं सप्तदर्भपर्णैः। गणानान्त्वेतिमन्त्रेण ग्रन्थिबन्धनस्नानस्थापनवस्त्रयज्ञोपवीतगन्धपुष्पधूपदीपनैवेद्यदानानां गणपतेः करणम्। गौतमभरद्वाजजमदग्निविश्वामित्रवशिष्ठकश्यपात्रीणां सप्तभिः सप्तभिर्दर्भपर्णैः हिरण्यगर्भ इत्यनेन ग्रन्थिबन्धनपूर्व्वकं करणम्। सप्त ऋषय इति मन्त्रेण सप्तानां [1]युगपदभिमन्त्रणम्। इदं विष्णुरिति स्नानम्। प्राक्संस्थानां उदङ्मुखानां [2]षडङ्गुलानां सप्त ते अग्ने इति मन्त्रेण

(१) B. युगपदभिक्रमणं।

(२) B. षडङ्गुलान्तरितानां।

स्थापनम्। इहैवाग्नेरित्यनेनावाहनम्। युवासुवासेति वस्त्रम्। तद्विष्णोरिति यज्ञोपवीतम्। तेनैवोत्तरीयम्। गन्धद्वारेति गन्धम्। समास्त्वेति पुष्पम्। धूरसीति धूपम्। ज्योतिरसीति दीपम्। यज्ञेन यज्ञमिति नैवेद्यम्। अनेनैव फलम्। इमावेव गोतमभरद्वाजावयमेव गोतम इत्यादिबृहदारण्यकप्रसिद्धब्राह्मण-कण्डिकयोपस्थापनम्। इति ऋषिपूजा। तत स्तर्पणम्। तत्रोत्सर्गविधौ तर्पणस्योक्तस्य सत्वात् तावन्मात्रकरणेऽपि भवति। तद्यथा। देवांश्छन्दांसि वेदानृषीन् पुराणा-चार्य्यान् [1]गन्धर्व्वाचार्य्यान् इतराचार्य्यान् संवत्सरसावयवं पितॄना-चार्य्यान् स्वांस्तर्पयेयुः। स्वपितृपितामहप्रपितामहवर्ग[2]मातृ-वर्गाणां पितृधर्म्मेणेत्यर्थः। एवं कृत्वा देवागातुविद इति जप्यनिवेदनं कृत्वा सर्व्वे गुरुशिष्याः समापयेयुः। तत्र ऋषि-स्थानात् पूर्व्वं तदुत्तरे वा सर्व्वे प्रणवव्याहृतित्रयगायत्री-प्रणवान् त्रिः पठेयुः। अपामार्गस्तम्बमादाय [3]तपानव(?)मिति त्यजेयुः। काण्डादिति दूर्व्वामादाय त्यागः। एवं पुनर्वारद्वयं अपामार्गदूर्व्वाग्रहणं त्यागश्च। ततः पुनर्गायत्रीं पठित्वा विरताः स्म इति सर्व्वे युगपत् त्रिर्जपेयुः। तत उपविश्य अथ

(१) गन्धर्व्वानितराचार्य्यान् संवत्सरञ्च सावयवं.. स्वांश्च तर्पयेयुः। पारस्कर-गृह्यसूत्रे २य काण्डम, १२ कण्डिका।

(२) B. मातामहवर्गमातृवर्गाणां।

(३) P अपाह्यमिति।

वंशः पौतिमास्य इत्यादिकान् '(१)चतुर्थषष्ठाष्टमद्वादशाध्याय-गतब्राह्मणान् पठित्वा मन्त्राध्यायादीन् पठित्वा मन्त्रान्तिमाध्यायं पठेयुः। एवं ब्राह्मणाध्यायादीन् पठित्वा ब्राह्मणान्तिमाध्यायं पठेयुरिति। ततस्त्रिरात्रमनध्यायः। त्रिरात्रं नक्षत्रोत्थामनिक्रान्तनञ्च। त्रिरात्रानन्तरं शुक्लपक्षेषु छन्दांस्यधीयीरन्। कृष्णपक्षेष्वङ्गानि। एवमर्द्धषष्ठमासमध्ययनम्। पुनरेवमेवोत्सर्गं विधाय सर्व्वे मिलित्वा उभा कवी युवा यो नो धर्म्मः परापतत्। परिसञ्चस्य धर्म्मिणो विसख्यानि विसृजामह इति। सर्व्वे जपेयुः। त्रिरात्रमेकत्र स्थित्वा यथासुखं यत्र तत्र गच्छेयुः। उपाकर्म्मपर्य्यन्तम्। इत्युत्सर्गविधिः।

---

## अथोपाकर्म्म।

पारस्करः,—

अथातोऽध्यायोपाकर्म्म। ओषधीनां प्रादुर्भावे श्रवणेन श्रावण्यां पौर्णमास्यां श्रावणस्य पञ्चमीं हस्तेन वा। अत्र

श्रावण्यां श्रवणा यत्र तत्रोपाकर्म्म कारयेत्।
योगोनास्ति यदाकाले हस्तेनैवतु पञ्चमी॥

इति राजमार्त्तण्डवचनात् पौर्णमास्यां श्रवणाभावे हस्तपञ्चमी। पञ्चम्यामपि हस्तायोगाभावे केवलपौर्णमास्यां तु केवलपौर्णमास्यामसम्भवमालोच्य पञ्चम्यामित्यर्थः।

(१) अत्रोऽयं २य ४र्थाध्यायपठब्राह्मणवोदृश्यते।

गार्ग्यः,—

सिंहे रवौ पुष्यऋक्षे पूर्व्वाह्णे विधिवद्बहिः ।
छन्दोगा मिलिताः कुर्य्युरुत्सर्गं सर्व्वछन्दसाम् ॥
[1]शुक्लपक्षे च हस्तेन उपाकर्म्मापराह्णिकम् ।

एवञ्च प्रौष्ठपद्यां छन्दोगानां कालः । मलिम्लुचेऽपि सिंहादित्ये कर्त्तव्यम् । तथाचान्यत्र

उपाकर्म्म तथोत्सर्गः [2]प्रसवाहोऽष्टकादयः ।
मलिम्लुचेऽपि कर्त्तव्याः शेषमन्यच्च वर्जयेत् ॥

अन्येषान्तु,—

दशहरासु छन्दोत्सर्गंचतुर्थ्यपियुगादिषु ।
उपाकर्म्मणि चोत्सर्गे माघ्याश्चैव विशेषतः ॥

इति । शुक्लमास एवोपाकर्म्म । अत्र चोपाकर्म्मकालोऽपराह्ण-मिति । तिथिद्वैधेऽपराह्णव्यापिदिनग्रहणम् । दिनद्वये तथात्वे श्रवणायोगादिविशेषः । श्रवणायोगाभावे च क्षये पूर्व्वा वृद्धावुत्तरा । दिनद्वयेऽपराह्णव्याप्त्यभावे [3]पराह्णकरणम् । किञ्च मासद्वयौ हरिशयनस्य पञ्चमासपर्य्यन्तं व्यापने दोषात् ।

श्रवणादित्रिके मासि अधिमासोभवेद् यदा[4] ।
सिंहाऽर्के च हरेः स्वापः श्रावण्यां स्यादुपाकृतिः ॥

---

(१) B. P. शुक्लपक्षेऽथ ।
(२) A. प्रसवाहोऽष्टकादयः ।
(३) B परत्वकरणं ।
(४) B. यदि ।

तथा,—

विष्णोस्तु शयनादूर्द्धं मासेनान्तरितं द्विजैः।
उपाकर्म्मैव कर्त्तव्यं शयनानन्तरं न तु॥

इति वचनात् हरिशयनादूर्द्धं मासान्तरकालोऽस्य नियतः।

[1]'यमोपरोक्तोपाकर्म्मकर्म्मण आवसथ्यसाध्यत्वात् साग्निक-गुरुकस्याध्ययने उपाकर्म्माङ्गमिति। निरग्निकश्चेद् गुरुस्तदा तद्विनाऽप्यध्ययनं सगुणमित्याहुः। तन्नैव प्रतिभाति।

यथाधिकारमन्त्राणां विनियोगो न कल्प्यते।
योगाङ्गविनियोगस्य नाधिकारस्य कल्पनम्॥

इत्युक्तदिशा। यथाध्यावेक्षणादिरहितं कुर्व्वन्नध्योऽधिकारीति न कल्प्यते। एवमुपाकर्म्मरहितं कुर्व्वन् निरग्निरधिकारीति वक्तुं न शक्यते। तेन निरग्नेरध्यापनानधिकार एव प्राप्तः। सुतरां तदङ्गो-पनयनेऽनधिकारः। वेदारम्भाङ्गहोमस्याप्यावसथ्यसाध्यत्वात्। एतदेव व्रतादेशनविसर्गेष्विति व्रतादेशपदोक्ते वेदारम्भे विसर्ग-पदोक्ते समावर्त्तने उपाकर्म्महोमस्यैवातिदेशात् तस्य लौकि-काग्निसाध्यत्वेनाधिकारसम्पादकत्वेऽस्यापि लौकिकाग्निसाध्यत्वं को वारयेदिति।

तत्र यथोक्तदिने ब्रह्मचारिजातकण्ठरूपत्रिविधशिष्यसहितो गुरुः स्वस्तिवाच्य सङ्कल्पं कृत्वा आवसथ्यसमीपे ब्राह्मणं कृत्वोप-वेश्य तदभावे लौकिकाग्निं स्थापयित्वाज्यभागान्तं कुर्य्यात्।

---

(१) B. अत्र च भारद्वाजोक्ते उपाकर्म्म०।

तत्र यजुर्व्वेदोपाकर्म्मणि अन्तरिक्षाय स्वाहा। वायवे स्वाहा। इत्याहुतिद्वयहोमः। ततो ब्रह्मणे स्वाहा। छन्दोभ्यः स्वाहा इति आहुतिद्वयम्। ततः सप्ताहुतयः। प्रजापतये देवेभ्यः ऋषिभ्यः श्रद्धायै मेधायै सदसस्पतये अनुमतये। ततः सदसस्पति-मित्यनया ऋचा आचार्य्य आसादिताक्षतधानाभ्यः एकामाहुतिं जुहोति। मन्त्रञ्च सर्व्वे पठन्ति। ततः सर्व्वे गुरुशिष्याश्च सपत्ना-मौदुम्बरीं समिधं तत्सवितुरित्यनया सावित्र्या अभ्यादध्युः। [1][ ब्रह्मचारिणश्च ब्रह्मचारिसमिदाधानमन्त्रेण समिधमादध्युः। ] एवं द्विरपरं अक्षतधानाहोमादिसमिदाधानान्तम्। ततः सर्व्वे गुरुशिष्या अक्षतधानाभ्य उपकल्पिताभ्य अखण्डयन्तस्तिस्रो भक्ष-येयुः। अग्नो भवन्तु वाजिन इत्यनयर्चा आचम्य दधिक्राव्णो अकारिषमित्यनयर्चा दधि भक्षयेयुः। हुतशेषधानाभ्यः स्विष्ट-कृत्। भूरादिप्राजापत्यान्ता नवाहुतयः। प्राशनम्। मार्जनम्। ब्रह्मणे दक्षिणादानम्।

अत्र च—

उपाकर्म्मणि चोत्सर्गे प्रेतस्नाने तथैव च।
चन्द्रसूर्य्यग्रहे चैव रजोदोषो न विद्यते॥

इति लिङ्गात् समाचाराच्चोत्सर्गवर्ज्यं तर्पणादिकर्म्म। नदी-कूलगमनम्। सर्व्वेषामुत्सर्गवदृषिपूजा इमामेव गोतमभर-द्वाजावित्यादिमन्त्रप्रार्थनान्ता। ततः स्नात्वा सन्ध्याजपार्कोप-

(1) B. Omits the portion bracketed.

स्नानब्रह्मयज्ञान्ते उपाकर्म्माङ्गतर्पणम् । प्रथमं ब्रह्मा तृप्यता-मित्यादिभूतग्रामचतुर्विधान्तं कृत्वा ध्रुवाद्यष्टवसु ( वसवः ) [1]अजैकपदादिरुद्रा इन्द्राद्यादित्यादीनां इन्द्रः पद्मजश्च क्रत्वादि-विश्वेदेवाः ॐकार(रो)गायत्र्युष्णिगनुष्टुप्बृहतीपंक्तित्रिष्टुप्जगतीनां ऋगादि--चतुर्वेद(ः)सर्व्वविद्या(नां)मरीच्यादि--दशर्षि--गौतमादि-सप्तर्षि-कलाकाष्ठा-निमेष-मुहूर्त्ताहोरात्रपक्षमास-ऋतुसंवत्सराणां प्रत्येकं ध्रुवस्तृप्यतामित्याकारेण तर्पणं [2][दैवविधिना । निवीती सनकादितर्पणं ] कृत्वा कव्यवाडनलसोमयमार्य्यमाग्निष्वात्ता-पितृसोमपपितृवर्हिषत्पितॄन् पैतृविधिना तर्पयित्वा वसु-रुद्रादित्यांश्चाचार्य्यान् यथोक्तम् ।

[3]नारासर्य्यः पारासर्य्यः शुकशाल्यक एव च ।
याज्ञवल्क्यो जातुकर्ण्यः कात्यायनस्तथैव च ॥
आपस्तम्बो बौधायनो वाचक्नवी तथैव च ।
वैजवापि ककुशैव लोकाक्षीति तथैव च ॥
इन्द्रायणीमैत्रावरुणीदाक्षायणीश्च तर्पयेत् ।[3]

यमाय नम इत्येवं यमतर्पणम् । स्वपितृतर्पणञ्च । देवा गातुविद-इति जपनिवेदनान्तं गायत्रीं त्रिः पठित्वा गौतमादीन् सम्पूज्य वंशब्राह्मणपठनम् । एतावद्दूरं समाचारप्राप्तं कृत्वा

(१) B. अजैकपादादि ० ।

(२) B. Omits the portion bracketed P. वेदविधिना ।

(३) नारासर्य्य इत्यादिश्लोकाः कुलत्या इति न विज्ञाता इति मूलानुसारेण यथायथं रक्षिताः ।

तत्र यजुर्व्वेदोपाकर्म्मणि अन्तरिक्षाय स्वाहा। वायवे स्वाहा। इत्याहुतिद्वयहोमः। ततो ब्रह्मणे स्वाहा। छन्दोभ्यः स्वाहा इति आहुतिद्वयम्। ततः सप्ताहुतयः। प्रजापतये देवेभ्यः ऋषिभ्यः श्रद्धायै मेधायै सदसस्पतये अनुमतये। ततः सदसस्पति-मित्यनया ऋचा आचार्य्य आसादिताक्षतधानाभ्यः एकामाहुतिं जुहोति। मन्त्रञ्च सर्व्वे पठन्ति। ततः सर्व्वे गुरुशिष्याश्च सपत्रा-मौदुम्बरीं समिधं तत्सवितुरित्यनया सावित्र्या अग्नावादध्युः। [1][ ब्रह्मचारिणश्च ब्रह्मचारिसमिदाधानमन्त्रेण समिधमादध्युः। ] एवं द्विरपरं अक्षतधानाहोमादिसमिदाधानान्तम्। ततः सर्व्वे गुरुशिष्या अक्षतधानाश्च उपकल्पिताश्च अखण्डयन्तस्तिस्रो भक्ष-येयुः। शन्नो भवन्तु वाजिन इत्यनयर्चा आचम्य दधिक्राव्णो अकारिषमित्यनयर्चा दधि भक्षयेयुः। हुतशेषधानाभ्यः स्विष्ट-कृत्। भूरादिप्राजापत्यान्ता नवाहुतयः। प्राशनम्। मार्जनम्। ब्रह्मणे दक्षिणादानम्।

अत्र च—

उपाकर्म्मणि चोत्सर्गे प्रेतस्नाने तथैव च।
चन्द्रसूर्य्यग्रहेचैव रजोदोषो न विद्यते॥

इति लिङ्गात् समाचाराच्चोत्सर्गवच्चर्य्या तर्पणादिकर्म्म। नदी-कूलगमनम्। सर्व्वेषामुत्सर्गवदृषिपूजा इमामेव गोतमभर-द्वाजाविर्त्यादिमन्त्रप्रार्थनान्ता। ततः स्नात्वा सन्ध्याजपार्कोप-

(1) B. Omits the portion bracketed.

स्नानब्रह्मयज्ञान्ते उपाकर्म्माङ्गतर्पणम् । प्रथमं ब्रह्मा तृप्यता-मित्यादिभूतग्रामचतुर्विधान्तं कृत्वा ध्रुवाद्यष्टवसु (वसवः) [1]अजैकपदादिरुद्रा इन्द्राद्यादित्यादीनां इन्द्रः पद्मजश्च ऋत्वादि-विश्वेदेवाः ॐकार(रो)गायत्र्युष्णिगनुष्टुप्बृहतीपंक्तित्रिष्टुप्जगतीनां ऋगादि--चतुर्वेद(:)सर्व्वविद्या(नां)मरीच्यादि--दशर्षि--गौतमादि-सप्तर्षि-कलाकाष्ठा-निमेष-मुहूर्त्ताहोरात्रपक्षमास-ऋतुसंवत्सराणां प्रत्येकं ध्रुवस्तृप्यतामित्याकारेण तर्पणं [2][दैवविधिना । निवीती सनकादितर्पणं] कृत्वा कव्यवाड़नलसोमयमार्य्यमाग्निष्वात्ता-पितृसोमपपितृबर्हिषत्पितॄन् पैतृविधिना तर्पयित्वा वसु-रुद्रादित्यांश्चाचार्य्यान् यथोक्तम् ।

मारासर्य्यः पारासर्य्यः शुकश्चात्यक एव च ।
याज्ञवल्क्यो जातुकर्ण्यः कात्यायनस्तथैव च ॥
आपस्तम्बो बौधायनो वाचक्नवी तथैव च ।
वैजवापि वकुश्चैव लोकाक्षीति तथैव च ॥
इन्द्रायणीमैत्रावरुणीदाचायणीश्च तर्पयेत् ।[3]

यमाय नम इत्येवं यमतर्पणम् । स्वपितृतर्पणञ्च । देवा गातुविद-इति जपनिवेदनान्तं गायत्रीं त्रिः पठित्वा गौतमादीन् सम्पूज्य वंशब्राह्मणपठनम् । एतावद्दूरं समाचारप्राप्तं कृत्वा

(१) B. अजैकपादादि ० ।

(२) B. Omits the portion bracketed P. वेदविधिना ।

(३) मारासर्य्य इत्यादिश्लोकाः कुत्रत्या इति न विज्ञाता इति मूलानुसारेण यथायथं रक्षिताः ।

गृह्योक्तं प्रणवव्याहृतित्रयगायत्रीणां त्रिवारजपपूर्व्वकं इषे त्वा कृष्णोऽसीत्यादिरूपेण मन्त्राध्यायादिपाठान्ते समाचारादीश्चावाध्यायपाठः। एवं ब्राह्मणाध्यायादिपाठान्ते समानमासां जीवो-पुत्रादित्यादिब्राह्मणान्तिमाध्यायपाठः। ततः सर्व्वे जपन्ति।
सहनोऽस्तु सहनोऽवतु सह न इदं वीर्य्यवदस्तु ब्रह्म। इन्द्रस्तद्वेद येन यथा न विद्विषामहे।

पर्जन्यो वृष्टिमान् भूयाद् भूयाः शस्यवती मही।
[1]महीपालः पालयतु सप्रजामवनिं तथा॥
इत्याद्याशिष्य यस्त्वेवं बहूनि द्विजसत्तमाः।
विसर्जनमृषीणान्तु उत्तिष्ठ ब्रह्मणस्पते॥

इति। ततो गृहं गत्वा पवित्रप्रतिपत्तिप्रणीताविमोकब्रह्म-विसर्जनाच्छिद्रावधारणानि।

इत्युपाकर्म्मानन्तरं त्रिरात्रमनध्यायः नखलोम्ना[2]मकृन्तनञ्च। ततो यावदुत्सर्गं कृष्णे शुक्ले निरन्तरं वेदाध्ययनम्।

इत्युपाकर्म्मविधिः समाप्तः।

---

(१) B. महीपालाः पालयन्तु।
(२) B. मकर्त्तनञ्च।

## अथाध्ययनम् ।

अध्ययनकाले च गुरुशुश्रूषा ब्रह्मचारिवदब्रह्मचारिणोऽपि ।

यमः,—

अनापृच्छ्य गुरुञ्चैव न गन्तव्यं [1]कथञ्चन ।
तत्तु शिष्येण कर्त्तव्यं कार्य्यं दासेन यद्भवेत् ॥

आपस्तम्बः,—

[2]आहूताध्यायी । महानिशायां गुरुं संवेशयेत् तस्य पादौ क्षालयेत् । भाषित उत्थाय प्रतिब्रूयात् । गच्छन्तमनुगच्छेत् । धावन्तमनुधावेत् ।

पैठीनसिः,—दन्तकाष्ठशयनास्तरणसंवाहनप्रियवचनादिभिर्गुरुं [3]सन्तोषयेत् ।

नारदः,—

आविद्याग्रहणात् शिष्यः शुश्रूषेत् प्रयतो गुरुम् ।

मनुः,—

हीनाङ्गवस्त्रवेशः स्यात् सर्वदा गुरुसन्निधौ ।

---

(१) B. कदाचन ।

(२) मुद्रितापस्तम्बीये,—आहूताध्यायी च स्यात् । महा निशायां गुरुं संवेशयेत् तस्य पादौ प्रक्षाल्य संवाह्य ॥ ... अभिभाषितस्त्वासीनः प्रतिब्रूयात् ॥ १ । २ । ५ । २६ ; १ । २ । ६ । १ । ६ ।

(३) B. तोषयेत् ।

बौधायनः,—[1]पूर्वोत्थाय जघन्यसंवेशात् सर्वत्राप्रतिहतगुरुवाक्योऽन्यत्र गुरुपातकात्। आपस्तम्बः,—उच्चैस्तरां नासीत। [2]शय्यासनेऽध्याचरिते नाविशेत्। यानमुक्तोऽध्वन्यन्वारोहेत्। [3]नाभिभाषितो [ गुरुणा[4] ] गुरुमभिभाषेत। व्यभिहासोदामन्त्रणनामधेयग्रहणप्रेषणानीति गुरोर्वर्जयेत्। सायं प्रातरनाहूतो गुरुं दर्शनार्थं गच्छेत्। विप्रोष्य च तदहरेव पश्येत्। गौतमः,—गुरुदर्शने न कण्ठप्रावृतावसक्थिकाव्याश्रयणपादप्रसारणनिष्ठीवनहसितविजृम्भितविस्फोटितानि। विष्णुः,—न च गुरुणा सह विगृह्य कथाः कुर्य्यात्।

मनुः,—

गोऽश्वोष्ट्रयानप्रासादप्रस्तरे शकटे तथा।
आसीत गुरुणा सार्द्धं शिलाफलकनौषु च॥

यमः,—

सम्यक् प्रवृत्तश्च गुरुं शिष्यो यस्त्ववमन्यते।
हरते दुष्कृतं तस्य तिर्य्यग्योनिश्च गच्छति॥

---

(१) B. पूर्वोत्थाय जघन्यसन्निवेशात् ०। मुद्रितबौधायने,—पूर्वोत्थायी जघन्यसंवेशी ॥.........अन्यत्र पातकात्। Anandāśrama Series, Poona, स्मृतीनां समुच्चयः १म प्रश्नः २याध्यायः २०। २१ श्लो०।

(२) A. शय्यासने सहाचरिते०। मुद्रितापस्तम्बीये,—शय्यासने चाचरिते नाविशेत्। १। २। ८। ११।

(३) मुद्रितापस्तम्बीये,—नानभिभाषितो गुरुमभिभाषेत प्रियादन्यात्।१।२।८।१४।

(४) B. Omits the portion bracketed.

गुरोरप्यवलिप्तस्य कार्य्याकार्य्यमजानतः।
उत्पथप्रतिपन्नस्य परित्यागो विधीयते॥
नाध्यापयति नाधीते पतनीयेषु वर्त्तते।
इत्येतल्लक्षणे युक्तस्त्यक्तव्यो व्रतिना गुरुः॥

विस्तरो [1]ब्रह्मचारिधर्म्मप्रकरणे।

इत्यध्ययनम्।

---

अथ विचारो [2]नाम द्वितीयो वेदाभ्यासोऽभिधीयते।

तत्र वेदाध्ययनस्यानुष्ठानोपयोगिज्ञानार्थत्वात् निर्विचिकित्सैक-रूपज्ञानस्यानुष्ठानक्षमत्वात् स्वाध्यायविधिना साङ्गवेदाध्ययनेऽर्थ-ज्ञानेऽपि विचारं विना नानारूपवाक्यार्थज्ञानप्रसक्तेऽनुष्ठानम-शक्यमित्यध्ययनविधिनैव पुरुषार्थरूपज्ञानफललाभाय विचारो विधीयते।

तदुक्तम्,—

धर्म्मे प्रमीयमाणे तु वेदेन करणात्मना।
इतिकर्त्तव्यताभागं मीमांसा पूरयिष्यति॥

तेन वेदविचारो मीमांसाध्ययनम्। तन्मूलकान्येव स्मरणानि।

---

(१) B. ब्रह्मचारिप्रकरणे।
(२) B. नाम द्वितीयो वेदात्। सोऽभिधीयते।

मनुः,—

अज्ञेभ्यो ग्रन्थिनः श्रेष्ठा ग्रन्थिभ्यो धारिणो वराः ।
धारिभ्यो ज्ञानिनः श्रेष्ठा ज्ञानिभ्योऽध्यवसायिनः ॥

अध्यवसायिनः अनुष्ठातारः । तथा

वेदशास्त्रार्थतत्त्वज्ञो यत्र तत्राश्रमे वसन् ।
इहैव लोके तिष्ठन् स ब्रह्मभूयाय कल्पते ॥

लघुव्यासः,—

न वेदपाठमात्रेण सन्तोषं कारयेद् गुरुः ।
पाठमात्रावमानस्तु पङ्के गौरिव सीदति ॥
यथा पशुर्भारवाही न भारफलमश्नुते ।
[1][द्विजस्तथा ज्ञानहीनो न वेदफलमश्नुते ॥]
वेदस्याध्ययनं [2]नित्यं धर्म्मशास्त्रस्य चापि यत् ।
अजानतोऽर्थं तत्सर्व्वं तुषाणां कण्डनं यथा ॥
योऽधीत्य विधिवद् विद्वान् वेदार्थं न विचारयेत् ।
स सान्वयः शूद्रसमः पात्रतां न प्रपद्यते ॥
अधीत्य यत् किञ्चिदपि वेदार्थाधिगमे रतः ।
स्वर्गलोकमवाप्नोति कर्म्मानुष्ठानविद् द्विजः ॥
अधीतं विधिवद् यच्च श्रुतं यच्च विशेषतः ।
अनुष्ठेयन्तु तत्सर्व्वं मनुः स्वायम्भुवोऽब्रवीत् ॥

---

(१) B. Omits the portion bracketed.

(२) B. सर्व्वं ब्रह्मशास्त्रस्य चापि यत् ।

श्रुतहीनमधीतं यच्चेह नामुत्र तद् भवेत् ।
श्रुतन्तु केवलमपि समुद्धाराय कल्पते ॥
श्रुतं गरीयः सर्व्वेभ्यो वित्तादिभ्यो न संशयः ।
श्रुतादि चक्रिरे धर्म्मं योऽनूचानः स नो महान् ॥
समुच्चितं श्लोकमपि श्रुताधीतं विशिष्यते ।

श्रुतमत्र मीमांसा । अनूचानः साङ्गप्रवचनाध्यायी । अर्थज्ञानवानिति यावत् । इति लक्ष्मीधरः । तथा,—

अधीतं श्रुतसंयुक्तं तथा श्रेष्ठं न केवलम् ।
पाठमात्ररतान् नित्यं द्विजातींश्चार्थवर्जितान् ।
पशूनिव च तान् प्राज्ञो वाङ्मात्रेणापि नार्च्चयेत् ॥

हारीतः,—चक्षुर्दीपसमं ज्ञानं यथाहि चक्षुष्मान् पुरुषः प्रदीपप्रकाशेन विषमदुर्गार्थविद् भवति एवं (१)ज्ञानविलोकनवान् शुभाशुभयोः कर्म्मणोर्युक्तिकर्त्ता भवति । तस्यैव ज्ञानस्यार्थविज्ञानं समासतो विशेषतः कृत्स्नतश्चेति । ज्ञानं ज्ञायतेऽनेनेति साङ्गो वेदः । विज्ञानं मीमांसाव्याकरणादि । युक्तिकर्त्ता अनुष्ठाता । तथा स्थाणुरेव भारहरो यो ज्ञानमधीत्यार्थं न विजानाति । ज्ञानविज्ञानविधूतपाप्मा इह चामुत्र चानन्ततो भद्रमश्नुत इति । त्रिविधः प्रत्ययः । आचार्य्यप्रत्ययः । आत्मप्रत्ययः । ज्ञानप्रत्ययश्च । आचार्य्यप्रत्ययः—आचार्य्याद् वेदाक्षरग्रहणम् । आत्मप्रत्ययः-

---

(१) B. ज्ञानविज्ञानविज्ञानवान्

भाष्यज्ञानात् शास्त्रार्थिकपाज्ञानात् परलोकनिश्चय इत्यर्थः ।
ज्ञानप्रत्ययः—ज्ञानाद् वेदाद् विज्ञानं वेदार्थज्ञानम् ।

[1][याज्ञवल्क्यः,—

वेदार्थानधिगच्छेच्च शास्त्राणि विविधानि च ।

तथा महाभाष्ये,—

यदधीतमविज्ञातं निगमेनैव पठ्यते ।
अनग्नाविव शुष्कैधो न तज्ज्वलति कर्हिचित् ॥

न ज्वलति न कार्य्यक्षममित्यर्थः । मनुः,—

विभर्त्ति सर्व्वभूतानि वेदशास्त्रं सनातनम् ।
तस्मादेतत् परं मन्ये यज्जन्तोरस्य साधनम् ॥]

साधनं सम्पादकं ज्ञानफलकत्वेन ।

सैनापत्यञ्च राज्यञ्च दण्डनेतृत्वमेव च ।
सर्व्वलोकाधिपत्यञ्च वेदशास्त्रविदर्हति ॥
वेदशास्त्रार्थतत्त्वज्ञो यत्र तत्राश्रमे वसन् ।
इहैव लोके तिष्ठन् स ब्रह्मभूयाय कल्पते ॥

तथा,—

बुद्धिवृद्धिकराण्याशु धन्यानि च हितानि च ।
नित्यशास्त्राण्यवेक्षेत नैगमांश्चैव वैदिकान् ॥

बुद्धिवृद्धिकराणि वैशेषिकन्यायादीनि । धन्यानि नाडीशास्त्राणि । हितानि वैद्यशास्त्राणि । वैदिका निगमा निघण्टुप्रभृतयः ।

---

(1) B. Omits the portion bracketed.

यथा यथा हि पुरुषः शास्त्रं समधिगच्छति।
तथा तथा विजानाति विज्ञानं चास्य रोचते॥

प्रथमाधिगमे जानाति द्वितीये [1]तदेवोज्ज्वलम्। तथा—

प्रत्यक्षमनुमानञ्च शब्दञ्च [2]विविधागमम्।
त्रयं [3]सुविदितं कार्य्यं धर्म्मशुद्धिमभीप्सता॥

तथा,—

आर्षं धर्म्मोपदेशञ्च वेदशास्त्राविरोधिना।
यस्तर्केणानुसन्धत्ते स धर्म्मं वेद नेतरः॥

एवमादिशास्त्राध्ययनमपि वेदार्थज्ञानायाध्ययनविधिनैवापेक्ष्यते। तेन वेदविचारान्तःपातिद्वितीयभागे न्यायादिशास्त्राध्ययनम्। तथा शङ्खलिखितौ,—न वेदमधीत्यान्यं विद्यामधीयात् अन्यत्र वेदाङ्गस्मृतिभ्य इति। शास्त्राणां वेदार्थज्ञानोपयोगित्वेनाध्ययनम्। अयञ्च ब्रह्मविचारः वेदाध्ययनोत्तरं [4]गुरुगृहे स्थित्वा समावर्त्तनात् पूर्व्वं कार्य्यः। तदुक्तं शावरभाष्ये,—अधीत्य स्नायादितीमं समाम्नायं विचारविधिना अतिक्रमिष्यामः। अनतिक्रामन्तो वेदमवगन्तं सन्तमनर्थकं कल्पेम इति।[5] तथा वार्त्तिके—

तस्माद् गुरुगृहे स्थित्वा मधुमांसादि वर्जयन्।

वेदस्वरूपग्रहणात्मकेऽप्यध्ययने मधुमांसवर्जनरूपं ब्रह्मचर्य्यमङ्गम्।

---

(१) B. तदेवोज्ज्वलम्। (३) B. संविदितं।
(२) B. द्विविधागमम्। (४) B. गुरुगृह एव स्थित्वा
(५) पाठोऽयं मूलानुगतः शावरभाष्ये बहु नावोचितः।

न ज्ञानरूपे तत्फले। येन मीमांसाध्ययने तदादरः। गुरुगृह-
वासस्तु विचारस्वरूपसिद्ध्यर्थमेवापेक्ष्यत इति समावर्त्तनोत्कर्षेण
गुरुगृहवासः। तथा लघुव्यासः,—

सम्यग् वेदमधीत्याथ न्यायतस्तु तदर्थवित्।
[1]सम्यग् भूतानि संसेव्य समावर्त्तनमर्हति॥

एवञ्चासमाप्य वेदं व्रतं समाप्य [2]व्रतस्नातकं यावद् ब्रह्म-
चर्य्येऽधीतं तावद् विचार्य्य समावर्त्तते। यस्तु दैवाद् ब्रह्मचर्य्येण
मीमांसामधिगच्छति स गृहस्थोऽपि गुरुमुपेत्य पठेत्। तदुक्तं
चापस्तम्बेन,—यया विद्यया न विरोचेत पुनराचार्य्यमुपेत्य
नियमेन साधयेत्[3]। न विरोचेत नोज्ज्वलमानो भवति।

आपस्तम्बः,—

निवेशे संवृत्ते संवत्सरे संवत्सरे द्वौ द्वौ मासौ समाहित
आचार्य्यकुले वसेद्भूयः श्रुतिमिच्छन्निति श्वेतकेतुः। एतेन ह्यहं
योगेन भूयः पूर्व्वस्मात् कालाच्छ्रुतमकुर्व्वीति। तच्छास्त्रैर्विप्रति-
षिद्धम्। निवेशे हि वृत्ते नैयमिकानि श्रूयन्ते। अग्निहोत्र-
मतिथयः। यच्चान्यदेवं युक्तम्। निवेशो विवाहः। विवाहानन्तरं
प्रति संवत्सरं द्वौ द्वौ मासौ गुरुगृहे मीमांसाध्ययनार्थं वासः।

एतेन मासद्वयगुरुगृहवासरूपेण योगेन पूर्व्वस्माद् विवाह-

---

(१) B सम्यक् तत्वानि ०।

(२) B. तत्र स्नातकं ब्रह्मचर्य्येऽधीतमविचार्य्य समावर्त्तते।

(३) B. Adds here सम्यक् तत्वानि संसेव्य समावर्त्तनमर्हति।

प्राग्भाविनः कालादभ्यधिकं मीमांसाभ्यसनं कृतवानस्मि। तच्च यावज्जीवश्रुतिविरुद्धम्। गुरुगृहवासे ऽग्निहोत्रत्यागप्रसङ्गात्। तेन ब्रह्मचर्य्ये मीमांसाभ्यासप्रतिबन्धे सत्येवं कर्त्तुं युज्यते इति तात्पर्य्यम्।

इति द्वितीयो वेदाभ्यासः।

---

## अथाभ्यासे तृतीयो वेदाभ्यास उच्यते।

स च गुणनात्मकपारायणजपब्रह्मयज्ञादिसिद्धिहेतुवेदधारण-फलार्थं क्रियमाण आनुषङ्गिकपापक्षयादिफलश्च।

याज्ञवल्क्यः,—

वेदाभ्यासरतं शान्तं महायज्ञक्रियारतम्।
न स्पृशन्तीह पापानि महापातकजान्यपि॥

मनुः,—

अनभ्यासेन वेदानामाचारस्य च वर्जनात्।
आलस्यादन्नदोषाच्च मृत्युर्विप्रान् जिघांसति॥

न च ब्रह्मयज्ञ एवाभ्यासः धारणां विना तदभावात्। धारणायाश्चाभ्यासः साधनम्।

---

## अथ जपरूपस्तुरीयो वेदाभ्यासस्तृतीयभागे कर्त्तव्य उच्यते ।

योगियाज्ञवल्क्यः,—मनुर्यमो वशिष्ठो हारीतश्चाग्न्योकादये ।

ये पाकयज्ञाश्चत्वारो विधियज्ञसमन्विताः ।
सर्व्वे ते जपयज्ञस्य कलां नार्हन्ति षोडशीम् ॥
जप्येनैव तु संसिद्धेद्ब्राह्मणो नात्र संशयः ।
कुर्य्यादन्यन्न वा कुर्य्यान्मैत्रो ब्राह्मण उच्यते ॥

वशिष्ठः,—

यथाग्निर्वायुना धूतो हविषा चैव दीप्यते ।
एवं जपपरो नित्यं मन्त्रयुक्तः सदा द्विजः ॥[१]

यमः,—

[२]यः संयम्येन्द्रियग्रामं कामतो धारयेदपि ।
ब्रह्मचारी जपाच्चैव ब्रह्मलोकमवाप्नुयात् ॥

मनुः,—

वेदमेव जपेन्नित्यं यथाकालमतन्द्रितः ।
तं ह्यस्याहुः परं धर्म्ममुपधर्म्मोऽन्य उच्यते ॥
वेदाभ्यासेन सततं शौचेन तपसैव च ।
अद्रोहेणैव भूतानां जातिं स्मरति पौर्व्विकीम् ॥

---

(१) मुद्रितवशिष्ठस्मृतौ, -एवं जपपरो नित्यं ब्राह्मणः संप्रदीप्यते । २६ अध्यायः १४ श्लो० ।

(२) B यतचित्तेन्द्रियग्रामं० ।

पौर्व्विकीं संस्मरन् जातिं ब्रह्मैवाभ्यसते पुनः ।
ब्रह्माभ्यासेन चाजस्रमनन्तं [1]सुखमेधते ॥

अत्र जपस्य माध्याह्निककर्म्मणि वस्त्रनिष्पीड़नानन्तरं विहितस्य

अस्नाताशी मलं भुंक्ते अजपी [2]शुक्रशोणितम् ।

इत्यादिदोषबलेन नित्यस्य विहितस्य नायं कालः । नापि ब्रह्मयज्ञरूपस्य । [3]अस्य प्रातर्होमानन्तरं तर्पणात् पूर्व्वं वैश्वदेवावसाने वा तैत्तिरीयश्रुत्या रात्रौ वा विधानात् । किन्तु पापक्षयफलकस्य पुत्रपश्वादिकामफलकस्य वायं कालः । ततः प्रणवस्य ऐकान्तिकसच्चिदानन्दब्रह्मपरस्य जपः । सर्व्वपापक्षयद्वारा अन्तःकरणशुद्ध्यापादनेन मोक्षफलः । यत्तु-विधाने याज्ञवल्क्यः,—अतः परमोङ्कारकालं व्याख्यास्यामः । यत्र ग्राम्याणां पशूनां शब्दं नोपशृणुयात् । तत्र गत्वा अपां समीपे [4]ब्रह्महस्तेनैकस्थूणं प्राङ्मुखं मठं कारयित्वा कुशाच्छन्नं कुशपरिवेष्टितं कुशध्वजं [5]कुशचीरः कुशवासाः [6]कुशयज्ञोपवीती कुशहस्तः शाकयावकपयोभैक्षभक्षो वा अग्निमभिमुख्य ओँकारं पञ्चसहस्राणि जपेत् । ततोऽस्य सर्वे वेदा

(१) B. सुखमश्नुते ।
(२) B. पूयशोणितम् ।
(३) B. तस्य ।
(४) A. ब्रह्महस्तेनैककुम्भनं एककलशनं प्राङ्मुखं ० ।
(५) B. कुशचीरम् ।
(६) B. कुशयज्ञोपवीतः ।

अधीता भवन्ति। सर्वे देवाः शुभा भवन्ति। सर्वे वर्णा वश्या भवन्ति। सर्वैः क्रतुभिरिष्टैर्यथोक्तं फलमाप्नोति। मातृदोषपितृदोषगर्भदोषै र्न लिप्यते। कपिलाया गोः पयसि स्थालीपाकं श्रपयित्वा [1]प्रथमसंख्यायामग्निहुतं हुत्वा अष्टसहस्रेणाभिमन्त्र्य स्वयमेव प्राश्नीयात्। सप्तानां पुरुषयुगानामलक्ष्मीं निरोधयेत्। ब्रह्मचर्य्यमविच्छिन्नं भवति न पुनर्जायत इति।

तत्र यमः,—

ॐकारः परमं ब्रह्म प्राणायामः परन्तपः।
चरन्ति हि क्रियाः सर्व्वाः प्रयुक्ता वैदिकाद् भुवि॥
अक्षरं त्वक्षरं विद्धि ब्रह्म चैव प्रजापतिः।

अक्षरं प्रणवः[2]।

योगियाज्ञवल्क्यः,—

आद्यं यत्त्र्यक्षरं ब्रह्म त्रयी यस्मिन् प्रतिष्ठिता।
सगुह्योऽन्यस्त्रिवृद् वेदो यो वेदैनं स वेदवित्॥

इति। यथा गौर्वत्सरुतं निशम्य हुङ्कृत्य वत्साभिमुखं प्रयाति ब्रह्मापि तत्प्रणवोपहृतं प्रवक्तारमागच्छति। पद्मवक्ते,—

प्रणवो हि परं ब्रह्म तज्जपः सर्व्वपापहा।
ॐकारायतमभ्यस्य तदक्षैव विमुच्यति॥

---

(१) A. आज्यहुतं वज्राकाभिङ्कृतं हुत्वा ०।

(२) B. Reads मनुः,—अक्षरं त्वक्षरश्चं ब्रह्मचैव प्रजापतिः। विद्याकरधृतो आद्यं यत्त्र्यक्षरं ब्रह्म त्रयी यस्मिन् प्रतिष्ठिता ०।

यस्तु द्वादशसाहस्रं जपमन्वहमाचरेत्।
तस्य द्वादशभिर्मासैः परं ब्रह्म प्रजायते[1]॥
शुचिर्वाप्यशुचिर्वापि प्रणवं यो जपेत् सदा।
लिप्यते न स पापेन पद्मपत्रमिवाम्भसा॥

अङ्गिराः,—

प्रणवाद्यास्तथा वेदाः प्रणवे पर्य्युपस्थिताः।
वाङ्मयं प्रणवे सर्व्वमभ्यसेत्प्रणवन्ततः॥
प्रणवे नित्ययुक्तस्य व्याहृतिषु च सप्तसु।
त्रिपदायाश्च गायत्र्यां न भयं विद्यते क्वचित्॥

योगियाज्ञवल्क्यः,—

अदृष्टविग्रहो वेदो भावग्राह्यो मनोमयः।
तस्योङ्कारः स्मृतं नाम तेनाहूतः प्रसीदति॥

---

## अथ गायत्रीजपः।

स च द्वेधा। सप्तव्याहृतिदशप्रणवशिरःसाहित्येनैकः। प्रणवव्याहृतित्रयसहितो[2] द्वितीयः। तत्र शङ्खः,—

इति वेदपवित्राण्यप्यभिहितान्येतेभ्यः सावित्री विशिष्यते। नाघमर्षणात्परमन्तर्जलजपे न व्याहृतिभ्यः परं होमे न गायत्र्याः परं जाप्ये। तथा ओँकारस्य प्रणवाख्या। ओँ भूः। ओँ भुवः।

---

(१) B. प्रकाशते। (२) B. साहित्येन द्वितीयः।

ॐ स्वः। ॐ महः। ॐ जनः। ॐ तपः। ॐ सत्यम्।
इति महाव्याहृतयः। आपोज्योतीरसोऽमृतं ब्रह्म भूर्भुवः स्वरोम्
इति शिरः। [1]अत्र च वदति लोकः,—

सव्याहृतिं सप्रणवां गायत्रीं शिरसा सह।
ये जपन्ति सदा तेषां न भयं विद्यते क्वचित्॥
शतजप्ता तु [2]सावित्री पातकेभ्यः प्रमोचनी।
दशसाहस्रजाप्येन [3]सर्वपापप्रणाशिनी॥
सुवर्णस्तेयकृद् विप्रो ब्रह्महा गुरुतल्पगः।
सुरापश्च विशुध्यन्ति लक्षजापान्न संशयः॥
प्राणायामत्रयं कृत्वा कल्यं कल्यं समाहितः।
अहोरात्रकृतात्पापात् [4]तत्क्षणादेव मुच्यते॥
सव्याहृतिकाः सप्रणवाः प्राणायामास्तु षोडश।
अपि भ्रूणहनं मासात् पुनन्त्यहरहः कृताः॥

अथ गायत्र्यधिकारात् सप्तव्याहृतिशिरःसहितदशप्रणवयुक्तगायत्र्या प्राणायामः प्रतीयते। तथा,—

इष्टलोकप्रदा देवी पततां नरकार्णवे।
तस्मात् तामभ्यसेन्नित्यं ब्राह्मणो हृदये शुचिः॥

---

(१) B. अत्र च भवति श्लोकः।
(२) B. सा देवी।
(३) B. सर्व्वपातकनाशिनी and adds लक्षजप्ता तु सा देवी महापातकनाशिनी।
(४) B. मुच्यते नात्र संशयः।

गायत्रीजप्यनिरतं हव्यकव्येषु भोजयेत् ।
तस्मिन् न तिष्ठते पापमब्बिन्दुरिव पुष्करे ॥
सावित्रीजप्यनिरतः स्वर्गमाप्नोत्यनुत्तमम् ।
सावित्रीजप्यनिरतो मोक्षोपायञ्च विन्दति ॥

तेन न भयं विद्यत इत्यत्र नरकभयं संसारभयं नास्तीत्यर्थः ।

इत्येकः प्रकारः ।

मनुर्यमश्च प्रथमे ।

ॐकारपूर्व्विकास्तिस्रो महाव्याहृतयोऽव्ययाः ।
त्रिपदा चैव गायत्री विज्ञेयं ब्रह्मणो मुखम् ॥
योऽधीतेऽहन्यहन्येतां त्रीणि वर्षाण्यतन्द्रितः ।
स ब्रह्म परमभ्येति वायुभूतः खमूर्त्तिमान् ॥

वायुभूतः लिङ्गशरीरनिष्ठः खमूर्त्तिमान् आकाशव्यापी ।

पुनर्यमः,—

गायत्र्यास्तु परं नास्ति मौनात् सत्यं विशिष्यते ।
सहस्रपरमां देवीं शतमध्यां दशावराम् ।
गायत्रीं तु जपेन्नित्यं सर्व्वपापप्रणाशिनीम् ॥
गायत्रीञ्चैव वेदांश्च तुलयातोलयत् प्रभुः ।
एकतश्चतुरो वेदाः साङ्गाश्च सपदक्रमाः ।
एकतश्चैव गायत्री तुल्यरूपा तु सा स्मृता ॥

सपदक्रमाः पादक्रमसहिता । अत्र च प्रणवव्याहृतित्रयसहित-गायत्रीजपस्य कथनात्

प्रणवाद्यन्तसंबद्धां जपेत् व्याहृतिभिः सह ।

इति। गायत्रीं प्रणवं चान्त इति च विकल्पपरमेव अन्तो प्रणवोऽस्मिन् पक्षे वैकल्पिकः। मनुः,—

सहस्रकृत्वस्त्वभ्यस्य बहिरेतत् त्रिकं द्विजः।
महतोऽप्येनसो मासात् त्वचेवाहिर्विमुच्यते॥

अत्र बहिर्देशविशिष्टजपविधानात् गृहप्रासादादीनां सामान्यदेशानामिहाप्रसङ्गः। योगियाज्ञवल्क्यः,—

ओँकाराद्यास्त्रिरावृत्ता वेदस्यारम्भणे सदा।
सप्तावृत्ता पुनर्देहं दशभिः प्रापयेद् दिवम्॥
विंशावर्त्तेन सा देवी नयते ह्नीश्वरालयम्।
अष्टोत्तरशतं जप्त्वा तरते भवसागरात्॥
सर्व्वेषामेव पापानां सङ्करे समुपस्थिते।
दशसाहस्रिकोऽभ्यासो गायत्र्याः शोधनं परम्॥[1]
यत्र यत्र च सङ्कीर्णमात्मानं मन्यते द्विजः।
तत्र तत्र तिलैर्होमो गायत्र्या जप एव च॥
वायुभक्षो दिवा तिष्ठेत् रात्रिं नीत्वाप्सु सूर्य्यदृक्।
जप्त्वा सहस्रं गायत्र्याः शुद्धि ब्रह्मवधादृते॥
शतेन गायत्र्याः स्नायात् शतमन्तर्जले जपेत्।
अपः शतेन पीत्वा तु सर्व्वपापैः प्रमुच्यते॥

तथा,—

गोघ्नः पितृघ्नो मातृघ्नो ब्रह्महा गुरुतल्पगः।
भ्रूणहा स्वर्णहारी च यश्च विप्रः सुरां पिबेत्॥

---

(१) B. Adds. इति।

गायत्र्याः शतसहस्रेण जप्येन तु भवेच्छुचिः ।

एवं याज्ञवल्कीयजपप्रयोगाणां व्याहृतित्रयविशिष्टगायत्रीविषयत्वम्[1] । [2]ये तु प्रयोगा एतदन्यतरलिङ्गशून्यास्तत्र द्वयोर्विकल्पः ।

यथा,—

सर्व्वेषामेव पापानां सङ्करे समुपस्थिते ।
दशसाहस्रिकोऽभ्यासो गायत्र्याः शोधनं महत् ॥
गायत्र्याः शतसाहस्रो जपो [3]नक्ताशिनो भवेत् ।
वह्निः स्नातस्य तत्रैव सर्व्वकिल्बिषनाशनः ॥
दशायुतानि जप्त्वा च हविष्याशी स मुक्तिभाक् ।
गायत्र्यास्तु जपन् कोटिं ब्रह्महत्यां व्यपोहति ॥
लक्षाशीतिं जपित्वा तु सुरापानात् प्रमुच्यते ।
पुनाति हेमहर्त्तारं गायत्र्या लक्षसप्ततिः ।
गायत्र्या लक्षषष्ट्या तु मुच्यते गुरुतल्पगः ॥

अत्र च गुणविशेषात् फलविशेषः । पापक्षयेष्वनुबन्धभेदात् विशेषः ।

अथ यजुर्विधाने,—अथातो गायत्रीकल्पं व्याख्यास्यामः । उपोष्य पुण्येण स्थण्डिलमुपलिप्य कुशेषूपविष्टो द्यावापृथिव्योः सन्धिमीक्षमाणो जपेत् । ॐकारपूर्व्वां गायत्रीं जपेत् । यावत्-

---

(१) B. Adds. मन्त्रोक्तानां दशप्रणवयुक्तगायत्रीविषयत्वम् ।

(२) B. यत्तु ।

(३) A. नक्ताशनो द्विजः ।

कालं यथाविद्यांम्नानम् । अग्निमुपसमाधाय चतुर्विंशत्याज्या- हुतिसहस्राणि जुहुयात् । तत्सवितुरिति । समाप्ते होमे दशा- युतानि जप्त्वा सर्व्वपापैः प्रमुच्यते । अत्रोङ्कारपूर्व्वं गायत्री- मात्रस्य जपः । न व्याहृतिप्रवेशेन । यावत्कालं यथाविद्याम्नान- मिति सिद्ध्यर्थपुरश्चरणजप एषः । अहोरात्रोपोषितः साहस्रिकं होममाचरेत् । त्रिरात्रोपोषितो दशसाहस्रिकमित्यादिवक्ष्यमाण- कालावच्छिन्नजपकल्पनम् । सर्व्वमन्त्राणां पूर्व्वसेवार्थं लक्षमयुतं सहस्रं शतमिति सिद्ध्यपेक्षया कार्य्यमित्युपक्रमे विधानाद् ग्राह्यम् । तथा स्त्रीशूद्रसम्भाषणवर्जी त्रिरात्रमयुतं जप्त्वा विपापो भवति । द्वितीयं विद्यार्थी । तृतीयमारोग्यकामः । चतुर्थं पुत्रकामः । पञ्चमं धनकामः । षष्ठं ग्रामकामः । सप्तमं सौभाग्यकामः । अष्टमे ब्राह्मणवर्जं सर्व्वे वर्णा वश्या भवन्ति । नवमेन गायत्रीं स्वरूपां पश्यति । दशमेन ब्रह्मलोकमवाप्नोति ।

---

## अथातः काम्यहोमाः ।

दूर्व्वामायुःकामः । पशूनामुपघाते कुशान् जुहुयात् । ज्वरा- पनये तु आम्रसमिधो जुहुयात् । खादिरमन्नादिकामस्य । अपामार्गमर्थकामस्य । पद्मानि श्रीकामस्य । वासकपुष्पं कन्यार्थी । अकामोत्वाज्यहोमात् परं ब्रह्माधिगच्छति ।

प्राप्य देशञ्च कालञ्च द्विजः सामर्थ्यमेव च ।
एकाहं ब्रह्मकूर्चाशी एकाहमेकभैक्षभुक् ॥

एकाहं ब्राह्मणागामी गायत्रीजपमाचरेत्।
शतं स्नात्वा तु गायत्र्याः शतमन्तर्जले जपेत्॥
अपः शतेन पीत्वा तु सर्व्वपापैः प्रमुच्यते।
गोघ्नश्चैव कृतघ्नश्च ब्रह्महा गुरुतल्पगः॥
भ्रूणहा ब्रह्मचारी च यश्च विप्रः सुरां पिवेत्।
अयाज्यं याजयित्वा तु कृत्वान्यदपि पातकम्॥
न सीदेत् प्रतिगृह्णानः पृथ्वीमपि ससागराम्।
ये च केचिद् ग्रहा दुःस्थाः सौम्यास्ते स्युर्न संशयः॥

द्वितीयं विद्यार्थीत्यादिषु समुच्चयः। अयुतद्वयमित्यर्थः। एवं तृतीयादिषु। शतं स्नात्वा तु गायत्र्या इत्यत्र गायत्रीकरणक-स्नानशतं वाक्यार्थः।

[1]योगियाज्ञवल्क्येन ऋग्विधाने च,—शतेन गायत्र्याः स्नायात् इति शतसंख्यकगायत्रीजपकरणकमेव स्नानमिति कर्म्मभेदः। तेन द्वयोर्यावच्छ्रुतेतिकर्त्तव्यतायोगेनानुष्ठानम्।

---

## अथ गायत्रीन्यासः।

योगियाज्ञवल्क्यः,—प्रथमं प्रणवन्यासः। अकारं नाभौ। उकारं हृदि। मकारं मूर्द्ध्नि। विन्यस्य ब्रह्मरूपतयात्मध्यानम्।

---

(१) B. योगियाज्ञवल्क्यः ऋग्विधाने।

## व्याहृतिन्यासः।

भूः पादयोः। भुवः जानुनी। स्वः कट्याम्। नाभिदेशे महः। जनलोकं हृदये। तपः कण्ठदेशे। भ्रूललाटमध्ये सत्यम्।

---

## गायत्र्यक्षरन्यासः।

पादाङ्गुष्ठे तथा गुल्फे जानुनोर्जङ्घयोस्तथा।
[1]ऊर्व्वोर्गुह्ये तु वृषणे पायौ नाभ्यां तथैव च॥
जठरे स्तने च हृदये कण्ठे वक्त्रे च तालुनि।
श्रोत्रे चाक्षि भ्रुवोर्मध्ये ललाटे पूर्व्वके मुखे॥
याम्ये पश्चिमके चैव उत्तरे च यथाक्रमम्।
अन्तिमं मूर्द्ध्नि विन्यस्य परं ब्रह्म स उच्यते॥

पूर्व्वकं मुखं शिरसः पूर्व्वभागः। एवमन्यत्।

---

## अथ शिरोमन्त्रन्यासः।

गुह्ये वचसि वक्त्रे च समीके हृदये तथा।
पायौ नाभ्यां ललाटे च नवमं मूर्द्ध्नि विन्यसेत्॥

समीकं कण्ठदेश इति केचित्। गलपृष्ठं समीकं वा।

---

[1] B. ऊर्व्वोर्गुह्येऽथ०।

इदं न्यासचतुष्कञ्च सन्ध्यास्वति यो द्विजः ।
सर्व्वपापविनिर्मुक्तो ब्रह्मसायुज्यमृच्छति ॥

---

## अथाक्षरदेवताः[१] ।

अग्निर्वायुस्तथा सूर्य्यो विष्णुर्यमो वरुणश्च ।
बृहस्पतिश्च पर्जन्य इन्द्रो गन्धर्व्व एव च ॥
पूषा मित्रावरुणौ च त्वष्टा च वसवस्तथा ।
मरुतः सोमोऽङ्गिराश्च विश्वेदेवास्तथाश्विनौ ॥
प्रजापतिश्च वेदाश्च सरुद्रब्रह्मविष्णवः ।
जपकाले तु सञ्चिन्त्य तेषां सायुज्यतां व्रजेत् ॥

न्यासचतुष्कमक्षरदेवताचिन्तनञ्च [२]काम्यमपि वदति यजुर्विधाने ।

---

## अथ रक्षार्थं विद्याङ्गान्युच्यन्ते ।

मन्त्राणा[३]मिषेत्वेत्यादीनां खं ब्रह्मान्तानां शिवसङ्कल्पो हृदयम् । पुरुषसूक्तं शिरः । उत्तरनारायणं शिखा । अप्रतिरथं कवचम् । शतरुद्रियमस्त्रम् । [४][ शतरुद्रियं ] रुद्राध्याय एव

---

(१) B. प्रत्यक्षरदेवता ।

(२) B. काम्यमिति वदन्ति ।

(३) • मिषेत्वोर्ज्जेत्वादीनां •

(४) B. Omits the portion bracketed.

काण्डानाम् । 'वयं सोमेत्यनुवाकस्यान्तेति(१) रुद्राङ्गेऽधिकसंविधा-
नात् । तथा प्रकारान्तरम् । मनोज्योतिर्हृदयम् । अबोध्यग्निः
शिरः । मूर्द्धानं दिवः शिखा । मर्म्माणि ते कवचम् । मानस्तोके-
ऽस्त्रम् । तथा प्रणवो भूर्भुवः स्वरिति ²गुह्यहृदयादीनि । ॐ
हृदयाय नमः । ॐ भूः शिरसे स्वाहा । ॐ भुवः शिखायै वषट् ।
ॐ स्वः कवचाय हुम् । ॐ भूर्भुवः स्वः अस्त्राय फट् । एतच्च
यजुर्विधानोक्तप्रयोगेषु नित्यमन्यत्र वैकल्पिकम् ।

गायत्रीमधिकृत्य योगियाज्ञवल्क्यः,—

प्रणवो भूर्भुवः स्वरित्यङ्गानि हृदयादयः ।
द्विधावर्त्यं ततः पश्चादार्षं छन्दश्च दैवतम् ॥

इति । द्विधावृत्तिस्तु व्यस्तसमस्तरूपेण । समस्तेनास्त्रमित्यर्थः ।
तथा त्रातारमिन्द्र । त्वं नो अग्ने । स्तुचानुपन्याम् ।(१) अग्नुम्यन्तम् ।
तत्त्वायामि । आ नोनियुद्भिः । वयं सोम । तमीशानम् । अग्ने
रुद्रा । (१) स्योनापृथिवी । इत्येतत् सम्पुटजपकाले होमकाले
रक्षां प्राच्यादिषु कुर्य्यात् ।

योगियाज्ञवल्क्यः—

प्रणवाद्यन्तसंरुद्धां जपेद् व्याहृतिभिः सह ।
साद्यं प्रणवव्याहृतिभिः स्वाहान्तां होमकर्म्मणि ।
प्रतिलोम प्रयोक्तव्या फट्कारान्ताभिचारिके ॥

---

(१) B. Reads. चत्र चष्टिः पुनः षोडशमेवच । एत चेतनमक्षे दैवतं विद्यमेव च । वयं सोमेति इत्यभिमोक्तुष्टमचतुष्टयम् । एतेभ्यः यतर्दाव्रयम् ।

(२) B. व्यस्तहृदयादीनि ।

तेन सन्ध्याव्यतिरिक्तजपं प्रणवाद्यन्तलम्। अत—

'चावादि (?) यजुषाचैव तेजोसीतिविधानतः।

इति याज्ञवल्क्यपाठेऽपि तेजोसीत्यादिमन्त्र एव तैत्तिरीयसिद्धो ग्राह्यः। विसर्जनमन्त्रोऽपि तत्रैवोक्तः। सन्ध्यास्थले दर्शितौ। नमस्कृत्य विसर्जयेदिति वचनादत्र नमस्कारपूर्व्वता विहिता।

श्वेतवर्णा समुद्दिष्टा कौशेयवसना तथा।
श्वेतैर्विलेपनैः पुष्पैरलङ्कारैश्च भूषिता॥
आदित्यमण्डलान्तस्था ब्रह्मलोकस्थिताऽथवा।
अक्षसूत्रधरा देवी पद्मासनगता शुभा॥

इति ध्यानमावश्यकम्।

---

## अथ जपधर्म्माः।

योगियाज्ञवल्क्यः,—

गृहेष्वेकगुणं जप्यं नद्यान्तु त्रिगुणं स्मृतम्।
गवां गोष्ठे ²शतगुणमग्न्यागारे दशाधिकम्॥
सिद्धक्षेत्रे पुण्यतीर्थे देवतायाश्च सन्निधौ।
सहस्रशतकोटीनामनन्तं विष्णुसन्निधौ॥

---

(१) B. अग्नावाद्य(?)यजुषानेन ०।
(२) B. दशगुण ०।

तथा,—

तिष्ठंश्चेद्वीक्षमाणोऽर्कं जपं कुर्य्यात् समाहितः ।
अन्यथा प्राङ्मुखः कुर्य्याद् वक्ष्यमाणक्रमेण तु ॥
प्रागग्रेषु कुशेष्वेवमासीनः स्वासने शुभे ।
नात्युच्छ्रिते नातिनीचे दर्भपाणिः सुसंयतः ॥

अत्रासनस्य वस्त्राजिनचर्म्मादेरनुक्तत्वेऽपि चेलाजिनकुशोत्तरमिति सामान्यतः

सर्व्वसिद्धैर [1][ व्याघ्रचर्म्म मोक्षसिद्धौ ] मृगाजिनम् ।

इत्यादिकमेव ग्राह्यम् । तिष्ठंश्चेद्वीक्षमाणोऽर्कमिति नायं जपमात्रस्य विकल्पेन तिष्ठद्विधिः । किन्तु यत्र तिष्ठत एव जपविधिस्तत्रार्काभिमुखविधिरिति मन्तव्यम् ।

तथा,—

उपांशुजपयुक्तस्य शंस्याच्छतगुणो भवेत् ।
साहस्रो मानसः प्रोक्तो यस्माद् ध्यानसमो हि सः ॥

ध्यानसमत्वेन शब्दार्थचिन्तनाभ्यासरूपत्वमुक्तम् । शंस्यादुच्चैर्जपात् । तथा,—

स्फटिकेन्द्राक्षरुद्राक्षैः पूतञ्जीवसमुद्भवैः ।
अक्षमाला प्रकर्त्तव्या प्रशस्ताद्युत्तरोत्तरा ॥
कोट्यधिका भवेद् हरिरक्षमाला विशेषतः ।
जपस्य क्रियमाणस्य तस्माच्छ्रेष्ठः परः परः ॥

---

(1) B. Omits the portion bracketed.

अभावेत्वक्षमालायाः कुशग्रन्थ्याथ पाणिना।
न चङ्क्रमन् न विहसन् न पार्श्वमवलोकयन्॥
नापि श्रितो न जल्पंश्च न प्रावृतशिरास्तथा।
न पदा पदमाक्रम्यैवचैव हि तथा करौ॥
न चासमाहितमना न तु संश्रावयन् जपेत्।

मानवे च,—

ध्यायेत्तु मनसा मन्त्रं जिह्वोष्ठौ 'नैव चालयेत्।
न कम्पयेच्छिरोग्रीवं दन्तान्नैव प्रकाशयेत्॥
स्त्रीशूद्रपतितांश्चैव रासभञ्च रजस्वलाम्।
जपकाले न भाषेत व्रतहोमादिकेषु च॥
तुष्णीमासीत च जपंश्चण्डालपतितादिकान्।
दृष्ट्वा तान् पर्य्युपस्पृश्य स्नात्वाभाष्य पुनर्जपेत्॥
आचम्य प्रयतो नित्यं जपेदशुचिदर्शने।
सौरान् मन्त्रान् यथोत्साहं पावमानींश्च शक्तितः॥
रौद्रपैत्र्यासुरान् मन्त्रान् राक्षसानाभिचारिकान्।
व्याहृत्यालभ्य चात्मानमपःस्पृष्ट्वान्यदाचरेत्॥
यदि वाग्यमलोपः स्याज्जपादिषु कथञ्चन।
व्याहरेद् वैष्णवं मन्त्रं स्मरेद् वा विष्णुमव्ययम्॥

---

(१) B. नापि०।

## अत्रानेकदिवससाध्ये जपे आहारनियमः ।

योगियाज्ञवल्क्यः,—

शाकयावकभैक्षाणि पयोमूलं फलानि च ।
दधिसर्पिस्तथाम्भापः प्रशस्ताह्युत्तरोत्तराः ॥
चरवोह्युपवासश्च भैक्षं नक्तमयाचितम् ।
विसशृङ्गाटशालूकहविष्यान्नानि यानि तु ॥
एतान्यशुव्रतान्याहुः शस्तानि जपकर्म्मणि ।

यजुर्विधाने,—

शाकयावकपिण्याकपयोभक्षो भिक्षाहारो वा उदकशक्ताहारो वा । तथा हविष्यान्नभोजो क्षीराहारो होमं जपन् तत् निर्वर्त्तयेदिति । अत्र हविष्यान्नानीति स्मृत्यन्तरोक्तहविष्यद्रव्यपरम् ।

तथा छन्दोगपरिशिष्टे,—

हविष्येषु यवा मुख्यास्तदनु व्रीहयः स्मृताः ।
माषकोद्रवगौरादीन् सर्व्वालाभेऽपि वर्जयेत् ॥

[1]इत्यनेन माषादीनां प्रतिनिधित्वेनाग्रहणमित्यर्थः ।

तथा भविष्योत्तरे,—

हैमन्तिकं सिता स्विन्नं धान्यं मुद्गास्तिला यवाः ।
कलायकङ्गुनीवारा वास्तूकं हिङ्गमोचिका ॥

---

(१) B. इति माषादीनाम् ।

कालीयं कालशाकञ्च मूलकं केमुकेतरत्।
कन्दं सैन्धवसामुद्रे लवणे दधिसर्पिषी॥
पयोऽनुधृतसारञ्च पनसाम्रहरीतकीः।
पिप्पलीर्जीरकञ्चैव नागरञ्चैव तिन्तिडी॥
कदली लवली धात्री फलान्यगुड़मैक्षवम्।
अतैलपक्कं मुनयो हविष्याणि प्रचक्षते॥

मत्स्यपुराणे,—

[1]मुद्गाढकककालाया मिथुनानां हवींषि च।
एतेभ्योऽन्यानि [2]नाग्नीयान्मिथुनानामनापदि॥

मिथुनानां द्विदलानाम्। अत्र भविष्योत्तरोक्तहविष्यद्रव्याणां सर्व्वदेशीयशिष्टपरिग्रहेणाप्रामाण्यकारणाभावाद् यत्र यत्र हविष्यद्रव्यविधिस्तत्र तत्र एतान्येव ग्राह्याणि। यत्तु [3]हविषि योग्यं हविष्यमिति हविष्यशब्दस्य यौगिकत्वात् श्राद्धद्रव्ये हविःपदप्रयोगात् श्राद्धद्रव्याण्येव हविष्य[4]शब्देनाभिधीयत इति तदयुक्तम्। यौगिकत्वेऽपि प्रयोगनियमेन पङ्कजादिपदवत् रूढ़ेरपि स्वीकारात्। यथोद्भिदादिपदस्य यौगकिस्यापि रूढ़ित्वम्। यत्तु श्रोत्रस्यधिकरणे सत्स्ववयवार्थेषु योऽन्यत्वार्थे प्रयुज्यत इति

---

(१) A. मुद्गाढककालायाः।
(२) B. नाग्नीया०।
(३) B. हविर्योग्यं।
(४) B. ०शब्देन त्विभीयत इति।

योगाभाव एव रूढ़िरित्युक्तं तत् प्रदर्शनार्थम्। किञ्च श्राद्धद्रव्येषु माषमांसादिषु हविष्यपदाप्रयोगात् केवलयौगिकत्वमयुक्तम्। किञ्च शतरुद्रियहोमे गवेधुकानां हविष्ट्वात् वाजप्रसवीयादौ अष्टादशधान्यानां हविष्ट्वात् हविष्यत्वेन ग्राह्यत्वं स्यात्। [1]यदि च मधुमांसपरान्नमिथुनानि व्रतेऽहनि वर्जयेत्।

माषकोद्रवगौरादीन् सर्व्वालाभेऽपि वर्जयेत्।

[2]इति वचनान्तरात् हविष्यत्वेऽपि न ग्रहणम्। तर्हि यथाष्टादश धान्यमध्ये निषेधवचनं नास्ति तेषां श्राद्धादेयत्वेऽपि हविष्यत्व-प्रसङ्गः। किञ्च--

हवींषि संस्कृता ये च यवगोधूमशालयः।

इति वाराहे

हविः शाल्योदनं विद्यादाज्ययुक्तं सशर्करम्।

इति नारसिंहे च विष्णुनैवेद्येऽपि हविःपदप्रयोगात्। कर्कटक-फलादावपि हविष्यत्वप्रसङ्गः। नहि श्राद्धदेयमेव हविष्यमिति वचनमस्ति। किञ्च त्र्यम्बकमन्त्ररोगशान्तिहोमेषु ग्रहहोमेषु चाभक्ष्याणामपि होमीयत्वेऽपि न हविष्ट्वात् हविष्यत्वेन ग्राह्यत्वं स्यात्। अत्र जपाङ्गहविष्येऽभ्यङ्गनिषेधे प्रमाणाभावात् [3]अभ्यङ्गे न निषेधः। [4]ब्रह्मचर्य्यस्य अङ्गत्वपक्षेऽपि

---

(१) B. बहिति।

(२) B. इति वचनात्।

(३) A. अभ्यङ्गे निरोधः।

(४) B. ब्रह्मचर्य्यस्याङ्गत्वेऽपि।

ब्रह्मचर्य्यं हि सर्व्वेषां रेतोधारणमुच्यते ।
ऋतुकालं गृहस्थानां नित्यं वा पर्व्ववर्ज्जनम् ॥

इति ऋतावभिगमेऽपि न दोषः ।

अथश्चाहारनियमः प्राणायामहोमादावपि अनेकदिवससाध्ये मन्त्रजपाङ्गत्वेन प्रवर्त्तते । यदपि प्राणायामे होमे च मन्त्र-जपोऽङ्गमेव तथापि जपत्वाविशेषात् तद्धर्मा हविष्यभोजनादयः प्रधानाविरोधादन्येऽपि जपधर्म्माः कर्त्तव्या एव ।

योगियाज्ञवल्क्यः,—

सव्याहृतिं सप्रणवां गायत्रीं शिरसा सह ।
त्रिःपठेदायतप्राणः प्राणायामः स उच्यते ॥
सव्याहृतिकाः सप्रणवाः प्राणायामास्तु षोड़श ।
अपि भ्रूणहनं मासात् पुनन्त्यहरहः कृताः ॥
दह्यन्ते ध्मायमानानां धातूनान्तु यथा मलाः ।
तथेन्द्रियाणां दह्यन्ते दोषाः प्राणस्य निग्रहात् ॥

षोड़शप्राणायामफलं पञ्चरात्रे,—

प्राणायामैः षोड़शभिर्दिनशोऽनुष्ठितैर्द्विजः ।
मासादैहिकपापेभ्यो मुच्यते नात्र संशयः ॥
जन्मान्तरीयपापेभ्यः षण्मासान्मुच्यते तथा ।
संवत्सरेण तद्विष्णोः पदमाप्नोत्यसंशयम् ॥
अह्ना रात्र्या च यो जन्तून् हिनस्त्यज्ञानतो द्विजः ।
तेषां स्नात्वा विशुद्ध्यर्थं प्राणायामान् [1]षड़ाचरेत् ॥

---

(१) B. समाचरेत् ।

तथा,—

प्राणायामशतं कार्य्यं सर्व्वपापापनुत्तये ।
उपपातकजातानामनादिष्टस्य चैव हि ॥
ब्रह्महा च सुरापश्च अगम्यागमने रतः ।
सुवर्णस्तेयकश्चैव गोघ्नो विश्रम्भघातकः ॥
शरणागतघाती च कूटसाक्षी ह्यकार्य्यकृत् ।
एवमादिषु चान्येषु पापेष्वभिरताश्चिरम् ॥
प्राणायामशतं कुर्य्युः सूर्य्यस्योदयनं प्रति ।
निर्म्मलाः स्वर्गमायान्ति सन्तः सुकृतिनो यथा ॥

इति । अत्र ब्रह्महत्यादिषु प्राणायामशतस्यावृत्तिः । चिर-मित्युत्तरत्र सम्बध्यते । चिरं शतं कुर्य्युरित्येके । तथा—चक्षुस्त्वक्-प्राणमनोव्यतिक्रमे त्रिभिः प्राणायामैः [1]शुध्यति । शूद्रस्त्रीगमने सप्ताहं सप्त सप्त प्राणायामान् धारयेत् । अभोज्याभक्ष्यापेयानां प्राशने अपण्यविक्रये द्वादशाहं द्वादशप्राणायामान् धारयेत् । पातकोपपातकवर्जेष्वर्द्धमासम् । पातकपतनीयवर्जं [2]महापातक-वर्जितेषु द्वादशार्द्धमासम् । [3]महापातकेषु संवत्सरं द्वादशद्वादश-प्राणायामान् धारयेत् ।

अत्र प्राणायामप्रकार उक्तः योगाङ्गप्रकरणे च वक्ष्यते ।

---

(१) B. विशुध्यति ।
(२) B. महापातकवर्जेषु ।
(३) B. पातकेषु ।

विशेषतश्च महाव्याहृतित्रययुक्त एको मन्त्रायुक्तः। समस्तव्याहृति-सशिरोगायत्रीदशप्रणवयुक्तश्चापरः शक्तायुक्तः। तयोर्गुणविशेषात् फलविशेषः।

---

## होमश्च।

मनुः,—

सावित्रान् शान्तिहोमांश्च कुर्य्यात् पर्व्वसु नित्यशः।

अत्र पर्व्वस्विति नित्यश इति च पर्व्वानतिक्रमेण यथा नित्यता। तथा शान्तिहोमपदेनैहिकानिष्टहेतुदुरितक्षयकामकर्म्मण उक्तत्वाद् दुरितानिश्चये च

अनिमित्तकृता शान्तिर्निमित्तायोपजायते।

इति प्रसिद्धदोषाद्दुरितनिश्चये हेतुग्रहदोषस्वप्नविविधोत्पाताद्यभावे शान्तावनधिकारात् निमित्तनिश्चयमपेक्ष्य नित्यता बोध्या। निमित्तनिश्चये सति सावित्रान् शान्तिहोमान् पर्व्वसु नित्यं कुर्य्यादित्यर्थः। निमित्तसंशये नैमित्तिकानिष्टसंशये दृष्टसामर्थ्या-दर्शनेन वाऽनिष्टसंशयोभये निमित्ते विहितानि कर्म्माणि। (?) अनिष्टशङ्काया एव भयपदार्थत्वात्। तथा मत्स्यनाम्नि भयाभ्यु-च्यते भीतस्य। देवीमाहात्म्ये च,—

अच्युतो न भयं तस्य दस्युतो वा न राजतः।
न शस्त्रानलतोयौघात् कदाचित् सम्भविष्यति॥

यथा वा मन्त्रराजाधिकारे श्रुतौ,—यो मृत्योः [१]पाप्मभ्यः संसाराद्
बिभीयात् स एतं मन्त्रराजं नारसिंहमानुष्टुभं प्रतिगृह्णीयात् ।
इति । यथा गायत्र्यामेव ।

ये जपन्ति सदा तेषां न भयं विद्यते क्वचित् ।

इति । तेन ग्रहोत्पातरोगादिनिमित्तेन दुरितनिश्चये तच्छान्ति-
कर्म्माणि । निमित्तसंशयेन त्वनिष्टसंशये भयनिवृत्तिहेतुकत्वेन
विहितान्येव कर्म्माणि कार्य्याणीति सिद्धम् । गायत्र्यधिकारे
मनुः,—

स्तुता देवी विशेषेण सर्व्वकल्मषनाशिनी ।
सर्व्वकामप्रदा देवी वरदा भक्तवत्सला ॥
शान्तिकामस्तु जुहुयात् सावित्रीं [२]मक्षतैः शुचिः ।

अक्षताः सत्वचो यवाः । तेन मनूक्तगायत्रीमन्त्रकशान्ति-
होमोऽप्यक्षतैरेवाविरोधात् । तथा,—

कृच्छ्रो देव्ययुतञ्चैव प्राणायामशतत्रयम् ।
तिलहोमसहस्रञ्च वेदपारायणं समम् ॥

अत्र तिलहोमो न गायत्र्या । किन्तु न व्याहृतिभ्यः ५ं
होम इति गृह्यवचनात् अविहितमन्त्रकहोममात्रे व्याहृति
विधिः । तथाच षट्त्रिंशन्मते,—

महाव्याहृतिभिर्होमस्तिलैः कार्य्यो द्विजन्मना ।
उपपातकशुद्ध्यर्थं सहस्रपरिसंख्यया ॥

---

(१) B. पापेभ्यः संसाराच्च० ।
(२) B. चाक्षतैः० ।

महापातकसंयुक्तो लक्षहोमेन शुध्यति ।

इति । छन्दोगपरिशिष्टे,—

यत्र व्याहृतिभिर्होमः [1]प्रायश्चित्तात्मको भवेत् ।

चतस्रस्तत्र कर्त्तव्याः स्त्रीपाणिग्रहणे यथा ॥

इति । ॐ भूः स्वाहा । भुवः स्वाहा । स्वः स्वाहा । भूर्भुवः स्वः स्वाहेति चतस्र आहुतयः । अग्निः । वायुः । सूर्य्यश्च त्रयाणां देवताः । समस्तानां प्रजापतिः । यजुर्विधाने,—ॐकारपूर्विकाभिर्महाव्याहृतिभिराज्याहुतिसहस्रं जुहुयात् सर्व्वदेवताराधने समर्थो भवति । तेजस्वी भवति ।

---

## अथ [2]यथेष्टकरणमित्यादिप्रयोगविधिः ।

तत्र व्याहृतित्रयेण होमजपादयः । व्यस्तप्रयोगे मानाभावात् । तथा,—एताभिरौदुम्बरसमिधो जुहुयात् पशुकामः । दधि पयो वा शान्तिकामः । अर्कसमिद्भिरग्निं प्रज्वाल्यापामार्गतण्डुलान् जुहुयाद्धिरण्यकामः । धनमन्नादिकामः । जातीपुष्पकलिकानां युग्मशोग्रथितानामखण्डितानामयुतं जुहुयात् कन्या-

---

(१) ... प्रायश्चित्तार्थको भवेत् ।

चतस्रस्तत्र विज्ञेयाः ... ॥

गोभिलस्मृतिः २य प्र० १३१ श्लो० Anandagrama series, Poona, अत्रायं पाठभेदः ।

(२) B. यथेष्टं करण० ।

कामः। अप्सु मध्यस्थितस्तिलतण्डुलान् जुहुयात् ग्रामकामः। अपामार्गवासकशाखोटकान् वशीकर्त्तुकामः। अभिचारार्थं विषरुधिराक्ता [1]व्यापात(?)समिधो जुहुयात्। विभीतकसमिधो जुहुयाद् राजा वश्यो भवति। जनपदमरणे [2]सर्व्वत्र व्रीहीन् जुहुयात् शमयति। [3][ सर्व्वत्र व्रीहिभिः ] प्ररूढाभिर्हुत्वा राजा वश्यो भवति। दूर्व्वामायुः कामः।[4] कुशाग्राणि ब्रह्मवर्चस-कामः। ज्वरापनयने चाम्रसमिधः। खादिरमन्नाद्यकामः। अपामार्गमर्थकामः। ब्रह्मचारी हविष्यभोजी वाग्यतः काम्यानि करोति। [5]कुशतण्डुलान् प्रत्यङ्गिरे (?)। काकोलूकपक्षहोमो विद्वेषणे। वचापलमर्द्धपलं वा ताम्रभाजने शष्पचूर्णानि कृत्वा न्यसेच्चन्द्रग्रहणे कपिलाया घृतं सहस्रसंख्याभिर्हुतं कृत्वा संस्रवेणैव वचामालोड्यायुताभिमन्त्रितं कृत्वा पिवेत् परममेधावी भवति। पुत्रकामो मासमादित्याभिमुखः प्रतिदिनमयुतं जपेत् पुत्रान् लभते। यद्यदिच्छेत् तदर्थमपि याज्ञिकद्रव्यं जुहुयात् तत्तल्लभ्यत इति। अनादेशेऽयुतहोमः। ॐकारस्य गायत्र्याश्च पृथगुक्तानि फलानि भवन्ति। तथा सावित्रीमन्त्रस्याप्येष एव विधिः। एषु यजुर्विधानोक्तप्रयोगेषु प्रथमं तुलापुरुषचान्द्रायण-

---

(१) B व्यापात ?

(२) B. सर्व्वव्रीहीन्।

(३) B. Omits the portion bracketed.

(४) B. Adds पुष्पाणि वस्त्रकामः।

(५) B. कुशकण्टकान्०।

कृच्छ्रातिकृच्छ्रादिभिः पूतशरीरेण कर्म्मापेक्षया द्वादशरात्रं षड्-रात्रं त्रिरात्रमेकरात्रमिति कर्म्माङ्गानि कार्य्याणि। सर्व्वमन्त्राणां पूर्व्वसेवार्थं लक्षमयुतं सहस्रं शतमिति सिद्ध्यपेक्षया कार्य्यम्। ब्रह्मचर्य्यस्थितेन कर्त्तव्यं रहस्ये। कर्म्मावसाने फलप्राप्तिः। कालाश्च सिद्धयो नावमन्तव्याः। तथा तत्रैव प्रदेशान्तरे। कृच्छ्रातिकृच्छ्र-चान्द्रायणादिभिः शरीरं संशोध्य शाकादिभक्षो गोमूत्रयावक-पयोभैक्षाहारो यदि सहस्रं जुहुयात् दशसाहस्रिकं फलं लभते। दशसाहस्रेण शतसहस्रमिति। अहोरात्रोपोषितः साहस्रिकं होममारभेत्। त्रिरात्रोपोषितो दशसाहस्रिकम्। सप्तरात्रोपो-षितो लाक्षिकम्। हविष्यान्नभोजी क्षीराहारो होमं जपञ्च निर्व्व-र्त्तयेदिति। तथा तृतीयाध्याये,—अथ प्रयोगः। शाकयावकपयो-भक्ष्य उपोष्य द्वादशरात्राणि लघुभ्यो लघूनि महत्सु महान्ति तुला-पुरुषचान्द्रायणमिति प्रयोगाङ्गमुक्ता एष एव विधिः (१)कल्पग्रहार्थं माचार्य्यस्य। ओँमित्यभिवाद्य विलम्बेन पठेन्नचैवान्यथा देयमिति प्रयोगोपदेशकाले कृच्छ्रचान्द्रायणादिकं कर्त्तव्यमुक्तम्। अत्र तुलापुरुषकृच्छ्रातिकृच्छ्रादिकमुपलक्षणं यावत्पापक्षयहेतुकर्म्मणा तपोदानतीर्थस्नानगायत्रीजपादिना शरीरशोधनम्। प्रायश्चित्ता-धिक्यात् पापक्षयाधिक्ये फलभूयस्त्वमिति।

अत्र च यजुर्विधाने,—(२)अग्निसंस्कारविधिरुक्तः। भूरसीति भूमिं खनतीत्यादिना अन्ते च ततः सर्व्वदेवताराधनसमर्थो

(१) B. कल्पग्रहणार्थं०।

(२) P. अङ्गसंस्कार०।

भवति। अथ 'यथेष्टं कर्म्मकरणमिति। यद्यप्येतत् पाञ्च-रात्रिकाद्यग्निसंस्कारवद् यजुर्विधानोक्तहोमकर्म्मणामङ्गभूतं यदि वा नित्यप्राप्तगृह्यविधिं विकल्प्य देवताराधनसामर्थ्यरूप[2]फलार्थं गोदोहवत्काम्यत्वेन विधीयते। उभयथापि नैतस्मिन् गृह्य-विधिप्रवेशः तेन यावदुक्तमेतावदेव कार्य्यम्। गृह्य[3]विधेश एष एव विधिर्यत्र क्वचिद्धोमइति सर्व्वार्थत्वेन विधानाद् विकल्पेना-प्यपि प्रवृत्तिरेव। न च याजुर्विधानकविधेर्विशेषत्वेन सामान्य-प्राप्तगृह्यविधिवाधकत्वमेव। न तु तुल्यबलत्वमिति वाच्यं गृह्य-विधेरपि यत्र क्वचिद्धोम इति यच्छब्देन सर्व्वनाम्ना विशेष-रूपेणैव सर्व्वहोमेषूपस्थितेषु प्रवृत्तेर्दुर्व्वलत्वाभावात्। अतएव पाञ्चरात्रिकहोमादिविधावपि विकल्पेन गृह्योक्तविधेः प्रवेशं पाञ्चरात्रिका अपि मन्यन्ते। किञ्च गृह्योक्तविधेर्निःसन्दिग्ध-त्वाद् याजुर्विधानकविधौ बहुधा सन्देहात् सन्दिग्धमसन्दिग्धेन बाध्यत इति न्यायेन गृह्योक्तविधेरेव कर्त्तव्यत्वमभिप्रेत्य कल्प-तरुकारादिभिरन्यैश्च गृह्यविधिरेव सर्व्वत्राहृतः।

यजुर्विधानोक्तविधिः। भूरसीति भूमिं खनति कुण्ड-विधया। मयि गृह्णामीति अग्निं [4]विम्हन्नाति। लिप्ते कुण्डे अग्निं स्थापयतीत्यर्थः। विश्वे अद्येति परिस्तरणं कुशैः पूर्व्वादिदिक्षु। अदितिर्द्यौरित्युपपातनं करोति। उपपातनं

(१) B. यथोक्तम्। (२) B. फलार्थम्। (३) B. विशेषश्च। (४) B. निमह्णाति।

नाम परिसमूहनमिति प्रतिभाति। पर्य्युक्षणस्योपरिविधानात्। देवसवितरिति पर्य्युक्षति। लौकिकोदकेनैव। नमस्ते रुद्र इति पूर्व्वेणार्घ्यं ददाति। नमो वात्यायेति दक्षिणेन। त्वमग्नेक्रतुभिरिति पश्चिमेन। त्वमग्ने प्रथम इत्युत्तरेण। समास्त्वेत्युपरि अर्घ्यं ददाति। इदं विष्णुरिति स्रुवाहुतिं जुहोति। यातुधानाः पलायन्ते। उपनयनाद्यग्निकार्य्यं करोति। आदिपदं प्रकारवाचि उपनयनप्रकारम्। गर्भाधानादिविवाहान्ताग्निसंस्कारविधिरिह प्रणवेन स्रुवाहुतिहोमेन कर्त्तव्य इति प्रतिभाति।

देवीपुराणे जातकर्म्मादिसंस्कारविधिः। आर्त्ताग्निविषयेऽपि दृश्यते।

देवीपुराणे,—

अग्नेः परिग्रहः कार्य्यः सर्व्ववेदार्थवेदकैः।
वामदक्षिणसिद्धान्तग्रन्थवेदान्तपारगैः॥

इत्युपक्रम्य गर्भाधानं भवेदेवं जातकर्म्म भवेदेवमित्यादि प्रपञ्चेनोक्तम्। तत्र एषा ते अग्ने। एतत्ते देवः सविता। आ मन्द्रैरिन्द्र। सूत्रामानम् (?)। (सौत्रामण्या) त्रातारमिन्द्रम्। यः प्राणतो। य आत्मदा। हिरण्यगर्भः। मामाहिंसीः। येन द्यौरुग्रा। यश्चिदापो। यं क्रन्दसी। आपोह। आपश्चित्। प्रजापते न। एताभिः समिधो हुत्वा शाकलहोमकैश्च जुहुयात्। समिध इत्यर्थः। शाकलहोमकाः देवकृतस्यैनसोवयजनमसीत्यादयः षण्मन्त्राः। अग्निश्च पृथिवीचेत्युपक्रमं कुर्य्यादिति। ततः

सर्व्वदेवताराधनसमर्थो भवति । अथ यथेष्टं [1]करणमिति । नात्रादावाघारावाज्यभागौ [2]नचान्ते स्विष्टकृद्भूरादयः ।

गृह्योक्ताग्निसंस्कारविधिः ।

पारस्करः,—परिसमुह्योपलिप्योल्लिख्योद्धृत्याभ्युक्ष्याग्निमुपसमाधाय दक्षिणतो ब्रह्मासनमास्तीर्य्य प्रणीय परिस्तीर्य्यार्थवदासाद्य पवित्रे कृत्वा प्रोक्षणीः संस्कृत्यार्थवत्प्रोक्ष्य निरुप्याज्यमधिश्रित्य पर्य्यग्निं कुर्य्यात् । स्रुवं प्रतप्य सम्मृज्याभ्युक्ष्य पुनः प्रतप्य निदध्यात् । आज्यमुद्वास्योत्पूयावेक्ष्य प्रोक्षणीश्च पूर्व्ववदुपयमन कुशानादाय समिधोऽभ्याधाय पर्य्युक्ष्य जुहुयात् । अन्वारब्ध आघारावाज्यभागौ महाव्याहृतयः सर्व्वप्रायश्चित्तं प्राजापत्यं स्विष्टकृच्च । एतन्नित्यं सर्वत्र । प्राङ्महाव्याहृतिभ्यः स्विष्टकृदन्यश्चेदाज्याद्धविः । कात्यायनः,—पाकयज्ञेष्ववत्तस्यासर्व्वहोमः । हुत्वा च शेषप्राशनम् । पूर्णपात्रो दक्षिणा वरो वा वरो वा । तदिहाज्यभागानन्तरं प्रधानहोमः । तदन्ते स्विष्टकृत् । प्रधानहविषा । ततो भूः स्वाहा भुवः स्वाहा स्वः स्वाहा । त्वन्नो अग्ने । सत्वन्नो अग्ने । अयाश्चाग्ने । ये ते शतम् । उदुत्तमम् । इति पञ्चमन्त्रैः पञ्चाहुतयः । प्रजापतये स्वाहेति च । आज्यस्यैव प्रधानद्रव्यत्वे अन्ते स्विष्टकृत् । समिधामपि प्रधानद्रव्यत्वे आज्येनैवान्ते स्विष्टकृत् । अत्र देवीपुराणे परिसमूहनादिषु मन्त्रान् दर्शयित्वा शेषेऽभिहितम् ।

---

(१) B. कर्म्मकरणमिति ।

(२) B. न चान्ते ।

अन्यथा ये प्रकुर्व्वन्ति सूत्रमाश्रित्य केवलम्।
निराशास्तत्र गच्छन्ति सर्व्वे देवा न संशयः॥

तेन शान्तिके पौष्टिके च होमे देवीपुराणोक्तविधिरावश्यकः। न च विवाहोपनयनादावपि तत्प्रसङ्गः।

एवं लक्षणसंयुक्तं सर्व्वहोमेषु याज्ञिकम्।
विधानं विहितं तत्र ब्रह्मणामिततेजसा॥

इति तत्रैवोक्ता फलवद्धोमवाचियप्रपदेन संस्कारत्वेन नित्य-होमानामग्रहणात्।

यद्यपि गृह्योक्ताग्निस्थापने कुण्डस्थण्डिलादिनियमो नास्ति तथापि शान्तिकपौष्टिकहोमेषु तत्तत्कुण्डानां विधानात् तद-सम्भवे च स्थण्डिलस्यापि विधानात् तदन्यतरदाश्रित्य परिसमूह-नादि कार्य्यम्। [1]तत्रच,—

द्रवद्रव्ये स्रुवः प्रोक्तः स्रुचा [2]चात्र न (तु) श्रूयते।

इति छन्दोगपरिशिष्टे यद्यपि स्रुचो शाहिता तथापि प्रोक्षणीः संस्कृत्येति सूत्रणात् प्रोक्षणीसंस्कारस्य श्रौते हविर्ग्रहण्यां दृष्टत्वात् [3]इहाग्निहोत्रहोमाभावे हविर्ग्रहण्यभावेऽपि गुण-लोपे तु मुख्यस्येति न्यायेन तदाधारस्रुङ्मात्रग्रहणम्। तथा पवमानहविषि हविर्ग्रहणार्थमग्निहोत्राभावेनाग्निहोत्रहवन्य-

(१) B. अत्रच।

(२) B. यत्र।

(३) B. इहाग्निहोत्रहोमाभावेन हविर्ग्रहणस्याभावेन हविर्ग्रहण्य-भावेऽपि ०।

भावेऽपि स्रुङ्मात्रग्रहणम् । एवञ्च प्रोक्षणीपात्र[1]मत्र स्रुगेव वैकङ्कती । अन्यथोत्पवनोद्दिङ्गनादिकमपि न प्रवर्त्तेत । ताम्रादिपात्रे प्रोक्षणीसंस्कारो निर्मूलः प्रतिभाति । तथा,—

होमपात्रमनादेशे द्रवद्रव्ये स्रुवः स्मृतः ।
[2]पाणिनैवेतरस्मिंश्च स्रुचा [3]चात्र न हूयते ॥

इति छन्दोगपरिशिष्टे द्रवद्रव्ये स्रुवस्य विधानात् संहतद्रव्ये च

पाण्याहुतिर्द्वादशपर्व्वपूरिका
[4]द्रवादिना चेत् स्रुवमात्रपूरिका ।
दैवेन तीर्थेन च हूयते हविः
स्वङ्गारिणि स्वर्चिषि तच्च पावके ॥

इति च हस्तस्य विधानात् । अन्यत्र गोभिलेन—

गोवक्त्रवत् करं कुर्य्यात् तर्जनीकन्यसाहृते ।
त्रिभिरङ्गुलिभिः स्पृष्टं पूर्व्वमात्रन्तु पूरयेत् ॥
व्रीह्यादीन् होमयेद् विद्वानधोवक्त्रेण यत्नतः ।

इति मध्यमानामिकाङ्गुष्ठयोगेन होमविधानात् स्रुचः प्रसङ्गा-

---

(१) B. मेतत् ।

(२) पाणिरेवेतरस्मिंस्तु स्रुचा चात्र तु हूयते ।
गोभिलस्मृतिः १म प्र० श्लो० १०१ ।

(३) B. चात्र ।

(४) कंसादिना चेत् स्रुवमात्रपूरिका इति गोभिलस्मृतिः । १म प्र० सप्तमी कण्डिका १२२ श्लोकः ।

भावात् स्रुङ्निषेधो नित्यानुवादोऽर्थवाद इति पूर्णाहुतिहोमः स्रुचा क्रियते। अतएव कालातिक्रमे नियतवदिति सूत्रेण जात-कर्म्मादीनां कालातिक्रमे अनादेशप्रायश्चित्तमतिदिश्यमानं स्रुचैव शिष्टाः कुर्व्वन्ति। न चैवमादिष्वेव प्राप्तायाः स्रुचोनिषेधः। अत्र नैमित्तिकत्वेन [1]नित्यवन्निषेधान्नप्रायात्। लोके चैतदा-दीन्येव कर्म्माणि पुण्याहं स्वस्ति ऋद्धिमितिवचनात् पुण्याह-वाचनमादौ कार्य्यम्। तच्चैवम्,—ब्राह्मणान् यथाशक्ति पूज-यित्वा क्रियमाणेऽस्मिन् कर्म्मणि पुण्याहं भवन्तो ब्रुवन्तु इत्युक्ते पुनन्त्वादित्या इत्यादिमन्त्रं पठित्वा पुण्याहमिति त्रिर्ब्रूयुः। एवं स्वस्ति भवन्तो ब्रुवन्तु इत्युक्ते स्वस्ति न इन्द्र इति पठित्वा स्वस्तीति त्रिर्ब्रूयुः। एवं कर्म्मर्द्धिं भवन्तो ब्रुवन्तु इत्युक्ते ऋद्धाः कर्म्मण्या इति मन्त्रं पठित्वा कर्म्म ऋध्यतामिति त्रिर्ब्रूयुः। ततो यजमानः पुण्याहमिति त्रिः। एवमस्त्विति ब्राह्मणाः। विज्ञा-पयामीति यजमानः। उच्यतामिति द्विजाः। गोब्राह्मणेभ्यः शुभं भवतु। राज्ञः प्रजानां शान्तिर्भवतु इति सर्व्वे। ततो यजमानः अमुकफलार्थं होमकर्म्मारम्भः क्रियते यदा तदा तारा-वारग्रहनक्षत्राणाममृतयोगोऽस्तु नवग्रहाः सम्यग्रूपेण एका-दशस्थाः फलदा भवन्तु शुभं भवतु इति त्रिः। ततः सङ्कल्पः।

यद्यपि व्रतादन्यत्र जलपात्रग्रहणपूर्व्वकसङ्कल्पे मानाभावः समाचारात्। आपस्तम्बेन च पापकर्म्मसु सङ्कल्पपूर्व्वके दोषाति-

---

(१) P. नित्यवन्निषेधान्नयात्।

अयमुत्ता एवं पुण्यवत्तुर्चेति विहितकर्मसु सङ्कल्पेन फलोत्कर्षाभिधानात्।

गृहीत्वौदुम्बरं पात्रं वारिपूर्णमुदङ्मुखः।
उपवासन्तु गृह्णीयाद् यदा सङ्कल्पयेद् बुधः॥

इत्यत्रान्यदपि यदुपवासातिरिक्तं सङ्कल्पयेत् तदा वारिपूर्णं पात्रं गृहीत्वा इति व्याख्यानस्य बहुसम्मतत्वात् ताम्रपात्रमादयोदङ्मुखस्य होमजपादौ सङ्कल्पः। यद्यप्यत्र स्मार्त्तकर्मसु यजमान एव कर्त्ता शास्त्रफलं प्रयोक्तरीतिन्यायात् ऋत्विग्वरणदक्षिणादानाद्यभावात्। [[1]ब्रह्मणस्तु ज्ञाताज्ञातावेक्षकत्वेन वरणात्।] दक्षिणतो ब्रह्मासनमास्तीर्य्य ब्रह्माण्वारभ्य इत्यादि लिङ्गाच्च। अतएव पूर्णपात्रं दक्षिणा वरोवेति ब्रह्मदक्षिणात्वेनोपपन्नत्वादाचार्य्यवरणमाक्षिपति तथापि स्मार्त्तकर्मसु।

ब्रह्मणे दक्षिणा देया या च यत्रोपदिश्यते।
विदध्याद्धोत्रमन्यश्चेद् दक्षिणार्द्धहरोभवेत्।
स्वयञ्चेदुभयं कुर्य्यादन्यस्मै प्रतिपादयेत्॥

इति छन्दोगपरिशिष्टे यजमानादन्यस्य [2]होमकर्त्तृत्वे दक्षिणार्द्धं ब्रह्मणे दक्षिणार्द्धं होमकर्त्रे दद्यादितिलिङ्गादाचार्य्यवरणमायाति। किञ्च सर्व्वशान्तिकपौष्टिकहोमानां नवग्रहयज्ञ-

(१) A. Omits the portion bracketed.

(२) B. स्मार्त्तकर्म्मजहोमकर्त्तृत्वे आम्नातदक्षिणार्द्धं ब्रह्मणेऽर्द्धं होमकर्त्रे च देयमिति लिङ्गादन्यस्यापि कर्त्तृत्वमिति आचार्य्यवरणमिति। किञ्च ०।

विकृतित्वं तत्र कृत्स्नधर्म्मविधानादितरेषां साकाङ्क्षाणां तत एव धर्म्मग्रहणौचित्यात् । तत्र च ऋत्विक्परिग्रहः श्रूयते ।

मत्स्यपुराणे,—

नवग्रहमखे विप्राश्चत्वारो वेदपारगाः ।
अथवा ऋत्विजौ शान्तौ द्वावेव श्रुतिपारगौ ॥

इति सर्व्वत्र ऋत्विक्परिग्रहः । [1]यत्तु भट्टाचार्य्यैः ।—

शान्तिपुष्ट्यभिचारार्था एकब्रह्मर्त्त्विगाश्रयाः ।
क्रियास्तु याः प्रतीयन्ते [2]त्वय्येवात्मीयगोचराः ॥

इति शान्तिपुष्ट्यभिचारहोमेषु आथर्व्वणेषु एकर्त्त्विक्त्वमुक्तं तत्र एक आचार्य्यः ब्रह्मा च ऋत्विक् यत्रेत्येवं व्याख्येयम् । अथवा शान्तिकपौष्टिकेषु दक्षिणाम्नानवत्सु पुरोहितवत् प्रतिनिधिः कर्त्ता । आचार्य्यः ब्रह्मा च प्रसिद्ध एव । यथा [3]त्रियम्बकाधिकारे वशिष्ठकल्पे,—

[4]परार्थमपि कुर्व्वीत ब्राह्मणो वेदवित्तमः ।
दातव्या दक्षिणा तत्र यथा तुष्टो भवेद्गुरुः ॥

इत्यादि । यत्र दक्षिणाम्नानं नास्ति तत्रापि यथाप्रतिनिधि कर्त्तृनिवेशस्तथा याजनाधिकारे वक्ष्यते ।

प्रजापतिः । अनुष्टुप् । अग्निः ।

---

(१) B. यत्तु शिष्टाचार्य्यैः ।

(२) B. तौष्वेवात्मीय० ।

(३) B. त्रम्बका० ।

(४) B. परार्थमत्र० ।

यद्देवा देवहेड़नं देवासश्चकृमावयम्।

अग्निर्मा तस्मादेनसो विश्वान् मुञ्चत्वंहसः॥

इति कश्यपं स्मृत्वा त्रिः परिसमूहनं कुशैः। कुत्स ऋषिः। [1]जगती। रुद्रः। मानस्तोके तनये मान आयुषि मानो गोषु मानो अश्वेषु रीरिषः। मानो वीरान् रुद्रभामिनोवधीर्हविष्मन्तस्सदमित्वाहवामहे। इत्यनेन [2]विश्वेदेवान् स्मृत्वा लेपनं त्रिः। परमेष्ठी प्रजापति ऋषिः अनुष्टुप्। इन्द्रः। त्वां वृत्रेष्विन्द्र सत्पतिन्नरस्त्वां काष्ठास्वर्वतः। मित्रावरुणौ स्मृत्वा त्रिः परिलेखनम्। परमेष्ठी। यजुः। पुरीषम्। व्रजं गच्छ गोष्ठानं वर्षतु ते द्यौर्बधान देव सवितः परमस्यां पृथिव्यां शतेन पाशैर्योऽस्मान् द्वेष्टि यञ्च वयं द्विष्मस्तमतोमामौक्। अनेन पृथिवीं स्मृत्वा मृत्तिकोद्धरणं त्रिः। परमेष्ठी। यजुः। सविताश्विपूषा। अश्विनौ सरस्वतीन्द्रः। इति वा। देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां अश्विनोर्भैषज्येन तेजसे ब्रह्मवर्चसायाभिषिञ्चामि। सरस्वत्यै भैषज्येन वीर्य्यायान्नाद्यायाभिषिञ्चामि। इन्द्रस्येन्द्रियेण बलाय श्रियै यशसेऽभिषिञ्चामि। गन्धर्व्वान् स्मृत्वा त्रिरभ्युक्षणम्। परमेष्ठी। गायत्री। अग्निः। अग्नि मूर्द्धा दिवः ककुत्पतिः पृथिव्या अयम्। अपां रेतांसि जिन्वति। अनेन शर्व्वं स्मृत्वा ताम्रपात्रानीतस्य शरावानीतस्य वा

---

(१) P. गायत्री।

(२) B. विश्वान् देवान्।

अग्नेरात्माभिमुखं कुण्डे स्थापनम्। [1]देवीपुराण एवान्यत्र ताम्र-पात्रे शरावे वेतिवचनात्। अग्निश्च गृह्यादुद्धृतः। निरग्ने र्ब्राह्मणगृहादानीतः। एवमग्निस्थापनानन्तरं प्रधानहोमसम्बद्ध-देवतापूजा कुण्डपूर्व्वे ईशाने वा।

नवग्रहयज्ञे दृष्टत्वात्। अतएव भोजपद्धतौ

सूर्य्येन्दुपर्जन्यसमीरणानां

यागः स्मृतो वृष्टिविकारकालः।

इति मत्स्यपुराणीयाद्भुतशान्तौ सूर्य्येन्दुपर्जन्यसमीरणानां पूजनमित्युक्तम्। ततः कलशस्थापनम्। वरुणस्येति मन्त्रेण। कलशश्च पञ्चरत्नपञ्चभङ्गसमन्वितः दध्यक्षतविभूषितः वस्त्रयुग्म-च्छन्नः सफलतण्डुलपूर्णशरावापिहितमुखः।

गङ्गाद्याः सरितः सर्व्वाः समुद्राश्च सरांसि च।

आयान्तु यजमानस्य दुरितक्षयकारकाः॥

इति तीर्थावाहनम्। होमारम्भः। हिरण्यगर्भ इत्यस्य प्रजा-पति ऋषिः। त्रिष्टुप्। हिरण्यम्।

हिरण्यगर्भः समवर्त्तताग्रे

भूतस्य जातः पतिरेक आसीत्।

सदाधारपृथिवीं द्यामुतेमां

कस्मै देवाय हविषा विधेम॥

ब्रह्माणं कृत्वा दक्षिणतो ब्रह्मासनमास्तीर्य्य तत्र ब्रह्मोपवेशनम्।

---

(१) B देवीपुराणेन एवान्यत्र ताम्रपात्रेच शरावेचेति वचनात्।

आचार्य्यः कारयेत्। आपोहिष्ठा इत्यस्य सिन्धुद्वीप। गायत्री आपो देवता। कुशेन सागरान् स्मृत्वा उत्तरे प्रणीताप्रणयनम्। दध्यङ्ङाथर्व्वण। गायत्री। इन्द्रः। कयानश्चित्र आभुवदूती सदावृधः सखा। कया शचिष्ठया वृता। अनेन नागान् स्मृत्वा परिस्तरणम्। शतक्रतुं ध्यात्वा यथैवत् पात्रासादनम्। पवित्रच्छेदनानि पवित्रे। प्रोक्षणीपात्रम्। आज्यस्थाली। चरुस्थाली। सम्मार्जन कुशाः। उपयमनकुशाः। तिस्रः समिधः। स्रुवः। आज्यम्। चरुतण्डुलाः। पूर्णपात्रम्। दक्षिणा। वरोवा। परमेष्ठी। यजुः। पवित्रे। पवित्रे स्थो वैष्णव्यौ इति पितॄन् स्मृत्वा पवित्रच्छेदनम्। स्रुचि प्रणीताजलं दत्वा। परमेष्ठी। यजुः। आपः। सवितुर्वः प्रसव उत्पुनाम्यच्छिद्रेण पवित्रेण सूर्य्यस्य रश्मिभिः। इति ब्रह्मविष्णुमहेश्वरान् स्मृत्वा प्रोक्षण्युत्पवनम्। सव्ये दत्वा दक्षिणेनोद्दिङ्गनम्। प्रणीतोदकेन प्रोक्षणम्। परमेष्ठी यजुः। पात्राणि। दैव्याय कर्म्मणे शुन्धध्वं देवयज्यायै यद्वोऽशुद्धाः पराजघ्नुरिदंवस्तच्छुन्धामि। इति वरुणं ध्यात्वा ताभिरद्भिरासादितपात्राणां प्रोक्षणम्। असञ्चरे प्रोक्षणीनिधानम्। परमेष्ठी। यजुः। शाखावत्सा। इषेत्वोर्ज्जत्वा वायवस्थ देवोवः सविता प्रार्पयतु श्रेष्ठतमायकर्म्मणे इत्याज्यस्थाल्यां वसून् स्मृत्वा आज्यनिर्वपणम्। सोदके चरुपात्रे चरुतण्डुलप्रक्षेपः। वैवस्वतं स्मृत्वा आज्याधिश्रयणम्। सचरौ ब्रह्माज्यमधिश्रयति। चरुकर्त्ता। अचरौ कर्त्तैवाज्यम्। परमेष्ठी। यजुः। रक्षः। अन्तरितं रक्षोऽन्तरिता अरातयः। देवस्त्वा

सविता श्रपयतु वर्षिष्ठेधिनाके। अनेन मन्त्रः स्मृत्वा द्वयोः पर्य्यग्नि-करणम्। '[1]अर्हस्तुते (?)। परमेष्ठी। अग्निर्वा। त्रिष्टुप्। इन्द्रः। त्रातारमिन्द्रमवितारमिन्द्रं हवे हवे सुहवं शूरमिन्द्रम्। ह्वयामि शक्रं पुरुहूतमिन्द्रं स्वस्तिनो मघवा धात्विन्द्रः। इति स्रुवप्रतपनम्। परमेष्ठी। यजुः। स्रुवः। अग्निशितासि सपत्न-क्षिद्वाजिनीन्त्वा वाजेध्यायै सम्मार्ज्मि। अदित्यै रास्नासि विष्णो-र्वेष्पो स्यूर्जेत्वादब्धेनत्वा चक्षुषावपश्यामि। अनेन स्रुवसम्मार्जनम्। अभ्युक्षणम्। परमेष्ठी। यजुः। रक्षः। प्रत्युष्टं रक्षः प्रत्युष्टा अरातयो निष्टप्तं रक्षो निष्टप्ता अरातय इत्यनेन पुनः प्रतपनम्। स्कन्दं स्मृत्वा आज्योद्वासनम्। परमेष्ठी। यजुः। आपः। सवितुर्वः प्रसव उत्पुनाम्यच्छिद्रेण पवित्रेण सूर्य्यस्य रश्मिभिरिति चन्द्रं स्मृत्वा आज्योत्पवनम्। सवितुर्वः प्रसव उत्पुनामीत्यादिना सूर्य्यं स्मृत्वा प्रोक्षण्युत्पवनम्। सर्व्वा दिशः स्मृत्वा आज्यावेक्षणम्। आज्ये स्रुवयोजनम्। अभिघार्य्य चरोरुद्वासनम्। आज्योद्-वासनानन्तरं वा चरोरुद्वासनम्। उपयमनकुशादानम्। समि-द्धमग्निमिति कण्डिकाद्वयस्य प्रजापतिः। गायत्री। अग्निः। समिद्धमग्निमिति कण्डिकाद्वयेन लक्ष्मीं स्मृत्वा समिदाधानम्। परमेष्ठी। यजुः। धूः। धूरसि धूर्व्व धूर्व्वन्तं योऽस्मान् धूर्व्वति तं धूर्व्वयं वयं धूर्व्वामः। देवानामसि सस्नितमं वह्नितमं पप्रितमं जुष्टतमं देवहूतमम्। अह्रुतमसि हविर्धानं दृंहस्वमाह्वार्मा ते यज्ञ

---

(1) P. अर्हवते (?)।

पतिर्व्यक्रसीत् । अनेन प्रोक्षणीशेषजलेन पर्य्युक्षणम् । इमां देवीं स्मृत्वा प्रणीतासु पवित्रस्थापनम् । ब्रह्मास्वयम्भूः । अनुष्टुप् । परमात्मा ।

तदेवाग्निस्तदादित्यस्तद्वायुस्तदु चन्द्रमाः ।
तदेव शुक्रं तद्ब्रह्म त आपः स प्रजापतिः ॥

इत्यग्निपूजनम् । ततः प्रजापतये स्वाहा । इन्द्राय स्वाहा । अग्नये स्वाहा । सोमाय स्वाहा । अन्तरिक्षाय स्वाहा । ॐ भूः स्वाहा । ॐ भुवः स्वाहा । ॐ स्वः स्वाहा । ततो मूलहोमः । मूलहोमसमाप्तौ प्रधानद्रव्येण स्विष्टकृत् । भूरादिप्राजापत्यान्ते ग्रहयज्ञप्रकरणे,—

ॐ पूर्णाहुतिञ्च मूर्द्धानं दिव इत्यभिघातयेत् ।

इति मत्स्यपुराणात् शान्तिकपौष्टिकेषु पूर्णाहुतिः । मूर्द्धानमित्यस्य परमेष्ठी । त्रिष्टुप् । अग्निर्वैश्वानरः । मूर्द्धानं दिवो अरतिं पृथिव्या वैश्वानरमृत आजातमग्निम् । कविं सम्राजमतिथिं जनानामासन्ना पात्रञ्जनयन्त देवाः ॥ स्वाहा वौषट् इति यजमानान्वारब्धे तिष्ठतो होमः ।

अत्र पृथगाज्यसंस्कारं कुर्व्वन्ति तत्र मूलं न पश्यामः । 'चतुर्गृहात् ग्रहणमिदाधानफलपुष्पाक्षतादिसंयोगश्च समाचारात् । आधानिकपूर्णाहुतितोऽतिदेशपक्षे प्रमाणसत्त्वे पृथगाज्यसंस्कारः ।

---

(१) चतुर्गृहीतग्रहणं समिदाधानफलपुष्पाक्षतादिसंयोगश्च समाचारात् । इत्येवं पाठ यथार्थस्सङ्गतः । सं

संस्रवप्राशनं मार्जनम्। तेन कलशेन यजमानस्य हेमस्रग्-विभूषितस्य ब्राह्मणचतुष्टयेन प्रागुदङ्मुखेनाभिषेकः।

सुरास्त्वामभिषिञ्चन्तु ब्रह्मविष्णुमहेश्वराः।
वासुदेवो जगन्नाथस्तथा सङ्कर्षणः प्रभुः॥
प्रद्युम्नश्चानिरुद्धश्च भवन्तु विजयाय ते।
आखण्डलोऽग्निर्भगवान् यमो वै नैर्ऋतस्तथा॥
वरुणः पवनश्चैव धनाध्यक्षस्तथा शिवः।
ब्रह्मणा सहितः शेषो दिक्पालाः पान्तु ते सदा॥
कीर्त्तिर्लक्ष्मीर्धृतिर्मेधा पुष्टिः श्रद्धा क्रिया मतिः।
बुद्धिर्लज्जा वपुः शान्तिस्तुष्टिः कान्तिश्च मातरः॥
एतास्त्वामभिषिञ्चन्तु धर्म्मपत्न्यः समागताः।
आदित्यश्चन्द्रमा भौमो बुधजीवसितार्कजाः॥
ग्रहास्त्वामभिषिञ्चन्तु राहुः केतुश्च तर्पिताः।
देवदानवगन्धर्व्वा यक्षराक्षसपन्नगाः॥
ऋषयो मुनयो गावो देवमातर एव च।
देवपत्न्यो ध्रुवो नागा दैत्याश्चाप्सरसाङ्गणाः॥
अस्त्राणि सर्व्वशास्त्राणि राजानो वाहनानि च।
औषधानि च रत्नानि कालस्यावयवाश्च ये॥
सरितः सागराः शैलास्तीर्थानि जलदा नदाः।
एतास्त्वामभिषिञ्चन्तु सर्व्वकामार्थसिद्धये॥

ततः सर्व्वौषधैः सर्व्वगन्धैस्ते यजमानं पृथगुजलेन स्नपयेयुः। ततः शुक्लाम्बरमाल्यगन्धधरस्य दक्षिणादानम्। पवित्रप्रति-

पत्तिः। प्रणीताविमोकः। देवताग्निब्रह्मविसर्जनम्। ब्राह्मण-
भोजनमच्छिद्रावधारणमिति।

इति शान्तिकपौष्टिकसामान्येतिकर्त्तव्यता।

---

## ऐहिकामुष्मिकसर्व्वकामेप्सूनां त्र्यम्बकमन्त्रजपः।

तत्र यजुर्विधाने त्र्यम्बकेणापमृत्युं जयति। मृत्युमेव वा।

वाशिष्ठयोगे,—

संसारदावदग्धानां योगिनामप्ययोगिनाम्।
[1]नान्यत्पश्यामि भैषज्यं मृत्योस्त्र्यम्बकादृते॥

वशिष्ठकल्पे,—

मृत्युभीतस्त्वशुद्धोऽपि सर्व्वावस्थासु सर्व्वदा।
सर्व्वापत्सु च सर्व्वत्र मृतसञ्जीवनीं जपेत्॥

तद्विधिश्च वशिष्ठकल्पे वशिष्ठ उवाच,—

अहमस्य ऋषिः प्रोक्तश्छन्दोऽनुष्टुबिहोच्यते।
देवता त्र्यम्बकोरुद्रः पञ्चाङ्गानि शृणुष्व मे॥

अग्नये हृदयाय नमः। त्र्यम्बकाय शिरसे स्वाहा। त्रिने-
त्राय शिखायै वषट्। वशिष्ठाय कवचाय हुम्। अनुष्टुप्छन्दसे
अस्त्राय फट्।

प्राच्यादिषु चतुर्दिक्षु दिग्बन्धं कारयेत् क्रमात्।

---

(1) P. तत्रपश्यामि ०।

दुर्गा विनायकश्चैव नन्दीशः क्षेत्रपालकः ।

एते दिग्बन्धमन्त्राः स्युरन्ततो मम उच्यते ॥

[१][ मन्त्रार्थस्तु ] द्यौरापः पृथिवीचेति लोकमातरोऽस्य सेवका इति त्र्यम्बकस्त्रिनेत्रश्च । लोकेषु शोभनो योगन्धः स सर्व्वोऽस्य अतः सुगन्धिः । अथवा दीयमानचन्दनपुष्पादिगन्धैः सुगन्धिः । सर्व्वेषां देवादीनामपि पुष्टेरैश्वर्य्यस्य वर्द्धकः । ईदृशं यजामहे वयम् । यथा उर्वारुकं कर्कटीफलं बन्धनात् स्वयं मुच्यते । एवं त्वत्प्रसादादहं मृत्योर्लोकभयहराम्मुक्षीय मोक्षं [२]लभे । माऽमृतात् । [३][ अमृतात्मा मुक्षीय । ] अमृतात्मना त्वया मम भेदो माऽस्तु । त्वमेवाहं स्यामित्यभेदप्रार्थनम् ।

एवं विदित्वा मन्त्रार्थं ऋषिच्छन्दोऽधिदैवतम् ।

जपहोमादि कर्त्तव्यं साक्षान्मृत्युं जयत्यतः ॥

एवं मन्त्रं त्र्यीसारं नाऽभक्त्या धारयेन्नरः ।

तस्मादाचार्य्यतो लब्ध्वा सम्यग्वेदव्रतो द्विजः ।

मृतसञ्जीवनीं विद्यां गोपयेच्च प्रयत्नतः ॥

तेन गुरुमुखाद् यत्नेन ब्रह्मचर्य्यादिना मन्त्रग्रहणम् ।

ततः पुरश्चरणम् ।

पर्व्वताग्रे नदीतीरे गोष्ठे देवालयेऽपि वा ।

अन्येषु पुण्यदेशेषु यत्र वा रमते मनः ॥

---

(१) P. Omits the portion bracketed.

(२) P. अभेत ।

(३) P. Omits the portion bracketed

ध्यात्वा त्र्यम्बकं देवं सततञ्च नमस्कृतम्।
अष्टोत्तरसहस्रं वा शतमष्टोत्तरं तु वा॥
यावता वा जपेनासौ पूतोऽहमिति मन्यते।
मन्त्रं प्रणवसंयुक्तं जपेत् तावत् समाहितः॥

अत्र च ध्यानस्यानुक्तेः वक्ष्यमाणध्यानविशेषाणां काम्यत्वात् तन्त्रान्तरोक्तध्यानं [1]ग्राह्यम्।

अच्छस्वच्छारविन्दस्थितिकभयकराङ्कस्थितं पूर्णकुम्भं
द्वाभ्यां वेदाक्षमाले निजकरकमलाभ्यां घटौ नित्यपूर्णौ।
द्वाभ्यां चैव स्रवन्तौ शिरसि शशिकलाबन्धुरैः प्लावयन्तौ
देहं देवो दधानः प्रदिशतु विशदाकल्पजालः श्रियं नः[2]॥

अत्र,—

गोमयेनोपलिप्तायां भूमौ दर्भान् विकीर्य्य च।
जपहोमादि कर्त्तव्यं साधान्मृत्युं जयार्थिना॥
प्राङ्मुखोदङ्मुखो वाऽपि दर्भेष्वासीत वाग्यतः।
ततः कायविशुद्ध्यर्थं प्राणायामान् षडाचरेत्॥

इति षट्प्राणायामाचरणञ्च यद्यपि पुरश्चरणाङ्गत्वेनोक्तं तथाप्यन्यत्रापि प्रवर्त्तते इत्येके।

आत्मार्थं जपहोमादि नित्यं कुर्य्यादतन्द्रितः।
परार्थमपि कुर्व्वीत ब्राह्मणो मन्त्रवित्तमः॥

---

(१) P. कार्य्यम्।

(२) शारदातिलकधृत हस्ताभ्यां कलशद्वयामृतेत्यादिमन्त्रकध्यानं द्रष्टव्यम्। २१ पटलः।

दातव्या दक्षिणा तत्र यथा तुष्टो द्विजोत्तमः ।
आत्मार्थं वा परार्थं वा नैव कुर्य्यादमन्त्रवित् ॥
यदि कुर्य्याज्जपादीनि मोहादज्ञानतोऽपि वा ।
तयोश्चारेण मन्त्रेण स्वयमेव विनश्यति ॥

तथा,—

आर्द्रायां शान्तिकर्म्माणि आयुष्यं वैष्णवे तथा ।
शान्तिकर्म्माभिचाराणामपमृत्युं जयं तथा ॥
त्रिषूत्तरासु पूर्व्वासु जन्मर्क्षेष्वपि च त्रिषु ।
सम्यक् कर्म्म च [1]मैत्रेषु काम्यान्यपि च कारयेत् ॥
आत्मनश्चानुकूलेषु शान्तिकर्म्माणि कारयेत् ।
परस्य प्रतिकूलेषु विद्वेषोच्चाटनादिकम् ॥
सर्व्वदा नियताहारो जपेन्मन्त्रं समाहितः ।
शान्तये सर्व्वरोगाणां तथैवानुद्रवाय च ॥

तथा,—

अथवाऽनेन मन्त्रेण पावमानीभिरेव वा ।
ज्वररोगग्रहादीनां [2]सर्व्वेषामपि शान्तये ॥
अथवा तर्पणं कुर्य्यान्मन्त्रपूर्व्वोक्तसंख्यया ।
नद्यां समुद्रगामिन्यां तड़ागेषु सरित्सु च ॥

तर्पणञ्च ऋष्यादिन्यासपूर्व्वकं जले त्र्यम्बकपूजापूर्व्वकम् ।

(१) P. मैत्रेष० ।
(२) P. सर्व्वेषामेव० ।

त्र्यम्बकं ध्यात्वा त्र्यम्बकमन्त्रान्ते तर्पयामि नम इति प्रयोगेण देवतामुखेऽमृतबुद्ध्या जलप्रक्षेपः ।

अथास्य होमविधिः ।

आदौ विनायकं पूज्य पुण्याहं वाचयेत् ततः ।
अथवा चतुरस्रे तु सर्व्वकर्म्माणि कारयेत् ॥

इति वचनात् चतुरस्रं सत्रिमेखलं कुण्डम् ।

औपासनाग्निमानीय तस्मिन् कुण्डे विनिक्षिपेत् ।
अथवा श्रोत्रियागाराम्मथित्वा वा समाहितः ॥
औपासनेन कुर्व्वीत विद्वेषोच्चाटनादिकम् ।
बहवो यदि होतारः शान्तिके पौष्टिके तथा ॥
लौकिकेऽग्नौ तदा होमो गृह्येऽग्नौ न कदाचन ।
कुण्डस्य पुरतो विद्वान् देवदेवं त्रियम्बकम् ॥
प्रात्माभिमुखमासीनं ध्यात्वा सम्यक् प्रपूजयेत् ।
अर्चयेल्लोकपालांश्च प्रागारभ्य प्रदक्षिणम् ।
तेषामनुचरांश्चैव कुण्डमध्ये हुताशनम् ॥

कुण्डपूर्व्वे वेद्यां त्र्यम्बकपूजनम् । कुण्डाष्टदिक्षु शक्रादि-पूजनम् । इन्द्रानुचरेभ्य इत्यादिनानुचरपूजनम् । अग्निस्वरूपं तत्रैव ।

सप्तहस्तश्चतुःशृङ्गः सप्तजिह्वो द्विशीर्षकः ।
त्रिपात्प्रसन्नवदनः सुखासनसमन्वितः ॥

स्वाहा दक्षे । वामे स्वधा । दक्षिणहस्तेषु शक्तिमन्नं स्रुवं स्रुचम् । वामे चामरं व्यजनं घृतपात्रम् । एवं ध्यात्वा

पूजनं होमश्च। कुण्डस्य पूर्व्वदिग्भागे कालीजिह्वा। आग्नेय्यां करालो। दक्षिणे लोहिता। नैर्ऋत्यां मनोजवा। पश्चिमे धूम्रवर्णा। वायव्यां स्फुलिङ्गिनी। सौम्ये विश्वरुचिः। काल्यां कराल्यां वा शान्तिकपौष्टिकम्। लोहितायां भूतप्रेतादिशान्तिः[1]। वृष्टिकामे धूम्रायां। स्फुलिङ्गिन्यामुच्चाटनम्। विश्वरुचि-जिह्वायां सर्व्वसाधनम्। ईशाने वसुधारेत्युपजिह्वा तत्र श्रीकाम-होमः। कुण्डस्य मध्यभागोऽग्नेरास्यं तत्र सर्व्वाणि कर्म्माणि। तत्रैव दिग्भेदेन जिह्वाभेदाः। अत्र च शान्तिकपौष्टिकसामान्य-शान्तकलशस्थापनम्। पूर्णाहुतिश्च मूर्द्धानमिति मन्त्रेण। अन्ते च सुरास्त्वामभिषिञ्चन्त्वित्यादिनाभिषेकोऽपि कार्य्यः।

तत्र कृत्वाज्यभागान्तं सर्व्वमुल्लेखनादिकम्।
स्वगृह्योक्तविधानेन ततो होमं समाचरेत्॥

इति वचनात् गृह्योक्तविधिप्रवृत्तिः। [2]तत्प्रवृत्त्या च देवी-पुराणोक्तवैदिकाग्निसंस्कारविधिप्रवृत्तिः। न चाज्यभागानन्तर-मितिवचनात् वैकल्पिकाग्निपक्षे च व्याहृत्यहेतुत्वान्न वैदि-काग्निप्रवेशः। लिङ्गमात्रस्यासाधकत्वात्। अनुवादत्वेनाज्य-भागयोरन्ते यो व्याहृत्यादिहोमः(?)। तदुपलक्षणत्वात्। आज्या-सादनं कृत्वेत्यत्र यथाज्यासादनपदम्। आलम्भोपलक्षणमेव [3]मन्त्रेति।

---

(१) मनोजवायां कार्य्यं कर्म्म नोक्तम्। सं
(२) P. तत्र प्रवृत्त्या च०।
(३) P. मन्त्रमिति।

ब्राह्मणान् भोजयेन्नित्यं वेदवेदाङ्गपारगान् ।

इति वचनात् । यावद्दिनानि होमस्तावद्दिनानि बहुब्राह्मण-भोजनम् ।

तथा,—

आरोग्यकामो [1]जुहुयादर्क्ककाष्ठैर्घृतप्लुतैः ।
पलाशसमिधैर्व्वापि सर्व्वरोगोपशान्तये ॥
सर्व्वरोगप्रशान्तिः स्याद् रोगाणां वाप्यनुद्भवः ।

अथ काम्यानि ।

श्रीकामोविल्ववृक्षस्य समिद्भिरथवा फलैः ।
पत्रैर्वा जुहुयान्मासं गोकामः पयसैव तु ॥
विद्याकामः क्षीरभोजी रुद्राक्षैराज्यसंप्लुतैः ।
अन्नादिकामो जुहुयादन्नमेव घृतप्लुतम् ।
पलाशसमिधैर्हुत्वा ब्रह्मवर्चसमाप्नुयात् ॥

वृष्टिकामः—आपोहिष्ठा । हिरण्यवर्णा । पावमानीभिर्देवं संस्थाप्य त्र्यम्बकेण षोड़शोपचारेण सम्पूज्य प्रणिपत्य पयोऽन्नवेत-सैरयुतं जुहुयात् पयसा वा । दशाहान्ते वृष्टिर्भवति । ब्राह्मण-भोजनम् । पुण्याहवाचनम् ।

आर्द्रवासाः पयोभक्षः क्षीरवृक्षसमुद्भवैः ।
समिद्भिर्जुहुयादग्नौ सद्योवृष्टिमवाप्नुयात् ॥
पुत्रकामस्तु जुहुयात् पायसं घृतसंप्लुतम् ।
चरुशेषं स्वयं भुक्त्वा पुत्रमाप्नोति मानवः ॥

---

(1) P. जुहुयाद्दिड़काष्ठै० ।

गोमयोपलिप्तगोचर्म्ममात्रभूभागे धान्यराशिं कृत्वा तत्र सितवस्त्रसितसूत्रचन्दनपल्लवपत्रवादि[1]युतजलपूर्णं विंशतिकलशं संस्थाप्य [2]प्रत्येकं तानभिमन्त्र्य ततस्तेन त्र्यम्बकेण वन्ध्यां स्त्रियमभिषिञ्चेत् । अचिरादायुष्मत्पुत्रलाभः ।

यद्वर्णं जुहुयात् पुष्पं तद्वर्णं वस्त्रमाप्नुयात् ।

धान्यहोमेन धान्यानि लाजैः कन्यामवाप्नुयात् ॥

अष्टोत्तरसहस्रमिति पायसहोमेन गुड़संयुतक्षीरहोमेन वा हविः शेषभोजनसहितेन देवताप्रत्यक्षा वरं ददाति ।

इच्छन् लोकं वशीकर्त्तुं नक्षत्रे रुद्रदैवते ।

घृतोदनेन जुहुयादष्टोत्तरसहस्रकम् ॥

शमीसमिद्भिरथवा घृताक्तैस्तिलसर्षपैः ।

अपामार्गसमिद्भिस्तु मधुत्रितयसंयुतैः ॥

हुत्वा तद्भस्म [3]संमृज्य अष्टोत्तरशतं जपेत् ।

भस्मनानेन संस्पृष्टाः सर्व्वे वश्या भवन्ति हि ॥

पलाशसमिधैर्हुत्वा सर्व्वान् कामानवाप्नुयात् ॥

परविद्वेषणं कर्त्तुं करवीरसमुद्भवैः ।

समिद्भिर्जुहुयान्मासं मिथो विद्वेषणं भवेत् ॥

शत्रोरुच्चाटनार्थन्तु नक्षत्रे रुद्रदैवते ।

करवीरसमिद्भिस्तु तैलेनाक्तैर्घृतेन वा ॥

---

(१) P. पूतजलपूर्णविंशति ० ।

(२) P. प्रत्येकमनभिमन्त्र्य ।

(३) A. संमृज्य ।

अष्टोत्तरसहस्रन्तु हुत्वैवोच्चाटनं भवेत्।
काकपक्षरहोमेन काकवद्भ्रमते रिपुः॥
उन्मत्तसमिधैर्होमादुन्मादो जायते रिपोः।
तत्सर्व्वं नैव कर्त्तव्यं ब्राह्मणेन विजानता।

वशिष्ठः,—

सर्व्वदेवपवित्राणि वक्ष्याम्यहमितः परम्।

अघमर्षणम्। देवव्रतम्। अस्मच्छाखायां यद्देवादेवहेलनमित्यृचः। आपोहिष्ठेति तृचम्। नमस्ते रुद्र इत्यध्यायः। हंसः शुचिषदित्यृक् विमलसंज्ञकः। शिवसङ्कल्पसंज्ञको यज्जाग्रत इति मन्त्रः। पावमानीसंज्ञकाः पुनन्तु मा इत्याद्या नवर्चः। पुरुषसूक्तसंज्ञकः सहस्रशीर्षेत्यध्यायः। अप्रतिरथसंज्ञक आशुः शिशानो इत्यनुवाकः। आरण्याख्यं ऋचं वाचं इत्यध्यायः। सुक्रियाख्यो विश्वानि देव सवितरित्यध्यायः। आदिरन्तश्च देवदानवाना(?)मिति। एषामेकैकस्येति वचनादेषामेकवारजपः सर्व्वपापक्षयार्थः। चत्वारि शृङ्गा इति ऋचं शतं परिवर्त्तयेत्। अगम्यागमनात् पूतो भवति।

[1]हुत्वा होमानिमान् सर्व्वान् त्रिः पठेदघमर्षणम्।
यथाश्वमेधावभृथस्तथा तन्मनुरब्रवीत्॥

मुञ्चन्तु मा शपथ्यादिति रहस्यो मन्त्रः सर्व्वपापप्रणाशनः।

यजुर्विधाने,—

(१) P. हुत्वा होमानि मातृर्णां त्रिः पठेदघमर्षणम्।

इदमापः । सुमित्रिया नः । [1]अप्राप (?) । द्रुपदादिव । पुनर्मन: । दधिक्राव्नः । पञ्चमन्त्राः पापनाशनाः । चतुःस्वस्ति । पयः पञ्च । षट् विष्णो । द्वादशदेवताः ।

अष्टौ शान्तिं प्रकुर्व्वीत पुनर्जन्म न विद्यते ।

चतुःस्वस्ति—स्वस्ति न इन्द्र इति मन्त्रः । पयः पञ्च—पयः पृथिव्यामित्यादिको मन्त्रः । षट् विष्णो—विष्णो रराटमसीति मन्त्रः । द्वादशदेवता—अग्निर्देवता इत्यादिको मन्त्रः । अष्टौ शान्तिः—द्यौः शान्तिरित्यादिको मन्त्रः ।

हिरण्यगर्भः । यः प्राणतो । ब्रह्मयज्ञानां । मही द्यौः । उपश्वासय । अग्ने नय । या ते धर्म्म । अग्नये स्वाहा । इत्यष्टौ जप्त्वा स्वरूपज्ञताया ब्रह्महत्याया मुच्यते । स्वरूपज्ञताच हत्या साक्षाद्वधरूपा ।

वाजे वाजे वत । विमुच्यध्वम् । एतच्चानाथ । आयन्तु नः । घृतेनाक्तम् । यद्वविष्यम् । परं मृत्योः । [2]इत्यष्ट जप्त्वा सर्व्वपापैः प्रमुच्यते ।

सुक्रियारण्यकजपो गायत्र्याश्च विशेषतः ।

सर्व्वपापविनाशाय रुद्रैकादशिनी तथा ॥

रुद्रैकादशिनी वक्ष्यते ।

अग्ने वागिति ज्वलनादि हंकारान्तं (?) जले स्थित्वा मन्त्रं जपेत् ।

---

(१) P. अवादयं (?) ।

(२) मन्त्रास्तु वाज इत्यन्ते । च

उपपातककोट्यस्तु भ्रूणहत्यार्बुदानि च।
ब्रह्महत्यादिकं पापं सर्व्वं नश्यति तज्जपात्॥

देव सवितरित्यध्यायं जप्त्वा सर्व्वैः क्रतुभिरिष्टं यथोक्तफल[1]माप्नुयात्। सहस्रशीर्षेत्यध्यायं जप्त्वा गुरुतल्पगो मुच्यते।

पौरुषं सूक्तमावृत्य मुच्यते सर्व्वपातकैः।
सुरापो ब्रह्महा चैव तथैव गुरुतल्पगः॥
पापेभ्यो विप्रमुच्यन्ते जप्त्वा [2]सूक्तन्तु पौरुषम्।

विष्णुधर्म्मोत्तरे,—

पौरुषेण तु सूक्तेन प्राणायामो महाफलः।

नरसिंहपुराणे,—

एतत् पठन् केवलमेव सूक्तं
दिने दिने भावितविष्णुबुद्धिः।
स सर्व्वदुःखानि विहाय वैष्णवं
पदं प्रयात्यच्युततुष्टिकृन्नरः॥

यजुर्विधाने,—तदेवेत्यध्यायं जप्त्वा नान्यतरः स हि योगी भवति। नान्योऽस्य तुल्यः [3]श्रेष्ठो भवतीत्यर्थः। अपेत इत्यध्यायं जप्त्वा अपमृत्युं जयति। सर्व्वशान्तिमृचं वाचमिति त्रिरावृत्तं जपेत्, मातृपितृभ्रातृदुहितृपुत्रैः कृतात् पापान्मुच्यते। देवस्यत्वेत्यध्यायं जप्त्वा धेनुशतदानफलं प्राप्नोति। स्वाहा प्राणेभ्य इत्यध्यायं जप्त्वा

(१) P. माप्नोति।
(२) P. [illegible]।
(३) A. ज्येष्ठो।

संहिताजपस्य फलं प्राप्नोति । ईशावास्यमध्यायं जप्त्वा कुरुक्षेत्रे सन्निहितफलं प्राप्नोति । तथा,—उद्वयमित्यादित्योपस्थानेन पाप-नाशनम् । विश्वानि देव सवितरित्यादित्योदयकाले उपतिष्ठेत विपापो भवति । उदकभक्ष्याहारो जपेन्मासमेकं सहस्रब्रह्म-हत्याया मुच्यते । असि यमो इति तिलाहुतीनां मधुसहितानां सहस्रं [1]जुहुयात् तदेवतं मासं तथैवार्चयेद् विपापो भवति । ब्रह्म-घ्नमपि लक्षहोमेन तारयेत् । अथ महापातकसंयुक्तः पञ्चगव्याहारः गोष्ठमध्येऽग्निमुपसमाधाय गोमयेनावलिप्ताङ्गः कुष्माण्डा इत्यृचं अयुतं जप्त्वाऽष्टसहस्रं जुहुयाद् विपापो भवति । अपाघमित्यपा-मार्गहोमः सर्व्वपापप्रणाशनः । दुःस्वप्ननाशनः । देवा यज्ञमतन्व-तेति ब्राह्मणानुवाकं जप्त्वा ब्रह्मलोकमवाप्नोति । उदुत्यमिति समावर्त्तेन आदित्योपस्थापनं पुरुषस्य दुष्कृतमपि हरति । सुरावन्तमिति चतुर्ऋचेन पौर्णमास्यां संवत्सरं [2]सोममुपतिष्ठेत ब्राह्मणाय गां दत्वा क्षिप्रं सोमयाजी भवति । पितृभ्यः स्वधायिभ्य इत्यनुवाकशेषेणोत्तरेण चानुवाकेन श्राद्धे जप्तेन [3]पितॄणामक्षया तृप्तिर्भवति ।

### रुद्रजपविधिः ।

यजुर्विधाने,—

---

(१) P. जुहुयादेव तं मासं ।

(२) P. सोममुपतिष्ठेद् ब्राह्मणायं दत्वा भक्षीत क्षिप्रं ० ।

(३) P. पितॄणामक्षया ० ।

रुद्रजापी शुचिः पुण्यः पवित्रः पंक्तिपावनः ।
कुलं तारयते भक्त्या दश पूर्व्वान् दशावरान् ॥
एकतः सर्व्वशास्त्राणि रुद्रजापी तथैकतः ।
रुद्रजापिहुतं दत्तं तदानन्त्याय कल्पते ॥
एकादशगुणान् वापि रुद्रानावर्त्त्य धर्म्मवित् ।
महापातकयुक्तोऽपि मुच्यते नात्र संशयः ॥

कालिकापुराणे गायत्रीविधानानन्तरम्,—

यः पुनः सततं भक्त्या अभ्यर्च्य शशिशेखरम् ।
जपेत् ध्यायेत् सदा रुद्रं सोऽपि याति परं पदम् ॥
अथेहते फलं किञ्चिदैहिकं पुष्कलं यदा ।
तदा तानेव [1]विप्रेन्द्र जपेद् वै विधिपूर्व्वकम् ॥

तथा,—

रुद्रेभ्यश्च परं नास्ति जपे ध्याने परन्तप ।
जपो दानञ्च तीर्थानि तस्मात् तानि च योऽभ्यसेत् ॥
लब्ध्वा जन्म पुरः प्राप्य रुद्राद् वै ब्राह्मणोत्तमः ।
भारते कर्म्मभूमौ च मनसा किं स तप्यति ॥
बहवस्तन्मया जाता जप्त्वा रुद्रान् पुनः पुनः ।
तेजस्विनो महावीर्य्या रुद्रा रुद्रपरायणाः ॥

तथा,—

लिङ्गार्चनं रुद्रजपो व्रतं शिवदिनत्रये ।
वाराणस्याञ्च मरणं मुक्तिरेषा चतुर्विधा ॥

---

(१) A. पुत्रेन्द्र० ।

शिवदिनत्रयम्,—

एकादश्यष्टमीचैव चतुर्द्दशी शिवप्रिया।
तासामाद्यासूपवसेद् दिवा नाद्यात् तथान्ययोः॥

रुद्रजपश्च त्रिधा एको यजुर्विधानरीत्या द्वितीयः कालिकापुराण-रीत्या तृतीयश्च बौधायनरीत्या। तत्र यजुर्विधानोक्तप्रकारे तदुक्तशरीरशुद्धिपुरश्चरणादिकं कृत्वा जपारम्भः।

---

## अथ ऋष्यादिन्यासः।

यजुर्विधाने,—अघोर ऋषिः रुद्रो देवता गायत्र्यादीनि छन्दांसीत्युक्तम्। अनुक्रमण्यान्तु परमेष्ठी ऋषिः देवा वा प्रजा-पतिर्वा मानोदये कुत्सः[1] (?)। आद्यानुवाकस्य प्रथमा गायत्री तिस्रोऽनुष्टुभः तिस्रः पंक्तयः सप्तानुष्टुभः द्वे जगत्यौ मध्ये सर्व्वाणि यजूंषि। नमो हिरण्य इत्यादयस्तिस्र उभयतो नमस्काराः[2]। अन्त्यानुवाके आद्योपरिष्टाद् बृहती द्वितीया जगती द्वे त्रिष्टुभौ द्वे अनुष्टुभौ दशानुष्टुभः। अयो यजूंषि आद्ये अनुवाके। एक-रुद्रो देवता। अन्त्यानुवाके मन्त्रस्वेकरुद्रो देवता। शेषेषु बहवो रुद्रा देवता। जपादौ विनियोगः। शिवसङ्कल्पो हृदयम्। पुरुषसूक्तं शिरः। उत्तरनारायणं शिखा। अप्रतिरथं कवचम्।

(१) P. Adds here अन्त्यानुवाके अगस्त्याकुत्सः।
(२) P. Adds here अन्येऽन्यतरतो नमस्काराः।

शतरुद्रीयमस्त्रम्। वयं सोमेत्यनुवाकश्चाव शिवसङ्कल्पश्चात्र माध्यन्दिनोक्तं यज्ञाग्रत इत्यादि षड् ऋचम्। उत्तरनारायणं अद्‌भ्यः सम्भृत इत्यादि षड्‌ऋचम्। आशुः शिशानो इत्याद्यप्रतिरथं सप्तदश कण्डिकाः। शतरुद्रीयं रुद्राध्यायः समस्तः वयं सोमेत्यनुवाकसहितः अस्त्रम्।

तथा,—

या ते रुद्रेति शिखायाम्। अस्मिन् महत्यर्णवे इति शिरसि। असंख्याता इति ललाटे। त्र्यम्बकमिति नेत्रयोः। नमःस्रुत्यायेति कर्णयोः। मानस्तोके इति नासिकायाम्। अवतत्येति मुखे। नीलग्रीवा इति कण्ठे। नमस्त आयुधायेति बाह्वोः। नमो वः किरिकेभ्यो इति हृदये। हिरण्यगर्भ इति नाभ्याम्। ये भूतेषु कट्याम्। नमो वृक्षेभ्यो इति पृष्ठे। इमा रुद्राय इति गुह्यस्थाने। मा नो महान्तमित्युर्व्वोः। एष ते रुद्रेति जानुनोः। ये यथा (?) इति पादयोः। अध्यवोचदिति कवचे। नमो बिल्मिन इत्युपकवचे। कवचपार्श्व इत्यर्थः। नमोऽस्तु नीलग्रीवायेति तृतीयनेत्रे। प्रमुञ्च धन्वन इत्यस्त्रम्। एतावन्तमिति दिग्‌बन्धः। मा नो महान्तमित्यावाहनम्। रुद्र इहागच्छेति वदेत्। मा नस्तोकइत्यर्चनम्। आवाह्य पूजादिना। देहे रुद्राय नम इति पूजा। चत्वारि शृङ्गेति पुरश्चरणम्। अस्य मन्त्रस्य यथाशक्ति जप इत्यर्थः। एष ते इति मुद्रा। शैवमुद्रां दर्शयेत्। इति प्रथमोन्यासः। ॐ नमो भगवते रुद्रायेति शरीरे न्यासः। समस्तस्यास्य न्यासा-

नमरं व्यस्तस्य। यथा—ॐकारस्य मूर्द्ध्नि। नकारं नासिकयोः। मोकारं ललाटे। भकारं मुखमध्ये। गकारं कण्ठे। वकारं हृदि। तेकारं दक्षहस्ते। रुकारं वामहस्ते। द्राकारं नाभौ। यकारं पादयोः। इति द्वितीयोन्यासः। बौधायनोक्तरीत्या तृतीयो-न्यासः। सद्योजातमिति पादयोः। वामदेवाय नम इत्यूरुमध्ये। अघोराय इति हृदये। तत्पुरुषाय इति मुखे। ईशानः 'सर्व्व-देवानामितिमन्त्रान्ते हंस हंस इत्युक्त्वा शिरसि। इति तृतीयो न्यास इत्युक्तः।

त्रातारमिन्द्रम्। त्वन्नो अग्ने। सुचावुपन्याम्(?)। असुन्वन्तम्। तत्त्वायामि। आनोनियुद्भिः। वयंसोम। तमीशानम्। अस्मे रुद्राः। स्योनापृथिवी। इत्येतैः प्रतिदिक्षु सम्पुटम्। अस्मे रुद्रा इत्युपरि। स्योना पृथिवीत्यधः। बौधायने दिग्बन्धनानन्तरं चतुर्थो न्यास उक्तः। मनोज्योतिर्जुषतामाज्यं। विच्छिन्नं यज्ञं समिमं दधातु। या इष्टा उषसो या अनिष्टाश्च ताः सन्दधामि हविषाघृतेन इति गुह्ये। अबोध्यग्निः समिधा जनानां प्रतिधेनु-मिवायतीमुषासम्। यह्वा इव प्र वयामुज्जिहाना प्र भानवः सिस्रते नाकमच्छ इत्युदरे। मूर्द्धानं दिवो अरतिं पृथिव्या वैश्वानर मृत आ जातमग्निम्। कविं सम्राजमतिथिं जनानामासन्ना पात्रं जनयन्त देवाः। इति हृदये। मर्म्माणि ते वर्म्मणा छाद-यामि सोमस्त्वा राजामृतेनानु वस्तां। उरोर्वरीयो वरुणस्ते

१। P. सर्व्वविद्यानां०।

शृणोतु जयन्तं त्वानु देवा मदन्तु। इति मुखे। जातवेदा यदि वा पावकोऽसि। वैश्वानरो यदि वा वैद्युतोऽसि। शं प्रजाभ्यो यजमानाय लोकम्। ऊर्जं पुष्टिं ददद्भ्यावहृत्स्व। इति शिरसि।

इति चतुर्थो न्यासः।

शिवसंकल्पादिन्यासेन सह पञ्चन्यासाः। [1]पञ्चाङ्गानां रुद्राणां न्यासपूर्व्वकमित्यनेनोक्ताः। अथात्मनो रुद्ररूपत्वेन ध्यानम्। त्रिनेत्रं चतुर्भुजं सर्व्वाभरणभूषितं नीलग्रीवं शशिशेखरं स्फटिकाभं [2]नागयज्ञोपवीतिनं व्याघ्रचर्म्मोत्तरीयं कमण्डल्वक्षसूत्राभयवरत्रिशूलहस्तं कपिलजटं अमृतप्लुतं दिग्देवतासमावृतं सुरासुरैर्नमस्कृतम्।

नित्यञ्च शाश्वतं [3]शुद्धं ध्रुवमक्षरमव्ययम्।

अव्यक्तं विश्वरूपिणमिति ध्यात्वा पूजारम्भः।

सुगुप्ते पुण्यदेशे गोचर्म्ममात्रलिप्ते स्थण्डिले पञ्चवर्णेन पद्मं कृत्वा तत्र लिङ्गं स्थापयित्वा पूजोपकरणं स्थापयित्वा अर्घ्यसंस्कारादिकं कृत्वा नमः शम्भव इति मन्त्रेण प्रोक्षणं सर्व्वद्रव्याणाम्। ततः स्वललाटे ज्योतीरूपं रुद्रं ध्यात्वा मा नो महान्तमिति मन्त्रं जप्त्वा प्लुतं प्रणवमुच्चार्य्य ॐ रुद्र इहागच्छ इहतिष्ठेति लिङ्गे तस्यावाहनम्। मा नस्तोक इति मन्त्रेण नमः शम्भव इति

(१) P. पञ्चाङ्गरुद्राणाम्।

(२) P नागयज्ञोपवीतं।

(३) P विशुद्धम्।

मन्त्रेण द्वाभ्यां वा पाद्यार्घ्याचमनीयमधुपर्कस्नानवस्त्रयज्ञो-
पवीतालङ्कारगन्धपुष्पधूपदीपनैवेद्यैर्यथालाभं पूजनम्। ॐ नमो
भगवते रुद्रायेति नमस्कारः। हिरण्यगर्भः। यः प्राणतो। ब्रह्म
यज्ञानां। मही द्यौः। उपह्वासय। अग्ने नय। या ते अग्ने।
यज्ञीयातन्वा (?)। यथा वा स्वाहाग्नये। इत्यष्टमन्त्रैः प्रणामः।
एवं पूजापूर्व्वकं जपहोमादयः कर्त्तव्याः। अन्ते चाष्टाङ्गैः प्रणम्य
विकिरेदिति विसर्जनम्।

एकैकस्यैकादशधा रुद्रानावर्त्य धर्म्मवित्।
महापातकयुक्तोऽपि मुच्यते सर्व्वपातकैः॥

एकैकस्यैकादशधेति चमकयोगं विनापीत्यर्थः। यद्वा पञ्चाङ्गा-
वृत्तिं विना केवलस्येत्यर्थः। तथातुरार्त्तः सन्नज्जपेत् सुस्थो भवति।
विनायकोपसृष्टकाकवन्ध्यापुत्रहीनमृतवत्सानां दोषशान्तयेऽभि-
षेकः। शुभदिने सहिरण्यवस्त्रसर्व्वौषधिफलमूलपञ्चपल्लवो-
पेतगन्धतोयपूरितकलशैकादशस्थापनम्। एकस्य कलशस्य
रुद्रैकादशवारजपेनाभिमन्त्रणम्। तेनोपसृष्टस्याभिषेकः। एवं
प्रतिदिनं रुद्रैकादशवारजपकलशेन तस्यैवैकादशदिनपर्य्यन्त-
मभिषेकः। एवमेकादशदिनैरेकैककलशाभिषेकेण एकादश-
कलशाभिषेकः। तत्तद्दोषप्रशान्तये रुद्राध्यायं मानस्तोकीयं वा।

कालिकापुराणोक्तविधिः।

आदौ तच्छ्राचरणम्। [1][ ततः पराकः। ] [1]तदसम्भवे

(1) P. Omits the portion bracketed.

तत्प्रत्याम्नातधेनुदानम् । गायत्रीजपो वा । शुभदिने महादेवं ध्यात्वा पूजनम् । सप्तदिनपर्य्यन्तमावश्यकं कृत्वान्तरालकाले 'रुद्र-जपकरणम् । प्रतिदिनं पयोभक्षो वा हविष्यभोजी वा अष्टमदिने घृतमात्रप्राशनम् । नवमदिने भास्कराभिमुखस्य पुनारुद्रजपो बहु-कृत्वः । तदपरदिने घृताक्तविल्वपत्रैः समस्तेन रुद्रेण प्रतिमन्त्रं वा यथाशक्तिहोमः । एवं रुद्रस्य पुरश्चरणं कृत्वा प्रयोगः । सकृद्रुद्र-जपेन ससागरपृथ्वीदानफलप्राप्तिः[2] । श्रीकामस्य विल्ववृक्षं स्पृष्टा जपे सुवर्णलाभः । मध्वाक्तवेतससमिद्धोमो महाधनलाभाय । वशीकरणकामस्य नाभिमात्रजले स्थित्वा रुद्रजपः । यश्चादित्या-भिमुखो रुद्रमभ्यर्च्य रुद्रं बहु जपेत् तस्य रुद्रः स्वयं वरद आयाति । रुद्रकालं ध्यात्वा सप्तदिनं रुद्रं जपेत् शत्रुक्षयः । भूतप्रेतपिशाचराजचौरव्याघ्रादयो रुद्रं जपन्तं दृष्ट्वा पलायन्ते ।

## बौधायनोक्तानुसारेण रुद्राभिषेकविधिः ।

तस्य फलमाह बौधायनः—पापक्षयार्थी व्याधिविमोचनार्थी जीवनार्थी श्रीकामः पुष्टिकामो मोक्षार्थी च कुर्य्यात् । तीर्थे स्नातः शुचिः शुक्लवासाः दक्षिणाप्रत्यग्देशे तन्मुखः स्थित्वा देवाभिमुखः पूर्व्वोक्तपञ्चन्यासानन्तरं षडन्यासः । प्रजनने ब्रह्मा तिष्ठतु पादयोर्विष्णुस्तिष्ठतु हस्तयोर्हरस्तिष्ठतु बाह्वोरिन्द्र-स्तिष्ठतु जठरेऽग्निस्तिष्ठतु हृदये शिवस्तिष्ठतु कण्ठे शर्व्वस्तिष्ठतु

(१) P. रुद्रप्रकरणम् ।

(२) P. Adds एवं सर्व्वयज्ञसर्व्वतीर्थफलप्राप्तिः ।

वक्त्रे सरस्वती तिष्ठतु नासिकयोर्वायुस्तिष्ठतु नयनयोः सूर्य्याचन्द्रमसौ तिष्ठेतां कर्णयोरश्विनौ तिष्ठेतां ललाटे रुद्रास्तिष्ठन्तु मूर्द्धनि आदित्यास्तिष्ठन्तु शिरसि महादेवस्तिष्ठतु पुरतः शूली तिष्ठतु पृष्ठे पिनाकी तिष्ठतु पार्श्वयोः शिवशङ्करौ तिष्ठेतां सर्व्वतो वायुस्तिष्ठतु ततो वहिः सर्व्वतोज्वालामालापरिवृतोऽग्निस्तिष्ठतु सर्व्वाङ्गेषु सर्व्वदेवता यथास्थानं तिष्ठन्तु। ततः अग्निर्मेवाचि श्रितः वाक् हृदये हृदयं मयि अहममृते अमृतं ब्रह्मणि। इति वाचं स्पृशेत्। वायुर्मे प्राणे श्रितः प्राणो हृदये हृदयं मयि अहममृते अमृतं ब्रह्मणीति [1]नासां स्पृशेत्। सूर्य्यो मे चक्षुषि श्रितः चक्षुर्हृदये हृदयं मयि अहममृतं अमृतं ब्रह्मणीति चक्षुस्पर्शनम्। चन्द्रमा मे मनसि श्रितः मनो हृदये हृदयं मयि अहममृते अमृतं ब्रह्मणीति वर्त्तसि। दिशो मे श्रोत्रे श्रिताः श्रोत्रं हृदये हृदयं मयि अहममृते अमृतं ब्रह्मणीति श्रोत्रे। आपो मे रेतसि श्रिताः रेतो हृदये हृदयं मयि अहममृते अमृतं ब्रह्मणीति गुह्ये। पृथिवी मे शरीरे श्रिता शरीरं हृदये हृदयं मयि अहममृते अमृतं ब्रह्मणीति सर्व्वशरीरे। ओषधिवनस्पतयो मे लोमसु श्रिताः लोमानि हृदये हृदयं मयि अहममृते अमृतं ब्रह्मणीति रोमकूपेषु। इन्द्रो मे बले श्रितः बलं हृदये हृदयं मयि अहममृते अमृतं ब्रह्मणीति बाह्वोः। पर्जन्यो मे मूर्द्ध्नि श्रितः मूर्द्धा हृदये हृदयं मयि अहममृतं अमृतं

---

(१) P. नासायां।

ब्रह्मणीति मस्तके। ईशानो मे मन्यौ श्रितः मन्युर्हृदये हृदयं मयि अहममृते अमृतं ब्रह्मणीति मन्युस्थाने हृदये। आत्मा मे आत्मनि श्रितः आत्मा हृदये हृदयं मयि अहममृते अमृतं ब्रह्म-णीति वक्षसि। पुनर्मं आत्मा पुनरायुरागात्। पुनः प्राणः पुनराकूतमागात्। वैश्वानरो रश्मिभिर्वावृधानः। अन्तस्तिष्ठत्व-मृतस्य गोपाः। इति सर्व्वशरीरे। ततः स्वदेहं रुद्ररूपेण ध्यात्वा स्वदेहपूजनम्। तत्रावाहनमन्त्रः—

आराधितो मनुष्यैस्त्वं सिद्धैर्देवासुरादिभिः।
आराधयामि भक्त्या त्वं मां गृहाण महेश्वर॥

त्र्यम्बकेण गन्धपुष्पाक्षतधूपदीपदानम्। मनसा नैवेद्यम-पीति केचित्। एवं देहपूजानन्तरं वह्निलिङ्गादौ पूजा।

आ त्वा वहन्तु हरयः सुचेतसः
श्वेतैरश्वैः सहकेतुमद्भिः।
वाताजवै 'र्बलिभिर्मनोजवै-
रायाहि शीघ्रं मम हव्याय शर्व्व॥

इति मन्त्रान्ते सद्योजातं प्रपद्यामि रुद्र इहागच्छ इह तिष्ठे-त्यावाहनम्। सद्योजाताय वै नमः रुद्रायासनं ददामीत्या-सनम्। भवेभवे नातिभवे भजस्व माम्। रुद्राय पाद्यं ददामीति पाद्यदानम्। भवोद्भवाय नमः अव्लिङ्गाभिरापो-हिष्ठेत्यादिभिश्च अर्घ्यः। अद्भिस्तर्पयति। भवं देवं तर्पयामि।

---

(१) P. बलवद्भि॰।

शर्व्वं देवं तर्पयामि। रुद्रं देवं तर्पयामि। ईशानं देवं तर्पयामि। पशुपतिं देवं तर्पयामि। भीमं देवं तर्पयामि। तर्पयित्वा ज्येष्ठाय नम इत्याचमनं ददाति। श्रेष्ठाय नम इति गन्धम्। कलविकरणाय नम इति पुष्पम्। सर्व्वभूतदमनाय नम इति धूपम्। मनोन्मनाय नम इति दीपम्। भवोद्भवाय नम इति फलनैवेद्यम्। अथाष्टमन्त्रैरष्टपुष्पाञ्जलिं ददाति। भवाय देवाय नमः। शर्व्वाय देवाय नमः। पशुपतये देवाय नमः। रुद्राय देवाय नमः। उग्राय देवाय नमः। भीमाय देवाय नमः। महादेवाय देवाय नमः। अथास्याघोरतनुः। अघोरेभ्य इति उपतिष्ठते। अस्य रुद्रस्य अघोरात्मकं शरीरं अघोरेभ्य इत्यनेन मन्त्रत्रयेण उपतिष्ठते तद्यथा अघोरेभ्योऽथ घोरेभ्यो घोरघोर-तरेभ्यः सर्व्वतः सर्व्वदेवेभ्यो नमोऽस्तु रुद्ररूपेभ्यः। तत्पुरुषाय विद्महे महादेवाय धीमहि तन्नो रुद्रः प्रचोदयात्। ईशानः सर्व्वविद्यानामीश्वरः सर्व्वभूतानां ब्रह्माधिपतिर्ब्रह्मणोऽधिपति-र्ब्रह्मशिवोमेऽस्तु सदाशिव ॐ।

अथोपस्थानानन्तरं अथैतस्य मूर्द्ध्नि हिरण्येन कलशेन [1]सतत-धारामभिषिञ्चेत् मधुना पयसा सर्पिषेक्षुरसेन नारिकेलोदकेन वाऽम्लरसेन वा तदभावे उदकेन वा नमस्ते रुद्रमन्यव इत्येका-दशानुवाकानामन्ते चमकानुवाकानामेकैकं जपेत्। सर्व्वेषां पारे पुनराराधयेदुक्तमाराधनेन तदेतद्विधानं प्रोक्तम्। अनुवा-

(१) P. सततं धारा०।

कानां सर्व्वेषामन्ते पुनरुत्तमाराधनेन पूर्व्वरीत्या पूजनम्। चमकानुवाकानामेकैकयोगेन एकादशावृत्तिर्वा। यद्यपि काण्वानां नवैव चमकानुवाकास्तथापि चरमानुवाकस्यावृत्त्या एकादशसंख्यां सम्पाद्य प्रतिरुद्रावृत्ति चमकानुवाकयोगं कृत्वैकादशधावृत्तिः कार्य्या। सर्व्वो वै। रुद्राय। नमोऽस्तु। नमो हिरण्यबाहवे। सद्योजातमिति पञ्चानुवाकानन्यांश्च रुद्रमन्त्रान्। यथाशक्तीत्येके। व्याधिविमोचनार्थं [1]विनियोगः। अश्विभ्यामित्यनुवाकेन तेनोदकेन पादान् सम्मृज्यात्। रोगिणमित्यर्थः। आचार्य्याय दक्षिणां ददाति दश गाः सवत्साः सुवर्णभूषिताः वृषभैकादशाः। तदभावे एकां गां दद्यादित्याह भगवान् बौधायनः।

अत्र बौधायनः,—

षडङ्गैकादशा रुद्राः चमकानुवाकयोगतः।
रुद्रस्यैकादशावृत्त्या रुद्रैकादशिनो मता॥
एकादशभिरेताभि र्महारुद्रश्च कथ्यते।
एकादशमहारुद्रैरतिरुद्र उदाहृतः॥

अत्र रुद्रपदस्य काण्वतैत्तिरीयसाधारणचमकाध्यायवाचित्वाच्चमकस्यैकैकानुवाकयोगेन रुद्रस्यैकादशधावृत्तिरितिविहिते यथासङ्ख्यं क्रमेण प्रथमाद्वितीयाद्यावृत्तौ प्रथमाद्वितीयादि

(1) P. विशेषः।

चमकानुवाकयोगकल्पनेन चरमावृत्तिद्वये [1]काण्वानां चमकानुवाकाभावेऽपि नवमानुवाकस्यैवावृत्त्या सम्बन्धकल्पना। न च तैत्तिरीयाणां चमकस्यैकादशानुवाकसम्भवेन तमादाय विध्युपपत्तौ नावृत्तिकल्पनया [2]काण्वविषयत्वं कल्प्यमिति वाच्यम्। न चैवं प्रतिशिष्यत इति शाखान्तराधिकरणेन च यत्काठकेऽग्निहोत्राङ्गं [3]तत्काठकीयमग्निहोत्रं प्रतिशिष्यत इति तैत्तिरीयस्य तदङ्गमेवेति व्याख्यानात्तेनैव न्यायेन रुद्रग्रन्थस्य काण्वरुद्रसाधारण्येन तदेकादशावृत्तौ चमकानुवाकयोगकल्पनादशायां पश्चात्प्रतीतगुणभूतचमकानुवाकेष्वावृत्तिकल्पनायाः प्रामाणिकत्वात्। अन्यथा प्रथमप्रवृत्तरुद्रपदे तैत्तिरीयरुद्रपदत्वे लक्षणा स्यात्। प्रधानत्वाच्च तत्र लक्षणा न युक्ता। यथा त्रयो वेदा अजायन्त [4]इत्युपक्रम उच्चै ऋचा क्रियते इत्यादिश्रवणे वेदपदस्य उपक्रमस्थत्वेनासञ्जातविरोधित्वान्न लाक्षणिकत्वमिति तदनुरोधेन ऋगादिपदमेव वेदलक्षणापरमित्युक्तम्। किञ्च यजुर्विधानेऽप्यथातः पश्चाङ्गरुद्राणां न्यासपूर्व्वकं जपहोमार्चनविधिं व्याख्यास्याम इत्युपक्रम्य न्यासकथनात् न्यासत्रयस्य च

(१) P. काण्वानां चमकानुवाकानां भावेऽपि ०।

(२) P. काण्यविषयत्वं।

(३) P. तत्काठकीय ०।

(४) P. इत्युपक्रम्य उच्चैरुपक्रियत इत्यादि ०। स्थत्वेनाकृज्ञातविरोधित्वाच्च०

कथनात् पञ्चाङ्गरुद्रपदस्य पञ्चसंख्यका येऽङ्गन्यासास्तत्परत्व-प्रतीत्या न्यासद्वयं बौधायनोक्तं गृह्यते। एवम्—

एकादशगुणान् वापि रुद्रानावृत्य धर्म्मवित्।

इत्याद्येकादशावृत्तिविधौ बौधायनोक्तचमकानुवाकयोग-कल्पने बाधकाभावात् भवत्येव काण्वानामपि चमकानुवाक-योगेन रुद्ररुद्रैकादशिनीमहारुद्रातिरुद्रप्रयोगः।

अत्रच जपहोमार्चनविधिं व्याख्यास्याम इति यजुर्विधाने होमप्रतिज्ञानात् तिलाज्यसमिधो जुहुयादिति द्रव्यमात्रनिर्द्देशे-ऽपि होमप्रकारानिर्द्देशात् रुद्राध्यायेन समस्तेन होमः। अथवा प्रतिकण्डिकं कण्डिकापरिच्छेदस्य स्मार्त्तविनियोगपरत्वात्। तेन महारुद्रादौ दशांशेन प्रतिकण्डिकं होमः कर्त्तव्यः। एवं चमकानुवाकस्यापि प्रतिकण्डिकमिति। पक्षान्तराणां महार्णवे प्रमाणसत्त्वेऽस्तु नाम कल्पना।

श्रीकामस्य जपाः।

ऋग्विधाने,—

यः शुचिः प्रयतो भूत्वा जुहुयादाज्यमन्वहम्।
श्रियः पञ्चदशर्चञ्च श्रीकामः सततं जपेत्॥
अश्वदायि गोदायि धनदायि महाधने।
धनं मे जुषतां देवि सर्व्वकामार्थसिद्धये॥

हिरण्यवर्णमित्यादि पञ्चदशर्चस्य श्रीसूक्तस्य आनन्दचिक्लीत-कर्दमेन्दिरासुता ऋषयः श्रीर्देवता आद्या स्तिस्रोऽनुष्टुभः

अन्त्या प्रस्तारपंक्तिः द्वे त्रिष्टुभौ सप्त आद्या अनुष्टुभः अन्त्या प्रस्तार पंक्तिः जपे विनियोगः। हिरण्यवर्णमित्यादि श्रीसूक्तं पञ्चदशर्चम्। श्रीमन्त्रोपासना पञ्चरात्रे,—

वान्तं वह्निसमारूढं वामनेत्रेन्दुसंयुतम्।
बीजमेतत् श्रियः प्रोक्तं चिन्तारत्नमिवापरम्॥
ऋषिर्भृगुर्निवृत्छन्दो देवता श्रीः समीरिता।

मं बीजं ऋं शक्तिः।

षड्दीर्घयुक्तबीजेन कुर्य्यादङ्गानि षट्क्रमात्॥
कान्त्या काञ्चनसन्निभां हिमगिरिप्रख्यैश्चतुर्भिर्गजै-
र्हस्तोत्क्षिप्तहिरण्मयामृतघटैरासिच्यमानां श्रियम्।
बिभ्राणां वरमब्जयुग्ममभयं हस्तैः किरीटोज्ज्वलां
क्षौमाबद्धनितम्बबिम्बललितां वन्देऽरविन्दस्थिताम्॥
भानुलक्षं जपेन्मन्त्री दीक्षितो विजितेन्द्रियः।
तद्दशांशं प्रजुहुयात् कमलैर्मधुरोक्षितैः॥
जपान्ते जुहुयान्मन्त्री तिलैर्वा मधुराप्लुतैः।
विभूतिरुन्नतिः कान्तिर्दृष्टिः कीर्त्तिश्च सन्नतिः।
व्युष्टिरुत्कृष्टि ऋद्धिश्च रमाया नव शक्तयः॥
मूलेनैवासनं दद्यात् केशरेष्वङ्गकानि तु।
वासुदेवः सङ्कर्षणः प्रद्युम्नश्चानिरुद्धकः॥

इति दिग्दलेषु।

दमनकः सलिलश्चैव गुग्गुलश्च कुरुण्टकः।

इति गजान् विदिग्दलेषु। देव्या दक्षिणे ब्रह्मदयितया

शङ्खनिधिः । वामतः पद्मनिधिः स्वदयितासहितः । दलाग्रेषु बलाक्याद्याः । बलाकी । विमला । कमला । मालिका । विभीषिका । पालिका । शङ्करी । वसुपालिका ।

लोकपालान् यजेदन्ते वज्राद्यस्त्राणि तद्बहिः ।
इत्थं यो भजते देवीं श्रियमाप्नोत्यनिन्दिताम् ॥
वक्षःप्रमाणे सलिले स्थित्वा मन्त्रमिमं जपेत् ।
त्रिलक्षं संयतो मन्त्री देवीं ध्यात्वाकमण्डले ॥
स भवेदल्पकालेन रमाया भवनं स्थिरम् ।
वैष्णवेऽहनि विल्वस्य मूलमासाद्य मन्त्रवित् ॥
त्रिलक्षं प्रजपेन्मन्त्रं वाञ्छितं लभते धनम् ।
श्रियोमन्त्रं जपेन्मन्त्री श्रीसूक्तमपि सञ्जपेत् ।
भूयसीं श्रियमाकाङ्क्षन् सत्यवादी भवेत्सदा ॥
प्रत्यगाशामुखोऽश्नीयात् स्मितपूर्व्वं प्रियं वदेत् ।
भूषयेद् गन्धपुष्पाद्यैरात्मानं नियतः सदा ॥
नग्नो नावतरेदप्सु तैलाभ्यक्तो न भक्षयेत् ।
हरिद्रां न मुखे लिम्पेत् पुष्पादिषु न संविशेत् ॥
[1]न वृथा विलिखेद् भूमिं न विल्वं द्रोणमम्बुजम् ।
धारयेन्मूर्द्ध्नि नाङ्गारलेपं तैलञ्च केवलम् ॥
मलिनो [2]न भवेज्जातु कुत्सितान्नं न भक्षयेत् ।

(१) P न वृथात् विलिखेद् भूमिं ० ।
(२) P. न भवेज्जन्तुः ० ।

स हि देवीमिन्द्रपत्नीं श्रीदेवीं विष्णुवल्लभाम् ॥
कन्यां जम्बूप्रवालञ्च पीलयेन्मूर्द्धि सर्व्वदा ॥

वक्रतुण्डषडक्षरमन्त्रजपः।

श्रीकामस्य।

वक्रतुण्डाय हुमिति मन्त्रराजः षडक्षरः।
ऋषिर्भृगुरनुष्टुपच्छन्दो देवो गणेश्वरः ॥

गणेशाय हृदयाय नमः। एकदंष्ट्रिणे शिरसे स्वाहा। लम्बोदराय शिखायै वषट्। चलत्कर्णाय कवचाय हुम्। गजवक्त्राय नेत्राभ्यां वौषट्। सर्व्वविघ्नोपशमनाय अस्त्राय फट्।

लम्बोदरं त्रिनयनं पाशाङ्कुशधरं परम्।
वरदाभयहस्तञ्च चलत्कर्णं सचामरम् ॥
द्रुतचामीकरप्रख्यं वक्रतुण्डं विनायकम्।
चतुर्भुजं गजवक्त्रं प्रणमामि गणेश्वरम् ॥
एवं ध्यात्वा जपेन्मन्त्रं पुरश्चरणसिद्धये।
मन्त्री द्वादशसाहस्रं हविरश्नतन्द्रितः ॥

चित्तप्रसादो मनसश्च तुष्टि-
[1]रल्पाशिता स्तेयपराङ्मुखत्वम्।
स्वप्ने गजानामुपलम्भनञ्च
सिद्धस्य चिह्नानि भवन्ति भूयः ॥

---

(१) P. रल्पशिता०।

नित्यं मम ध्यानपरो ममाग्रे
जपेत् सहस्रं त्रिशतं शतं वा ।
अष्टोत्तरं मन्त्रविदप्रमत्तो
लभेत बह्वीमचिरेण लक्ष्मीम् ॥

अङ्गारकदिने प्राप्ते चतुर्थ्याञ्च [1]विशेषतः ।
अभ्यर्च्य गन्धपुष्पाद्यैर्हविषा पायसेन [2]माम् ॥
भोजयेत् कार्य्यसिद्ध्यर्थं मन्त्रविद् वरदं शुभम् ।
यथाग्निकुण्डं चतुरस्रं देवाग्रे हस्तसम्मितम् ॥
आरणेयं खादिरकुलाद् विप्रगेहाद्धुताशनम् ।
कृत्वा तत्राङ्गविन्यासं प्राणानायम्य सर्व्वतः ॥
पुष्पैर्विकीर्य्य दर्भैश्च परिस्तीर्य्य विनायकम् ।
तत्र ध्यात्वार्चयित्वा च जलेनाग्नौ प्रसेचनम् ॥
ताराद्येन षडन्तेन स्वाहान्तेनाथ होमयेत् ।
आज्येनाष्टसहस्रञ्च सिद्धये कामसम्पदः ॥

प्रत्यहं सिद्धोदनत्रिशतहोमो मासत्रयेण महानिधिप्राप्तिकरः ।

तथा,—

यो वै ममाग्रे पृथुकैर्गुडाक्तैः
सनारिकेलैर्मरिचाज्ययुक्तैः ।
अग्नौ सहस्रं जुहुयात् स मन्त्री
धनं लभेताक्षयमद्भुतञ्च ॥

---

(१) P. समाहितः ।

(२) P. च ।

ब्रह्मप्रोक्ते गायत्रीकल्पे,—

ब्रह्मचारी मिताहारो यः सहस्रद्वयं जपेत्।
संवत्सरेण विप्रोऽसौ महदैश्वर्य्यमाप्नुयात्॥
त्रिरात्रोपोषितो भूत्वा घृतं हुत्वा सहस्रशः।
सहस्रं प्राप्नुयाद्धोमं हुत्वा वै खादिरेश्वनैः॥

विश्वामित्रकल्पे,—

श्रीकामो रक्तपद्मैश्च हुत्वा श्रियमवाप्नुयात्।
शालितण्डुलहोमाच्च समिद्भिः श्रीफलस्य वा॥
विल्वस्य सकलैर्हुत्वा पत्रैः पुष्पैः फलैरपि।
शतं शतञ्च सप्ताहं हुत्वा श्रियमवाप्नुयात्।
यवागूं ग्राममाप्नोति हुत्वा शालिसमन्विताम्॥

यजुर्विधाने,—द्रुपा इत्यौदुम्बरान् जुहुयाद्धनकामः। सजूरब्दो इत्याज्याहुतिसहस्रं जुहुयात् कुशपुष्पहस्तः सुवर्णमुत्पद्यते। तुभ्यन्तामङ्गिरः। अग्निः प्रियेषु। स्वस्ति न। इति त्रिभिः पलाशसमिधदधिमधुघृताक्तानां सहस्रं जुहुयात् कार्षापणानां शतसहस्रमुत्पद्यते। हिरण्यपाणिमूतये इत्यर्कसमिधामयुतं जुहुयात् सुवर्णमुत्पद्यते। श्रीश्चतइति सुगन्धिकुमुदोत्पलादीनां शतसहस्रं जुहुयात्। अप्सु प्रविश्य तावत् सहस्रं जपेत्। श्रीमान् भवति। उभावपितमश्विनोरित्यश्विनौ सुवर्णधिकतमां परमसमृद्धिं लभते।

ताम्बकाधिकारे वशिष्ठः,—

अन्नाद्यकामो जुहुयाद्दध्नमेव घृतप्लुतम्।

यजुर्विधाने,—अन्नपत इति सर्व्वोपकरणयुक्तानामन्नाहुतीनां शतसहस्रं जुहुयाद् यावज्जीवमन्नमक्षयं भवति। नदीप्रस्रवणं गत्वा स्थालीविधानविधानेनाग्निमुपसमाधाय औदुम्बरीणां समिधां अयुतं जुहुयाद् ग्राम्या व्रीहयोऽक्षय्या भवन्ति। विष्टतिं नाम्या इत्याज्याहुतीनामष्टसहस्रं जुहुयात्पर्य्याप्तां भूमिं लभते। इमं स्तनमिति समुद्रगां नदीं गत्वोदकमवतीर्य्यायुतं जप्त्वा सहस्रं जुहुयाद् ग्रामं लभते। अभ्यावर्त्तस्वेति तिलतण्डुलान् दधि-मधु-घृताक्तान् जुहुयात् ग्रामं लभते। नमो विधिः किरिकेभ्य इति उत्पलपद्मानां शतसहस्रं जुहुयाद् राजलक्ष्मीरुपतिष्ठते। राज्य-कामः पद्मसौगन्धिकोत्पलादीन् भगवतो महेश्वरस्योभयचन्द-नाक्तान् शिरसि शतसहस्रमारोपयेत् सहस्राख्यस्य श्रीरुपेत्य भ्रातृतां भजति। तत्पुरुषादघोराद् वा प्रत्यमित्राणां वेति। (?) अमवक्त्रहि (?) तृतीयेन शतसहस्रेण साक्षादुपतिष्ठते। नमो हिरण्यवाहव इति राज्यकामः कुमुदसौगन्धिकोत्पलादीन् पूर्व्वकल्पेनारोपयेत् साक्षात् भगवती श्रीरुपतिष्ठते।

ब्रह्मोक्तगायत्रीकल्पे,—

आदित्याभिमुखो भूत्वा नाभिदघ्ने जले जपेत्।
हुत्वा राज्यमवाप्नोति लक्षं निर्हतकण्टकम्॥

विश्वामित्रगायत्रीकल्पे,—

जपाद् विल्वं समाश्रित्य मासं राज्यमवाप्नुयात्।
विल्वं हुत्वाप्नुयाद् राज्यं समूलं यवपल्लवम्।
हुत्वा पद्मशतं मासं राज्यमाप्नोत्यकण्टकम्॥

मन्त्रराजाधिकारे भार्गवसंहितायाम्,—

अयुतं बिल्वपत्राणां हुत्वा राज्यमवाप्नुयात्।

[1]चातुर्मास्यदग्धमीव्रतेषु सु(सौ)वर्णमिन्द्रं पूजयित्वा तं ब्राह्म-णाय दत्वा राजा स्यात्।

हयशीर्षे लक्ष्मीप्रतिष्ठाधिकारे,—

तथैव राज्यकामानां सम्यग्राज्यफलप्रदम्।

भविष्ये पूजाधिकारे,—

राज्यं त्वष्टा च चित्रायां निःसपत्नं प्रयच्छति।
इष्टसन्तर्पितः प्रीतः स्वात्यां वायुः पुनः परम्॥

तथा,—

इन्द्राग्नी च विशाखायां रक्तैः पुष्पैः [2]प्रयच्छतु।
धनं राज्यं लभे देहतेजांसि च विशेषतः॥
दत्वा च राज्यलिङ्गानि राज्यमाप्नोत्यकण्टकम्।

राज्यलिङ्गानि छत्रचामरादीनि।

मेधाकामजपः। या मेधामिति नित्यं जपेन्मेधाकामः। मित्रं वो इति मेधाकामो घृतं जुहुयात् सहस्रसम्पाताभिहुतं संस्रवेणैव वचामालोड्य सप्ताभिमन्त्रितं ज्ञात्वा पयः (पिवेत्)

---

(१) P. चातुर्मास्यव्रते,-हयशीर्षु सुवर्णमिन्द्रं पूजयित्वाऽन्ते तं ब्राह्मणाय दत्वा राजा स्यात्।

(२) A. प्रयच्छति।

पपरममेधावी भवति। [1]सदसस्पतिमिति स्रुवेणाज्याहुतीनां सहस्रं जुहुयान्मेधाकामः। वचामष्टसहस्राभिमन्त्रितं कृत्वा पिबेत् परममेधावी भवति। चिदसीति ऋचं सहस्रं जपेत् सहस्रोत्तरवादी भवति।

## वृष्टिकामप्रयोगाः।

देवं वर्षयितुकामः उदुम्बरविल्ववेतसवारणादीन् दधि-मधु-घृताक्तानयुतं जुहुयान्महावर्षं करोति। व्यक्तवह (?) इत्यावहशब्द-प्लुतः कार्य्यः। आपो देवा इति देवं वर्षयितुकामः उदुम्बर-विल्ववेतसवारणादीन् दधि-मधु घृताक्तानयुतं जुहुयाद् देवो वर्षति। अपां चाभ्र इति देवं वर्षयितुकामः उदम्बरविल्ववेतस-वारणानां घृताक्तानां जुहुयाद् वृष्टिर्भवति। अपः पिवन् वेति शिखण्डविल्ववेतसवारणानां दध्यक्तानां जुहुयान्महावृष्टिर्भवति असौ यस्ताम्र इति ऋग्द्वयेन देवं घृतेन चीरेण स्नापयेत्। प्रसन्नो भवति वर्षति च। वेतससमिधां घृताक्तानां अयुतं जुहुयान्महा-वृष्टिर्भवति। ऋण मानिति षडृचेनाज्याहुतिसहस्रं जुहुयाद् [2]वर्षति। विश्वस्य मूर्द्धन्निति देवं वर्षयितुकामः उदके प्रविश्य अहोरात्रं जपेद् वर्षति। अभित्वेति सप्तभिर्देवं वर्षयितुकामः उदके प्रविश्य अहोरात्रं जपेद् वर्षति। वेदाहमेतमिति देवं वर्षयितुकामः अंशमात्रमुदकमवतीर्य्यादित्याभिमुखो जपेन्मध्या-

---

(१) P तद्रसस्पतिर्मिति (') ०।
(२) P महावृष्टिर्भवति।

ह्माद् वर्षति। स्वाहा सूर्य्यस्येति वृष्टिकामः पयसामयुतं जुहु-याम्महावृष्टिर्भवति।

विश्वामित्रगायत्रीकल्पे,—

वेतसः समिधो हुत्वा वृष्टिं विन्देत पुष्कलाम्।
युक्ताभिः पयसा पत्रैः पुष्पैर्वा वेतसस्य तु॥
पायसेन शतं हुत्वा सप्ताहं वृष्टिमाप्नुयात्।

ब्रह्मोक्तगायत्रीकल्पे,—

हुत्वा वै विल्वपत्राणि घृताक्तानि हुताशने।
लक्षमात्रेण मन्त्रज्ञो महावृष्टिमवाप्नुयात्[1]॥

यजुर्विधाने,—अग्न आयूंषि प्रसव इति अग्ने पवस्वेति ब्रह्म वर्चसकामस्याज्यहोमः। सोमं राजानमिति पौर्णमास्यां संवत्सरं सोममुपतिष्ठते। ब्राह्मणायार्घं दत्वा भुञ्जीत क्षिप्रं सोमयाजी भवति। परमस्या इति वैकङ्कती र्जुहुयाद् रक्षणाय। नमः सुत इति निगड़बद्धो जपेत् व्यसनस्थो वा। निगड़स्फोटनं भवति व्यसनान्मुच्यते। उर्जोदपातमिति मन्त्रेण दधि घृतं जुहुयाद-पायान्मुच्यते[2]। अश्वत्थे वो इत्यश्वत्थपर्णहोमो गोकामस्य। अनया या ओषधी गृह्यते सा रक्षोघ्नी भवति। नमस्ते रुद्र मन्यव

(१) P. Adds. ब्रह्मोक्तगायत्रीकल्पे,—नाभिदघ्ने जले जप्त्वा सप्ताहं वृष्टिमाप्नुयात्।

(२) P. Adds. यदुग्रकृधा इत्येतां जप्त्वा नावसीदति। उच्छुष्मा इति बन्धनस्थो जपन्मुच्यते।

इति चतसृभिः यवगोधूमजतिलगवेधुकानां दधिमधुघृताक्तानां शतसहस्रं जुहुयादेकादशरात्रेण द्वादशरात्रेण जनपदमरणमुपशमयति[1]। विंशतिरात्रेण देशोपद्रवं शमयति। मासेन पृथिव्यां जनपदमरणमुपशामयति। तथा काण्डात् काण्डादित्युभयेन दुर्वाप्रकाण्डानामयुतं जुहुयाद् ग्रामे जनपदमरणमुपशमयति। [[2]द्विगुणेन नगरे। त्रिगुणेन विषये। द्विपदचतुष्पदादीनामुपघाते भेषजमसीति दधि मधु घृतं जुहुयात् शान्तिर्भवति। उग्रश्च भीमश्चेति महाजनपदमरणे ग्राममध्ये नगरमध्ये वा बिल्वकाष्ठैरग्निं प्रज्वाल्य औदुम्बरसमिधां शतं जुहुयात् शान्तिर्भवति। तच्चोमित्र इति जनपदमरणे चतुष्पदानाञ्चोपसर्गे वैकङ्कतसमिधामयुतं जुहुयात् सर्व्वमुपशमयति।] [3]अवोचदिति पथि गच्छन् जपेत् क्षेमेण कृतार्थं आगच्छति। नमोऽस्तु नीलग्रीवायेति सप्तधा तोयमभिमन्त्र्य विषग्रस्तगात्रे क्षिपेत् कालदष्टोऽप्युत्तिष्ठति। ज्वरभूतग्रहडाकिनीभयग्रस्तं प्रसुप्त धन्वन इति भस्मसर्षपैस्ताड़येत् मुञ्चमुञ्चेति वदेत् शीघ्रं मुञ्चति। नमो हिरण्यबाहव इति वशीकर्त्तुमिच्छन् पलाशाश्वत्थापामार्गवैकङ्कतानां प्रतिवर्णं घृतमधु-क्षीरतैलाक्तानामयुतं जुहुयात् क्रमशो वर्णचतुष्टयं वशमानयति। यद्रो नो अग्निराहुत इति आदित्यस्योदयकाले जपेत्

(१) Adds. पञ्चविंशतिरात्रेण राष्ट्रोपद्रवं शमयति।

(२) A. Omits the portion bracketed.

(३) P. अध्यवोचदिति०।

सुभगो भवति। अग्न आगच्छेति गोरोचनामष्टसहस्राभिमन्त्रितां कृत्वा ललाटे तिलकं कुर्य्यात् सर्व्वजनप्रियो भवति। यास्ते अग्न इति सौभाग्यकाम आज्याहुतिसहस्रं जुहुयात्। बृहस्पते सवितरिति सौभाग्यकामो दधि-मधु-घृतं जुहुयात् सुभगो भवति। परीमे गामनेषतेति तुषहोमो वश्यार्थः। राजानं वीक्ष्य जपेद्वश्यो भवति। शत्रुमागतं दृष्ट्वा जपेत् प्रणमति। एतदेव सौभाग्यकरणं स्नेहच्छेदे। मानस्तोकइति सर्व्वगन्धैर्योजनशतस्थं पुरुषमाकर्षति। गुग्गुलगुटिकानां चणकप्रमाणानामष्टसहस्रं जुहुयाद् यस्य नाम्ना स वश्यो भवति। भद्रं कर्णेभिरितीन्द्रियविकलो जपेत् पूर्णेन्द्रियो भवति। यदाबध्नन्निति हिरण्यं सहस्राभिमन्त्रितं कृत्वा दक्षिणहस्ते बध्नीयात् पापचक्षुर्व्यपोहति। न च राजा किञ्चिद् विचारयति प्रियदर्शनो भवति। परं मृत्यो इति बालानां गर्भिणीनां हस्ते सूत्रबन्धो जपहोमश्च शक्तितः कार्य्यः शान्तिर्भवति। बृहद्भार्या आज्यं दातव्यं प्रौढ़गर्भप्रसवकाले अकालगर्भपातप्रसवसाधारणे च। युञ्जाहीत्युपस्तमहोरात्रोपोषितः कुर्य्यात् यथा भविष्यं श्रूयते वर्त्तमानं भूतं वा। एतानि निमित्तनिश्चये कर्म्माण्युक्तानि।

यत्तूत्पातादिग्रहदौस्थ्यादिनिमित्तसंशयेनानिष्टशङ्का चक्षुषाऽदृष्टसामर्थ्यदर्शनेन वाऽनिष्टशङ्का सा भयमित्युच्यते। तत्र भये निमित्ते विहितानि कर्म्माणि कार्य्याणि। तद् यथा यजुर्विधाने,—नमः सिकत्यायेति कलशमभिमन्त्र्य अष्टशतेनात्मानं स्नापयेत्। सर्व्वभयेभ्यो विनायकेभ्यश्च मुच्यते। मोन्नुष्टमा

शिवतमेति सर्पभयेऽग्निभये चौरभये प्राणसंशये मानसं जपेत् सर्वेभ्यो भयं न भवति। परोमेगामनेषतेति भयेषु जपेदभयं भवति। प्राणसंशये जपेन्मुच्यते। याः सेना इति निपाते अन्नं जुहुयाद् भयं न भवति। ऋग्विधाने,—

अशक्ये चाप्रतीकारे भये प्राणान्तिके तथा।
जातवेदस इत्येतां जपन्नेव विमुच्यते॥

इति जातवेदोमन्त्रजपः। तद्विधिरायुःकामप्रयोगे वक्ष्यते।

वशिष्ठकल्पे मुद्रिकासंस्कारविधौ ग्रहरोगोरगादिभ्यो भयं न जायत इति। तापनीयश्रुतौ,—यो मृत्योः पाप्मभ्यः संसाराच्च बिभीयात् स एतं मन्त्रराजं नारसिंहमानुष्टुभं प्रतिगृह्णीयादिति।

महाभारते,—

भयान्मुच्येत भीतस्तु मुच्येतापन्न आपदि।

इति सहस्रनाम्नि। देवीमाहात्म्यमधिकृत्य मार्कण्डेयपुराणे,—

शत्रुतो न भयं तस्य दस्युतो वा न राजतः।
न शस्त्रानलतोयौघात् कदाचित् सम्भविष्यति॥

इति। तथा सर्व्वभयेषु विष्णुधर्म्मोक्ताभयस्तवः पठनीयः।

दाल्भ्य उवाच,—

भगवन् सर्व्वकालेषु भयत्रस्ता मनीषिणः।
[1]किं कुर्व्वन्तोऽभयं तेषां यथावद् वक्तुमर्हसि॥

पुलस्त्य उवाच,—

---

(१) P. किं कुर्व्वन्नभयं तेषाम्।

अहं ते कथयिष्यामि शृणु दाल्भ्य यथासुखम्।
इहलोकभयं नास्ति परलोकभयं तथा॥
प्रणवाग्रमजं नित्यं परमार्थमतीन्द्रियम्।
ये स्मरन्ति हरिं श्रेष्ठं न तेषां विद्यते भयम्॥
हृदिस्थं सर्व्वभूतानां बाह्याभ्यन्तरवर्त्तिनम्।
ये स्मरन्ति हरिं श्रेष्ठं न तेषां विद्यते भयम्॥
दिशश्च विदिशश्चैव व्याप्तलोकं निरन्तरम्।
ये स्मरन्ति हरिं [1]श्रेष्ठं न तेषां विद्यते भयम्॥
अक्षरं निर्म्मलं शान्तमन्तःकरणवर्जितम्।
ये स्मरन्ति हरिं श्रेष्ठं न तेषां विद्यते भयम्।
प्रकृतिं पञ्चभूतानामिन्द्रियाणां गुणातिगम्॥
ये स्मरन्ति ०
वासितं सर्व्वभूतानां वासुदेवमजं विभुम्।
ये स्मरन्ति ०
मत्स्यकूर्म्मादिरूपाणां प्रादुर्भावं महात्मनः।
ये स्मरन्तीह गोविन्दं न तेषां विद्यते भयम्॥
शङ्खचक्रगदापाणिं गरुड़स्थमरिन्दमम्।
ये स्मरन्ति च गोविन्दं न तेषां विद्यते भयम्॥
[2][श्रीधरं श्रीपतिञ्चैव श्रीवत्सोरसि भूषितम्।

(१) P. नित्यं ०।
(२) P. Omits the portion bracketed.

ये नमस्यन्ति गोविन्दं न तेषां विद्यते भयम्।
नररूपधरं देवं नारायणमकल्मषम्॥
ये नमस्यन्ति ०
अतसीपुष्पसङ्काशं पीतवाससमच्युतम्।
ये नमस्यन्ति ०
सिद्धगन्धर्व्वयक्षाणां सुरासुरगुरोर्गुरुम्।
ये नमस्यन्ति ०
दुर्गमे कुपथे वापि व्याघ्रचौरभयाकुले।
ये स्मरन्ति हृषीकेशं न तेषां विद्यते भयम्॥
ग्रहभूतपिशाचाद्यैर्व्याधिभिः परिपीड़िताः।
ये स्मरन्ति ०
विद्युद्वज्रनिपातेश्च वाय्वग्निभिरुपद्रवैः।
ये स्मरन्ति ० ]
संसारभयभीताश्च शत्रुभीताश्च सर्व्वदा।
ये स्मरन्ति ०

भयमपनय समस्तमेतज्जपतो हरिगोविन्दहृषीकेशम्।
इति सततमिदं स्तुवंस्तु दाल्भ्य सुखमभयञ्च ददाति तत्र तत्र॥

नामत्रयमिदं पुण्यं पवित्रं पापनाशनम्।
दुर्लभं परमं गुह्यं द्वौ त्रीणि चतुराक्षरम्॥



## अथ रोगशान्तये जपाः।

तत्र कर्म्मविपाकसंग्रहे—

दृष्टापचारतः कश्चित् कश्चित् पूर्व्वापचारतः।
तत्सङ्करादृ भवत्यन्यो व्याधिरेवं त्रिधा मतः॥
यथानिदानदोषोत्थः कर्म्मजो हेतुभिर्विना।
महारम्भोऽल्पको हेतावन्तिमो दोषकर्म्मजः॥

तत्र दोषजस्यौषधैरुपशमः। अथौषधैरनुपशमे निष्कृत्या प्रायश्चित्तादिरूपया कर्म्मजत्वं निश्चित्य शमःकार्य्यः। निष्कृत्यौषधाभ्यामुभयजस्य। शातातपीयकर्म्मविपाके,—

दुष्कर्म्मजा नृणां रोगा यान्ति चैवं क्रमाच्छमम्।
जपैः सुरार्च्चनैर्होमैर्दानैस्तेषां शमो भवेत्॥

जपा वेदपारायणमहासौरघोषशान्तिशतरुद्रियपुरुषसूक्त-त्र्यम्बकमन्त्रराजमृत्युञ्जयसहस्रनामापामार्जनविष्णुहृदयादीनाम्। सुरार्च्चना सूर्य्यपूजा विष्णुमहेश्वरादिपूजा च। होमो गायत्र्या-युतादिहोमाः। तथायुतहोमादयः। त्र्यम्बकहोमादयश्च। दानानि गोभूतिलहिरण्यदानानि।

तथा,—

दानैर्दयादिभिरथ द्विजदेवतागो-
देवार्च्चनाप्रणतिभिश्च जपैस्तपोभिः।
इत्युक्तपुण्यनिचयैरुपचीयमाना
प्राक्पापजातमशुभं प्रशमं नयन्ति॥

पापंजातमशुभं रोगम्। अत्र च ये वातपित्तादिधातु-प्रकोपजा रोगास्तेष्वौषधवत् त्र्यम्बकजपादिकमपि कर्त्तव्यमेवा-विशेषेण रोगमुद्दिश्य विधानात्। ये कर्म्मजा उभयजाश्च तत्र प्रायश्चित्तपूर्व्वकमेव रोगशान्तये जपादिकरणं तथाहि दानादि-भिर्व्वर्त्तमानरोगनाशेऽपि तन्मूलपापानाशे रोगान्तरोत्पत्त्यापत्तेः। न च प्रायश्चित्तमात्रं तर्हि क्रियतां पापनाशे सुतरां रोगनाशा-दितिवाच्यम्। प्रारब्धरोगरूपफलस्य पापस्य नाशेऽपि रोगसत्वे बाधकाभावात्। नहि निमित्तकारणनाशे कार्य्यनाशावश्यकत्वं किन्तु समवायिकारणनाशे तच्च शरीरमस्त्येव। [1]तत्रौषधादि यथाविधप्रयोगेऽपि यस्य रोगस्य नोपशमस्तस्य कर्म्मजत्वं निश्चित्य मूलभूतपापक्षयार्थं प्रायश्चित्तं कृत्वा रोगशान्त्यर्थविहिततत्तत्-कर्म्मापि कर्त्तव्यम्। किं बहुना तत्र त्र्यम्बकजपादिकमपि मूल-पापप्रायश्चित्तपूर्व्वकमेव कर्त्तव्यम्। व्याधिप्रतिकृतिदानादि-कञ्च रोगशान्त्यर्थविहितमपि मूलपापक्षये पुनरुत्पत्त्यापत्तेस्तत्-पापशान्तये प्रथमं कर्म्मानुरूपकृच्छ्राद्याचरणम्। ननु च कर्म्म-विपाकसारे,—

अथ कर्म्मक्षयोपायौ [2]कृच्छ्रव्याधिविपर्य्ययौ।

इति कर्म्मणः पापस्य नाशकत्वेन कृच्छ्राद्याचरणं व्याधि-विपर्य्ययशब्देन व्याधिप्रतिमादानञ्च वैकल्पिकत्वेनोक्तम्। तत्कथं प्रतिकृतिदानस्थलेऽपि पापशान्तये पृथक् कृच्छ्राद्याचरण-

(१) P. तेनौषधादि०

(२) P. कृच्छ्रव्याधिविषया विपर्य्ययाविति० (?)।

मित्युच्यते। अत्र कर्म्मपदस्य पापतज्जन्यरोगरूपकारणकार्य्योभय-परत्वात्।

तथाच स्मरन्ति

पूर्व्वजन्मकृतं पापं व्याधिरूपेण जायते।

इति। तेन कृच्छ्रादिकं कारणभूतपापरूपकर्म्मनाशोपायः। प्रतिकृतिदानञ्च कार्य्यं रोगरूपकर्म्मनाशोपाय इति द्वयो भिन्न-कार्य्यत्वात् समुच्चयः। यत्तु कर्म्मविपाकमहार्णवे कृच्छ्रादिकरण-मेका कोटिः व्याधिप्रतिकृतिदानमपरा कोटिरित्युक्तं तन्न वैकल्पिकत्वाभिप्रायेण किन्तु भिन्नकार्य्यकारित्वेन स्वस्वकार्य्ये नैरपेक्ष्यदर्शनाय। तथाचान्यत्र तेनैव प्रायश्चित्तं कृत्वा प्रतिकृति-दानादि कार्य्यमित्युक्तम्। एतत्सर्व्वमभिप्रेत्य कर्म्मविपाकसंग्रहे,—

प्रायश्चित्तमकृत्वा तु न कुर्य्यात् कर्म्म किञ्चन।

[1]अनिस्तीर्णमघं नित्यं वर्धते द्विगुणं पुनः॥

अत्र महार्णवकारेण प्रथमतः प्रायश्चित्तं कृत्वा प्रतिकृति-दानादि कार्य्यमिति व्याख्यातम्। न चैतद्रोगमूलपापभिन्न-पापपरं तस्य कर्म्मविपाकेऽनुपयोगात्। महापातकव्यतिरिक्त-पापानां कर्म्माधिकारविरोधाभावेन तन्निवर्त्तनस्य प्रायश्चित्तानुप-योगात् महापातकिनाञ्च कर्म्मानधिकारादेवास्य तत्परत्वेन वैयर्थ्यात्। अन्यान्तरमहापातकिनान्तु तच्चिकीर्षासत्त्वेऽपि यथा कर्म्मानधिकारस्तथोक्तं प्रायश्चित्तप्रदीपेऽस्माभिः। परिशेषाद्

---

(1) P. अनिस्तीर्य्यमघं०।

रोगमूलपापपरमेवेदं वचनमिति। अत्र रोगमूलभूतपाप-प्रायश्चित्तं रोगप्रायश्चित्तञ्च पर्षदुपस्थानपूर्व्वकमेव कर्त्तव्यम्।

विख्यातदोषः कुर्व्वीत पर्षदोऽनुमतं व्रतम्।

इति याज्ञवल्क्यवचनात्। रोगेण तन्मूलपापस्य विख्यातत्वात्। न चैवं ग्रहदौस्थ्योत्पातादावपि पर्षदुपस्थानप्रसङ्गः पापे निमित्ते तत्क्षयकामविहितकर्म्मणः प्रायश्चित्तत्वेन ग्रहदौस्थ्यादिशमन-कर्म्मणः पापक्षय[1]काम्यया विहितत्वाभावात्। तिलदानादेः पापक्षयकामिकर्त्तव्यत्वेऽपि पापे निमित्ते विधानाभावात्। पातकोपपातकादौच तन्निमित्तक एव प्रायश्चित्तविधिः। प्रति-कृतिदानादौ च रोगस्य पापात्मकत्वाद् रोगनिमित्तकत्वादेव पापनिमित्तकत्वम्। [ [2]यद्वा ] शातातपीयकर्म्मविपाक-परिभाषायां रोगप्रशमनहेतुप्रायश्चित्तान्येवोपक्रम्य पर्षदुपस्थान-विधानात् पृथगेव रोगप्रायश्चित्ते पर्षदुपस्थानं विहितमिति न ग्रहदौस्थ्यादौ तत्प्रसङ्गः। अतएव रोगनाशकत्वाविशेषेऽपि कर्म्म-विपाकोक्त एव रोगप्रायश्चित्ते पर्षदुपस्थानम्। न त्र्यम्बकसहस्र-नामजपादाविति विवेकः। यच्च सुमन्तुवचनं रागद्वेषादिलभ्य-मानेषु प्रायश्चित्तेषु यज्ञभवनाध्ययनब्रह्मचर्य्यपरो भैक्षाशी दण्डी मेखली स्वयमेव वत्सरेण महापातकानि तत्परो व्यपोहति किल्बिषं न ब्राह्मणस्य पतनमिच्छन्त्याचार्य्याः। अस्यार्थः—यदि केनापि निमित्तेन पर्षज्ज्ञो व्रतं न जानीते तदा स्वयं ज्ञात्वा व्रतं

---

(१) B. कामनया ०।

(२) B. Omits the portion bracketed.

कुर्य्याद् ब्राह्मणस्य न पतनमस्ति तदेव तदसम्भवे ब्राह्मणस्य बोध्यम्। तत्र शातातपीयविधिमात्रानुष्ठानेऽपि

स्मृतिशास्त्रविकल्पः स्यादाकाङ्क्षापूरणे सति।

इति न्यायाद् दशदानाद्यकरणेऽपि न विरोधः। शातातपः,—

दश पञ्चाथ चतुर उपवेश्य द्विजान् शुचीन्।
तेषामनुज्ञया सर्व्वं प्रायश्चित्तमुपक्रमेत्॥
विधाय वैष्णवं श्राद्धं संकल्पं द्विजकाम्यया।
धेनुं दद्याद् द्विजेभ्योऽथ दक्षिणाञ्च स्वशक्तितः॥
अलङ्कृत्य यथाशक्त्या वस्त्रालङ्करणैर्द्विजान्।
याचेत दण्डवन्नत्वा प्रायश्चित्तं यथोदितम्॥
तेषामनुज्ञया कृत्वा प्रायश्चित्तं यथाविधि।
पुनस्तान् परितुष्ट्यर्थमर्च्चयेद् विधिवद् द्विजान्॥
दद्याद् व्रताङ्गदानानि तेभ्यः श्रद्धासमन्वितः।
गोभूहिरण्यरजततिलवासोघृतानि च॥
गुड़धान्ये च लवणं देयानि श्रद्धया ततः।

प्रायश्चित्तमुपक्रमेदित्यतः पूर्व्वं विधाय वैष्णवं श्राद्धमिति सम्बन्धः। पर्षदी व्रतं निश्चित्य वैष्णवं श्राद्धं कृत्वा व्रतमुपक्रमेदित्यर्थः। सङ्कल्पपदं श्राद्धविशेषणं पिण्डार्घ्यादीतिकर्त्तव्यतानिरासाय। द्विजानलङ्कृत्य वस्त्राद्यैरथ धेनुं दक्षिणां दद्यादिति सम्बन्धः। स्वशक्तित इत्यनेन धेनोः साक्षाद् बहुभ्यो दानासम्भवात् तन्मूल्यं शक्तितो दद्यादित्यर्थः। अत्रायं क्रमः। दश पञ्च चतुरो वा ब्राह्मणानुपवेश्य वस्त्राद्यैः पूजा।

अङ्गिराः,—

सचेलं वाग्यतः स्नात्वा क्लिन्नवासा समाहितः ।

तेन सचेलस्नात आर्द्रवासाः पर्षदं त्रिः प्रदक्षिणीकृत्य दण्डवत् प्रणम्योत्थाय न किञ्चिद् ब्रुवन् आर्त्तिमान् दीनः पर्षदभिमुखस्तिष्ठेत् ।

तं दृष्ट्वा पर्षदां प्रश्नः ।

किं ते कार्य्यं वदास्माभिः किं वा मृगयसे द्विज ।
तत्त्वतो ब्रूहि तत्सर्व्वं सत्यं हि गतिरात्मनः ॥
सत्येन द्योतते राजा सत्येन द्योतते रविः ।[1]
सत्येन द्योतते वह्निः सर्व्वं सत्ये प्रतिष्ठितम् ॥
भूर्भुवस्स्वस्तथा सर्व्वे लोकाः सत्ये प्रतिष्ठिताः ।
अस्माकञ्चैव सर्व्वेषां सत्यमेव परं बलम् ॥
यदि चेद् वक्ष्यसे सत्यं नियतं प्राप्स्यसे शुभम् ।
यद्वा गतोऽस्यसत्येन त्वं न सिद्ध्यसि कर्हिचित् ॥

एवमुक्त उपविश्य एतत् पर्षदुपविष्टेभ्यो धेनुमूल्यं निष्कं निष्कार्द्धं वा पादं [2]पञ्चकार्षापणानि वा त्रिकार्षापणानि वा ददानीति दद्यात् । उत्थाय पापनिवेदनम् । अमुकरोगहेतुभूतपापवानस्मि [3][ अमुकरोगवानस्मि तत्प्रायश्चित्तोपदेशेन भवन्तो मामनु-

(१) P. Adds सत्येन क्लेदयन्त्यापः सत्येन पवते मरुत् ।

(२) P. पञ्चकार्षापणानीति वा ददानीति दानम् ।

(३) P. Omits the portion bracketed.

दद्यान्तां ] ततः प्रायश्चित्तिन उच्चारणम्। पर्षदां प्रायश्चित्त-
विमर्शः।

सर्व्वेषां निश्चितं यत्र यत्र प्राणान् न पीड़येत्।

एनसि गुरुणि गुरूणि। लघुनि लघूनीत्येवम्। ततोविधायक-
वरणम्। एभिर्वस्त्रकाञ्चनफलैस्त्वमेतत् पर्षदुपदिष्टः प्रायश्चित्त-
विधायको भवेति। भवानीति प्रतिवचनम्। ततो विधायक-
माहूय तदग्रे पर्षदां प्रायश्चित्तस्वरूपकथनम्। ततो विधायकस्य
प्रायश्चित्तिनमाहूय प्रायश्चित्तकथनम्।

शृणु भो त्वमिदं विप्रैर्यत् तवादिश्यते व्रतम्।
तत्ते यत्नेन कर्त्तव्यमन्यथा तदवृथा भवेत्॥
यच्चान्यदशुभं किञ्चित् कृतं यद्वा करिष्यसि।
पृथक् तवैतदेतस्मात् शुद्धिर्यत्ते निवेदितम्॥
यदा त्वया भवेच्चीर्णं व्रतं शुद्धिकरं महत्।
तदा कुर्य्याः प्रयत्नेन शक्त्या विप्राभिपूजनम्॥

तदा अमुकरोगमूलभूतपापक्षयार्थं मन्वादिभिरमुकप्रायश्चित्त-
माम्नातं अमुकरोगक्षयार्थञ्चामुकप्रायश्चित्तमाम्नातं [1][ तदुभयं
कृत्वामुकपापक्षयपूर्व्वकं अमुकरोगान्मुक्तो भवत्विति पर्षदा
निर्द्दिष्टम्।] तदुभयं कृत्वाऽमुकपापक्षयपूर्व्वकं अमुकरोगा-
न्मुक्तो [2]भवेति वि: कथनं द्वयोर्भिन्नकाले करणे तु अमुकपापा-

(१) B. Omits the portion bracketed.

(२) B. भवेतिकथनम्।

मुक्तो भव। अमुकरोगान्मुक्तो भवेति वाच्यम्। ततः प्रायश्चित्त-स्वरूपं ज्ञात्वा स्नात्वा आर्द्रवस्त्रं विहाय शुक्लमाल्यवस्त्रधरः स्वस्ति वाच्य प्रायश्चित्तसंकल्पं कुर्य्यात्। ततो वैष्णवश्राद्धम्। एतानि भोज्यानि चतुःपरिमितानि विष्णवे नमः। एतत्प्रतिष्ठार्थं दक्षिणां ददामीति दक्षिणादानम्। यथाशास्त्रं रोगमूलभूतपाप-प्रायश्चित्तम्। ततो रोगप्रायश्चित्तञ्च कृत्वा तस्मिन्नेव दिने समाप्तौ तानेव ब्राह्मणानुपवेश्य [ [1]गन्धवस्त्राद्यैः पूर्व्ववत् ] पूजा। ततस्तेभ्यो व्रताङ्गदानम्। एतत्पर्षदुपविष्टेभ्यो ब्राह्मणेभ्य एतानि गोभूतिलहिरण्याज्यवासोधान्यगुड़रौप्यलवणानि ददे इत्युत्सृज्य दानम्। गोदानमन्त्रः,—

गवामङ्गेषु तिष्ठन्ति भुवनानि चतुर्द्दश।
यस्मात् तस्माच्छिवं मे स्यादिह लोके परत्र च॥

भूदानमन्त्रः,—

सर्व्वभूताश्रया भूमि र्वराहेण समुद्धृता।
अनन्तशस्यफलदा अतः शान्तिं प्रयच्छ मे॥

तिलदानमन्त्रः,—

महर्षे र्गोत्रसम्भूताः काश्यपस्य तिलाः स्मृताः।
तस्मात् तेषां प्रदानेन मम पापं व्यपोहतु॥

हिरण्यदानमन्त्रः,—

---

(1) P. Omits the portion bracketed.

हिरण्यगर्भगर्भस्थं हेम बीजं विभावसोः।
अनन्तपुण्यफलदमतः शान्तिं प्रयच्छ मे ॥

आज्यदानमन्त्रः,—

कामधेनोः समुद्भूतं सर्व्वक्रतुषु संस्थितम्।
देवानामाज्यमाहारमतः शान्तिं प्रयच्छ मे ॥

वस्त्रदानमन्त्रः,—

शरणं सर्व्वलोकानां लज्जाया रक्षणं परम्।
सुवेशकारि वस्त्र त्वमतः शान्तिं प्रयच्छ मे ॥

धान्यदानमन्त्रः,—

सर्व्वदेवमयं धान्यं सर्व्वोत्पत्तिकरं महत्।
प्राणिनां जीवनोपायमतः शान्तिं प्रयच्छ मे ॥

गुड़दानमन्त्रः,—

यथा देवेषु विश्वात्मा [1]प्रवरश्च जनार्द्दनः।
सामवेदस्तु वेदानां महादेवस्तु योगिनाम् ॥
प्रणवः सर्व्वमन्त्राणां नारीणां पार्व्वती यथा।
तथा रसानां प्रवरः सदैवेषु रसो मतः ॥
मम तस्मात् परां शान्तिं ददस्व गुड़ सर्व्वदा ॥

रजतदानमन्त्रः,—

प्रीतिर्यतः पितृणाञ्च विष्णुशङ्करयोः सदा।
शिवनेत्रोद्भवं रौप्यमतः शान्तिं प्रयच्छ मे ॥

---

(१) P. प्रवरश्च०।

लवणदानमन्त्रः,—

यस्मादन्नरसाः सर्व्वे नोत्कृष्टा लवणं विना।

शम्भोः प्रीतिकरं नित्यमतः शान्तिं प्रयच्छ मे॥

ततः,—

सन्तुष्टा ब्राह्मणा ब्रूयुरच्छिद्रं व्रतचारिणे।

अच्छिद्रवाक्यं यथा,—

व्रतच्छिद्रं तपश्छिद्रं यच्छिद्रं यज्ञकर्म्मणि।

सर्व्वं भवतु तेऽच्छिद्रं यस्येच्छन्ति तव द्विजाः॥

सम्पन्नमिति यद्वाक्यं वदन्ति क्षितिदेवताः।

प्रणम्य शिरसा धार्य्यमग्निष्टोमफलं लभेत्॥

भोजयित्वा द्विजान् शक्त्या भुञ्जीत सह बन्धुभिः।

अथ रोगमूलभूतपापप्रायश्चित्तमावश्यकम्। 'रोगक्षयार्थं कर्म्मविपाकोक्तप्रायश्चित्तासामर्थ्येऽपि शान्तिकजपादिनाऽपि रोगक्षयः कार्य्यः। कालान्तरे रोग[2]क्षयार्थप्रायश्चित्तकरणे पृथक् पर्षदुपस्थानं कार्य्यमिति विवेकः। अत्र च रोगक्षयार्थं शातातपीये

जपैः सुरार्चनैर्दानैर्होमैस्तेषां शमो भवेत्।

इत्यभिधानात्

वेदमेव जपेन्नित्यं यथाकालमतन्द्रितः।

इति सामान्यतः कर्त्तव्यजपमात्रोद्देशेन वेदस्य मानवेऽभिधानात्। आश्वलायने च

---

(१) P. रोगक्षयाय०। (२) P. क्षयप्रायश्चित्त०।

वेदाध्यायी सदैव 'स्यादपाप्मा सत्यवाक् शुचिः।
यं यं कामयते कामं तं तं वेदेन साधयेत्॥

इति सर्व्वार्थत्वस्य कथनात् रोगशान्त्यर्थं वेदपारायणं कार्य्यम्। तथा तन्मूलपापक्षयार्थञ्च। तथाश्वलायने पारायणेन पापक्षयः स्मर्य्यते। एकेन पूतत्वं द्वाभ्यामनृतान्मोक्षः। त्रिभिः पातकेभ्यः। चतुर्भिः शूद्रान्नभोजनात्। पञ्चभिरयाज्ययाजनात्। अयाह्य-ग्रहणात् षड्भिः। सुवर्णस्तेयात् पतितसम्प्रयोगात् सप्तभिः। गुरुतल्पगमनादष्टभिः। सुरापानान्नवभिः। दशभिरश्रोत्रिय-शूद्रयाजनात्। एकादशभि र्ब्राह्मणहननात्। द्वादशभिः पूर्व्व-जन्मेहजन्मकृतैः सर्व्वैः पापैः प्रमुच्यते। तथाच मनुः

अरण्ये नियतो जप्त्वा त्रिर्वै वेदस्य संहिताम्।
मुच्यते ब्रह्महत्याया गोघ्ना गोब्राह्मणस्य च॥

इति। तेन गुरुपापे चेद् वेदपारायणस्य नाशकत्वं लघुपापे सुतरामिति रोगमूलपापक्षयार्थमपि तत्कार्य्यम्। तद्विधिः। बौधायनः—

तीर्थे देवालये गेहे प्रशस्ते सुपरिष्कृते।
कलशं सुकृतं तत्र सुनिर्म्मितं विभूषितम्॥
पुष्पपल्लवमालाभिश्चन्दनैः कुङ्कुमादिभिः।
मृत्तिकायवसम्मिश्रं वेदविद् विन्यसेत् ततः॥

---

(१) P. स्याद् ब्राह्मणः ०।

पश्चाग्रहिः कुशैः कार्य्यो ब्रह्मा पञ्चमुखः स्थितः।
[1]स्थापितः स्नापितः कुम्भे चतुर्बाहुश्चतुर्मुखः॥
वस्त्रजान्वाकृतिं देवमर्द्धभागैः कुशैः कृतम्।
ब्रह्मोपधाने दत्वा तं ततः स्वस्त्ययनं पठेत्॥
प्रतिष्ठां कारयेत् पश्चात् पूजाद्रव्यमथोच्यते।
यज्ञोपवीतनैवेद्यवस्त्रचन्दनकुङ्कुमैः॥
सधूपदीपताम्बूलैरर्चतेश्च पितामहम्।
ब्रह्मयज्ञानमिति वा गायत्र्या वा प्रपूजयेत्॥
उपाध्यायञ्च सम्पूज्य यथापाठं पठेत् ततः।

तथा स्थण्डिलं परिकल्पयित्वाग्निमुपसमाधाय परिस्तीर्य्याज्येन देवताभ्यो जुहोति। अग्नये। सोमाय। इन्द्राय। विश्वेभ्यो देवेभ्यः। ऋषिभ्यः। ऋग्भ्यः। यजुर्भ्यः। सामभ्यः। श्रद्धायै। मेधायै। [2]प्रज्ञायै। धारणायै। श्रियै। ह्रियै। सावित्र्यै। सवित्रे। प्रजापतये काण्डर्षये। सोमाय काण्डर्षये। अग्नये। विश्वेभ्योदेवेभ्यः। काण्डर्षिभ्यः। संहिताभ्यः। उपनिषद्भ्यः। हव्यवाहाय। विश्वेभ्यः। वारुणेभ्यः। अनुमत्यै। स्विष्टिकृते। पृथक् स्वाहाकारेण हुत्वा व्याहृतिभिश्च पुनः परिसिञ्चति। समाप्तौ चैतद् यजुषा तर्पयति। एवमृग्वेदस्य काण्डर्ष्यादिवर्जमास्विष्टकृत्। तेषां स्थाने शतर्चिभ्यो मध्यमेभ्यश्च

(१) P. स्नापितः स्थापितः कुम्भे०।
(२) P. संज्ञायै श्रियै सावित्र्यै।

गृत्समदाय विश्वमित्राय देवायाग्नये भरद्वाजाय जामदग्न्ये गौतमाय वशिष्ठाय प्रागाथेभ्यः क्षुद्रसूक्तेभ्यो महासूक्तेभ्यो महानाम्नीभ्य इति। ततो वेदादिमारभ्य सन्ततमधीयीतेत्याह भगवान् बौधायनः। उक्तस्थाने शुभदिनेऽमुककामो वेदपारायणमहं करिष्य इति सङ्कल्प्य स्थण्डिलेऽग्निमुपसमाधाय ततः पूर्व्वं यथोक्तकलशे पञ्चविंशतिकुशकल्पितवत्सजान्वाकृतिदेवोपरि पञ्चाशत्कुशनिर्म्मितं ब्रह्माणं दशभिर्दशभिः कुशैः प्रतिदिशु कृतमुखाकारग्रन्थिमुपरि दशकुशैः कुशग्रन्थिं ब्रह्माणं स्थापयित्वा स्नापयित्वा ब्रह्मन् सुप्रतिष्ठितो भवेति प्रतिष्ठाप्य यथोक्तोपचारैः पूजा। तत्र उपाध्यायपूजा। ततो गृह्योक्तविधिना ब्रह्मोपवेशनाद्याज्यभागान्तं कृत्वा आज्येनाग्नये स्वाहेत्यादिभिर्होमः। ऋग्वेदपारायणे स्विष्टकृतः पूर्व्वकाण्डर्ष्यादि लोपयित्वा तत्स्थाने शतर्चिभ्य इत्यादि होमः। होमसमाप्तौ होमसम्बन्धिनीं देवतां जलेन तर्पयति। व्याहृतीभ्यश्च तर्पयति। भूर्देवांस्तर्पयामि। भुवोदेवांस्तर्पयामि। भूर्भुवः स्वर्देवांस्तर्पयामि। ततो वेदादिमारभ्य सतताध्ययनसमाप्तौ नान्तरा व्याहरणम्। नान्तरा विरामः। अन्तराविरामे प्राणायामत्रयम्। प्रणवपूर्व्वं पुनरारम्भः। समाप्तौ भूरादिभिस्तर्पणम्। गुरवे यथाशक्ति दक्षिणा ब्राह्मणभोजनञ्च। अत्रच [1]भोजनानन्तरं न पठनम्। इत्यमेवायुतहोमादौ पारायणम्। अनन्तपारायणे विशेषः। ग्रामात् प्राच्यामुदीच्यां वा दिश्युप-

(१) P. भोजनादूर्द्धं न पठनम्।

क्रमः। आवेदसमाप्तेरभोजनम्। अशक्तौ जलं दुग्धं फलं हविष्यं वा किञ्चिद् भोज्यम्। भोजनानन्तरमपि पुनः पाठः। नान्तरा विरामः। न लौकिकवाक्योच्चारणम्। अन्तराविरामे प्राणायामत्रयं कृत्वा प्रणवपूर्व्वमारम्भः। सन्ध्याद्वये महानिशायां संग्रामेऽरण्ये वृष्टौ च न पाठः। अन्यदा नित्यकर्म्मकालपरिहारेण सर्व्वदा पाठः। आदौ ब्राह्मणमन्ते च। गुरवे दक्षिणा। पूर्व्ववद्ब्रह्मपूजाद्याज्यभागान्ते। अग्नये सोमाय इन्द्राय प्रजापतये बृहस्पतये विश्वेभ्यो देवेभ्यो ब्रह्मणे ऋषिभ्यो ऋग्भ्यो यजुर्भ्यः सामभ्यः श्रद्धायै मेधायै प्रज्ञायै धारणायै सदसस्पतये श्रियै ह्रियै सावित्र्यै सवित्रे प्रजापतये काण्डर्षये सोमाय काण्डर्षये अग्नये काण्डर्षये विश्वेभ्यो देवेभ्यः संहिताभ्यो देवताभ्यः। उपनिषद्भ्यो देवताभ्यः। वारुणीभ्यो देवताभ्यः। हव्यवाहाय। विश्वेभ्योदेवेभ्यः। अनुमत्यै। स्विष्टकृते। पृथक् स्वाहाकारेण होमः। ऋग्वेदिना काण्डर्ष्यादिप्राक्स्विष्टकृत्स्थाने शतर्चिभ्यो मध्यमेभ्यः गृत्समदाय विश्वामित्राय वामदेवाय अत्रये भरद्वाजाय जामदग्नये गौतमाय वशिष्ठाय प्रागाथेभ्यः पावनीभ्यः क्षुद्रसूक्तेभ्यः महासूक्तेभ्यः महानाम्नीभ्यश्च। होमसमाप्तौ भूरादिभिः पूर्व्ववत् तर्पणं अग्न्यादीनां होमदेवतानाम्। ततो वेदमारभ्य समापनम्। अन्ते पूर्व्ववत् तर्पणम्। ब्राह्मणभोजनं दक्षिणादानञ्च। अस्यैव पूर्व्वोक्तानि फलानि।

इत्याश्वलायनोक्तानन्नत्-पारायणविधिः।

---

# अथ सर्व्वरोगनाशाय घोषशान्तिः।

यद्यपीयं प्रतिज्ञातिदानाङ्गत्वेन विहिता तथापि [1]सर्व्वदेशीय-विशिष्टशिष्टाचारात् पृथक् क्रियते। रात्रौ च। अमुकरोगशान्तये आश्वलायनोक्तघोषशान्तिकर्म्म कुर्व्वीयेति। ततो वरणम्। वृतो जपति ऋष्यादिस्मरणपूर्व्वकम्। आ नो भद्रा इति दशर्चं सूक्तं अदितिर्जातमदितिर्जनित्वमित्यन्तम्। अस्य गौतमो राहुगण ऋषिः विश्वेदेवा देवता आद्याः पञ्च सप्तमी च जगत्यः षष्ठी विराट् शेषास्त्रिष्टुभः। स्वस्ति नो मिमीताम् इति पञ्चर्चस्तत्-परिशिष्ट ऋग्द्वयेन सप्तर्चः [2]अभयं नो इत्यन्ताः। अस्यात्रेय ऋषिः तिस्रस्त्रिष्टुभः द्वे अनुष्टुभौ पुनर्द्वेत्रिष्टुभौ विश्वेदेवा देवताः। शन्न इन्द्राग्नीति पञ्चदशर्चं सूक्तं यूयं पातः स्वस्तिभिः सदा नः इत्यन्तम्। वशिष्ठ ऋषिः त्रिष्टुप्छन्दः विश्वेदेवा देवताः। रक्षोहण-मित्यादिपञ्चदशर्चं सूक्तं बलं चित्तस्य वीर्य्य(?)मित्यन्तम्। आङ्गिरसो वायु ऋषिः त्रिष्टुप्छन्दः चतुर्थ्यनुष्टुप् अग्निर्देवता। आशुः शिशानो इति त्रयोदशर्चं सूक्तं अनाधृष्या यथासथ इत्यन्तम्। ऐन्द्रोऽप्रतिरथ ऋषिः त्रिष्टुप्छन्दः चतुर्थी वा इति(?) अन्त्यानुष्टुप् इन्द्रो देवता। मुञ्चामीत्येतत् पञ्चर्चं सूक्तं सर्व्वमायुश्च तेऽविदमित्यन्तम्। प्राजापत्यो यक्ष्मनाशनऋषिः त्रिष्टुप्छन्दः अन्त्यानुष्टुप् इन्द्रो देवता। अमुष्य त्वोदानमिति त्र्यृचं सूक्तं युवन्निव(?)दशर्च इत्यन्तम्। अरिष्टनेमि-

---

(१) P. सर्व्वदेशीयाविगीतशिष्टाचारात् ०।

(२) P. अभयं नोऽस्तु इत्यन्तः।

तार्च्यऋषिः त्रिष्टुप्छन्दः तार्च्योदेवता। सर्व्वेषां शान्तिपाठे विनियोगः। इति स्मृत्वा यथाक्रमं समसूक्तानां [1]त्रिःसप्तति-ऋचा पाठः। अन्ते च संहितावसाने ऋग्द्वयपाठः तच्छं योरावृणीमहे। गातुं यज्ञाय। गातुं यज्ञपतये। दैवी स्वस्तिरस्तु नः। स्वस्तिर्मानुषेभ्यः। ऊर्द्धं जिगातु भेषजम्। शन्नो अस्तु द्विपदे। शं चतुष्पदे। ततः परिधानीयां त्रिः पठेत्। ॐ नमो ब्रह्मणे नमोऽग्नये नमः पृथिव्यै नम ओषधीभ्यो नमो वाचे नमो वाचस्पतये नमो विष्णवे नमो महते करोमि भद्रन्नो अपि वाचस्पतये नमः। शान्तिः शान्तिः शान्तिः। समाप्तौ यथाशक्ति दक्षिणादानम्।

इत्याश्वलायनीयघोषशान्तिः।

---

## अथ तैत्तिरीयाणां घोषशान्तिः।

परमेष्ठी ऋषिः आद्या षट्पदा जगती द्वितीया गायत्री इन्द्राये वा स्वस्तीति द्वे यजुषी। आ वात वाहि द्वे अनुष्टुभौ। यदतो वात पञ्चपदापंक्तिः। आवात आवात्विति द्वे गायत्र्यौ। भूः प्रपद्यइति अन्तरिक्षं इति प्राणापानाविति त्रीणि यजूंषि। द्युभिरक्तुभिरिति त्रिष्टुप्। कयानश्चित्र इति तिस्रोगायत्र्यः। वयः सुपर्णा इति त्रिष्टुप्। शन्नोदेवीरिति द्वे गायत्र्यौ। सुमित्रिया न इति दुर्मित्रिया इति द्वे यजुषी। आपो हिष्ठेति तिस्रो गायत्र्यः।

---

(१) एकोनशताभिर्ऋग्भिर्नैवं संख्या संवदति। इति सं।

पृथिवी शान्तेति अन्तरिक्षं शान्तिरिति द्यौः शान्तेति पृथिवी शान्तिरिति तयाहं शान्त्येति इह श्रीश्चेति षट् यजूंषि। तदायुश्चेत्यनुष्टुप्। तच्चक्षुः, इन्द्रियाय इति पञ्चदशादिपंक्तिश्चतुष्पदा। ब्रह्मणश्चोभयस्य त्रियंजुरादिका (?) मा मोदोषीरिति द्वे एकपदा गायत्री। मेधामनीषेति यजुः। आभिर्गीर्भिरित्यनुष्टुप् ब्रह्माग्रे ज्येष्ठमिति यजुः। विश्वेदेवा देवताः शान्तिपाठे विनियोगः। अथे ॐ शान्तिः शान्तिः शान्तिः।

इति तैत्तिरीयाणां घोषशान्तिः।

---

## [1]अथ महासौरशान्तिः।

"आरोग्यं भास्करादिच्छेत्" "आदित्यस्य सदा पूजन"मित्यादि वचनमेव तत्प्रमाणम्। तन्मन्त्रोपस्थानस्यापि पूजात्वादेव क्वचित् य एतेन सूर्य्यमहरहरुपतिष्ठन्ति तआयुश्मन्त आरोग्यवन्तो भवन्ति सर्व्वकाम्या भवन्ति सूर्य्यसायुज्यं गच्छन्तीति स्मर्य्यते। शातातपीये च जपैः सुरार्चनैरित्यादिना जपस्य रोगक्षयहेतुत्वेनोक्तत्वात्। उदुत्यं जातवेदसमिति त्रयोदशर्चं सूक्तं [2]द्रुआहं द्विषतेरथ(?)मित्यन्तं प्रस्कण्व ऋषिः गायत्रीच्छन्दः अन्त्याश्च तिस्रोऽनुष्टुभः। चित्रं देवानामिति षडृचं सूक्तं अदितिः शिशुः पृथिवी-

---

(१) उद्धृतः कस्मिंश्चित् महासौरशान्तिप्रकरणे बहुत्र भ्रमसङ्कुलत्वात् शोधनानर्हा इति यथायथं रक्षिताः। इति सं।

(२) P. द्रुआन्मगोऽहं • (!)।

रुतद्यौ(?)रित्यन्तं आङ्गिरसः कुत्स ऋषिः अनुष्टुप् छन्दः। इन्द्र-मिन्द्रावरुणमिति(?) त्र्यृचं पृथिवी विधन्त(?) इत्यन्तं चतुर्ऋचो दीर्घतमा ऋषिः त्रिष्टुप् छन्दः। हंसः शुचिषदित्यस्य गौतमपुत्रो वामदेव ऋषिः जगतीच्छन्दः। यद्‌यदसूर्य्ये(?)त्यस्य मित्रो ऋषिः अनुष्टुप् छन्दः इत्यस्य सूर्य्य इति तृचं 'कामपृष्टं रयस्तेना(?) इत्यन्तं मैत्रावरुणोवशिष्ठ ऋषिः विराट् छन्दः। उद्यत्येति च तिस्रोऽर्द्धर्चश्च विराट् छन्दः। उदित्यदर्शित(?)मिति तिस्रः मैत्रावरुणो वशिष्ठ ऋषिः दर्शत(?)मिति बृहती शास्तोशास्त(?)इति सतोबृहती तच्चक्षु(?)रित्युष्णिक् 'वण्महां (?) इति बृहती षट्सूर्य्य (?) इति सतोबृहती भृगुपुत्रोजमदग्नि ऋषिः नमो मित्रस्येति द्वादशर्चं सूक्तं सूर्य्यपुत्रोऽभिहिततपा ऋषिः जगतीच्छन्दः शताभवेति (?) त्रिष्टुप् सूर्य्योनोदिवस्पात्विति पञ्चर्चं सूक्तं सूर्य्यपुत्रोऽभिहिततमा ऋषिः जगतीच्छन्दः विभ्राड़िति त्र्यृचं सूक्तं सूर्य्यपुत्रोऽभिहिततमा ऋषिः आस्तारपंक्तिः आयङ्गौरिति तृचं सूक्तं सर्पसंज्ञा ऋषिः गायत्रीच्छन्दः। सर्व्वत्र सूर्य्योदेवता इति महासौरमन्त्राः सौर्य्योपस्थाने विनियुक्ताः। महाभारते सहस्रनामाधिकारे—

रोगार्त्तो मुच्यते रोगाद् बद्धो मुच्येत बन्धनात्।

विष्णुधर्म्मे शोदाल्भ्य उवाच,—

भगवन् प्राणिनः सर्व्वे ज्वररोगाद्युपद्रवैः।
दुष्टग्रहोपघातैश्च सर्व्वकालमुपद्रुताः॥

---

(१) P. कामं पूर्षं (?)।

(२) P. वण्महां (?)।

आभिचारिककृत्याभिः स्पर्शरोगैश्च दारुणैः ।
सदा संपीड्यमानास्तु तिष्ठन्ति मुनिसत्तम ॥
येन कर्म्मविपाकेन विषरोगाद्युपद्रवाः ।
न भवन्ति नृणां तन्मे यथावद् वक्तुमर्हसि ॥

पुलस्त्य उवाच ।

व्रतोपवासैर्यैं विष्णुर्नान्यजन्मनि तोषितः ।
ते नरा मुनिशार्दूल ग्रहरोगादिभागिनः ॥
यै र्न तत्प्रवणं चित्तं सर्व्वदैव नरैः कृतम् ।
विषज्वरग्रहाणां ते मनुष्या दाल्भ्य भागिनः ॥
आरोग्यं परमामृद्धिं मनसा यद्यदिच्छति ।
तत्तदाप्नोत्यसन्दिग्धं परत्राच्युततोषकृत् ॥
नाधीन् प्राप्नोति न व्याधीन् न विषग्रहबन्धनम् ।
कृत्यास्पर्शभवं वापि तोषिते मधुसूदने ॥
सर्व्वे दुष्टाः समास्तस्य सौम्यास्तस्य सदा ग्रहाः ।
देवानामप्यधृष्योऽसौ यस्य तुष्टो जनार्द्दनः ॥
यः समः सर्व्वभूतेषु यथात्मनि तथा परे ।
उपवासादिना येन तोषितो मधुसूदनः ॥
तोषिते तत्र जायन्ते नराः पूर्णमनोरथाः ।
अरोगाः सुखिनो भोगान् भोक्तारो मुनिसत्तम ॥
न तेषां शत्रवो नैव स्पर्शरोगाभिचारिकम् ।
ग्रहरोगादिकं वापि पापकर्म्म न जायते ॥

अव्याहतानि कृष्णस्य चक्रादीन्यायुधानि तम्।
रक्षन्ति सकलापद्भ्यो येन विष्णुरुपासितः॥

दाल्भ्य उवाच।

अनाराधितगोविन्दा ये नरा दुःखभागिनः।
तेषां दुःखाभिभूतानां यत्कर्त्तव्यं दयालुभिः॥
पश्यद्भिः सर्व्वभूतस्थं वासुदेवं महामुने।
समदृष्टिभिरासीनैस्तन्मम ब्रूहि शेषतः॥

पुलस्त्य उवाच।

गृहीत्वा तु समूलाग्रान् कुशान् शुद्धांश्च रोगिणः।
मार्ज्जयेत् सर्व्वगात्राणि कुशाग्रैर्दाल्भ्य शान्तिकृत्॥
रोगग्रहविषार्त्तानां कुर्य्यात् शान्तिमिमां शुभाम्।
विष्णुभक्तो विशेषेण शुचिस्तद्गतमानसः॥
ध्यात्वा भूत्वा शुचिर्विष्णोर्नामान्यङ्गेषु विन्यसेत्।
पूर्व्वं नारायणः पातु वारिजाक्षस्तु दक्षिणे॥
प्रद्युम्नः पश्चिमे पातु वासुदेवस्तथोत्तरे।
ऐशान्यां रक्षको विष्णुराग्नेय्यान्तु जनार्द्दनः॥
नैर्ऋत्यां पद्मनाभस्तु वायव्यां मधुसूदनः।
ऊर्द्ध्वं गोवर्द्धनो देवो धरण्यान्तु जनार्द्दनः॥
एताभ्यो दशदिग्भ्यस्तु सर्व्वतः पातु केशवः।
अङ्गुष्ठाग्रे च गोविन्दस्तर्ज्जन्याञ्च [1]गदाधरः॥

---

(१) P चक्रीधरः।

मध्यमायां हृषीकेशोऽनामिकायां त्रिविक्रमः।
कनिष्ठायां न्यसेद्‌ विष्णुं करमध्ये च वामनम्‌॥
शिखायां केशवं न्यस्य मूर्द्ध्नि नारायणं न्यसेत्‌।
माधवञ्च ललाटे तु गोविन्दन्तु भ्रुवोः स्मृतम्‌॥
चक्षुर्मध्ये न्यसेत्‌ कृष्णं श्रवणे मधुसूदनम्‌।
त्रिविक्रमं कपोलयोर्वामनं कर्णमूलयोः॥
दामोदरं दन्तपंक्तौ वराहं चिबुके तथा।
जिह्वायां वासुदेवन्तु त्वक्‌स्थितं गरुड़ध्वजम्‌॥
हृषीकेशं चोत्तरोष्ठे पद्मनाभं तथाधरे।
वैकुण्ठं कण्ठमध्ये तु अनन्तं नासिकोपरि॥
दक्षिणे तु भुजे विप्र विन्यसेत्‌ पुरुषोत्तमम्‌।
वामे भुजे महायोगं राघवं हृदि विन्यसेत्‌।
पीतवासं सर्व्वतनौ हरिं नाभ्यान्तु विन्यसेत्‌।
करे तु दक्षिणे विप्र ततः सङ्कर्षणं न्यसेत्‌॥
वामे रिपुहरं विद्यात्‌ कटिमध्ये जनार्द्दनम्‌।
पृष्ठे क्षितिधरं विद्यात्‌ अच्युतं स्कन्धयोर्द्दयोः॥
वक्षःस्थले माधवन्तु कक्षयोर्योगशायिनम्‌।
स्वयम्भुवं मेढ्रमध्ये ऊर्व्वोश्चैव गदाधरम्‌॥
चक्रायुधं जानुमध्ये जङ्घयोरच्युतं तथा।
गुल्फयोर्नरसिंहन्तु पादपीठे मितौजसम्‌॥
अङ्गुल्यां श्रीधरं न्यस्य पङ्कजाक्षञ्च सन्धिषु।
रोमकूपे गुड़ाकेशं कृष्णं रक्तास्थिमज्जसु॥

नखेषु माधवश्चैव न्यसेत् पादतलेऽच्युतम्।
एवं न्यासविधिं ज्ञात्वा यत् कार्य्यं शृणुत द्विजाः॥
वैष्णवेन तु कर्त्तव्या सर्व्वसिद्धिप्रदायिनी।
पूजाकाले च देवस्य स्नानकाले तथैवच॥
होमारम्भे च कर्त्तव्यं त्रिसन्ध्यासु च नित्यशः।
अभयं सर्व्वभूतेभ्यो विष्णुलोकञ्च गच्छति॥

ॐनमः परमार्थायेत्याद्यपामार्जनमन्त्रस्य पुलस्त्य ऋषिः अनुष्टुप् छन्दः नरसिंहो देवता हरामुकस्येति वीजं तप्तहाटक केशान्त इति कीलकं अभीष्टसिद्धौ विनियोगः। पुलस्त्य उवाच।

ॐनमः परमार्थाय पुरुषाय महात्मने।
अरूपबहुरूपाय व्यापिने परमात्मने॥
निष्कल्मषाय शुद्धाय ध्यानयोगरताय च।
नमस्कृत्य तु वक्ष्यामि यत्तत् सिद्ध्यन्तमेवच॥
त्रिविक्रमाय रामाय वैकुण्ठाय नराय च।
नमस्कृत्वा प्रवक्ष्यामि यत् तत् सिद्ध्यन्तमेवच॥
वराह नरसिंहेश वामनेश त्रिविक्रम।
हयग्रीवेश सर्व्वेश हृषीकेश हराशुभम्॥
अपराजित चक्राद्यैश्चतुर्भिः परमायुधैः।
अखण्डितानुभावैस्त्वं सर्व्वदुष्टहरो भव॥
हरामुकस्य दुरितं दुष्कृतं दुरुपोषितम्।
मृत्युबन्धाभिरहितं दुरिष्टस्य च यत् फलम्॥

[1]परापध्यानराहित्यं प्रत्युक्तं परिचारिकम् । (?)
परस्पर्शमहारोगप्रयोगं जरयाजर ॥
ॐनमो वासुदेवाय नमः कृष्णाय खड्गिने ।
नमः पुष्करनेत्राय केशवायादिचक्रिणे ॥
नमः कमलकिञ्जल्कपीतनिर्मलवाससे ।
महाहवरिपुस्कन्धघृष्टचक्राय चक्रिणे ॥
दंष्ट्रोद्धृतक्षितिभृते त्रयीमूर्त्तिमते नमः ।
महायज्ञवराहाय शेषभोगोपशायिने ॥
तप्तहाटककेशान्त ज्वलत्पावकलोचन ।
वज्राधिकनखस्पर्श दिव्यसिंह नमोऽस्तु ते ॥
काश्यपाय हिमस्ताय ऋगयजुःसामरूपिणे ।
तुभ्यं वामनरूपाय क्रमते गां नमो नमः ॥
वराहशेषदुष्टानि सर्व्वपापहराणि वै । (?)
मर्द्द मर्द्द महादंष्ट्र मर्द्द मर्द्द च तत् फलम् ॥
नरसिंह करालास्य दन्तप्रान्तानलोज्ज्वल ।
भुक्तिमुक्तिनिदानेन दुष्टान् न्यस्यार्त्तिनाशन ॥
ऋग्-यजुः-सामगर्भाभि र्वाग्भिर्वामनरूपधृक् ।
प्रशमं सर्व्वदुष्टानि नमनस्य (?) जनार्द्दन ॥
ऐकाहिकं द्व्याहिकं च तथा त्रिदिवसज्वरम् ।
चातुर्थिकं तथात्युग्रं तथैकसन्ततज्वरम् ॥

---

(1) P. परापध्यानरहितैः प्रत्युक्तं गर्भचारिकम् । (!)

दोषोत्थं सन्निपातोत्थं तथैव चान्तकं ज्वरम् ।
शमं नयाशु गोविन्द छिन्धि छिन्ध्यस्य वेदनाम् ॥
नेत्रदुःखं शिरोदुःखं दुःखञ्चोदरसम्भवम् ।
अन्तःश्वासं वहिः श्वासं परितापं सवेपथुम् ॥
गुदघ्राणाङ्घ्रिरोगांश्च कुष्ठरोगं तथा क्षयम् ।
कामलादीन् तथा रोगान् प्रमेहांश्चापि दारुणान् ॥
ये वातप्रभवा रोगा ये च पित्तसमुद्भवाः ।
कफोद्भवाश्च ये केचिद् ये चान्ये सान्निपातिकाः ॥
अधातवश्च ये रोगा लूताविस्फोटकादयः ।
ते सर्व्वे प्रलयं यान्तु वासुदेवापमार्जिताः ॥
विलयं यान्तु ते सर्व्वे विष्णोरुच्चारणेन तु ।
क्षयं गच्छन्तु चाशेषास्ते चक्राभिहता हरेः ॥
अच्युतानन्तगोविन्दनामोच्चारणभेषजात् ।
नश्यन्ति सकला रोगाः सत्यं सत्यं वदाम्यहम् ॥
स्थावरं जङ्गमं वापि कृत्रिमं वापि यद् विषम् ।
दन्तोदभवं नखोद्भूतं आकाशप्रभवं विषम् ॥
लूतादिप्रभवं यच्च विषमत्यन्तदुःखदम् ।
शमं नयतु तत्सर्व्वं कीर्त्तितोऽस्य जनार्द्दनः ॥
ग्रहान् प्रेतग्रहांश्चैव तथावै डाकिनीग्रहान् ।
वेतालांश्च पिशाचांश्च गन्धर्व्वान् यक्षराक्षसान् ॥
शकुनीपूतनाद्यांश्च तथा वैनायकान् ग्रहान् ।
मुखमण्डां तथा क्रूरां रेवतीं वृद्धरेवतीम् ॥

वृद्धकाख्यांस्तथा घोरांस्तथा मातृग्रहानपि।
बालस्य विष्णोश्चरितं हन्तु बालग्रहानिमान्॥
वृद्धानां ये ग्रहाः केचिद् ये च बालग्रहाः क्वचित्।
नरसिंहस्य ये दृष्ट्या दग्धा ये चापि यौवने॥
सटाकरालवदनो नरसिंहो महाबलः।
ग्रहानशेषान्निःशेषान् करोतु जगतः पतिः॥
नरसिंह महासिंह ज्वलमानोज्ज्वलानन।
ग्रहानशेषान् सर्व्वेश खाद खादाग्निलोचन॥
ये रोगा ये महोत्पाता यद्विषं ये महाग्रहाः।
यानिच ग्रहभूतानि ग्रहपीड़ाश्च दारुणाः॥
शस्त्रक्षतेषु ये दोषा ज्वालागर्द्दभकादयः।
तानि सर्व्वाणि सर्व्वात्मन् परमात्मन् जनार्द्दन॥
अमोघकीर्त्ते सर्व्वात्मन् नित्याखण्डितशासन।
किञ्चिद् रूपं समास्थाय वासुदेवास्य नाशय॥
क्षिप्त्वा सुदर्शनं चक्रं ज्वालामालातिभीषणम्।
सर्व्वदुष्टोपशमनं कुरु देववराच्युत॥
सुदर्शन महाज्वाल छिन्धि छिन्धि महारव।
सर्व्वदुष्टानि रक्षांसि क्षयं यान्तु विभीषिताः॥
प्राच्यां प्रतीच्यां दिशि च दक्षिणोत्तरतस्तथा।
रक्षां करोतु सर्व्वात्मा नरसिंहः स्वगर्जितैः॥
भुव्यन्तरीक्षे च तथा पार्श्वतः पृष्ठतोऽग्रतः।
रक्षां करोतु भगवान् बहुरूपी जनार्द्दनः॥

यथा विष्णु र्जगत् सर्व्वं सदेवासुरमानुषम् ।
तेन सत्येन दुष्टानि शममस्य व्रजन्तु वै ॥
यथा विष्णौ स्मृते सद्यः संक्षयं याति पातकम् ।
सत्येन तेन सकलं दुष्टमस्य प्रशाम्यतु ॥
परमात्मा यथा विष्णु र्वेदान्तेष्वभिधीयते ।
तेन सत्येन सकलं दुष्टमस्य प्रशाम्यतु ॥
यथा यज्ञेश्वरो विष्णुर्वेदान्तेष्वभिधीयते ।
तेन सत्येन सकलं यन्मयोक्तं तथाऽस्तु तत् ॥
शान्तिरस्तु शिवञ्चास्तु प्रणश्यत्वसुखञ्च यत् ।
वासुदेवशरीरोत्थैः कुशैर्निर्मार्जितं मया ॥
अपामार्जितगोविन्दो नरोनारायणस्तथा ।
तथास्तु सर्व्वदुःखानां प्रशमो वचनाद्धरेः ॥
शान्तिं समस्तरोगास्ते ग्रहाः सर्व्वे विषाणि च ।
भूतानि च प्रयान्त्वाशु संस्तुते मधुसूदने ॥
एतत् समस्तरोगेषु भूतग्रहभयेषु च ।
अपामार्जनकं शस्तं विष्णुनामाभिमन्त्रितम् ॥

एते कुशा विष्णुशरीरसम्भवा
जनार्द्दनोऽहं(यं) स्वयमेव चागतः ।
हतं मया दुष्टमशेषमस्य च
स्वस्थो भवत्वेष यथा, वचो हरेः ॥

शान्तिरस्तु शिवञ्चास्तु दुष्टमस्य प्रशाम्यतु ।
यदस्य दुरितं किञ्चित् तत्क्षिप्तं लवणार्णवे ॥

स्वास्थ्यमस्य सदैवास्तु हृषीकेशस्य कीर्त्तनात् ।
यत एवागतं पापं तत्रैव पथि गच्छतु ॥
एतद्रोगादिपीड़ासु जन्तूनां हितमिच्छता ।
विष्णुभक्तेन कर्त्तव्यमपामार्जनकं परम् ॥
अनेकसर्व्वदुष्टानि प्रशमं यान्त्यसंशयम् ।
सर्व्वभूतहितार्थाय कुर्य्यात् तस्मात् सदैव हि ॥

अत्र वरणाभावे विष्णुभक्तेन करुणया स्वेच्छया कार्य्यम् । अविशेषात् स्वदेहेऽपि ।

इत्यपामार्ज्जनस्तोत्रम् ।

---

## विष्णुधर्म्मे विष्णुपञ्जरस्तोत्रम् ।

शौनक उवाच ।

त्रिपुरं जघ्नुषः पूर्व्वं ब्रह्मणा विष्णुपञ्जरम् ।
शङ्करस्य कुरुश्रेष्ठ रक्षणाय निरूपितम् ॥
वागीशेन च शक्रस्य बलं हन्तुं प्रयास्यतः ।
तस्य स्वरूपं वक्ष्यामि तन्निबोध महीपते ॥
विष्णुः प्राच्यां स्थितश्चक्री विष्णुर्दक्षिणतो गदी ।
प्रतीच्यां शार्ङ्गधृक् विष्णु विष्णुः खड्गी तथोत्तरे ॥
तिर्य्यङ्मनुष्यकुष्माण्डप्रेतादीन् हन्तशेषतः ।
खड्गधाराज्वलत्-ज्योत्स्नानिर्द्धूता ये समाहताः ॥

तेषान्तु सौम्यता यद्यो गरुड़ेनेव पन्नगाः।
ये कुष्माण्डा स्तथा यक्षा ये दैत्या ये निशाचराः॥
प्रेता विनायकाः क्रूरा मनुष्या जम्बुकाः खगाः।
सिंहादयो ये पशवो दन्दशूकाश्च पन्नगाः॥
सर्व्वे भवन्तु ते सौम्याः कृष्णशङ्खरवाहताः।
चित्तवृत्तिहरा ये मे ये च मे स्मृतिहारकाः॥
बलौजसाञ्च हर्त्तारश्छायाविभ्रंशकाश्च ये।
ये चोपभोगकर्त्तारो ये च लक्षणनाशकाः॥
कुष्माण्डास्ते प्रणश्यन्तु विष्णुचक्ररवाहताः।
बुद्धिस्वास्थ्यं मनःस्वास्थ्यं स्वास्थ्यमैन्द्रियिकं तथा॥
ममाऽस्तु देवदेवस्य वासुदेवस्य कीर्त्तनात्।

पृष्ठे पुरस्तान्मम दक्षिणोत्तरे
विकोणतश्चास्तु जनार्द्दनो हरिः।
तमाद्यमीशानमनन्तमीश्वरं
जनार्द्दनं न प्रणतोऽवसीदति॥
यथा परं ब्रह्म हरिस्तथा परं
जगत्स्वरूपश्च स एव केशवः।
सत्येन तेनाच्युतनामकीर्त्तनात्
प्रणाशमेतु त्रिविधं ममाशुभम्॥

तथा नृसिंहकल्पे पातालनृसिंहाधिकारे,—

यन्मन्त्रजपसिद्धार्थताड़िता डाकिनीग्रहाः।
विद्रवन्ति भयत्रस्ताः पिशाचा ज्वरराक्षसाः॥

इति । अनेन रक्षा ।

अङ्घ्रीभ्यामक्षमाले तदुदरवितते खेटखड्गे च दोर्भ्यां
चापं बाणं कराभ्यां कमलमपि गदां पाशमप्यङ्कुशञ्च ।
ऊर्वोर्निक्षिप्य दैत्यं तदुदरकुहरं दारयन्तञ्च दोर्भ्यां
रक्ताज्वालामयं तं ज्वररणसमये चिन्तये दिव्यसिंहम् ॥

ॐ नमो भगवते नृसिंहाय प्रदीप्तसूर्य्यकोटिसहस्रसमतेजसे वज्रनखदंष्ट्रायुधाय स्फुटविकटविकीर्णकेशरमणिक्षुभितमहाम्भोधिदुन्दुभिनिर्घोषाय सर्व्वमन्त्रोत्ताराय एह्येहि भगवन्नरसिंह पुरुषपरापरब्रह्म सत्येन स्फुर स्फुर विजृम्भ विजृम्भ आक्रम आक्रम गर्ज गर्ज मुञ्च मुञ्च सिंहनादान् विद्रावय विद्रावय आवेशय आवेशय सर्व्वमन्त्ररूपाणि सर्व्वमन्त्रजातीश्च हन हन छिन्धि छिन्धि संक्षिप संक्षिप दर दर दारय दारय स्फुट स्फुट स्फोटय स्फोटय ज्वालामालासङ्घातमय सर्व्वतोऽनन्तज्वालवज्राशनिरवेण सर्व्वपातालान् छादय छादय सर्व्वतोऽनन्तज्वालवज्रशरपञ्जरेण सर्व्वपातालान् परिवारय सर्व्वपातालासुरलोकवासिनां हृदयान् आकर्षय आकर्षय शीघ्रं दह दह पच पच मथ मथ शोषय शोषय विकृन्त विकृन्त तावद् यावन्मे वशमागताः । पातालेभ्यः फट् आसुरीभ्यः फट् यन्त्ररूपेभ्यः फट् सहायमागच्छ भगवन् नृसिंहरूप विष्णो सर्व्वापद्भ्यः सर्व्वभयरूपेभ्यः रक्ष रक्ष हूं फट् स्वाहा नमोऽस्तु ते । इति केचित् पठन्ति ।

---

## रोगार्त्तेन नामत्रयजपः कार्य्यः।

तद्विधिश्च। ब्रह्मोवाच—

अच्युतानन्तगोविन्दैश्चतुर्थ्यन्तैस्त्रिभिः पदैः।
नमोऽन्तैर्जपकाले च मूलमन्त्र उदाहृतः॥
अथवाऽपि समस्तैस्तु चतुर्थ्यन्तैकमन्त्रता।
तदृषिः शौनको ज्ञेयः पृथक्पक्षे पराशरः॥
व्यासश्च नारदश्चैव विराट् छन्द उदाहृतम्।
परं ब्रह्म तथा प्रोक्ता हरिणा देवतेत्यपि॥
जपकाले च पूजायां नमः शब्दं प्रयोजयेत्।
तर्पणे तर्पयामीति द्वितीयान्तं प्रयोजयेत्॥
स्वाहान्तु होमकाले च चतुर्थ्यन्तं प्रयोजयेत्।
षडङ्गमन्त्र एतैश्च हृदयादिक्रमेण तु॥
नेत्रान्तं स्वयमेवैते प्रयोज्या मन्त्रिसत्तमैः।
अविदित्वा ऋषिच्छन्दोदेवताङ्गान्यपि द्विजाः॥
केवलं स्वयमेवैतज्जप्तारं रक्षति ध्रुवम्।
साङ्गन्तु योजयेन्नित्यं सप्त सप्त च सप्त च॥
अथ ध्यानं प्रवक्ष्यामि सर्व्वपापप्रणाशनम्।
शङ्खचक्रधरं देवं चतुर्भुजं किरीटिनम्॥
सर्व्वायुधैरुपेतं तं गरुडोपरिसंस्थितम्।
सनकादिमुनीन्द्रैश्च सर्व्वदेवैरुपासितम्॥

श्रीभूमिसहितं देवमुदितादित्यसन्निभम्।
प्रातरुद्यत्सहस्रांशुमण्डलोपमकुण्डलम्॥
सर्व्वलोकस्य रक्षार्थमनन्तं नित्यमेव च।
अभयं वरदञ्चैव प्रयच्छन्तं मुदान्वितम्॥
एवं ध्यात्वा हरिं नित्यं परब्रह्मस्वरूपिणम्।
प्रातर्मध्यन्दिने चैव सायाह्ने च विशेषतः॥
अर्च्चयेद् देवदेवेशं गन्धपुष्पजलादिभिः।
हविषा जलेन गन्धैश्च पुष्पैश्च मनसा हरिम्॥
अर्च्चन्ति शुचयो नित्यं ध्यानेन रविमण्डले।
किञ्चिद्ध्यानार्चनं कृत्वा जपेन्नित्यमतन्द्रितः॥
अशुचिश्चात्मना वापि मनसा पापमाचरन्।
शुचिरेव भवेन्नित्यं नामत्रयजपाद् द्विजः॥
अष्टोत्तरसहस्रं वा शतं वा जपसंख्यया।
रोगार्त्तान् मार्जयेन्मूर्द्ध्नि कुशैरेवाद्भिरेव वा॥
अभिषिञ्चेत् तथा मूर्द्ध्नि रविवारे तथाम्भसा।
नित्यमेव पिबेत् तोयमष्टाविंशतिसंख्यया॥
हुते घृततिलैर्दूर्व्वागुलूचीभिः पृथक् पृथक्।
लक्षं चैव जपेन्मन्त्रं महारोगस्य शान्तये॥
श्रीवृक्षाश्वत्थमूले वा रोगिणं संस्पृशन् जपन्।
स्पृशन् जप्ता निरीक्षेत आदित्यं मनसा स्मरन्।
एवं कृतवतः पुंसो रोगशान्तिर्भविष्यति॥

तथा,—

रविवारे जले स्थित्वा नाभिमात्रे जपेन्नरः ।
अष्टोत्तरसहस्रन्तु ज्वरशान्तिर्भविष्यति ॥
क्रूरग्रहादिग्रस्तन्तु स्पृष्ट्वा लक्षं जपेन्मनुम् ।
असाध्योऽपि भवेत्स्वस्थो भस्मना ताड़येद्बुधः ॥

सुरार्च्चना च रोगशान्तये । आदित्यपूजा । ग्रहपूजा च ।

महाभारते विष्णुपूजायाम्,—

तमेव चार्च्चयेन्नित्यं भक्त्या पुरुषमव्ययम् ।
ध्यायंस्तुवन्नमस्यंश्च सर्व्वदुःखातिगो भवेत् ॥

तथा,—

चतुर्विधा भजन्ते मां द्विजाः सुकृतिनोऽर्जुन ।
आर्त्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ ॥

आर्त्तो रोगी । धनिष्ठानक्षत्रे च सुपूजा व्याधिनाशाय ।
द्विजनक्षत्रे मम पूजा रोगनाशाय ।

ब्रह्मपुराणनारदीयसंहितयोः,—

यं यं काममभिध्यायन् यजते नरकेशरीम् (?) ।
तं तं काममवाप्नोति नरो वै नात्र संशयः ॥

रुद्राभिषेके बौधायनो व्याधिविमोचनार्थी । विष्णुधर्म्मोत्तरे,—

सर्व्वेषामेव कामानामीश्वरो भगवान् हरिः ।
तस्य सम्पूजनादेव सर्व्वकामार्थमश्नुते ॥
विष्णुं सहस्रमूर्द्धानं चराचरजगद्गुरुम् ।
स्तुवन्नामसहस्रेण ज्वरान् सर्व्वान् व्यपोहति ॥

त्रिशुक्लञ्च बलिं दत्त्वा मुच्यते मानवो ज्वरात्।
घृतोदनं पायसञ्च तथा दध्योदनं द्विज॥
त्रिशुक्लस्तु बलिः पूर्व्वं सर्व्वकामप्रदः शुभः।

विष्णवे एष त्रिशुक्लबलिर्नम इति बलिदानम्। एवमन्यत्।

तिलचोद्रघृतैर्देवं स्नापयित्वा जनार्द्दनम्।
क्षणत्रयेणानुलिप्य सम्पूज्य कुसुमैः सितैः॥
पञ्चमुद्गं बलिं दत्त्वा ह्यतीसारात् प्रमुच्यते।

क्षणत्रयं कस्तूरिकाकर्पूरकुङ्कुमानि।

वटकानि च भक्षाणि कल्माषं गाड़वं तथा।
मुद्गं पुष्पोदनञ्चैव पञ्चमुद्गो बलिः स्मृतः॥

पुष्पमिश्रमोदनं पुष्पोदनम्। गाड़वाः स्वाद्वम्लकटुपाकवस्त्वाद्याः प्रलेह्याः।

त्रिसरस्नापितं देवं त्रिसुगन्धानुलेपितम्।
कृत्वा दत्वा त्रिशुक्लञ्च बलिं कासाद् विमुच्यते॥

घृततैलमधुस्नानं त्रिसरस्नानम्। कर्पूरकुङ्कुमचन्दनैस्त्रिभिः सुगन्धिभिरनुलेपनम्। त्रिशुक्लबलिः पूर्व्वोक्तः।

तथा,—

स्नापयित्वा च तैलेन त्रिभिः क्षणैर्विलेपयेत्।
पञ्चमाषं बलिं दत्वा वातव्याधिं विमुञ्चति॥

क्षणत्रयमुक्तम्।

कल्माषेण्डरिकासचटकैर्गाड़वान्वितैः।
पञ्चमाषो बलिः प्रोक्तः सदामांसयुतैर्द्विजाः॥

द्विस्नेहस्नापितं देवं शीतोष्णेनानुलेपितम् ।
सम्पूज्य यमलैः पुष्पैः कोठं व्याधिं विमुञ्चति ॥

घृतक्षीराभ्यां स्नानं द्विस्नेहस्नानम् । चन्दनकुङ्कुमाभ्यामनुलेपनं शीतोष्णानुलेपनम् । जातीनीलोत्पलं यमलं पुष्पम् ।

तथा,—

संस्नाप्य पञ्चगव्येन दत्वा पञ्चानुलेपनम् ।
पञ्चशस्यबलिं दत्वा कुष्ठं त्यजति मानवः ॥

पञ्चगव्यं प्रसिद्धम् ।

चन्दनागुरुकर्पूरमृगदर्पैः सकुङ्कुमैः ।

पञ्चानुलेपनम् ।

सपिष्टकमसूरैश्च समशस्योदनैश्च वै ।

पञ्चशस्यो बलिः ।

---

## सर्व्वव्याधिसाधारणीं पूजामाह ।

पञ्चभिः स्नापयित्वातु रसै र्देवं सनातनम् ।
अनुलिप्य च धर्म्मज्ञ तथा पञ्चसुगन्धिना ॥
पञ्चवर्णानि पुष्पाणि तथा दत्वा यथाविधि ।
धूपञ्च पञ्चनिर्यासं दग्ध्वा चैवाप्यनन्तरम् ॥
ततस्तु पञ्चमधुरं बलिं सम्यक् निवेदयेत् ।
एतस्माद् व्याधितः पूर्व्वं मुच्यते नात्र संशयः ॥
घृतं क्षीरं तथा क्षौद्रं दधि क्षीरञ्च पञ्चमम् ।

इति पञ्चरसस्नानम्। पञ्चसुगन्धीन्युक्तानि। पीतशुक्लकृष्ण-रक्तश्यामवर्णानि पञ्चवर्णपुष्पाणि। शल्लकीगुग्गुलुकर्पूरवकुलकस्तू-रिकाभिः पञ्चनिर्य्यासधूपः। क्षीरं क्षौद्रं घृतं द्राक्षां शर्कराञ्च पञ्चमधुरं बलिं दद्यात्।

चातुर्म्मास्यव्रते प्रत्यहं गणेशप्रणामाद् वा रोगनाशः। महा-स्नानाधिकारे,—

राजाग्निचौरदुर्भिक्षसदारोगाद्युपद्रवे।
उत्तमं स्नपनं कार्य्यं सर्व्वदोषोपशान्तये॥

इति वचनाद् विष्णोर्महास्नानं रोगशान्तये कर्त्तव्यम्। वशिष्ठकल्पानुसारे त्र्यम्बकमन्त्रेण महेशपूजायां रोगनाशः। पूजा च पञ्चोपचारेण। चित्रपटे घृतकुम्भे वा। लिङ्गे वा। प्रथममेवंरूपेण त्र्यम्बकध्यानं कार्य्यं मुक्तास्फटिकसङ्काशं रोगान् प्रति क्रोधावेशेन किञ्चिदारक्तमुखं साधकान् प्रति सुप्रसन्न-मुखं चन्द्ररश्मिसमरश्मिभिः परीतं देव्या सपीनोत्तुङ्गकुचया सर्व्वावयवसन्निर्यातनेत्रया मुकुटालङ्कृतया माणिक्याभरणया एक-हस्तस्थशर्करापक्वखाद्यादिपूर्णपात्रया अर्द्धहस्तद्वयस्थपाशाङ्कुशया दक्षिणाधःकरस्थदर्व्या परिवेषितं दध्यन्नं हिरण्मयेन पात्रेण दक्षिणाधःस्थले गृह्णानं त्रिशूलमुद्गरनागपाशाङ्कुशयुक्तहस्त-चतुष्टयं एकहस्तेन दध्यन्नकवलं ग्रसन्तं अपरहस्तेन वायुमुद्रया शिरसि केशान् संयमयन्तं एवं षट्हस्तं हिरण्मयचन्द्रकान्तमय-सप्तदशघटैः ऋषिभि र्देवकन्याभिश्चानवरतं मुहुर्मुहुरमृताम्भसा

स्तूयमानं ब्रह्मादिदेवैर्बृहस्पतिमुखमुनिभिः सिद्धार्थाक्षतदूर्व्वाक्षत-हस्तैर्नानास्तुतिभिः स्तूयमानं ध्यात्वा पूजनम् ।

अथवा—

येन रोगेण यश्चार्त्तस्तस्य रोगस्य चोपरि ।
नृत्यन्तं विभुमीशानं चिन्तयेत् तस्य शान्तये ॥
सञ्चिन्त्यैवं महादेवं ततः पञ्चोपचारकैः ।
पूजयेत् परया भक्त्या द्रव्यैर्द्रव्यमयै(?)रपि ॥

अत्र रोगमूर्त्तिं चिन्तयित्वा तस्योपरि नृत्यमानमीशं चिन्तयित्वा पूर्व्वोक्तान्यतमस्थाने पञ्चोपचारेण पूजनम् । एतावतापि रोगशान्तिः ।

## इति कर्म्मविपाकोक्ता सुरार्चनारूपा रोगशान्तिः ।

---

जपैः सुरार्चनैर्होमैर्दानैस्तेषां शमो भवेत् ।

इति कर्म्मविपाकोक्तहोमरूपा द्वितीयरोगशान्तिरुच्यते ।

तत्रच,—

शान्तिके गणशान्तिश्च ग्रहशान्तिकपूर्व्वकम् ।

इति शातातपीयकर्म्मविपाकोक्तेर्गणशान्तिर्विनायकशान्तिः कार्य्या । तथा ग्रहशान्तिश्च कार्य्या ।

जपकालेऽपि तत्सूक्तं कुष्माण्डगणहोमवत् ।
सर्व्वपापविशुद्ध्यर्थं कुष्माण्डगणहोमवत् ॥

इति कर्म्मविपाकोक्तेः कुष्माण्डहोमो गणहोमश्च कर्म्मविपाक-महार्णवविधिना सर्व्वरोगेषु कार्य्यः ।

वशिष्ठकल्पे,—

आरोग्यकामो जुहुयादर्ककाष्ठैर्घृतप्लुतैः।
पयसा वापि जुहुयाद् गव्येनाज्येन वा पुनः॥
पलाशस्य समिद्भि र्वा सर्व्वरोगोपशान्तये।
एवं रोगः प्रशान्तः स्याद् रोगाणामप्यनुद्भवः॥
अच्छिद्रैराम्रपत्रैस्तु पयोऽक्तैर्जुहुयाज्ज्वरे।
गुलूचीगण्डिकाभि र्वा खादिरै र्वा घृतप्लुतैः॥
प्रमेहे मधुना होमः पयसा वा घृतेन वा।
औदुम्बरैः समिद्भि र्वा होम आमलकेन वा॥

आमलकेन फलेन।

गुग्गुलैश्चात्र होमः स्यात् तिलैः कृष्णैर्घृतेन वा।
वर्द्धमानसमिद्धोमः सद्यः शूलहरो भवेत्॥
करञ्जसमिधैर्वापि निर्गुण्डीसमिधैस्तथा।
तैलाभ्यक्तैश्च जुहुयाद् वातरोगप्रशान्तये॥
शान्त्यर्थमक्षिरोगाणां पलाशसमिधैर्हुनेत्।
उन्मत्तसमिधा होमादपस्माराद् विमुच्यते॥
कुबेराक्षीन्द्रवल्लीभ्यामन्त्ररोगप्रशान्तये।
तैलेनाभ्यज्य जुहुयाद् वज्रकन्दैस्तथैव च॥
मातुलुङ्गगुलूचीभ्यां होमः कामलनाशनः।
मधुत्रितयहोमेन शान्तिः स्याद् राजयक्ष्मणः॥
होमेनोत्पलमूलानां गर्भरोगः प्रशाम्यति।
इक्षून् मधुरिकाशान्तिं मधुत्रितयसंयुतैः॥

सक्तुकैर्वापि जुहुयात् पलाशै र्वा घृतप्लुतैः।
देवकाष्ठैश्च जुहुयात् कण्ठरोगप्रशान्तये॥
दन्तरोगेषु जुहुयाद् दन्तकाष्ठैर्घृतप्लुतैः।
अथवा तैलसंयुक्तै र्जुहुयाद् गौरसर्षपैः॥
ये चान्ये मुखजा रोगा कण्ठरोगास्तथैव च।
ते सर्व्वे प्रशमं यान्ति तिलहोमात् घृतप्लुतात्॥
औरसानाञ्च सर्व्वेषां रोगाणां शान्तिमिच्छता।
शुण्ठीलवणपञ्चांश्च होमं कुर्य्याद् द्विजोत्तमः॥
अन्तस्तापे तु जुहुयात् पद्मपत्रैर्घृतप्लुतैः।
दूर्व्वाभि र्वा पयोऽक्ताभि र्जुहुयाच्चन्दनेन वा॥
शृङ्गाटकसमिद्धोमादतीसारः प्रशाम्यति।
वैद्यशास्त्रेषु यत्प्रोक्तं यस्य रोगस्य भेषजम्॥
तस्य रोगस्य शान्त्यर्थं तेन तेन तु होमयेत्।
अथवानेन मन्त्रेण पावमानीभिरेव वा॥
ज्वररोगग्रहादीनां सर्व्वेषामेव शान्तये।
अथवा तर्पणं कुर्य्यान्मन्त्रं पूर्व्वोक्तसंख्यया॥
नद्यां समुद्रगामिन्यां तड़ागेषु सरित्सु च।
सर्व्वदा नियताहारो जपेन्मन्त्रं समाहितः॥
शान्तये सर्व्वरोगाणां तथैवानुद्भवाय च।
एवं होमं द्विजः कुर्य्यात् तर्पणं जपपूर्व्वकम्॥
एकाहं वा द्व्यहं वापि दशाहं द्वादशाहकम्।
पक्षं मासं द्विमासं वा मासत्रयमथापि वा॥

अथवा चतुरोमासान् षण्मासानथ हायनम्।
अब्दद्वयं त्रयं वापि मन्त्री कुर्य्यात् समाहितः।
आकल्पं कालं कुर्व्वीत जपहोमादिकाः क्रिया:॥

अत्र कालविशेषानुसारेण शतं सहस्रमयुतं नियुतं वा लक्षं वा कोटी र्वा कल्पनीयम्।

---

## रोगशान्तये दानानि।

प्रतिज्ञातिदानं कर्म्मविपाकसारे,—स्वस्ति वाच्य सङ्कल्प्याचार्य्य-ब्रह्मजापकचतुष्टयवरणम्। आचार्य्यकर्म्म। षोड़शद्वादशाष्टहस्तो वा मण्डपः। त्रिभागेण मध्ये वेदी। आग्नेय्यां दिशि कुण्डम्। स्थण्डिलं वा हस्तमितम्। स्वर्णपलेनातङ्कनाम्नी रोगप्रतिमा। तदर्द्धेन सूर्य्यप्रतिमा। अथवा तदर्द्धेन द्वयो र्वा पलमानेन। व्याधिप्रतिमालक्षणं तत्तद्ग्राधेर्भिन्नम्।

सूर्य्यलक्षणम्। सूर्य्यो द्विलोचनः पद्मयुतहस्तद्वयः। आचार्य्यः कृतोपवासो रात्रौ आतङ्कनाम्नीममुकव्याधिदेवता-मधिवासयामीति मण्डपवेद्यां रोगप्रतिमां संस्थाप्य आतङ्कनाम्न्यै अमुकरोगदेवतायै नम इति षोड़शोपचारैः पूजयेत्। ॐ घृणिः सूर्य्य आदित्यः श्रीरित्यष्टाक्षरमन्त्रेणाधिदैवतसूर्य्यप्रतिमामधिवास्य पूजयेत्। अर्द्धरात्रे मण्डपप्राच्यां पायसमांसादिभिर्बलिं चतुर्भि-र्विप्रैर्युक्तो दद्यात्। अत्र मन्त्रः,—

आदित्या वसवो रुद्रा देवा भूतानि पन्नगाः।
बलिनानेन दत्तेन शान्तिं कुर्व्वन्तु सर्व्वशः॥

रात्रौ जागरणं कृत्वा प्रातः स्नात्वा नवे वाससी परिधाय शुक्लमाल्यगन्धः मण्डपं प्रविश्य वेदिकायां पिष्टचूर्णेन मण्डलं चतुरस्रं वा कृत्वा तन्मध्येऽष्टदलपद्मं विलिख्य तदुपरि तिल-द्रोणानामष्टपञ्चचतुरस्रं वा कुर्य्यात्। तदुपरि पलचतुष्टयेन द्वयेन वा ताम्रपात्रम्। तत्पात्रं शालितण्डुलपूर्णं कृत्वा तण्डुलो-परि पद्ममष्टदलं लिखेत्। तदुपरि पञ्चगव्येन संस्नाप्य व्याधि-प्रतिमां निवेश्य सूर्य्यप्रतिमामपि पूर्णपङ्कजोपरि निवेशयेत्। स्वर्णाब्जद्दन्द्वदलमूले शुक्रः दक्षिणे भौमः पश्चिमे बुधः उत्तरे राहुः। आग्नेयादि दलमूलेषु गुरुशनिचन्द्रकेतवः स्थाप्याः। सूर्य्यसमीपे अश्विन्यादिनक्षत्रत्रयम्। पूर्व्वादिदलाग्रेषु रोहिण्यादीनि त्रीणि। तत आतङ्कनाम्नीं व्याधिप्रतिमां सम्पूज्य सूर्य्यसौराष्टाक्षरेण ग्रहान् नक्षत्राणि च स्वस्वनाम्ना पूजयेत्। क्षीरं नैवेद्यम्। चतुर्भिर्ऋत्विग्भिः सहित आचार्य्यः वेदिकापूर्व्वे धान्यराशौ पञ्च-रत्नस्वर्णयुतान् अश्वस्थानगजस्थानवल्मीकसङ्गमराजद्वारमृत्तिका न्वितान् चन्दनगोरोचनागुग्गुलुपुण्यतीर्थजलपूरितान् पञ्चपल्लव मुखान् श्वेतवस्त्रवेष्टितान् पञ्चकलशान् स्थापयेत्। तत आपो हिष्ठेति तृचेन हिरण्या इति तृचेन पावमानाद्यनुवाके व शश इन्द्रानुवाकेन घोषशान्तिवाचनम्। चतुर्भि ब्राह्मणै बह्वृच घोषशान्तिवर्गास्तैत्तिरीयघोषशान्तिवर्गाश्च पठनीयाः। त चतुर्भि र्जापकै मूलव्याधिदेवतामन्त्रः सूर्य्याष्टाक्षरमन्त्रः अयुतद्व

अयुतार्द्धं अयुतपादं वा जप्यः। शुक्रादिग्रहाखिन्यादिनक्षत्र-मन्त्राणां शतं शतं सहस्रं सहस्रं वा दश दश वा जपः। सर्व्व-व्याधिप्रतिमादाने सूर्य्याष्टाक्षरमन्त्र एव वा समुद्रादूर्म्मिः, वयं स्याम, चत्वारश्च, गाः, मूर्द्धानं दिवः, पुनस्त्वादित्या, सप्तते अग्ने इत्येतैः पूर्णाहुतयः। सर्व्वत्र हुतशेषसम्पातरक्षणम्। प्रणीतादि-विमोचान्ते सुवर्णशलाकागर्भस्थेनाग्रदर्भमुष्टिना होमशेषसम्पृक्तेन प्राङ्मुखस्य रोगिणः शिरःप्रभृतिपादपर्य्यन्तं मार्जयेत्। ततो ब्राह्मणैः सह कलशै रोगिणं स्नापयेत्। स्नपनकाले सर्व्वे स्वस्वशाखोक्तशान्तिं पठेयुः। मङ्गलस्नानार्थं जलरक्षणम्। ग्रहाणां ग्रहशान्तिविधिना शक्तौ सत्यां पूजाहोमौ। अशक्तौ आवरणपूजारूपेण पूजा। बद्धानां बन्धनाद् विमोचनं आचार्य्यं पूजाभिमुखमभ्यर्च्य तदनुज्ञया अन्यं वा मध्याह्ने तस्मै व्याधि-प्रतिमां सोपकरणां दद्यात्। तत्र मन्त्रः—

पद्मासनः पद्मकरः समाश्वरथवाहनः।
प्रतिमानेन दत्तेन तुष्येत् सर्व्वजगद्गुरुः॥
इह जन्मनि यत् पापमन्यजन्मनि वा कृतम्।
प्रत्ययाप्रत्ययाभ्यां वा तत्सर्व्वं शमयत्वसौ॥

इमां व्याधिप्रतिमां सूर्य्यप्रतिमां सोपकरणां तुभ्यमहं सम्प्र-ददे। दक्षिणा निष्कशतम्। पञ्चगोदानाशक्तस्य पञ्च सुवर्णानि। प्रणिपत्य ग्रामसीमान्तमनुव्रज्य तन्मुखं नावलोकयेत्। अन्यस्य प्रतिग्रहीतृत्वे आचार्य्याय किञ्चिद् दत्वा सर्व्वाधारस्तदनुज्ञया गृहं गत्वा ऋत्विग्भ्यो दक्षिणां दत्वा अश्विनौ पूजयित्वा धन्वन्तरि-

मभ्यर्च्य दीनानाथान् सन्तोष्य मङ्गलध्वनिना कुम्भावशिष्टजलेन स्नात्वा स्वस्ति वाच्य मिष्टान्नेन शतं तदर्द्धं भोजयित्वा बन्धुभिः समं स्वयं भुञ्जीत ।

इति रोगप्रतिमादानविधिः । सर्व्वरोगेषु
तत्तत्रोगलक्षणं ज्ञात्वा कर्त्तव्यः ।

---

## अथासाध्यसर्व्वरोगसाधारणप्रतिमादानम् ।

ब्रह्माण्डे,—शतनिष्केण तदर्द्धेन त्रिंशता वा काञ्चनेन व्याधिप्रतिमा । रत्नाभ्यां चक्षुषी रजतेनाक्षिगोलकम् । एवं कृत्वा ताम्रादिपात्रे श्वेततण्डुलपूर्णे निधाय वासोयुग्मेन वेष्टयित्वा हिरण्यभूषणमगुरुलेपनं दत्वा अलङ्कृताय विप्राय दद्यान्मन्त्रेण ।

ये मे रोगाः प्रबाधन्ते देहस्थाः सततं ततः ।
गृहीष्व प्रतिरूपेण तान् रोगान् द्विजसत्तम ॥

प्रतिग्रहीता—

वाढ़मित्येव तद्वाक्यं गृह्णीयाद् व्याधिभिः सह ।

नात्र पूर्व्ववन्मण्डपकुण्डादिकं यावदुक्तं ज्ञातव्यम् ।

स्कान्दपुराणे सर्व्वव्याधिहरकांस्यदानम् । देव्युवाच ।

केनोपायेन देवेश सर्व्वव्याधिसमन्वितः ।
मुच्यते तत्क्षणादेव ब्रूहि शम्भो वरप्रद ॥

महादेव उवाच ।

द्वात्रिंशत्पलसंयुक्तं कांस्यपात्रन्तु कारयेत् ।
रम्यं हृद्यन्तु वै कार्य्यं तन्मध्यं घृतसंयुतम् ॥
तन्मध्ये स्थापयेद् रोगी स्वर्णद्वयमतन्द्रितः ।
गोमयेनोपलिप्ते तु भूमिभागे समाहितः ॥
चतुर्द्रोणप्रमाणे तु तण्डुले तन्निवेशयेत् ।
वस्त्रेणावेष्ट्य सूक्ष्मेण गन्धपुष्पैरलङ्कृतम् ॥
ब्राह्मणं यौवनावस्थं वेदवेदाङ्गपारगम् ।
आनीय तं गृहे रोगी पूजयेद् विधिपूर्व्वकम् ॥
ब्राह्मणं मन्यते विष्णुं सदा धर्म्मविदुत्तमम् ।
दद्याद् विप्राय विधिवत् तत्पात्रं मसुवर्णकम् ॥
दक्षिणां तत्परीमाणां सुवर्णं च स्वशक्तितः ।
शक्तौ सत्यां कदाचित्तु हानिपक्षो न युज्यते ॥
अनेन विधिना यस्तु दद्याद्दानमनुत्तमम् ।
कुष्ठी वा कुनखी वापि भगन्दरयुतोऽपि वा ॥
नानाव्याधिसमायुक्तो मुच्यते नात्र संशयः ।
चन्द्रवद् राजते रोगी पुष्टाङ्गः कामरूपधृक् ॥

इति सर्व्वरोगहरकांस्यदानम् ।

## वायुपुराणे सर्व्वरोगहरदक्षिणामूर्त्तिदानम् ।

पलत्रितयमितहेम्ना महेश्वरमूर्त्तिः सवराभयहस्ता । गोमयोपलिप्तभूमौ पञ्चवर्णेन पद्मं तदुपरि पद्मपुष्पं तत्र देवस्थापनम् । संसारतारकदयालसर्व्वसर्व्वकारणवेदवेदत्वेन ध्यानम् । श्वेतचन्दनश्वेतपद्मैः कर्पूरागुरुधूपक्षौमवस्त्रद्वयपायसनैवेद्यैः पूजा । वेदवेदाङ्गविदं शान्तं शैवं ब्राह्मणं पूजयित्वा तस्मै दद्यान्मन्त्रेण ।

यत्पापं वाङ्मनःकायसम्भवं मम शङ्कर ।
तव रूपप्रदानान्मे विलयं यान्तु सर्व्वशः ॥
अन्ने पापे निरालम्बे त्वामेव शरणं गते ।
मयि सर्व्वाघनाशाय दयां कुरु महेश्वर ॥

शिवः संप्रीयतामिति दद्यात् । क्रियां तत्फलमात्मानञ्च समर्पयेद् भगवते ।

महाभारते स्रग्गन्धधूपस्नानीयानुलेपनप्रत्येकदानं रोगनाशाय । पद्मपुराणे,—

पानीयं पायसं मुद्गाः शर्कराघृतसंयुताः ।
इदमावश्यकं देयं सर्व्वरोगप्रशान्तये ॥

सर्व्वरोगहरशतमानदानं बौधायनोक्तम् । अष्टपलमितकांस्यपात्रे तिलार्चनम् । तिलोपरि शुभ्रशालितण्डुलास्तदुपरि शुद्धसुवर्णेन शतकृष्णलमितं शतमानं तत्र सवित्रष्टाक्षरमन्त्रेणावाह्य रक्तवस्त्रमाल्यपुष्पप्रधानषोडशोपचारेण सूर्य्यपूजा । गुणवते ब्राह्मणाय प्राङ्मुखाय स्वयमुदङ्मुखो दद्यान्मन्त्रेणानेन

पद्मोद्भवः पद्मकरः सप्ताश्वरथवाहनः ।
शतमानेन दत्तेन तुष्टः सर्व्वजगद्गुरुः ॥
इह जन्मनि यत्पापमन्यजन्मनि यत्कृतम् ।
तत्प्रत्ययाप्रत्ययाभ्यां तत्सर्व्वं क्षपयत्यसौ ॥

बौधायनः,—

असाध्यव्याधिना ग्रस्त उग्रेण प्राणहारिणा ।
आ ते पितस्त्वित्यनेन सूक्तेन प्रत्यृचं शुचिः ।
पूर्व्वमाज्याहुतीर्हुत्वा उपस्थाय च शङ्करम् ।
हविः शेषेण वर्त्तेत एकान्तरमतन्द्रितः ॥
पूर्णे मासे जयेन्मृत्युं रोगेभ्यश्च प्रमुच्यते ।
होमः शक्त्या तु कुर्व्वीत तज्जपं द्विगुणं बुधः ॥

सर्व्वरोगेषु,—

सर्व्वस्वं वा वेदविदे ब्राह्मणायोपपादयेत् ।
धनं वा जीवनायालं गृहं वा सपरिच्छदम् ॥

ब्रह्माण्डे,—

सर्व्वरोगप्रशमनं सौवर्णं दानमुच्यते ।
ज्वरे मसूरिकायाश्च राजयक्ष्मणि चैव तत् ॥
गुल्मे तथायसं प्रोक्तं कुष्ठे राजतमुत्तमम् ।
रत्नदानाच्छमं यान्ति गुदोत्पन्नाश्च सर्व्वशः ॥
शमः स्यादपरव्याधे र्भूदानात् कमलासन ।
शमार्थं वातरोगाणां पयोदानं विधीयते ॥

कण्ठरोगोद्भवादीनां रोगाणां शान्तिमिच्छता।
धान्यं वासो हिरण्यञ्च दातव्यानि प्रयत्नतः॥
सर्व्वेषामक्षिरोगाणामाज्यं कनकसंयुतम्।
पानीयं पायसं मुद्गाः शर्करामधुसंयुताः॥
सर्व्वाङ्गवेपे कासे च खट्वां वै सोपवर्हणाम्।
दद्याद् वै कण्डुरोगाणां कम्बलं कमलोद्भव॥

विष्णुधर्म्मोत्तरे,—

लवणाज्यगुड़ोपेतमपूपं सूर्य्यवासरे।
सहिरण्यं नरो दत्त्वा न रोगैस्त्वभिभूयते॥

सम्वर्त्तः,—

औषधं स्नेहमाहारं रोगिणां रोगशान्तये।
ददानो रोगरहितः सुखी दीर्घायुरेवच॥

गारुड़पुराणे,—

लोके न सर्व्वरोगाणां क्षये कांस्येन तोलयेत्।
फलोद्भवं तथा दद्याद् ग्रहपीड़ार्थदारुणे॥
गौड़ं भस्मकरोगे च पैष्टं स्याद् गण्डमालके।
जाङ्गलं चाग्निमान्द्ये च रोगोत्पाते तु पौष्पकम्॥

जाङ्गलं कापित्थम्।

मधूद्भवं तथा देयं कासश्वासजलोदरे।
घृतोद्भवं तथा देयं छर्द्दिरोगोपशान्तये॥
क्षैरं पित्तविनाशाय दाधिकं भगदारणे।
लावणं वेपनाशाय पैष्टं दद्रुविनाशने॥

अन्नञ्च सर्व्वरोगस्य नाशने स्मृतमेव च ॥
फले सोमो गुड़े भापस्ताम्बूले च विनायकः।
गन्धर्व्वाः कुसुमे चैव जाङ्गलेऽग्निस्तथैव च ॥
मधूद्भवे च लक्ष्मीश्च घृते मृत्युञ्जयः स्मृतः।
क्षीरे तारागणाः सर्व्वे दध्नि सर्पाः प्रकीर्त्तिताः ॥
पिष्टे प्रजापतिर्देवो ह्यन्ने सर्व्वाश्च देवताः।

एतेषु तुलापुरुषदानेषु मृत्युञ्जयपूजा पूर्व्वं कर्त्तव्या। प्रतिग्रहीतारमाचार्य्यं कृत्वा तेन पूजा। अष्टदलपद्मं कृत्वा तत्र लिङ्गं स्थापयित्वा मृत्युञ्जयमन्त्रस्य कह्लोल ऋषिः देवी गायत्रीच्छन्दः मृत्युञ्जयो देवता जंबीजं सः शक्तिः जां हृदयाय नमः जीं शिरसे स्वाहा जूं शिखायै वषट् जैं कवचाय हुं जौं नेत्रत्रयाय वौषट् जः अस्त्राय फट् एवमङ्गन्यासः। शिरोललाटकण्ठजिह्वामूलगण्डहृदयनाभिब्रह्मरन्ध्रगुह्येषु समस्तस्य मन्त्रस्य प्रत्येकं न्यासः। चतुर्भुज स्त्रिनेत्रो दक्षोर्द्ध्वेऽक्षमाला वामोर्द्ध्वेऽमृतकुम्भः दक्षाधोऽभयं वामाधो वरं त्रिनेत्रो नीलवासाः शुक्लः। एवं ध्यानम्। ॐमिति तारेणावाहनम्। ॐ जुस इति गन्धादिभिः पूजा। जया विजया अजिता अपराजिता भद्रकाली कपाली क्षेमा मृत्युपराजिता इत्यष्टशक्तीनां पूर्व्वादिषु पूजा। ॐकारमुच्चार्य्य मृत्युञ्जय त्वमत्र यजमानहृदये स्थिरो भवेति यजमानहृदये विसर्ज्जनम्। आर्त्तदेहे स्वदेहवत् कराभ्याञ्च न्यासः। शिरोललाटजिह्वामूलगण्डहृदयनाभिब्रह्मरन्ध्रगुह्येषु। ॐ जुस इति न्यासः। तुला च सारदारुणा चतुर्हस्तमिता। काष्ठयोरन्तरं चतुर्हस्तं तोरणयुक्तं तत्र

शिक्यद्वयेन पट्टद्वयोपरिद्रव्ययजमानयोरवस्थानम् । ततोऽवरोह-दानम् ।

विष्णुधर्म्मोत्तरे,—

पुण्यं दिनमथासाद्य तृतीयायां विशेषतः ।
गोमयेनोपलिप्तायां भूमौ कुर्य्याद् घटं शुभम् ॥
दारवं शुभवृक्षस्य चतुर्हस्तप्रमाणतः ।
सुवर्णं तत्र बध्नीयात् स्वशक्त्या घटितं घटे ॥
सौवर्णं स्थापयेत् तत्र वासुदेवं चतुर्भुजम् ।
शिक्यद्वयन्तु बध्नीयात् स्थापयेत् पटिके ततः ॥
तत्रारोहेत वस्त्रस्रक्पुष्पालङ्कारभूषितः ।
अभीष्टदेवतां गृह्य स्नापयित्वा घृतादिभिः ॥
तुलादानस्य सर्व्वस्य विधिरेष प्रकीर्त्तितः ॥

एतावन्मात्रं कार्य्यम् । कृच्छ्रादिकरणाशक्तौ प्रत्याम्नायः ।

प्राजापत्ये तुलामेकां दद्यात् सान्तपने उभे ।
पराककृच्छ्रातिकृच्छ्रेतु तिस्रस्तिस्रस्तु ताः स्मृताः ॥
अष्टौ चान्द्रायणे देया स्तिस्रो वा शक्त्यपेक्षया ।
गवामभावे निष्कं स्यात् तदर्द्धं पादमेव वा ॥
कृच्छ्रोऽयुतञ्च गायत्र्या उदवासस्तथैव च ।
समुद्रगानदीस्नानं सममेतच्चतुष्टयम् ॥
कृच्छ्रो देव्ययुतञ्चैव प्राणायामशतद्वयम् ।
तिलहोमसहस्रञ्च वेदपारायणं तथा ॥

अन्यत्र च—

प्राजापत्ये भवेद्धेनुस्तिस्रः सान्तपने तथा ।
पञ्च चान्द्रायणे प्रोक्तास्ततस्रो वापि धेनवः ॥

तथा,—

हेऽतिकृच्छ्रे समाख्याते धेनुः पञ्च पुराणिका ।
षष्ठी चतुर्विंशतिर्वा भोज्या द्वादश वा द्विजाः ॥
तत्तत्कृत्रसम्बद्धिभ्यां संख्यावैषम्यमुच्यते ।

तत्र गोमूल्यनिष्कं दीनारनिष्कं

दीनारो रौप्यकैरष्टाविंशत्या परिकीर्त्तितः ।
सुवर्णस्य सप्ततितमो भागो रौप्यक उच्यते ॥

अन्यत्र निष्कं सुवर्णाश्चत्वार इति ग्राह्यम् । शातातपः,—

गोदानेन वत्सयुक्ता गौः कृष्णा वासः सकाञ्चनम् ।
निवर्त्तनानि भूदानादीनि दद्यात् द्विजातये ।
सदुकूलं गवां दाने अश्वं सोपस्करं विदुः ।
महिषीं महिषीदाने दद्यात् स्वर्णाम्बराहृतान् ॥
दद्यादजमजदाने सुवर्णपलसंयुतम् ।
लक्षं पुष्पं पुष्पदाने सहस्रं विप्रभोजने ॥

इदं शक्तस्य अशक्तस्य न्यूनमपि । रुद्रजपो लक्षपुष्पैः पूजयित्वा त्र्यम्बकम् ।

एकादश जपेद् रुद्रान् दद्यांशं गुग्गुलेन तु ।
हुत्वाभिषेचनं कुर्य्यात् मन्त्रैर्वरुणदैवतैः ॥

धान्यदाने शुभं धान्यं खारीषष्टिसमन्वितम् ।
वस्त्रदाने दुकूलञ्च देयं कर्पूरसंयुतम् ॥

इति सामान्येन रोगनिवर्हणानि ।

---

## अथ ज्वरहराणि ।

गार्ग्यः,—ज्वरकर्म्मणा शीतज्वरः तत्र जातवेदसमन्त्रेणायुतजपः शक्त्या द्विजभोजनम् ।

सहस्रकलशस्नानं शतभोजनमेव च ।

सहस्रकलशस्नानं रुद्रेणैनस्य पुरुषसूक्तेन विष्णोः । शतभोजनमङ्गम् । तथा मङ्गलकार्य्येषु सततं कोपादुष्णज्वरः । तत्र शान्तिः कर्म्मविपाकसंग्रहे,—सहस्रकलशस्नानं रुद्रेणैनस्य शतभोजनमङ्गम् । शातातपः,—

देवस्वहरणाच्चैव जायते विविधज्वरः ।
ज्वरे रुद्रजपं कुर्य्यान्महारुद्रं महाज्वरे ॥
महारुद्रं जपेद्रौद्रे वैष्णवे तद्द्वयं जपेत् ।

रौद्रे ज्वरे महारुद्रं वैष्णवे ज्वरे पुरुषसूक्तरुद्रादिजपम् ।

---

## सर्व्वज्वरहरकुम्भदानम् ।

अगारदाही ज्वरवान् तत्र कुम्भदानम् । आचार्य्यब्राह्मणयोर्वरणम् । शुभस्थाने द्रोणपञ्चकमितशुभतण्डुलस्थापनम् । तदुपरि

मृन्मयवस्त्रवेष्टितपुष्पमालालङ्कृतकुम्भस्थापनम्। मधुघृतदधिदुग्धगुड़जलानामन्यतमेन पूरणम्। तत्र शैवमन्त्रेण तान्त्रिकेण वैदिकेन वा महेश्वरपूजनम्। एवं वैष्णवमन्त्रेण विष्णुपूजनम्। कुम्भदक्षिणे स्थण्डिलेऽग्निस्थापनम्। तत्र शैवमन्त्रेण च समिदाज्यचरूणामेकैकस्य षट्त्रिंशद्व्यवस्थयाऽष्टोत्तरशतहोमः। एवं षट्वैष्णवमन्त्रेण समिदाज्यचरूणां प्रत्येकं त्रिंशद्व्यवस्थयाष्टोत्तरशतहोमः। त्रिभिः शतं शतं वा मार्जनान्ते ब्रह्मणे दक्षिणा। अथ हुतवते आचार्य्याय यथाशक्तिहिरण्यसहितकुम्भदानम्। देशकालवाक्यानन्तरं—

महेश देवदेवेश वासुदेव परात्पर।
कुम्भदानेन दत्तेन ज्वरः क्षिप्रं प्रशाम्यतु॥
ऐकाहिकं सान्निपातं तृतीयकचतुर्थकौ।
पाक्षिकं मासिकं वापि सांवत्सरिकमेव वा॥
नाशयेतां मम क्षिप्रं वासुदेवमहेश्वरौ।

ज्वरशान्तये हिरण्यसहितमिमं कुम्भं ददानि। ततो दक्षिणा पवित्रप्रतिपत्त्यादि।

---

## अथ ज्वरतर्पणम्।

तत्र गोविन्दसंज्ञकतर्पणम्। ततोऽपुत्रतापसस्य। ततो ज्वरस्य।

योऽसौ सरस्वतीतीरे वत्सगोत्रसमुद्भवः ।
त्रिरात्रज्वरदाहेन मृतो गोविन्दसंज्ञकः ॥
ज्वरापनुत्तये तस्मै ददाम्येतत् तिलादिकम् ।

इति त्रिः । योऽसौ गोदावरीतीर इति क्वचित् पाठः । ततः,—

योऽसौ च नर्म्मदातीरे अपुत्रस्तापसो मृतः ।
रात्रौ ज्वरविनाशाय तस्मै दद्यां तिलोदकम् ॥

इति त्रिस्तर्पणम् । ततोऽष्टशतं सहस्रमयुतं वा ज्वरस्य । तत्र मन्त्रः—

त्रिपाद् भस्मप्रहरणस्त्रिशिरा रक्तलोचनः ।
स मे प्रीतः सुखं दद्यात् सर्व्वामयपतिर्ज्वरः ॥

इति तर्पणम् । अथवा ज्वरशान्तये ज्वरप्रतिकृतिदानम् ।

वशिष्ठकल्पे,—

अच्छिन्नैराम्रपत्रैश्च पयोऽक्तै र्जुहुयाज्ज्वरे ।
गुलूचीपठिकादूर्व्वाखदिरै र्वा घृतप्लुतैः ॥

नरसिंहपुराणे,—

तथा महाज्वरग्रस्ते धारां देवस्य मूर्द्धनि ।
सन्ततां नरसिंहस्य कुर्य्याद् वा कारयेद् बुधः ॥
होमश्च भोजनञ्चैव तस्य दोषः प्रशाम्यति ।

सन्ततधाराहोमभोजनानां पृथगेव ज्वरशमकत्वम् । निरपेक्ष-विधानात् । तथा सुवर्णदानाधिकारे,—

ज्वरे मसूरिकायाञ्च तदेव परिकीर्त्तितम् ।

---

## अथ ब्रह्मपुराणोक्तज्वरबलिः।

अश्विनीनक्षत्रे शनैश्वरयुक्तवारे ज्वरितः पीड्यते दिनान्येकविंशतिः। अन्यवारे पञ्चदिनान्येकं वा। चीरवृक्षसमिद्भिर्होमः घृततिलैर्वा। पिष्टमयाश्वमुखे अश्विनावभ्यर्च्य सप्तव्रीहिबलिदानम्। अश्विनौ देवता। अश्विना भेषजमिति मन्त्रः। अश्विनोर्भैषज्येनेति केचित्। दानं दद्यात् सुवर्णम्। एवं सर्व्वत्र पिष्टमयी आकृतिः। भरण्यां सोमबुधवारेषु महता कष्टेन जीवति। होमस्तिलैः समधुघृतैः। गजमुखे तिलतण्डुलोदकदानं बलिः। यमो देवता। यमेन दत्तमितिमन्त्रः। कृष्णवर्णवस्त्रदानम्। कृत्तिकानक्षत्रगुरुवारे दिनानि षष्टिः। अन्यवारे नवदिनानि। घृतेन होमः। छागमुखेऽग्निमभ्यर्च्य दध्यन्नं दद्यात्। अग्निर्देवता। अग्नेत्वमिति मन्त्रः। सुवर्णरजतदानम्। रोहिण्यां रविबुधवारे सप्तरात्रमन्यवारे त्रिरात्रम्। कुङ्कुमेन होमः। ग्राम्यवीजेन वा। नागमुखे प्रजापतिमभ्यर्च्य दधिपयसा बलिः। मधुसर्पिषा वा। प्रजापतिर्देवता। प्रजापते न त्वदिति मन्त्रः। घृतकुम्भदानम्। मृगशिरसि सोमगुरुवारे रुद्रसंख्या दिवसाः। अन्यवारे पञ्च। गव्यपयसा होमः। मृगमुखे सोममभ्यर्च्य मृगमांसं दद्यात्। सोमो देवता। सोमोधेनुमिति मन्त्रः। पयस्विनीं श्वेतधेनुं दद्यात्। आर्द्रायां भौमशुक्रवारे सन्देहः। अन्यवारे न जीवति। सक्तु दध्ना होमः। सर्सपैर्मधुना वा। छागमुखे रुद्रमभ्यर्च्य रक्तं देयम्। रुद्रो देवता। नमस्ते रुद्र इति मन्त्रः। वृषसुरभी-

दानम् । पुनर्वसौ सोमवारे पञ्चरात्रं अन्यवारे सप्त । तिलैर्होमः । घृताक्तैः सितलतण्डुलैर्वा । शूकरमुखेऽदितिमभ्यर्च्य धान्याञ्जलिः । मर्कटमुखे वा । अदिति देंवता । अदितिर्द्यौरितिमन्त्रः । सुवर्णं काम्बलं वा दद्यात् । पुष्यायां बुधवारे त्रयोदशदिनानि । अन्यवारे सप्त वा दश वा दिनानि । पायसतण्डुलै र्होमः । घृतपायसेन वा । नागमुखे बृहस्पतिमभ्यर्च्य दधिदानम् । बृहस्पति देंवता । बृहस्पते अतीति मन्त्रः । सुवर्णदानम् । अश्लेषायां सोमशुक्रवारे न जीवति । अन्यवारे नवरात्रम् । सर्पियुक्तैर्ग्राम्यौषधिभिर्होमः । वटबीजैर्वा । मार्जारमुखे सर्पानभ्यर्च्य दधि मधु घृतं दद्यात् । सर्पोदेवता । नमोऽस्तु सर्पेभ्य इति मन्त्रः । घृतपूर्णघटदानम् । मघायामादित्यबुधशनिवारे नवदिनानि । अन्यवारे न जीवति । घृताक्ततिलतण्डुलै र्होमः । वानरमुखे पितृनभ्यर्च्य तिलमाषं दद्यात् । पितरो देवता । नमो वः पितर इति मन्त्रः । तिलमाषदानम् । पूर्व्वफल्गुन्यां सोमशुक्रवारे दिनान्येकादश । अन्यवारे मासद्वयम् । माषयुक्ताक्षतैर्होमः । कपिमुखे तिलोदनदानम् । भगो देवता । इमा गिर इति मन्त्रः । घृतपूर्णताम्रपात्रदानम् । पञ्चरत्नानि वा । उत्तरफल्गुन्यां भौमशुक्रवारे दिनान्येकविंशतिः । अन्यवारे पञ्चदश । सर्पिःप्रियङ्गुभिर्होमः । दध्ना वा । सर्पिः पलाशेन वा । गोमुखे प्रभूतशाकदानम् । प्रभूतगव्यं वा । अर्य्यमा देवता । अहि त्रीणामिति मन्त्रः । हिरण्यं रजतं वा देयम् । हस्तायां शनैश्चरादित्यबुधवारे दिनानि पञ्चदश । अन्यवारे नव । दध्यक्षततिलै र्होमः । महिष-

मुखे पुष्करदानम्। सविता देवता। देव सवितरिति मन्त्रः। पयस्विनीधेनुदानम्। चित्रायां सोमवारे दिनानि दश। अन्यवारे सार्द्धमासम्। सघृतदुग्धनवान्नेर्होमः। व्याघ्रमुखे तगरपुष्प-बलिः। त्वष्टा देवता। चित्रावसो इति मन्त्रः। घृतोदनदानम्। स्वातौ शनिवारे दिनानि सप्त। अन्यवारे मासद्वयम्। साज्ययवैः साज्ययवभक्तै र्वा होमः। महिषमुखे गुड़तण्डुलाः। वायुर्देवता। आ नो नियुद्भिरिति मन्त्रः। पयःकुम्भदानम्। विशाखानक्षत्रे भौमादित्यवारे महता कष्टेन जीवति। अन्यवारे विंशति-दिनानि। अष्टाविंशति र्वा। पयोवसाहोमः। व्याघ्रमुखे गुड़ो-दनम्। इन्द्राग्नी देवता। इन्द्राग्नी आगतमितिमन्त्रः। पीतरक्त-दानम्। अनुराधायां बुधवारे चत्वारिंशद्दिनानि। अन्यवारे १४। माषभक्तेन होमः। गोमुखे जलसहितं गुड़ोदनम्। मृग-मुखे वा। मित्रो देवता। मित्रस्य चर्षणी धृत इति मन्त्रः। चन्दनदानम्। ज्येष्ठायां गुरुशुक्रवारे दिनानि दश। अन्यवारे पञ्चदश। कण्टकमिश्रगोरोचनाधान्यमिश्रितयवै र्वा होमः। सिंहमुखे तिलदानम्। मार्जारमुखे वा। कपिमुखे सौवीर इति केचित्। इन्द्रोदेवता। सजोषा इन्द्रइतिमन्त्रः। सुवर्णदानम्। मूलायां भौमशनिवारे महता कष्टेन जीवति। अन्यवारे न जीवति। क्रमुकमूलेन होमः। धान्यतिलयवगोधूममधु-माषै र्वा। यथोपपन्नमूलै र्वा। श्वमुखे मार्जारमुखे वा तिल-दानं बलिः। अजामुखे शातजलमिति क्वचित्। निर्ऋति र्देवता। मसुन्वन्तं इति मन्त्रः। कृष्णवस्त्रतिलमाषकाष्टदानम्। पूर्व्वा-

षाढ़ायां सोमबुधवारे पञ्चदिनानि। अन्यवारे त्रीणि। शाक-बीजेन शालिभक्तघृतदुग्धेन वा होमः। कुम्भीरमुखे लवणदानम्। कूर्म्ममुखे वा। आपो देवता। इदमाप इति मन्त्रः। जलकुम्भ-दानम्। उत्तराषाढ़ायां गुरुवारे दिनत्रयम्। अन्यवारे सप्त-दिनानि विंशति र्वा। करञ्जबीजैर्माषतिलै र्वा होमः। गोमुखे गोमायुमुखे वा तिलोदनं बलिः। विश्वेदेवा देवता। विश्वे देवास इति मन्त्रः। सुवर्णमाषद्वयदानम्। श्रवणायां शनिरविवारे दिनानि पञ्च। अन्यवारे मासद्वयम्। रक्तधान्यतण्डुलहोमः। महिषमुखे रक्तबलिः। हरिर्देवता। तद्विष्णोरितिमन्त्रः। पीतवस्त्रदानम्। धनिष्ठायां सोमसौम्यवारे दिनानि पञ्च विंशति र्वा। अन्यवारे पञ्चदश। न्यग्रोधोदुम्बराश्वत्थसमिद्भिर्होमः। माषभक्ततिलै र्वा। मनुष्यमुखे शीतलजलं बलिः। वसवो देवता। वसूनां भागो इति मन्त्रः। सुवर्णदानम्। शतभिषायां गुरुशुक्र-वारे दिनानि शतम्। अन्यवारे एकादश। यवैरन्नतिलाभ्यां वा होमः। परिजातपुष्पैरिति क्वचित्। गोमायुमुखे तण्डुलम्। वरुणो देवता। इमं मे वरुण इति मन्त्रः। पञ्चरत्नदानम्। पूर्व्व-भाद्रपदे भौमशनिवारे कष्टेन जीवति। अन्यवारे मासद्वयम्। पलाशसमिद्भिर्होमः। गोमुखे गोमायुमुखे वा तण्डुलबलिः। अजैकपाद् देवता। ऋतधामासीतिमन्त्रः। पयस्विनीधेनुदानम्। उत्तरभाद्रपदे सोमबुधवारे दिनान्यष्टौ। अन्यवारे पञ्चदश। पयसा घृतेन जातीपत्रैर्वा होमः। पृषदाज्येन वा। गोमुखे तण्डुलबलिः। अहिर्बुध्नो देवता। तत्र अहिर्बुध्नो इति मन्त्रः।

घृतकुम्भदानम्। रेवत्यां गुरुवारे दिनैकम्। अन्यवारे दश। सयवाघृतैः पलाशसमिद्भि र्वा होमः। अखण्डफलानामष्टोत्तरशतं वा। गजकुम्भे मधुयुक्तशष्कुलीयुग्मं बलिः। पूषादेवता। पूषन्नेकर्षे इति मन्त्रः। नानापिष्टकदानम्।

अत्र होमद्रव्याणां गायत्राभिमन्त्रणम्। तत्तन्मन्त्रैर्होमः। होमस्य रात्रौ सन्ध्याप्रभृति। होमानन्तरं बलिः। तदनन्तरं दानमिति केषाञ्चित् सम्प्रदायः। अन्येषां तु गायत्र्या सर्व्वनक्षत्रशान्तौ यथोक्तद्रव्यहोमः।

पूर्व्वोक्त एव। होमानन्तरं दानम्। सन्ध्यानन्तरं पिष्टमयप्रतिकृतिमुखे तत्तन्मन्त्रैस्तत्तद्देवतापूजनम्। ततोऽश्विभ्यामेष बलिर्नम इत्येवं बलिदानम्। एवं त्रिरात्रं पञ्चरात्रं सप्तरात्रं वा व्याधिगुरुलाघवमपेक्ष्य। अत्र सर्व्वज्वरेषु

मृत्युञ्जयाणुना होमः कर्त्तव्यो ज्वरशान्तये।

इति कर्त्तव्यम्।

इति ज्वरहराणि।

---

## अथातीसारहरम्।

कर्म्मविपाके,—

आर्त्ताग्निं शमयेद् यस्तु सोऽतिसारयुतो भवेत्।
अग्निरस्मीत्यृचं जप्त्वा दशांशं जुहुयात् तिलान्॥
सर्पिषा वा प्रुतान् दद्याद्धिरण्यं ब्राह्मणाय वै।

जपसंख्या व्याध्यनुसारेण । तत्राम्युत्थादप्रायश्चित्तमपि कर्त्तव्यमिति महार्णवे ।

पाद्मे,—त्रेताग्निनाशादतीसारः । तत्प्रतीकारो बौधायनोक्तः:—पलेनार्द्धेन वा सुवर्णेन ताम्रेण वह्निमूर्त्तिं मेषस्थां कृत्वा रक्तवस्त्ररक्तचन्दनरक्तपुष्पमुक्तादामविभूषितां कृत्वा ब्राह्मणायाग्निहोत्रिणे ब्रह्मचर्य्यस्थाय वस्त्राङ्गुलीयकभूषिताय दद्यात् ।

'त्रेताग्निरूपोऽग्निस्त्वमन्तश्चरसि वै नृणाम् ।
त्वं वेत्थ प्राक्तनं पापमतीसारं विनाशय ॥

अनेन मन्त्रेण दानम् । शातातपः,—

स्त्रीहन्ता चातिसारी स्यादश्वत्थान् रोपयेत्तु सः ।
दद्याच्च शर्करां धेनुं भोजयेच्च शतं द्विजान् ॥

प्रत्येकं समस्तं वा रोगानुरूपेण ।

दावाग्निदायकश्चैव रक्तातीसारवान् भवेत् ।
तेनोदपानं कर्त्तव्यं रोपणीयस्तथा वटः ॥

उदपानं शक्त्या कूपादि ।

---

## अथ ग्रहणीरोगे ।

कर्म्मविपाके,—कारणं विना भार्य्यात्यागी ग्रहणीरोगः । तत्र शिवसङ्कल्पसूक्तस्य माध्यन्दिनषड्‌र्चस्याष्टोत्तरसहस्रजपः । सौरमन्त्रस्य उद्यन्नद्यमिति तृचस्य जपः ।

---

(१) P. त्रेताग्निरूपोऽग्निरीशस्त्वमन० ।

धेनुं सलवणां दद्याद् वस्त्राभरणभूषिताम् ।

पद्मपुराणे,—'ग्रहणीवान् प्रत्युहेत निदानम्। हेमशृङ्गा रौप्यखुरा वासोभिर्वेष्टिता घण्टाचामरभूषिता पयस्विनी धेनुर्देया। इदं विष्णुः, प्रीत विष्णुः, विष्णोर्नुकमिति मन्त्रत्रयेण समिदाज्य-चरुहोमः। होमान्ते हुतवते तस्मै वस्त्राङ्गुलीयकैः पूजिताय विष्णुवद्दानम्। तत्र मन्त्रः—

देवकीपुत्र चानूरकंसासुरविनाशक।
कृतेनानेन दानेन ग्रहणी शान्तिमृच्छतु ॥

प्रत्येकं द्रोणपञ्चकमिति धान्यनवकेन सह दानमिदम्। हिरण्यदक्षिणासहितञ्च।

---

## अर्शोरोगहरम्।

कर्मविपाके,—भृतकाध्यापक-भृतकाध्यापित-गणपूर्व्वक-होमयज्ञकर्त्ता अर्शोरोगवान्।

तन्निवृत्तौ प्रकुर्व्वीत कृच्छ्रं चैवातिकृच्छ्रकम्।
चान्द्रायणञ्चैव तथा जपेत्सूक्तञ्च पौरुषम् ॥
उद्यन्नद्यमृचं विष्णुहृदयञ्च जपेत् तथा।
अग्निवर्णां शुभामिति जपेत् सूक्तं समाहितः ॥
सहिरण्यं घृतं दद्यात् श्रोत्रियाय कुटुम्बिने।

---

(१) P. ग्रहणीवानप्रत्यहेतनिदानं। (पाठद्वयस्य कस्यापि नार्थः सङ्गच्छते। सं।)

कृच्छ्रादीनां व्याधिप्रत्ययाद्यनुसारेण व्यस्तानि वा समस्तानि वा योज्यानि ।

---

## गुदरोगहरम् ।

शातातपीये,—देवालये शकृत्करणाद् गुदरोगः । मासं सुरार्चनम् । गोदानद्वयम् । प्राजापत्यञ्चैकम् । तत्र निष्कृतिः । व्यस्तं समस्तं वा । सुरार्चनं सूर्य्यार्चनम् । विण्मूत्रोत्सर्गेऽकृतशौचस्य भोजने सततं गुदस्रावः । कृच्छ्रातिकृच्छ्रचान्द्रायणानि । व्यस्तसमस्तानि । अक्षीभ्यामिति सूक्तेन क्षीरसर्पिर्होमः । उद्यनुद्यन्नृचस्य जपः ।

---

## श्वासरोगे ।

कृतघ्नो जायते मर्त्त्यः कफवान् श्वासकासवान् ।

कर्म्मविपाकसमुच्चये,—

चान्द्रायणत्रयं कुर्य्यात् पञ्चाशद्विप्रभोजनम् ।
अग्निर्नेताख्यसूक्तेन चरुणा सर्पिषा युतम् ॥
अष्टाधिकं च जुहुयादस्य रोगस्य शान्तये ।

वायुपुराणे तु तद्विष्णोरिति सूक्तेन जपो ब्राह्मणभोजनञ्च । एतद् व्यस्तं समस्तं वा । अन्यत्र च कुरुक्षेत्रादिदेशेषु महादानग्रहणं निषिद्धं कृष्णाजिनादिग्रहणं स्वस्यापात्रस्य ( शय्यापात्रस्य )

वा प्रतिग्रहः निन्दितेभ्यो वा ग्रहणं श्वासकासहेतुः। तत्प्रायश्चित्तं महिषीदानम्। पुरुषसूक्तजपः। सहस्रनामजपो वा। उद्यमुद्यमृच (चा)चर्व्वाज्यहोमश्चाष्टोत्तरशतम्। हिरण्यदानम्। रत्नवस्त्रत्रयदानम्। पञ्चाशद्विप्रभोजनम्। सहस्रकलशस्नानञ्च रुद्रेण। तत्रापि व्यस्तं समस्तं वा। शातातपे तु पिशुनः श्वासकासी घृतपलसहस्रं दद्यात्। पाशे,—ध्वजपाशदानम्। सुवर्णेन रौप्येण वा पलेन पलार्द्धेन वा ध्वजं पाशञ्च कारयेत्। मुक्ताविद्रुममरकतयुक्तं ध्वजं पाशञ्च। तत्र शुभस्थाने कुम्भस्थापनम्। कुम्भे तिलद्रोणपञ्चकस्थापनम्। कुम्भस्य वस्त्रेण वेष्टनम्। गन्धपुष्पाक्षतैः पूजनम्। तदुपरि ध्वजपाशयोः स्थापनम्। तत्पार्श्वे निष्कद्वयस्थापनम्। कुम्भे वरुणवायुपूजनम्। षोड़शोपचारेण तल्लिङ्गमन्त्राभ्याम्। स्वनाममन्त्रेण ध्वजपाशपूजनम्। श्रोत्रियाय कुटुम्बिने दानम्। तत्र मन्त्रः—

नमः पाशभृते तुभ्यं नमो ध्वजधराय ते।
जलाधिपतये तुभ्यं वायो सर्व्वजनप्रिय॥
युवयोः प्रीतये दत्तौ ध्वजपाशौ सुरार्चितौ।
श्वासकासौ हरेतां मे प्रीतौ सर्व्वजनाश्रयौ॥

इत्युक्त्वा निष्कद्वयसहितौ दद्यात्। दक्षिणा काञ्चनम्।

## क्षयरोगहराणि ।

ब्रह्महा क्षयरोगी स्यात् ।

प्रायश्चित्तार्हमर्हन्ति स्त्रियो रोगिण एवच ।

इति षडब्दकृच्छ्रं प्रायश्चित्तम् । कदलीदानम् । बौधायनः,— पत्रयुतः कदलीवृक्षः फलेन शक्त्या फलद्वयेन त्रयेण वा सूत्रेणावेष्टितः । कदलीवृक्षपूजानन्तरं ब्राह्मणत्रयभोजनम् । त्र्यम्बकेण तिलाज्याष्टोत्तरशतहोमः । होमकर्त्रे ब्राह्मणाय वस्त्रालङ्कारपूजिताय धर्मशास्त्रवेदिने स्वर्णकदलीदानम् । तत्र मन्त्रः,—

हिरण्यगर्भ पुरुष परापर जगन्मय ।
रम्भादानेन देवेश क्षयं नाशय मे प्रभो ॥

ततः पुण्याहवाचनम् । बन्धुभिः सह भोजनम् ।

शातातपः,—

राजहा राजयक्ष्मी स्यादेषा तस्यापि निष्कृतिः ।
गोभूहिरण्यमिष्टान्नजलवस्त्रप्रदानतः ॥
गुड़धेनुप्रदानेन जलवस्त्रप्रदानतः ।
इत्यादिभिः क्रमेणैव यक्ष्मरोगः प्रशाम्यति ॥

आदिशब्दाद् ग्रहशान्तिर्विनायकशान्तिश्च । एते च व्याध्यनुसारेण व्यस्ताः समस्ता वा ।

मात्स्ये घृतधेनवः । गोमयोपलिप्तदर्भास्तृत भूमौ चतुर्हस्त कृष्णाजिनास्तरणम् । तत्र प्राक्शीर्षधेनुकल्पनम् । एवमुदक्शीर्ष वत्सकल्पनम् । माषचतुष्टयेन उत्तमा धेनुः । द्वाभ्यां मध्यमा ।

माषेण कनिष्ठा। वत्सश्चतुर्थांशेन। ताम्रकुम्भे धेन्वाकारेण घृतं कल्प्यम्। मुक्ताशुक्तिद्वयेन कर्णद्वयम्। मुक्ताद्वयेन चक्षुर्द्वयम्। शुक्लकम्बलो गलकम्बलः। सितसूत्राणि शिरास्थाने। ताम्रं पृष्ठं ककुच्च। सितचामरेण पुच्छः। नवनीतेन स्तनौ। कांस्येन दोहः। इन्द्रनीलं चक्षुस्तारका। सुवर्णेन शृङ्गः। रौप्येण खुराः। कर्पूरेण पादाः। नानाफलानि दन्ताः। गन्धकरण्डको घ्राणः। एवमादि सर्व्वं वत्सस्यापि। एवं कृतौ धेनुवत्सौ गन्धपुष्पधूपदीपैः प्रपूजयेत्।

तत्र मन्त्रः,—

धेनुस्त्वं पृथिवीतुल्या यस्मात् केशवसन्निता।
सर्व्वपापहरा नित्यं ततः शान्तिं प्रयच्छ मे॥
* चतुर्मुखस्य या लक्ष्मीर्या लक्ष्मीर्धनदस्य च।
लक्ष्मीर्या लोकपालानां सा धेनुर्वरदाऽस्तु मे॥

इत्यामन्त्र्य दानम्। अत्र दक्षिणा निष्कशतं पञ्चाशद् वा। अथवा पञ्च सुवर्णाः।

---

* P. adds here इति पूजा। अथ धेनूनामामन्त्रणम्।
या लक्ष्मीः सर्व्वदेवानां या च देवेष्ववस्थिता।
धेनुरूपेण सा देवी मम शान्तिं प्रयच्छ तु॥
देहस्था या च रुद्राणी शङ्करस्य प्रिया सदा।
धेनुरूपेण सा देवी मम पापं व्यपोहतु॥
विष्णोर्वक्षसि या लक्ष्मी यां च स्वाहा विभावसोः।
चन्द्रार्कशक्रशक्तिर्या नित्या धेनुरूपास्तु सा श्रिये॥

## शूलरोगे।

याज्ञवल्क्यः,—

अब्रह्मन्ता आमयी स्यात्। आमयः शूलरोगः। अत्रोपपातक-प्रायश्चित्तं त्रैमासिकम्। सार्द्धसप्तकृच्छ्राणि।

चिन्तामणौ,—

शूलेन मनुष्याणां हिंसकः शूली। तस्य शूलदानं प्रायश्चित्तम्। पलेन पलार्द्धेन वा सौवर्णशूलम्। राजतं वा ताम्रं वा लौहं वा खादिरं वा। आचार्य्यब्राह्मणयोर्वरणम्। आचार्य्यस्तिल-द्रोणोपरि तदर्द्धे तत्पादे वा शूलं स्थापयेत्। रक्तवस्त्रेण वेष्टयेत्। शैवपञ्चाक्षरेण त्र्यम्बकमन्त्रेण शूलं पूजयेत्। शूलस्य दक्षिणतः स्थण्डिलेऽग्निस्थापनम्। अग्नेः पूर्व्वं नवग्रहयज्ञवत् कलश स्थापनम्। ब्रह्मोपवेशनाद्याज्यभागान्ते पुरुष एवेदमितिमन्त्रेणा-ष्टोत्तरशतसंख्ययज्ञीयसमिद्धोमः। त्र्यम्बकमन्त्रेण तावदेवाज्य-होमः। इत इन्द्र भयामहेत तेनो अभयं कृधि। मघवंत्स्त्रिग्ध वेतन्न भजये विद्विषो विमृथो जहि (?) इति मन्त्रेण तिलहोमः। होमान्ते कलशनिकटे [1]घोषशान्तिपाठः। यस्यां शाखायां या शान्तिः सैव पठनीया। कलशोदकेन सुरास्त्वामभिषिञ्चन्त्वित्यनेन रोगिणोऽभिषेकः। ततो हुतवते पूजयित्वा प्राङ्मुखाय स्वय-मुदङ्मुखः पूर्व्वपापं स्मृत्वा मन्त्रेण शूलं दद्यात्। मन्त्रो यथा,—

---

(1) P. होषशान्तिपाठः।

त्वं शूल ब्रह्मणा सृष्टं त्रिपुराणां विनाशनम् ।
दैत्यानां दानवानाञ्च शङ्करस्यायुधं तथा ॥
कुक्षिस्थमथ पार्श्वस्थमथवा पृष्ठसङ्गतम् ।
शूलं विनाशय त्वं मे महादेवेन धारितम् ॥

ततो दक्षिणा ।

ततः स्नात्वातु भुञ्जीत ब्राह्मणैः सह बन्धुभिः ।

इति सर्व्वशूलहरशूलदानम् ॥

---

## अरुचिशूलहरम् ।

कर्म्मविपाकसमुच्चये,—

चान्द्रायणं चातिकृच्छ्रं प्राजापत्यमथापरम् ।
होमाद्यपि च कुर्व्वीत व्याध्यादेरनुरूपतः ॥

कर्म्मविपाकसंग्रहे, -

शूद्रान्नभोजनव्रात्यद्विजान्नभोजनं चाजीर्णशूलकरं सकाञ्चन-रूप्यपन्नत्रयदानं च तन्निष्कृतिः । विश्वस्तविषदाने प्लीहशूलं चान्द्रायणपराकं उदुत्यमुदयन्निति त्र्यृचो जपः । सन्ध्यात्रयेऽपामर्जन-स्तोत्रजपश्च । तत्रैव

दातुं ब्राह्मणमाहूय दानेन जठरे शूलम् ।

तत्र कृच्छ्रातिकृच्छ्रचान्द्रायणानि । तत्रैव गोगामी कटिशूली । कृच्छ्रातिकृच्छ्रसौरजपान् कुर्य्यात् । गां वस्त्रं काञ्चनं दद्यात् महिरण्यघृतैः । आज्यावेक्षणमन्त्रः ।

अलक्ष्मीर्यत्र दौर्भाग्यं सर्व्वगात्रेष्ववस्थितम् ।
तत् सर्व्वं शमयाज्य त्वं लक्ष्मीं पुष्टिञ्च वर्द्धय ॥

तत्रैव सन्ध्याद्यकरणे हस्तशूलं । निष्कद्वादशदानं ब्राह्मण-भोजनं सौरमन्त्रजपः हिरण्यदानम् । तत्रैव पित्रोर्मैथुनश्रवणे कर्णशूलम् । कुटुम्बिने निष्कविंशतिदानं वैष्णवमन्त्रजपः अपामार्जनस्तोत्रमन्त्रितजलपानं ब्राह्मणभोजनम् । तत्रैव नग्न-परस्त्रीदर्शने अस्तमनोदये सूर्य्यदर्शने च नेत्रशूलम् । वर्चोदा असि, वर्चो मे देहीति दशाक्षरमन्त्रेणाष्टोत्तरायुततिलाज्य-होमः । प्रजापति र्ऋषिः अतिजगतीच्छन्दः अग्निर्देवता । वयः सुपर्णामिति मन्त्रेण जलेनाभिषेचनम् । अक्षीभ्यान्ते इति सूक्तस्यायुतजपः ।

शातातपः,—

शूली परोपतापेन वपुषा जायते तनुः ।

अन्नदानं रुद्रजपश्च । तन्मते सर्व्वशूलेषु ।

कर्म्मविपाकसमुच्चये,—

शेषं कृच्छ्रद्वयं कुर्य्यात् गायत्र्याश्चायुतं जपम् ।
तिलहोमसहस्रन्तु जपेन्मृत्युञ्जयं तथा ॥

मृत्युञ्जयस्त्र्यम्बकस्तस्यायुतं जपः । व्यस्तं समस्तं वा । कर्म्मविपाकसंग्रहे तु पुण्यस्थाने वृक्षच्छायानदीपुलिनादिषु मूत्र-पुरीषष्ठीवनादिकरणे खेदः । इदं व इति मन्त्रस्यायुतजपः । आपोहिष्ठेतितृचेन चरुणा युतसर्पिषा अयुतं होमः ।

---

## पाण्डुरोगे।

कर्म्मविपाके,—

देवद्विजद्रव्यहारी पाण्डुरोगी। कृच्छ्रातिकृच्छ्रं चान्द्रायणम्। कुष्माण्डहोमः। स्वर्णरजतचन्द्रं वासोद्वयञ्च दद्यात्। शिरोवेदना सहितपाण्डुरोगी कृच्छ्रातिकृच्छ्रे चान्द्रायणं मिष्टान्नेन शतब्राह्मण-भोजनञ्च। पाण्डुरोगहरपृथ्वीदानम्। पलत्रयेण तदर्द्धेन वा पृथ्वीं सपर्व्वतवनसागरां कृत्वा नवरत्नान्वितां श्वेतवाससावेष्ट्य पलाष्टमितकांस्यपात्रे कृत्वा

एह्येहि देवि धात्री त्वं कुम्भेऽस्मिन् सम्यगाविश।
सहिता पर्व्वतैर्द्वीपैः सपवित्रैर्मनोहरैः॥

इत्यावाह्य षोड़शोपचारैः पूजा। अग्निपूर्व्वं वेष्टिताश्वत्थादि मृत्तिकायुतकुम्भस्थापनम्। भूमिर्भूम्नेति मन्त्रेण समिद्धोमः। भूर्भूमिमगान्माता मातरमभ्यगादिति घृतहोमस्तिलहोमश्च। होमान्ते पावमानादिमन्त्रैरभिषेकः। शान्तोवात इत्यनुवाकेन शान्तिपाठः। अक्षीभ्यामित्यनुवाकेन रोगिणोऽङ्गमार्जनम्। ततः

धात्री धरित्री भूतानां वराहेणोद्धृता पुरा।
रत्नगर्भा समुद्रैकवसना सर्व्वशोभना॥
दानेनानेन सुप्रीता पाण्डुरोगं व्यपोहतु।

इति मन्त्रः। ततो दक्षिणा।

---

## शीतोष्णज्वरगुददाहे।

वैश्यवधे गात्राणां छेदात् शीतोष्णज्वरो गुददाहश्च। प्रायश्चित्तं कृच्छ्रमतिकृच्छ्रं शतविप्रभोजनं उद्यन्निति तृचस्य जपः अयुतसंख्यः। अन्ते पितरिति सूक्तेन चरुणा होमः। आज्यशतहोमश्च अथवा महिषीदानम्। यथेच्छसुवर्णघटिता महिषी।

---

## अन्तर्वृद्धिहरनारायणदानम्।

हयशीर्षे,—

ऊर्द्ध्वाधः करयोश्चक्रशङ्खौ दक्षिणयोः क्रमात्।
वामयोश्च गदापद्मे श्रीः पुष्टिश्चास्य पार्श्वयोः॥

*लक्ष्मीर्वीणाहस्ता पुष्टिः पद्महस्ता। व्यवहारिकनिष्काभ्यां निष्केण वा स्वर्णेन। पञ्चगव्येन स्नाप्य कुङ्कुमोपरि स्थापनम्। श्वेतवस्त्रेणावेष्ट्य षोड़शोपचारैः पूजा नारायणमन्त्रेण। तेनैव समिदाज्यतिलहोमः। प्रत्येकं शतं शतं व्याहृतिभिश्च तिलहोमः। ततो नारायणमन्त्रेण रोगी नारायणमर्चयेत्। ततः प्राङ्मुखाय हुतवते उदङ्मुखस्य रोगिणो दानम्।

नारायण जगन्नाथ शङ्खचक्रगदाधर।
पूर्व्वजन्मनि यत्नादेर्विघ्नाद् यद् वैकृतं मम॥

---

* लक्ष्मीः पद्महस्ता पुष्टिर्वीणाहस्ता इति पाठ एव सम्भाव्यते। इति सं

अन्तर्वृद्धिं महारोगं दानेनानेन तोषितः ।
शङ्खचक्रगदापाणे शमयाशु जगत्पते ॥

इति मन्त्रः । ब्राह्मणभोजनं बन्धुभिः सह भोजनञ्च ।

---

## वातरोगहरणानि ।

कर्म्मविपाकसंग्रहे,—

देवब्राह्मणधनहरणात् स्वामिद्रोहाद् वातरोगी ।

कृच्छ्रातिकृच्छ्रौ कुर्व्वीत चान्द्रायणमथापरम् ।
वात आदत्त मन्त्रञ्च जपेदयुतसंख्यया ।
अग्निरस्मीत्यृचं चैव जपेच्च जुहुयादपि ॥

होमद्रव्यमाज्यम् ।

कर्म्मविपाकसारे,—

गुरुप्रत्यर्थी वातरोगी ।

नामत्रयेण कुर्व्वीत जपहोमञ्च शान्तये ।

---

## उन्मादे ।

कर्म्मविपाकसमुच्चये,—

परमोहनेन स्वकार्य्यसम्पादनमुन्मादहेतुः । तत्र कृच्छ्रं

चान्द्रायणं सारस्वतमन्त्रजपः ब्राह्मणतर्पणञ्च। यद् वागिति, दैवीं वाचमजनयन्त देवा इत्ययुतादिसंख्या ।

---

## धनुर्वातहरम् ।

तत्रैव,—

अनिच्छन्तीमुपनतामुपभुङ्क्ते परस्त्रियम् ।
सर्व्वाङ्गवेदनायुक्तो धनुर्वातयुतो भवेत् ॥
कृच्छ्रातिकृच्छ्रचान्द्रायणं महिषीदानमेवच ।
उद्यन्नुद्यन् जपश्चैव शक्त्या ब्राह्मणतर्पणम् ॥
नामत्रयायुतत्रयं जपेन्नामसहस्रकम् ।
जपेत् पुरुषसूक्तञ्च तद्रोगस्योपशान्तये ॥

महिषीदानमन्त्रः श्वासकासहरे दर्शितः ।

---

## पक्षवातहरम् ।

तत्रैव,—

सभायां पक्षपातीच जायते पक्षवातवान् ।
निष्कशतमितं हेम दद्याद्दानं द्विजातये ॥
श्राद्धञ्च वैष्णवं दद्यादात्मनोहितमिच्छता ।
सप्तधान्यानि दद्याच्च गोदानं तत्र कारयेत् ॥

---

## वातहरम्गदानम्।

वायुपुराणे,—वातव्याधियुक्तः स्तेयात्।

बौधायनः,—

हिरण्यं कारयेत् ताम्रं घनन्तु दशभिः पलैः।
तदर्द्धेन तदर्द्धेन शृङ्गे रूप्यमये कृते॥
तण्डुलोपरि संस्थाप्य ब्राह्मणाय निवेदयेत्।
आढ़कत्रितयं वापि तदर्द्धं वा स्वशक्तितः॥
पदेषु चतुर्षु स्थाप्यं कांस्यपात्रे चतुष्टयम्।

वायुदैवतमन्त्रेण समिद्धोमः। चरुहोमः। एवं होमोऽष्टशत-मष्टाविंशति र्वा प्रत्येकद्रव्यस्य। हुतवते हिरण्यदानम्। तत्रमन्त्रः

लक्ष्मीपते देवकिनन्दनेश
क्षीराब्धिशायिन् वचसामगम्य।
गोविन्द दामोदर वातरक्तं
विनाशयाशु क्षयितारिवर्ग॥

ततो दक्षिणादि।

---

## रक्तवातः।

शातातपः,—

रत्नवस्त्रप्रवालानां हारी स्याद् रक्तवातवान्।
चान्द्रायणद्वयं कुर्य्यादेतद्रोगस्य शान्तये॥

बौधायनस्तु,—

सवर्णागमने वातरक्तवान् जायते नरः ।

एतद्रोगनिवृत्त्यर्थं षडङ्गं कृच्छ्रमाचरेत् ॥

[1]इति धनुर्वातः ।

---

## अथ रक्तवातहराणि ।

शातातपः,—

रक्तवस्त्रप्रवालानां हारी स्याद् रक्तवातवान् ।

सवस्त्रां महिषीं दद्यात् पद्मरागसमन्विताम् ॥

वस्त्रं रक्तम् । महिषीदानमन्त्रः कासश्वासहरे उक्तः ।

---

## वातपित्तहरम् ।

कर्म्मविपाकसंग्रहे,—

लशुनं गृञ्जनं तालफलं चाश्नाति यो नरः ।

स वातरोगी भवति कृच्छ्रं चान्द्रायणं चरेत् ॥

वातपित्ते लक्ष्मीनारायणदानम् । मन्त्रे वातपित्तं विनाशये-त्यूहः ।

---

(१) अत्र "इति धनुर्वातः" इति समाधानं न लक्ष्यते । सं

## रक्तपित्तहरम्।

शातातपः,—

मद्यपो रक्तपित्ती स्यात् स दद्यात् सर्पिषोघटम्।
मधुनोऽर्द्धघटञ्चैव सहिरण्यं विशुद्धये॥

अत्र मद्यपानप्रायश्चित्तं त्रैमासिकादिषड़ब्दपर्य्यन्तं व्याधि-हरमभावे न कार्य्यम्। व्याधिनाशाय घृतघटदानम्। मधु-घटदानञ्च। एवमन्यत्।

## अथ श्लेष्महरम्।

शातातपः,—

वपुहारी श्लेष्मणः। तत्र शान्तपनं कृच्छ्रम्। तथा नित्यानु-ष्ठानविमुखः कफरोगी। तत्र मासमेकं यावकम्। सहस्रनाम-पाठः। नामत्रयेण चर्व्वाज्ययोरष्टोत्तरायुतहोमः।

## अपस्मारे।

शातातपः,—

धूर्त्तोऽपस्माररोगी। ब्रह्मकूर्च्चत्रयं धेनुदानञ्च तत्र प्राय-श्चित्तम्। कर्म्मविपाकसंग्रहे तु गुरुस्वामिद्रोहेणापस्मारः। तत्र चान्द्रायणम्। सदसस्पति मन्त्रेण चर्व्वाज्यहोमः। ब्राह्मण-भोजनम्। हिरण्यदानम्। व्यस्तं समस्तं वा।

## व्रणहराणि।

शातातपः,—

जात्यन्तरस्त्रीगमने मस्तकव्रणम्। प्राजापत्येन शुद्धिः। नासिकाव्रणे प्राजापत्यचतुष्टयम्।

कर्म्मविपाकसंग्रहे,—

कर्म्मकालेऽश्वकुक्कुटखरादिदर्शने नासिकाव्रणम्। तत उद्यन्नु-त्यमितितृचेनाज्यायुतहोमः। चरोश्च। श्रीसूक्तजपः। शिव-संकल्पेन मन्त्रयित्वा दूर्व्वां तस्य शिरसि बध्नीयात्।

शातातपः,—

स्वदारत्यागे हृदयव्रणम्। तत्र प्राजापत्यम्। कर्म्मविपाक-समुच्चये,—

आत्मघाते वक्षसि व्रणम्। तत्र गोदानद्वयम्। पञ्चाशद्-विप्रभोजनम्।

शातातपः,—

पितृष्वस्रभिगमने दक्षिणोष्ठे व्रणम्। तत्राज्यदानम्। तथा मातृष्वस्रभिगमने दक्षिणाङ्गे व्रणम्। तत्र दासीदानं तामलङ्कृत्य।

एवं दासी मया तुभ्यं स्त्रीवत् सम्प्रतिपादिता।
सदा कर्म्मकरी भोग्या यथेष्टं भोगमश्नुताम्॥

तथा फलचौर्य्येणाङ्गुलीव्रणम्। तत्र नानाफलायुतदानम्। तथा हीनस्त्रीगमने चरणव्रणम्। तत्र प्राजापत्यम्। भगव्रणे कर्म्मविपाकसमुच्चये मृते भर्त्तरि व्यभिचारेण योनिव्रणम्। तत्र

नीलवर्णवृषदानम्। मधुसर्पिस्तिलदानञ्च। भगन्दरे वाराहे उत्कोचेन धर्म्मनिर्णयात् भगन्दरः। पाद्मे आचार्य्यभार्य्यागमने भगन्दरः। वृद्धगौतमः,—तत्र ग्रहवेद्यां ग्रहपूजां कृत्वा ग्रहहोमं कृत्वा सौवर्णे राजते ताम्रे वा पात्रे गव्यघृतपूरिते माणिक्य-पद्मरागहीरकवैदूर्य्यगोमेदमरकतपुष्परागमौक्तिकहरितरत्नानि नव कृत्वा दद्यान्मन्त्रेण

आदित्यादिग्रहाः सर्व्वे नवरत्नप्रदानतः।
विनाशयन्तु मे हृष्टाः क्षिप्रमेव भगन्दरम्॥

शातातपः,—

स्वगोत्रस्त्रीगमने भगन्दरः। तत्र मेषीदानम्। तत्राग्नि-माण्डोक्तमेषीदानेतिकर्त्तव्यतान्वये मानाभावात् स्वरूपमेषीदान-मात्रं कर्त्तव्यम्। पूयव्रणे,—लोभादिना धर्म्मनिश्चयान्यथाचरणे पूयव्रणम्। तत्प्रकृच्छ्रं तिलप्रस्थदानम्। चरुघृततिलैरष्टोत्तर-शतहोमो व्याहृतिभिः। सहस्रं वा। ब्राह्मणभोजनञ्च। नाड़ी-व्रणे,—परेषां व्रणभेदेन नाड़ीव्रणम्। तत्र चान्द्रायणमतिकृच्छ्रं चातिचान्द्रायणम्। अन्ते रौद्रेणाष्टोत्तरशताज्यहोमः। कुष्माण्ड-होमः। सौम्यरुद्रजपः। यत्किञ्चेदमित्यस्यायुतजपः। एतद् व्यस्तं समस्तं वा।

कर्म्मविपाकसमुच्चये,—

गुरुं वञ्चयित्वाध्ययने अभक्ष्यभक्षणे वा गण्डमाला। तत्र कृच्छ्रत्रयं चान्द्रायणं पुरुषसूक्ताष्टोत्तरशतजपः। अर्च्चाभ्यामिति मार्ज्जनञ्च ब्राह्मणभोजनञ्च।

कर्म्मविपाकसमुच्चये,—

अनिर्दशाया गोः क्षीरं पीत्वा स्फोटकवान् भवेत् ।
उपवासत्रयं कृत्वा भोजयेद् विंशतिर्द्विजान् ॥

तथा,—

भर्त्तारं हित्वा जारालिङ्गने स्तनस्फोटः । तत्र गोपञ्चक-दानम् । लवणहरिद्राधान्यदानम् । उमामहेश्वरपूजा । द्वादश-निष्कदानम् । तामग्निवर्णामितिसूक्तजपः ।

---

## शिरोरोगे ।

शातातपः,—

[1]शिवहरणे शिरोरोगः । तत्रोपोष्य शिषशतफलदानम् ।

नारदः,—

ब्रह्मचारिणो भिन्नपात्रभोजने एकाङ्गे शिरोरोगः । तत्रा-क्षीभ्यामितिसूक्तशतजपः । चरुघृतहोमस्तेनैव । शातातपः,—

श्वमार्जारादिस्पृष्टस्य भक्षणे मुखे पूतिगन्धः । तत्र गोमूत्र-पानम् । विप्रत्रयभोजनञ्च । कर्म्मविपाकसंग्रहे तु कृच्छ्रातिकृच्छ्रौ चान्द्रायणं कुष्माण्डहोमः गायत्र्ययुतजपः । हिरण्यदानं व्रीहि-दानञ्च ।

---

(१) शिवफलशतम्नातं । ख ।

शातातपः,—

श्यामान्नहरणे चैव दन्तपीड़ा। तत्र हेमनिष्कद्वयनिर्म्मिताश्व-द्वयदानम्।

तथा,—

शूकरवधे दन्तुरः। तद्विशुद्ध्यर्थं घृतकुम्भदानम्।

तथा,—

सुरापः श्यावदन्तः। प्राजापत्याष्टकं चरेत्। शर्करां तु सप्त दद्यात्। महारुद्रं जपेत्। दशांशं तिलहोमः। वारुणमन्त्रै-रभिषेकः।

तथा,—

परोद्वेगकरातिनिष्ठुरोक्तिः। हास्यकरणातिक्रूरोक्तिः। गर्द्दभ-स्वरत्वञ्च। तत्र मुक्ताकाञ्चनयोर्दानम्।

तथा,—

मूको भ्रातृवधात्। तत्र चातिचान्द्रायणत्रयम्। सुवर्णपल-युतपुस्तकदानम्। पुस्तकदानमन्त्रः,—

सरस्वति जगन्मातः शब्दब्रह्माधिदैवते।
दुष्कर्म्मकारिणं पापं रक्ष मां परमेश्वरि॥

कर्म्मविपाकसङ्ग्रहे,—

वेदधर्म्मशास्त्रमूल्यपूर्व्वकाध्यापने जिह्वास्फालनमस्फुटवाक्य-त्वम्। जिह्वाव्रणञ्च। कृच्छ्रातिकृच्छ्रौ चान्द्रायणं कार्य्यम्। तामग्निवर्णामिति सूक्तस्यायुतजपः। विप्रेभ्यो हिरण्यदानम्। ब्राह्मणभोजनञ्च।

वायुपुराणे,—

वाग्विरोधं गुरोः कृत्वा वाचा गद्गदवान् भवेत्।

तत्र सरस्वतीदानम्। सरस्वती दक्षिणे वराक्षसूत्रहस्ता वामेऽभयपुस्तककरा हंसवाहना। पलतदर्द्धतच्चतुर्थांशकल्पिता। शुद्धरौप्येणासनं कृत्वा तदुपरि शक्त्या सुवर्णपद्मं दत्वा तत्र सरस्वतीं स्थाप्य मुक्तामालाश्वेतवस्त्रश्वेतगन्धमाल्यैः पूजा यद्-वागिति ऋग्द्वयेन कार्य्या। तेनैव शालिपयसाऽष्टशत-होमः। समिदाज्यतिलानां प्रत्येकमष्टशतम्। एवं प्रथमदिने कृत्वा आचार्य्यब्रह्मयजमानानामुपवासेन रात्रिनयनम्। प्रातः सरस्वतीपूजा। हुतवते ब्राह्मणाय दानम्। मन्त्रः—

या वक्त्रं ब्रह्मणो देवी या सा वागीश्वरी परा।
ब्रह्मविष्णुशिवैश्छन्दैः पूजिता सर्व्ववन्दिता॥
तुष्टा भवतु दानेन दत्तेनानेन वाक् परा।
वाग्विरोधं गुरोः कृत्वा यन्मे गद्गदभाषणम्।
तत्सर्व्वं क्षपय क्षिप्रं ब्राह्मि त्वं लोकपावनी॥

शातातपः,—

[1]विद्यापुस्तकहारी एड़मूकः। महाभारतपुस्तकं दद्यात्।

कर्म्मविपाकसंग्रहे,—

लवणहरणे घ्राणरोगः। उद्यमुद्यमृचस्याष्टोत्तरायुतजपः।

---

(१) P. विद्यापुस्तकहारी तु एड़मूकः।

अनेनैव चरुघृतहोमः। रक्तवस्त्रत्रयदानम्। काञ्चनदानम्। गोत्रयदानम्। सूर्य्यपूजा च।

शातातपः,—

कुटुम्बवधे वज्रनाशः। निष्कदानम्।

तथा,—

घृतचौरो नेत्ररोगी। घृतधेनुं दद्यात्।

कर्म्मविपाकसमुच्चये,—

परदृष्टिरोधे भिषक्मिथ्याचरणे कामात् परस्त्रीदर्शने नेत्ररोगः। चान्द्रायणं पराकः। पञ्चाशद्द्विप्रभोजनम्। वयः सुपर्णेति चरुणा घृतेनाष्टोत्तरसहस्रहोमः। वर्चोदा असि, वर्चो मे धेहीति मन्त्रजपः। आज्यदानं काञ्चनदानम्। एतद्रोग-शान्तये पापनाशाय प्रायश्चित्तं कल्प्यम्।

---

## अन्धत्वहरम्।

शातातपः,—

मातृहा अन्धः। तत्र पलचतुष्टयकृतताम्रपात्रे स्वर्ण-निष्ककृतवासुदेवप्रतिमां यदुवंशकृतां संस्थाप्य तदग्रे स्वर्ण-पलमितनौकां रौप्यपलमितनौकादण्डं संस्थाप्य विष्णुं सम्पूज्य दद्यात्। मन्त्रः—

वासुदेव जगद्वन्द्य सर्व्वभूताशये स्थित ।
पातकार्णवमग्नं मां तारयाश्रिततारक ॥

[1]अर्थिभ्योऽपि किञ्चिद् दद्यात् ।

पाद्मे,—

पराज्विरोधे अक्षिपीड़ा। तत्र गरुड़दानम्। स्वर्णपलेन गरुड़ः। पक्षौ राजतौ रत्नबद्धौ। माणिक्याभ्यामक्षिद्वयम्। पादयोः स्वर्णवलयं रत्नान्वितम्। कण्ठे स्वर्णभूषणम्। नासायां वैदूर्य्यमौक्तिकान्वितभूषणम्। नानाविधवस्त्रैरलङ्करणम्। विष्णुप्रतिमायाः शालग्रामस्य वा अग्रे स्थापनम्। ब्राह्मणस्य वस्त्रादिभिः पूजा। सुपर्णोऽसि गरुत्मानित्यादिभिर्गरुड़प्रकाशकैः पूजा अन्ते समिदाज्येन तिलैश्चरुणा च प्रत्येकं शतं जुहुयात्। ततः स्वस्तिवाचनान्ते प्राङ्मुखाय पूजितायोदङ्मुखस्य दातुर्दानम्। तत्र मन्त्रः,—

देवदेव जगन्नाथ लक्ष्मीप्रियपरायण ।
वाहनस्य प्रदानेन हर कर्म्म विपाकजम् ॥
अक्षिरोगं जगन्नाथ नारायण जगन्मय ।
पुष्पं वा पटलं वापि अतिरक्तमथापिवा ।
रक्तं वाप्यथ रक्ताभं तथार्वुदमथापि वा ॥

ज्ञात्वा स्वस्ति वाच्य विप्रभोजनं स्वयञ्च ।

कर्म्मविपाकसंग्रहे,—

---

(१) P. अन्येभ्योऽपि०।

मातापितृगुरुनिन्दाश्रवणे कर्णे रक्तस्रावः। पूयःस्रावो वा। तत्र कृच्छ्रचतुष्टयं हिरण्यदानम् रक्तवस्त्रदानं विप्रभोजनं सौरमन्त्रजपः तेन होमः। एतद्व्यस्तं समस्तं वा।

कृमिकर्णेन पञ्च नीलवृषा देयाः। शातातपः,—विश्वस्तघाती वधिरः। अतिचान्द्रायणं कृत्वा अन्ते स्वर्णपलयुक्तं पुस्तकं दद्यात्।

सरस्वति जगन्मातः शब्दब्रह्माधिदैवते।
दुष्कर्म्मकारिणं पापं रक्ष मां शरणागतम्॥

कर्णकुब्जः शय्यां दद्यात्।

---

## विविधरोगे।

ब्रह्माण्डे,—

कण्ठरोगोऽभक्ष्यभक्षणात्। अत्र कृच्छ्रत्रयं धेनुरेका कम्बलदानम्। तत्र मन्त्रः।

ऊर्णाच्छादन लोकानां शीतवातभयापह।
सर्व्वदुःखभयादस्मादतः शान्तिं प्रयच्छ मे॥

विकृतस्वरः कृच्छ्रमेकं कर्पूरफलं दद्यात्। चौरहारी खिन्नपाणिः। कुङ्कुमफलत्रयं दद्यात्।

शातातपः,—

[1]अयोनौ गमनाद् भुजस्तम्भः। रुद्रेण शम्भोः पूजा। सहस्र-कलसस्नानम्। चान्द्रायणम्। तप्तकृच्छ्रञ्च।

उदक्यां वीक्ष्यान्नभोजी कृमिलोदरी। सप्तरात्रं गोमूत्र यावकाहारः स्यात्।

शातातपः,—

हृदयकृमिले भीष्मपञ्चकव्रतम्।

उदरगुल्म इक्षुविकारहरणात्। तत्र गुडधेनुदानम्।

गुरुप्रत्यर्थी वातगुल्मवान्। मासं पयोव्रतम्।

मुञ्चामि त्वेति प्रत्यृचं चरुसर्पिर्होमः अयुतसंख्यः। वात आ वातु भेषजमिति सूक्तस्य जपः। अन्नदानम्।

अन्त्यजागमने गुल्मी। तत्र बौधायनः,—सुवर्णरजतताम्रार्क मूलकाष्ठान्यतमेन विनायकः। पुष्करः। स्वर्णेन चतुर्द्वयम्। [2]देवद्रव्यजातीयेनाखुः। नागयज्ञोपवीती स्वर्णेन। चन्दनागुरु-पुष्पाद्यैः पूजा। विनायकमन्त्रेणाज्येनाष्टशतहोमः। ततो दक्षिणाभिमुखाय विप्राय दानम्। मन्त्रः,—

विनायक गणेशान सर्व्वदेवनमस्कृत।

पार्व्वतीनन्दन मम गुल्ममाशु विनाशय॥

शातातपः,—

गर्भपातने यकृत्-प्लीह जलोदराः। तत्र जलधेनुदानम्। स्वर्ण-रौप्यताम्राणां प्रत्येकस्य पलदानम्।

---

(१) P. क्षत्रिययोनौ।

(२) आखुनिर्म्माणवस्तुनः सम्यक् प्रतिपत्तौ असमर्थः। सं।

कर्म्मविपाकसङ्ग्रहे,—

अयुतत्रयं श्रीसूक्तजपः। प्रत्यृचं चरुघृतहोमः।

---

## उदरव्याधौ।

कृच्छ्रातिकृच्छ्रचान्द्रायणानि। शिवस्य सहस्रकलशस्नानम्। उद्यन्नद्येत्यृचस्यायुतजपः। अन्ते पितरिति सूक्तेन घृतेन सहस्रहोमः। चरुणा च। हिरण्यमधुघृतदानं जलोदरे। मासत्रयं पयोव्रतम्। [1]इन्द्रस्य सहस्रकलशस्नानम्। शतविप्रभोजनञ्च।

नित्ययागाननुष्ठाने मन्दाग्निः। तत्र प्राजापत्यत्रयम्। शतविप्रभोजनञ्च।

अन्नहन्ताऽजीर्णी। उपवासत्रयम्। प्राजापत्यं वा। अग्निरग्नीत्यृचाष्टसहस्रं मधुहोमः। तावदेव घृतहोमः।

---

## मूत्रव्याधौ।

पराशरः,—

प्रज्ञाहीनोऽतिकृच्छ्रं चान्द्रायणं कुर्य्यात् मूत्रकृच्छ्रे।

शातातपः,—

गुरुतल्पगो मूत्रकृच्छ्री। गुरुतल्पप्रायश्चित्तार्द्धं पादं वा कुर्य्यात्।

---

(1) P. इन्द्रस्य।

तथा,—

पद्मयोनिगमनान्मूत्रकृच्छ्री । तिलपात्रत्रयं दद्यात् । षोडश-पलमितताम्रपात्रे तिलपूर्णे हिरण्यं दत्वा दानम् । दक्षिणा काञ्चनञ्च ।

मातुः सपत्नीगमने जायते अश्मरी । तत्र त्रैमासिकं प्रायश्चित्तं मधुधेनुदानम् । मधुधेनुदानं घृतधेनुवत् । बहुमूत्रत्वे गुड़धेनुः ।

कर्म्मविपाकसमुच्चये,—

सोदरागमने बहुमूत्रम् । पराकद्वयं त्रिंशद् वा ब्राह्मणभोजनम् । अन्ते सूक्तेनाष्टोत्तरसहस्रहोमः । घृतेन चरुणा च । जपो वा । सहस्रनामजपो गायत्रीजपो वा ।

---

## प्रमेहे ।

तथा प्रमेहे,—

चाण्डालीगमनात् सर्व्वप्रमेहः । यवमध्यचान्द्रायणमेकं पिपीलिकामध्यचान्द्रायणत्रयम् । इदमाप इति द्वाभ्यामुदुत्तम-मित्येकया च घृतहोमः । जपश्च ।

---

## शूलमेहः ।

सान्तपनमहासान्तपनातिसान्तपनानि ।

---

## वातप्रमेहः। मधुमेहः। लिङ्गव्याधिश्च।

सवर्णागमने। अत्र चान्द्रायणत्रयम्।

मातृगामी मधुमेही। भगिनीगामी इक्षुमेही। षड़ब्दं पञ्चाब्दं त्र्यब्दञ्च क्रमात् प्रायश्चित्तम्। सर्व्वत्र सौरमन्त्रेण जप-होमौ वा।

शातातपः,—

मातृगमने लिङ्गनाशः। भूभागे लिप्ते उत्तरत्र नवग्रहयज्ञोक्तो-पकरणं कुम्भं संस्थाप्य तञ्च कृष्णवस्त्रच्छन्नं कृष्णमालालङ्कृतं कृत्वा तदुपरि कांस्यपात्रं स्थापयेत्। सुवर्णनिष्कनिर्म्मिता धनदमूर्त्तिः वराभयहस्ता नरवाहना तत्र स्थाप्या। निष्कविंशतिमितसुवर्णेन लिङ्गहानिप्रतिमा कार्य्या। द्वयोः कुम्भस्थकांस्यपात्रे स्थापनम्। पुरुषसूक्तेन धनदपूजा। लिङ्गहानिप्रतिमायै नम इति रोग-प्रतिमापूजा। तस्मिन्नेव दिने अथर्व्ववेदपारायणारम्भः। याव-द्दिनैरथर्व्ववेदसमाप्तिस्तावद्दिनानि प्रतिमाद्वयपूजा। 'पारायणे तु अनेन दानेन निष्कामः स्यामिति रोगप्रतिमादानम्। धनददाने मन्त्रः,—

निधीनामधिपो देवः शङ्करस्य प्रियः सखा।

सौम्याशाधिपतिः श्रीमान् मम पापं व्यपोहतु॥

द्वयोराचार्य्याय पारायणकर्त्रे दानम्।

(१) P. पारायणान्ते तु।

दुष्टवादात् पङ्गुः। रौप्यपलत्रयं पुष्पफलत्रययुतं दद्यात्।

कर्म्मविपाकसङ्ग्रहे,—

दोषं विना भृत्यादिहस्तच्छेदने हृषणव्याधिः। अग्निदग्ध इव भवति सव्रणश्च। तत्र महारुद्रजपः। अतिरुद्रजपो वा। यतिचान्द्रायणं गोत्रयदानं वा।

---

## पादरोगे।

शातातपः,—

हरिणे निहते खञ्जः। शृगाले निहते स्तब्धपादः। स्वर्ण-निष्केणाश्वं कृत्वा अश्विनं मन्त्रेण सम्पूज्य दद्यात्।

कर्म्मविपाकसङ्ग्रहे,—

अश्ववधे वक्रपादः। निष्कत्रयं दद्यात्। सर्व्वपादरोगेष्वश्व-दानं वा।

कर्म्मविपाकसङ्ग्रहे,—

स्वगोत्रस्त्रीगमने श्लीपदम्। योन्यामसृक्स्रावः। तत्र चान्द्रायणं मासं पयोव्रतञ्च।

---

## चर्म्मरोगे।

पतितसंसर्गे वल्मीकाकारव्याधिः। तत्र—

गोमूत्रयावकाहारो मासार्द्धेन विशुध्यति।

सहिरण्यं घृतं दद्यात्। वल्मीके क्रमौ वल्मीकप्रतिमादानम्। त्वग्दोषे चान्द्रायणत्रयमौषधदानञ्च। गुरुतल्पगो दुश्चर्म्मी। गुरुतल्पप्रायश्चित्तं पादोनं कुर्य्यात्।

बौधायनः,—

ब्राह्मणाङ्गपीड़या दद्रुरोगः। तन्नोमामहेश्वरदानम्। सुवर्णेन तदर्द्धेन पादेन वा उमामहेश्वररूपम्। ईशश्चतुर्भुजः। त्रिनेत्रः। अक्षमाला शूलञ्च दक्षहस्तयोः। वामकर एको देवी-पृष्ठगतः अपरो वरदः। उमा वामोत्सङ्गगता द्विभुजा शिवपृष्ठ-गतैकहस्ता। रूप्यमयो वृषः घण्टामालावृतः। वृषोपरि द्वयो-रुपस्थानम्।

सर्व्वेश्वराय विद्महे शूलहस्ताय धीमहि।
तन्नोरुद्रः प्रचोदयात्॥

इति रुद्रगायत्र्या पूजा। त्र्यम्बकेण समिधां हुतायेति (?) घृतस्य रुद्रगायत्र्या तिलानां प्रत्येकं शतं शतं होमः।

अघोरासनान्ते पूजा। होमकर्त्रे आचार्य्याय प्रतिमादानं मन्त्रेण।

कैलासवासिन् भगवन्नुमया सहितः परः।
त्रिनेत्र हर मे दद्रुरोगमाशु विनाशय॥

ब्राह्मणान् भोजयित्वा स्वयं भोजनम्।

शातातपः,—

गोवधा [1]गुतकी । प्राजापत्यशतं कृत्वा भूमिं दत्त्वा भारतं शृणुयात् ।

लोहहारी बर्व्वराङ्गः । उपोष्य लोहशतपलं दद्यात् । तैल-चौर्य्येण कण्डूयनः । उपोष्य तैलघटद्वयं दद्यात् । वस्त्रहारी श्वीर्णाङ्गः । निष्कद्वयं हेम दद्यात् वस्त्रयुग्मञ्च ।[2] दद्रुमण्डले दोहधेनुः पलषष्टिमिता सप्तधान्ययुता देया ।

शातातपः,—

विश्वस्तभार्य्यागमने गजचर्म्मता । तत्र षडब्दं प्रायश्चित्तम् । मयूरवधेन कृष्णमण्डलः । निष्कत्रयमितस्वर्णमयूरं दद्यात् ।

कर्म्मविपाकसमुच्चये,—

अमेध्यप्रदाता विषमव्याधिवान् ।

मासं पयोव्रतं कुर्य्यादन्ते दद्यात् पयस्विनीम् ।

दुर्गन्धत्वं कन्याहरणात् । पद्मलक्षहोमेन शाम्यति ।

शातातपः,—

मधुचौरो वस्तिगन्धिः । मधुधेनुं दद्यात् ।

---

## कामलरोगे ।

वृद्धगौतमः,—

कामली भक्तचोरः । यथाशक्ति सुवर्णेन गरुड़ः । पञ्चयो-

---

(१) सर्व्वपुस्तकेष्वयमेव पाठः ।

(२) P. Adds होमञ्च ।

मौक्तिकद्वयं नासायां मौक्तिकं राजतमुत्तरीयं तिलद्रोणोपरि संस्थाप्य श्वेतवस्त्रेण वेष्टनीयः। ततश्चाचार्य्यस्तिलद्रोणस्थं गरुड़ं सम्पूज्य तिलद्रोणस्य वायव्यां दिशि तीर्थोदकपूरितं पञ्चरत्न-पञ्चपल्लवाश्वस्थानादिपञ्चमृत्तिकागोरोचनायुतं सितवस्त्रवेष्टितं कुम्भं स्थापयित्वा गरुड़ादाग्नेय्यां स्थण्डिलेऽग्निमुपसमाधाय पलाश-समिधामष्टशतं घृताष्टशतं गरुड़गायत्र्या हुत्वा व्याहृतिभि-स्तिलाष्टशतं हुत्वा स्विष्टकृदादिशेषं समापयेत्। आपोहिष्ठा त्र्यृचेन हिरण्यवर्णा त्र्यृचेन स्वादिष्ठयेति सूक्तेन पवमानः सुवर्जन इत्यनुवाकेन रोगिणं कलशेन स्नापयेत्। स्नातः शुक्लमाल्यानु-लेपनो रोगी उदङ्मुखः प्राङ्मुखायाचार्य्याय मन्त्रेण दद्यात्।

श्रीकृष्ण परमानन्द जगतः परिपालक।
पूर्व्वजन्मनि यत्पापं मुक्तस्थैर्य्यं मया कृतम्॥
तेन प्राप्तन्तु वैरूप्यं यन्मया अतिदुःसहम्।
कामलोत्थमिदं देव तव वाहनदानतः॥
विनाशयाशु मे कृष्ण जगतः पालकोऽसि।
एवं गरुड़दानन्तु कृत्वा मर्त्त्यः सुखी भवेत्॥

---

## कुष्ठरोगे।

शातातपः,—

ब्रह्महा शुक्लकुष्ठी। तत्र प्रायश्चित्तं षड्वार्षिकम्। रोग-प्रायश्चित्तम्। पञ्चरत्नपञ्चपल्लवपञ्चमृत्तिकासर्व्वौषधिसितवस्त्रा-

खत्यादिपञ्चत्वक्कषाययुक्ताश्चत्वारः कलशाः प्रतिदिशं स्थाप्याः । मध्ये पञ्चमः कलशः । मध्यकलशे राजतमष्टदलं पद्मम् । तदुपरि स्वर्णपलार्द्धेन तदर्द्धेन वा चतुर्भुजो वासुदेवः । आचार्य्यः पुरुषसूक्तेन वासुदेवं पूजयेत् । यजमानाश्चत्वारो ब्राह्मणाश्चतुर्षु कुम्भेषु वेदपारायणं कुर्य्युः । पूर्व्वे ऋग्वेदी । दक्षिणे यजुर्वित् । पश्चिमे सामगः । उत्तरे अथर्व्वी । द्वादशदिनैर्व्वेदसमाप्तिः । प्रतिदिनं वासुदेवपूजा त्रिकालम् । प्रथमदिने कुण्डपूर्व्वे ग्रहवेद्यां ग्रहपूजा । प्रतिदिनं यावता वेदभागं समाप्नोति तद्दशांशेन होमः । व्याहृतिभिर्घृततिलैर्यवैर्वा । ततो भद्रासनोपविष्टस्य यजमानस्य पञ्चभिः कलशैः सहस्राक्षं शतधारं सुरास्त्वामभिषिञ्चन्त्वित्याद्यैरभिषिञ्चेयुः । ततो यथाशक्ति गोभूहेमतिलदानम् । आचार्य्याय स्वर्णप्रतिमादानं मन्त्रेण ।

आदित्या वसवो रुद्रा विश्वेदेवा मरुद्गणाः ।
प्रीताः सर्व्वे व्यपोहन्तु मम पापं सुदारुणम् ॥

अन्येभ्योऽपि दक्षिणा ।

तत्रैव कुष्ठहरप्रदानम् । गोवधेन कुष्ठम् । पूर्व्वोक्तरीत्या कलशं रक्तचन्दनभक्तपुष्पयुक्तं दक्षिणे न्यसेत् । तदुपरि ताम्रमयतिलपात्रम् । तदुपरि दक्षिणहस्तधृतदण्डो वामहस्तधृतपाशः महिषारूढ़ः स्वर्णनिष्केण यमः । पुरुषसूक्तेनास्य पूजा । कुम्भवामे सामवेदपारायणं कश्चित् कुर्य्यात् । कुण्डे प्रतिदिनं व्याहृतिभिर्दशांशेन तिलहोमः । वेदपारायणसमाप्तौ कुम्भोदकेन पावमान्या स्वादिष्ठयेत्याद्ययाभिषेकः ।

यमो महिषमारूढ़ो दण्डपाणिर्भयावहः।
दक्षिणाशापतिर्देवो मम पापं व्यपोहतु॥

इत्यनेन दत्वा मासं गोभक्तिः।

शिवगीतायाम्,—

जन्तुवधे कुष्ठम्। तत्र सान्तपनम्। इदं क्षुद्रकुष्ठे।

वायुपुराणे तु,—

त्रिभिर्द्वाभ्यां वा एकेन वा रजतपलेन वृषः। हेमशृङ्गः। हेमखुरः। सुवर्णस्य पलैस्त्रिभिर्द्वाभ्यामेकेन वा वृषोपरि उमा-महेश्वरप्रतिमा। अष्टपलमितकांस्यपात्रे तस्य स्थापनम्। श्वेत-वस्त्रपुष्पैरभ्यर्च्य गृह्योक्तविधानेनाज्यभागान्तं कृत्वा शिवमन्त्रेण समिच्चर्वाज्यतिलहोमः। प्रत्येकमष्टोत्तरशतसंख्यः। उदङ्मुखायाचार्य्याय मन्त्रेण दद्यात्।

अष्टमूर्त्तेरधिष्ठानं कृपया वृषभध्वज।
श्वेतमौदुम्बरं सर्व्वमथवा श्वित्रमेव वा॥
त्वग्दोषजनितं यच्चैवमण्डनाय यथाहर।
सर्व्वकर्म्मविपाकोत्थं पार्व्वतीनाथ सर्व्वशः॥
कुष्ठहा भव सर्व्वेश रक्ष मां पार्व्वतीपते।

शातातपः,—

दीक्षितस्त्रीगमने रक्तकुष्ठी। प्राजापत्यचतुष्टयं कुर्य्यात्। भगिनीगमने पीतकुष्ठम्। पूर्व्वतः कलशः पूर्व्ववत्। पीतवस्त्रं पीतमाल्यं कलशे। तदुपरि यथाशक्तिकृतहेमपात्रे स्वर्णनिष्क-षट्कृतः शक्रो वज्रहस्तो गजारूढ़ः। तथा कुष्ठरोगप्रतिमा

कुब्जः शूलयज्ञोपवीतवान् हृदक्षिनेत्रः किङ्किणीयुतः दशसुवर्णेन कार्य्यः । पुरुषसूक्तेनेन्द्रपूजनम् । कुष्ठप्रतिमायै नम इति रोग-प्रतिमापूजनम् । कुम्भसमीपे ऋग्वेदस्य पारायणम् । यावद् वेदपारायणं द्वयोः पूजा । प्रतिदिनं वेदपारायणं दशांशेन व्याहृतिभिस्तिलहोमो यवहोमो वा । वेदपारायणसमाप्तौ प्रतिमाद्वयदानम् । अनेन रोगप्रतिमादानेन निष्पापः स्यामिति रोगप्रतिमादानम् ।

देवानामधिपो देवो वज्री वज्रनिकेतनः ।
शतयज्ञः सहस्राक्षो मम पापं व्यपोहतु ॥

अनेन शक्रदानम् । एवं रक्तकुष्ठेऽपि । कुम्भे रक्तवस्त्रमाल्यं विशेषः ।

गुल्मकुष्ठे,—

भ्रातुर्भार्य्यागमने गुल्मकुष्ठः ।[१] वैदुर्य्यमणिद्वयं दद्यात् । रूप्यहारी श्वेतकुष्ठी । प्राजापत्यद्वयं कृत्वा रूप्यपलद्वयं दद्यात् ।

ताम्रचौर उदुम्बरकुष्ठी । प्राजापत्यत्रयं कृत्वा ताम्रशतपल-द्वयं दद्यात् ।

---

(१) P. Adds स्वबन्धुगमने कृष्णकुष्ठः तत्र त्रैवार्षिकम् । पितृपत्नीगमने कटिकुष्ठगमनं तत्र त्रैवार्षिकम् । मातुलानीगमने नेत्रकुष्ठं तत्रापि त्रैवार्षिकं कृष्णाजिनदानञ्च । कृष्णाजिनदानविधिर्लेख्यते । ताम्बूलहरणे श्वेतकुष्ठम् ।

## अपुष्पवतीत्वहरम् ।

क्षुत्पिपासातुरा नारी भर्त्तारमवमन्य या ।
मिष्टान्नं स्वयमश्नाति न सा पुष्पवती भवेत् ॥

तन्निवृत्तये स्त्रीपुंमिथुनानि पञ्चाशत् भोजयेत् । तेभ्यः सौभाग्याष्टकदानम् । इक्षवः । कर्पूरम् । हरिद्रा । धान्यकम् । आमिक्षादिगोक्षीरविकाराः । कुसुम्भम् । कुङ्कुमम् । लवणञ्चाष्टमम् । हरिद्रास्थाने निष्पेषो वा जीरकम् । प्रतिबन्धकाधिक्ये चावृत्तिरस्य कर्म्मणः । वन्ध्यात्वहरसुवर्णधेनुदानम् ।

वायुपुराणे,—

सुवर्णपलेन गौस्तत्पादेन वत्सः । खुरा रूप्येण । पुच्छे मुक्ता । गले घण्टा । गुणवन्तं ब्राह्मणं कृत्वा तेन धेनुवत्सयोः पूजा । सोमो धेनुमितिमन्त्रेण चन्दनागुरुकर्पूरगन्धमाल्यवस्त्रप्रभृतिषोड़शोपचारैः पायसनैवेद्यैः कारयेत् । मोदकपूपलवण गुड़जीरकाणि सूर्पे सम्भृत्य धेन्वग्रे स्थापयेत् । तादृशमेव सूर्पषट्कं ब्राह्मणस्त्रीषु दद्यात् । ततः समिदाज्यचरुभिः शतं शतं सोमोधेनुमितिमन्त्रेण होमः । ततो होमकर्त्रे प्राङ्मुखाय स्वयमुदङ्मुखो मन्त्रेण धेनुं दद्यात् ।

धेनुर्याङ्गिरसां सत्रे प्रतिष्ठा सुरभेश्च या ।
दुहिता या तथा भानोरग्नेश्च वरुणस्य च ॥
याश्च गावः प्रवर्त्तन्ते वनेषूपवनेषु च ।

प्राणभृतां मम स्याद् वा पुत्रपौत्रप्रदा भृशम् ।
अविच्छेदमविच्छेदमविच्छेदञ्च सन्ततम् ॥

इति दत्त्वाष्टोत्तरशतविप्रभोजनम् ।

---

## गर्भस्रावे ।

कुलजवधे गर्भस्रावः ।

वायुपुराणे,—

पलेनार्द्धेन तदर्द्धेन वा हेम्नोपवीतम् । तन्मितेन रौप्येणोत्तरीयम् । ग्रन्थिप्रदेशे मौक्तिकमभ्रञ्च । द्वयोर्गायत्र्या पञ्चगव्येन क्षालनम् । ताम्रपात्रे दधिद्रोणं दत्त्वा तदुपरि घृतं दत्त्वा यज्ञोपवीतमुत्तरीयञ्च तत्र स्थाप्यम् । गायत्र्यैव द्वयोः पूजा । गायत्र्या मधुघृतमिश्रतिलैरष्टशतहोमः । हुतवते दानं मन्त्रेण ।

'उपवीतं परिमितं ब्रह्मणा विधृतं पुरा ।
भवनोकांश्यदानेन गर्भं सन्धारयेत्त्वहम् ॥

दक्षिणां दत्त्वा अनुव्रज्य समापणम् ।

---

## योनिस्रावे ।

कर्म्मविपाकसमुच्चये,—

मासोपवासिनी यदि व्यभिचरति तदा स्रवद्योनिश्शोणिता भवति । तत्र मासोपवासं मासं पयोव्रतं प्रायश्चित्तञ्च ।

---

(१) सर्व्वपुस्तकेष्वयमेव पाठः ।

## स्तन्यस्रावे।

स्त्री दुग्धचौरा स्तन्यक्षरणरोगिणी। सा क्षीरान्नमधुमण्डकेन ब्राह्मणत्रयं भोजयेत्। ब्राह्मणोच्छिष्टपादोदकमनुलिम्पेत स्तनेन। भूतेभ्यः पञ्चभ्यः सुरामांसमधुघृतपिष्टकानि गन्धपुष्पैर्बलिः।

---

## अर्वुदरोगे।

शातातपः,—

वैश्यहन्ता रक्तार्वुदो। चत्वारि प्राजापत्यानि कृत्वा सप्तधान्यानि दद्यात्।

---

## प्रदरे।

गुरुभिः शास्त्रनिर्णये स्पर्द्धायां प्रदररोगः। तत्र चान्द्रायणं कृच्छ्रम्। तद्विष्णोरित्ययुतजपः। दधिघृतमण्डकैर्विप्रत्रयं भोजयित्वा तत्पादोदकेन प्रदरमार्जनम्।

पाद्मे,—

तथा पशुवधेऽसृक्प्रदरः।

गौतमः,—

लोहितां धेनुं स्वर्णशृङ्गीं रूप्यखुरां रक्तवस्त्रपलतदर्द्धतत्पादमितहेमयुतां ब्राह्मणाय अग्निवर्णाथ मन्त्रेण दद्यात्।

गावो मे हृदये सन्तु पार्श्वतः पृष्ठतोऽपि वा।
देवानां त्वं हि सुरभिः त्वपयास्त्वग्वरं मम॥

---

## मेदोवृद्धौ।

शातातपः,—

दधिचौरो मेदोवृद्धिमान्। स दधिधेनुं दद्यात्।

---

## मृतभार्य्यत्वे।

ज्येष्ठेऽनूढ़े स्वयं विवाहं चेत्करोति मृतभार्य्यः।

सप्राजापत्यमैन्दवत्रयं च कुर्य्यात्। तामग्निवर्णामित्यनयाचाज्येनाष्टोत्तरायुतहोमः। चरुणा च तावत्तम्। ब्राह्मणत्रयभोजनम्।

शातातपे तु,—

मित्रभार्य्यागामी मृतभार्य्यः। ब्राह्मणोद्वाहेन शुद्ध्यति।

---

## मृतवत्सत्वे।

बालघाती च पुरुषो मृतवत्सः प्रजायते।
ब्राह्मणोद्वाहनञ्चैव कर्त्तव्यं तेन शुद्ध्यति॥
श्रवणं हरिवंशस्य कर्त्तव्यञ्च यथाविधि।
महारुद्रजपञ्चैव कारयेत्तु यथाविधि॥

जुहुयाच्च दध्यांशेन दुर्व्वामाज्यपरिप्लुताम्।
एकादश स्वर्णनिष्काः प्रदातव्या च दक्षिणा॥
एकादश पशूंश्चैव दद्याद् वित्तानुसारतः॥

पशुरत्र गौः।

अन्येभ्योऽपि यथाशक्त्या द्विजेभ्यो दक्षिणां दिशेत्।
स्नापयेद् दम्पती पश्चान्मन्त्रैर्वरुणदैवतैः।
आचार्य्याय प्रदेयानि वस्त्रालङ्करणानि च॥

ब्राह्मणोद्वाहनमेका निष्कृतिः। हरिवंशश्रवणं द्वितीया। तत्र स्वर्णशृङ्गी गौर्दक्षिणा शक्त्या। वाऽन्यत्र महारुद्रजपस्तृतीया। पयस्विनीधेनुदानं वा प्रायश्चित्तमिति क्वचित् पाठः। समस्तं वा प्रायश्चित्तं व्यस्तं वा।

---

## विविधविपाकः।

कर्म्मविपाकसमुच्चये,—

निषिद्धद्रव्यप्रतिग्रहनिषिद्धयोनिगमनब्राह्मणस्वहरणशस्त्रजीविकाभिः सर्व्वाङ्गवेदना। तत्र कृच्छ्रातिकृच्छ्रचान्द्रायणानि। गोभूहिरण्यवासोदानम्। तद्विष्णोरितितृचस्यायुतत्रयजपः।

---

प्रीतिभङ्गकरणात् अप्रतिष्ठः। शमीवरमश्वत्थमभिषिञ्चेत्। तथाश्वरोपितमश्वत्थं शम्या सह विवाहयेत्। शुभदिने अश्वत्थं शमीञ्च वस्त्रादिभिर्भूषयित्वा व्याहृतिभिस्तिलहोमं कृत्वा ब्राह्म-

णान् भोजयित्वा दक्षिणां दद्यात्। तत्र विनायकं व्याहृतिभिः संस्थापयेत्।

---

## पुण्डरीकरोगे।

शातातपः,—

कांस्यहारी पुण्डरीकरोगवान्। उपोष्य कांस्यपलशतं दद्यात्।

कुब्जो मूषिकहन्ता स्यात्। सप्तधान्यं सकाञ्चनं दद्यात्।

सर्व्वकार्य्येष्वसिद्धार्थो गजघाती भवेन्नरः।

स गणनाथस्य प्रासादं कारयेत्। गणानान्त्वेतिमन्त्रं लक्षं जपेत्। रक्तकरवीरपुष्पैर्दशांशेन होमः।

---

दारिद्र्यहरधनदमूर्त्तिदानम्। वायुपुराणे,—

दानविघ्नकारी दरिद्रः। स्वर्णपलेन अर्द्धेन चतुर्थांशेन वा कुवेरमूर्त्तिः। द्विबाहुर्गदाहस्ता नरवाहना शङ्खपद्मनिधि-पार्श्वस्था। तण्डुलद्रोणचतुष्टयं द्वयमेकं वा तदुपरि मूर्त्तेः स्थापनम्। श्वेतगन्धमाल्यैः पूजा। समिदाज्यतिलैराग्नेय्यां होमः। राजाधिराजायेति मन्त्रः। व्याहृतिभिस्तिलहोमः। ततो होमं कृतवते प्रतिमादानं मन्त्रेण।

उत्तराशापते देव कुवेर नरवाहन।

शङ्खपद्मनिधीनां त्वं पतिः श्रीकृष्णवल्लभः॥

प्रदानेन यथाप्राप्तं दारिद्र्यं मम दुःखदम् ।
तत्सर्व्वं मम दानेन पापमाशु विनाशय ॥

कर्म्मविपाकसमुच्चये,—

ऋणं दत्त्वा अधिकवृद्धिग्रहणे अन्येषां भयोत्पादने पाषाणादिप्रहारे च दारिद्र्यं देशान्तरवासः महाक्लेशी हृद्रोगी उदावर्त्ती च। तत्र कृच्छ्रमतिकृच्छ्रं चान्द्रायणम्। आज्यचरुभ्यां होमो व्याहृतिभिः। यत्किञ्चेदमिदं सूक्तं अजितां वा जपेत्।

---

## अथ ब्रह्मराक्षसत्वहरम् ।

कर्म्मविपाकसमुच्चये,—

अन्यायवृत्तिनृपतिसेवनात् विप्रहिंसनात् महादानसमादानात् गुरुभार्य्याभिमर्द्दनात् दंष्ट्रिभ्यश्च मरणात् गुरुब्राह्मणनिर्द्दयात् वेदबाह्यस्य शास्त्रस्य पठनात् कर्म्मसेवनात् ।

विषोद्बन्धनशस्त्राद्यैः परस्त्रीगमनात् तथा ।
श्रुताध्ययनसम्पन्नश्रोत्रियब्राह्मणस्य तु ॥
उदासीनः सभामध्ये कृत्वा भङ्गं सुदारुणम् ।
परीक्षासमये प्राप्ते कृत्वा भङ्गं सुदारुणम् ॥
वेदाध्ययनसम्भूतफलदानाविशेषतः ।
देवब्राह्मणराजाच्च स्वर्णापहरणात् तथा ।
अरण्ये निर्जले देशे जायते ब्रह्मराक्षसः ॥

ब्रह्मराक्षसत्वं पिशाचत्वस्याप्युपलक्षणम्। श्रुताध्ययनयुक्त

एतन्निमित्तवांश्चेद् ब्रह्मराक्षसः। श्रुताध्ययनरहित एतन्निमित्त-वांश्चेत् पिशाचः। अत्र—

पुत्रादिभिर्गयाश्राद्धजपहोमादिभिस्तथा।
ब्रह्मस्वार्पणतस्तस्य वेदं वा नित्यशो जपन्॥
देवतातीर्थं * * * कन्यादानेन चैवहि।
ब्रह्मराक्षसपैशाचान्मुच्यते मनुरब्रवीत्॥

जपो वेदपारायणं होमो लक्षहोमादि। ब्रह्मस्वार्पणं पिता यस्मात् हृतं तद्‌द्रव्यस्य पुत्रेण तस्मै समर्पणम्। पुरुषसूक्तादि-नित्यजपः। पुत्रादिभिरेवमादिकरणाद्‌ब्रह्मराक्षसपैशाचान्मुक्ति-रित्यर्थः।

इत्यग्निचिद्-वाजपेयिनरसिंहविरचिते नित्याचारप्रदीपे
द्वितीयभागकृत्ये जपरूपवेदाभ्यासप्रसङ्गेन
रोगनिवर्हणानि।

---

## अथाध्यापनरूपः पञ्चमो वेदाभ्यासोऽभिधीयते।

तत्र दक्षः,—

तद्दानश्चैव शिष्येभ्यो वेदाभ्यासो हि पञ्चधा।

तत्र पुत्राध्यापनं नित्यं तथाच श्रुतिः। तथा तस्य पुत्रमनु-शिष्टं लोकमाहुः तस्मादेनमनुशासति।

याज्ञवल्क्यः,—

कृतज्ञोऽद्रोही मेधावी शुचिः कल्याणसूचकः।
अध्याप्याः साधुशक्ताप्तस्वार्थदा धर्म्मतस्त्विमे ॥

कृतज्ञ उपकारज्ञाता। अद्रोही प्रसिद्धः। शुचिः पातकादि-रहितः। कल्याणसूचकः शुभलक्षणयुक्तः। साधुर्धार्म्मिकः। शक्तो वेदाक्षरग्रहणधारणे। आप्तो हितैषी। स्वः स्वकीयो ज्ञात्यादिः। तथा वित्तदः स्वेच्छया न तु पणपूर्व्वकम्।

मनुः,—

आचार्य्यपुत्रः शुश्रूषु र्ज्ञानदो धार्म्मिकः शुचिः।
[1]आप्तः शक्तोऽर्थदः साधुः स्वोऽध्याप्या दश धर्म्मतः ॥

ज्ञानदो विद्यान्तरदाता।

विद्यादानेन सुमतिर्ब्रह्मलोके महीयते।
विद्यादानात् परं दानं त्रैलोक्येऽपि न विद्यते ॥
येन दत्तेन चाप्नोति शिवं परमकारणम्।
यावच्च पातकं तेन कृतं जन्मशतैरपि ॥
तत्सर्व्वं नश्यते तत्र विद्यादानेन देहिनाम्।
पराध्ययनतः क्लेशं पुरुषस्तु यदश्नुते ॥
तपस्तत्परमं तस्य ब्रह्मलोकप्रदं स्मृतम्।

यमः,—

संवत्सरोषिते शिष्ये गुरुर्ज्ञानमनुं दिशन्।
हरते दुष्कृतं तस्य शिष्यस्य वसतो गुरुम् ॥

(१) Mss. read—

शक्तोऽर्थदाता स्वः साधुरध्याप्या दश धर्म्मतः।

मनुः,—

आचार्य्यपुत्रः शुश्रूषुर्ज्ञानदो धार्म्मिकः शुचिः ।
[1]आप्तः शक्तोऽर्थदः साधुः स्वोऽध्याप्या दश धर्म्मतः ॥

विष्णुः,—

नापरीक्षितं याजयेन्नाध्यापयेन्नोपनयेत् ।
[2]विद्या ब्राह्मणमेत्याह शेवधिस्तेऽस्मि रक्ष माम् ।
असूयकाय मां मा दा स्तथा स्यां वीर्य्यवत्तमा ॥

शेवधिर्निधिः । अत्र यद्यपि ।

अध्यापनमध्ययनं यजनं याजनं तथा ।
दानं प्रतिग्रहश्चैव षट् कर्म्माण्यग्रजन्मनः ॥
षस्मान्तु कर्म्मणामस्य त्रीणि कर्म्माणि जीविका ।
याजनाध्यापने चैव विशुद्धाच्च प्रतिग्रहः ॥

इत्यध्यापनस्य जीविकात्वमुक्तं तेनास्य धर्म्मजनकत्वे मानाभावः । तथा शुश्रूषा (?) [-षया] विद्यान्तरप्राप्तिप्रत्युपकारादिकामनया क्रियमाणस्य धर्म्मजनकत्वे मानाभावः । तथापि सर्व्वथा

(१) Mss. read –

शक्तोऽर्थदाता स्वः साधुरध्याप्या दश धर्म्मतः ।

पाठेऽस्मिन् दश न सङ्गच्छत इत्ययं परित्यक्तः । सं

(२) P Adds – आपस्तम्बः,—जात्याचारसंशये धर्म्मार्थमागतमग्निमुपसमाधाय जातिमाचारं पृच्छेत् । साधुतां चेत् प्रतिजानीते शास्त्रं प्रतिपाद्यते अन्नुग्रपसमाधानं संशयार्थं यमः,—नापृष्टः कस्यचित् ब्रूयात् । न चान्यायेन पृच्छतः । जानन्नपि हि मेधावी जडवल्लोकमाचरेत् ॥ मनुः,—विद्ययैव समं कामं कर्त्तव्यं ब्रह्मवादिना । आपद्यपि हि कष्टायामिति ।

दृष्टफलाभिसन्धानमन्तरेण परोपकारबुद्धा क्रियमाणस्याध्यापनस्य ब्रह्मलोकादिसफलार्थत्वं बोध्यम्। अत्र शिष्टाः,—

गृह्णीत योऽननुज्ञातः परस्मात् पठतो द्विजः।
ब्रह्मस्तेयेन संयुक्तः स याति नरकं ध्रुवम्॥
यश्च श्रुत्वान्यतः शास्त्रं संस्कारं प्राप्य वा शुभम्।
अन्यस्य जनयेत् कीर्त्तिं गुरोः स ब्रह्महा भवेत्॥
एकमप्यक्षरं यस्य श्रुतस्योपकरोति यत्।
पृथिव्यां नास्ति तद्द्रव्यं यद्दत्त्वा सुकृती भवेत्॥
कपिलानां सहस्रेण सम्यग्दत्तेन यत्फलम्।
तत्फलं सकलं लेभे धर्म्मशास्त्रप्रदायकः॥
यश्च व्याकुरुते वाचं यश्च मीमांसतेऽध्वरम्।
सामस्वरविधिज्ञश्च पंक्तिपावनपावनः॥

तथा,—

त्रीण्याहुरतिदानानि गावः पृथ्वी सरस्वती।
नरकादुद्धरन्त्येताः

इत्यादिवाक्यबलाद् विद्यान्तरदानमपि तत्फलार्थं काम्यमित्यध्यापनान्तर्गतमेव।

बृहस्पतिः,—

एवं दण्डादिकैर्युक्तैः संस्कृत्य तनयं पिता।
वेदमध्यापयेत् यत्नाच्छास्त्रं मन्वादिकं तथा॥

मनुः,—

भार्य्या पुत्रश्च दासश्च शिष्यो भ्राता च सोदरः।
प्राप्तापराधास्ताड्याः स्यू रज्ज्वा वेणुदलेन वा ॥

इति श्रीमहामहोपाध्यायाग्निचिद्वाजपेयिनरसिंहविरचिते
नित्याचारप्रदीपे द्वितीयभागकृत्यम्।

---

## अथ तृतीयभागकृत्यम्।

तत्र दक्षः,—

तृतीये चैव भागे तु पोष्यवर्गार्थसाधनम्।
माता पिता गुरुर्भार्य्या प्रजा दीनः समाश्रितः ॥
अभ्यागतोऽतिथिश्चाग्निः पोष्यवर्ग उदाहृतः।
ज्ञातिबन्धुजनः क्षीणस्तथाऽनाथः समाश्रितः ॥
अन्येऽपि धनयुक्तस्य पोष्यवर्ग उदाहृतः।
ज्ञानविद्भ्यश्च दातव्यमन्यथा नरकं व्रजेत् ॥
भरणं पोष्यवर्गस्य प्रशस्तं धर्म्मसाधनम्।
नरकं पीड़ने तस्य तस्माद् यत्नेन सम्भरेत् ॥
स जीवति पुमानेको बहुभि र्योऽनुजीव्यते।
जीवन्तोऽपि मृतास्त्वन्ये पुरुषाः सोदराम्भराः ॥

अर्थसाधनं धनार्जनं। दीनः समाश्रितः न तु सम्यक् आश्रितोऽपि। अभ्यागतः सम्बन्धी ग्रामान्तरादागतः। ज्ञातिः पितृबन्धुः। बन्धुर्मातृबन्धुः। जन भालजनः। अनाथः पित्रादि- पोषकरहितः। तत्र मात्राद्यन्यानां कष्टायामप्यापदि गर्हित-

नाप्युपायेन पोषणीयत्वम्। ज्ञात्यादीनां सम्भवे नातिगर्हितेनोपार्जनेन पोषणम्।

गुरून् भृत्यांश्चोज्जिहीर्षन्नर्चिष्यन् देवतातिथीन्।

सर्व्वतः प्रतिगृह्णीयान्न तु तृप्येत्स्वयं ततः॥

इति मनुवचनात् न तु तृप्येत् प्राणयात्रामात्रं कुर्य्यादेव।

तथा,—

श्रीमन्तं ज्ञातिमासाद्य यो ज्ञातिरवसीदति।

सीदता यत्कृतं पापं तेन पापेन लिप्यते॥

इति मार्कण्डेयपुराणाच्च।

ज्ञातिसमानत्वान्मातृबन्ध्वादीनामपि सम्भवे पोष्यत्वमवगम्यते। अतएव गुर्व्वादीनामपि प्रकारान्तरेण वृत्तिसम्भवे न पोष्यवर्गत्वम्।

गुरुषु त्वभ्यतीतेषु विना वा तैर्गृहे वसन्।

आत्मनो वृत्तिसिद्ध्यर्थं गृह्णीयात् साधुतः सदा॥

इति। विना वा तैर्गृहे वसन्निति तेषां प्रकारान्तरेण वृत्तिसिद्धादितिभावः।

वामनपुराणे,—

ततश्च कुर्य्यान्निजजातिधर्म्मं

देशानुशिष्टं कुलधर्म्ममग्र्याम्।

स्वगोत्रधर्म्मं न हि सन्त्यजेत

निजजातिधर्म्मं ब्राह्मणस्य याजनादीत्येवम्। देशानुशिष्टं

(१) वृद्धितमनौः—हर्त्तुमन्निच्छन्॰। Prof. Jolly's edition. अ॰ ४। श्लो॰ २५१।

यस्मिन् देशे य उपायः शक्यत्वेन विधिविषयस्तं कुर्य्यात् । कुल-धर्म्मं वक्ष्यमाणशालीनयायावरत्वादिरूपम् । तस्यावश्यकत्वाय स्वगोत्रेत्यादि ।

विष्णुपुराणे,—

यज्ञसंस्था हविःसंस्थाः सोमसंस्थाश्च संस्थिताः ।
धने यस्मान्मनुष्याणां यतेतातो धनार्ज्जने ॥

महाभारते,—

अर्थेन च विहीनस्य पुरुषस्याल्पमेधसः ।
उच्छिद्यन्ते क्रियाः सर्व्वा ग्रीष्मे कुसरितो यथा ॥
दुर्भिक्षादेव दुर्भिक्षं क्लेशात् क्लेशं भयाद्भयम् ।
गृहेभ्यः प्रसृता यान्ति दरिद्राः पापकारिणः ॥

तथा,—

धर्म्मेणार्थः समाहार्य्यो धर्म्मलब्धं त्रिसाधनम् ।
कर्त्तव्यं धर्म्मपरमं मानवेन प्रयत्नतः ॥
एकेनांशेन धर्म्मस्तु कर्त्तव्यो भूतिमिच्छता ।
एकेनांशेन कामश्च एकमंशं विवर्द्धयेत् ॥

मार्कण्डेयपुराणे,—

पादेन तस्य पारत्र्यं कुर्य्यात्सञ्चयमात्मवान् ।
अर्द्धेन चात्मभरणं नित्यं नैमित्तिकं तथा ॥
पादं चार्द्धार्द्धमर्द्धस्य मूलभूतं विवर्द्धयेत् ।

इति । पादमित्यस्य विवरणमर्द्धार्द्धमर्द्धस्येति । तत्रार्द्धेन वृत्त्यन्तरासम्भवमालोक्य कुसीदवृत्त्यभिप्रायं वैश्याभिप्रायं वा ।

नारदः,—

धनमूलाः क्रियाः सर्व्वा [1]यत्नस्तस्यार्जने मतः ।
रक्षणं वर्द्धनं भोग इति तस्य विधिः क्रमात् ॥
[2]यथैतत् त्रिविधं ज्ञेयं शुक्लं शबलमेव च ।
कृष्णञ्च तस्य [3]विज्ञेयो विभागः सप्तधा पुनः ॥
श्रुतशौर्य्यतपःकन्याशिष्ययाज्यान्वयागतम् ।
धनं सप्तविधं [4]शुक्लमुदयोऽप्यस्य तद्विधः ॥
कुसीदकृषिवाणिज्यशुल्कशिल्पानुवृत्तिभिः ।
कृतोपकारादाप्तञ्च शबलं समुदाहृतम् ॥
[5]पार्श्विकद्यूतचौरार्त्तिप्रतिरूपकसाहसैः ।
व्याजेनोपार्जितं यच्च तत्कृष्णं समुदाहृतम ॥

श्रुतेनाध्यापनेन । शौर्य्येण विजयादिना । कन्यालब्धं कन्यया सह श्वशुरगृहाल्लब्धम् । शिष्यागतं गुरुदक्षिणया । याज्यागतं दक्षिणात्वेनागतम् । अन्वयागतं दायलब्धम् । उदयः फलञ्च तद्विधः शुक्लः । अनुवृत्तिः सेवा । पार्श्विकं उत्कोचादिलब्धम् ।

---

(१) मुद्रितनारदस्मृतौ—यत्नस्तस्य साधने मतः । Prof. Jolly's edition. प्रकरणं ऋणादानं नाम प्रथमं व्यवहारपदं श्लो० ४२ ।
(२) " तत् पुनस्त्रिविधं ० do श्लो० ४४ ।
(३) " विशेषः प्रभेदः do श्लो० ४४ ।
(४) " शुक्लस्योपगमस्तस्य तद्विधः do श्लो० ४५ ।
(५) " उत्कोचद्यूतदौत्यार्त्तप्रति० ०कृष्णं हि तदुदाहृतम् । do श्लो० ४७ ।

आर्त्तिः पीड़ा। प्रतिरूपं द्रव्याभ्यासः। साहसं पीतयानादि। व्याजो द्रव्यमिश्रीकरणम्।

तथा पुनर्नारदः,—

'तत्पुनर्द्वादशविधं प्रतिवर्णतया स्मृतम्।
साधारणं स्यात् त्रिविधं विशेषं नवधा विदुः॥
क्रमागतं प्रीतिदायः प्राप्तञ्च सह भार्य्यया।
अविशेषेण वर्णानां सर्व्वेषां त्रिविधं धनम्॥
वैशेषिकं धनं विद्याद् ब्राह्मणस्य त्रिलक्षणम्।
प्रतिग्रहेण यल्लब्धं याज्यतः शिष्यतस्तथा॥
त्रिविधं क्षत्रियस्यापि प्राहुर्वैशेषिकं धनम्।
युद्धोपलब्धं कराच्च दण्डाच्च व्यवहारतः॥
वैशेषिकं धनं ज्ञेयं वैश्यस्यापि त्रिलक्षणम्।
कृषिगोरक्षवाणिज्यैः शूद्रस्यापि त्वनुग्रहात्॥

(१) मुद्रितनारदस्मृतौ:—

तत् ० प्रतिवर्णाश्रयात् स्मृतम्।
साधारणं ० शेषं नवविधं विदुः॥ ५०
क्रमागतं ०। ० त्रिविधं स्मृतम्॥ ५१
० धनं ज्ञेयं ब्राह्मणस्य स्मृतं त्रिधा।
० स्यापि स्मृतं वैशेषिकं ०।
कराद् युद्धोपलब्धञ्च दण्डाच्च व्यवहारतः॥ ५२
० स्यापि त्रिधा स्मृतम्।
० वाणिज्यैः शूद्रस्यैषामनुग्रहात्॥ ५३
Prof. Jolly's edition. ऋणादानं नाम प्रथमं व्यवहारपदम्

कारः प्रजाभ्यः करः। व्यवहारतो दण्डतः। शूद्रस्यानुग्रहात् शुश्रूषाकृतात्।

विष्णुः,—

अथ गृहाश्रमिणस्त्रिविधोऽर्थो भवति। शुक्लः शवलोऽसितश्च। शुक्लेनार्थेन यदौर्द्धदेहिकं करोति तेनास्य देवत्वमासादयति। यच्छवलेन तन्मानुष्यम्। यत्कृष्णेन तत् तिर्य्यक्त्वम्। स्ववृत्त्युपार्जितं सर्व्वेषां शुक्लम्। [1]अनन्तरवृत्त्युपार्जितं कृष्णम्।

क्रमागतं प्रीतिदायः प्राप्तञ्च सहभार्य्यया।
अविशेषेण सर्व्वेषां धनं शुक्लमुदाहृतम्॥

सम्पद्यापदि वा यस्य या वृत्तिर्विहिता तल्लब्धं शुक्लम्। तेन कर्म्मकरणे देवत्वम्। यदविहितमप्रतिषिद्धं सामान्येनानुज्ञातं तल्लब्धं शवलम्। यदत्यन्तविगर्हितं विपद्यपि निषिद्धं तत्कृष्णम्। तेन तिर्य्यक्त्वमिति विभागः। एतदेव सात्त्विकं राजसं तामसं चेत्याख्यायन्ते। यद्यपि धनार्जननियमो न क्रत्वर्थः पुरुषार्थ एवेति चतुर्थे साधितं तथापि वचनबलात् फलतारतम्यमिति उपायान्तरेणार्जने क्रतुवैगुण्याभावः। तथा उपायाः।

तत्र विष्णुनारदौ,—

क्रमागतं प्रीतिदायः प्राप्तञ्च सहभार्य्यया।
अविशेषेण वर्णानां

इत्यनेन सर्व्वेषां शुद्धधनत्वेन कथितवन्तौ। तेन प्रीतिदायेन

---

(1) मुद्रितविष्णुस्मृतौः—अनन्तरवृत्त्युपात्तं च कृष्णं। ८। Prof. Jolly's edition. ५८ प्रकरणम्।

विवाहकाले श्वशुरदत्तेन पितृपितामहादिक्रमागतधनेन वा धन-वतो न तृतीयभागे धनार्जनार्थमाह।

तथाच मनुः,—

'नेहेत वा प्रसङ्गेन न विरुद्धेन कर्म्मणा।

न कल्पमानेष्वर्थेषु नार्त्यामपि यतस्ततः॥

प्रसङ्गेन गीतवाद्यादिना। कल्पमानेष्वर्थेषु पित्रादिक्रमा-गतविवाहादिलब्धेषु। तस्य पित्रादिधनेनैव यावत् स्वकर्त्तव्य-दृष्टादृष्टार्थकर्म्मनिर्वाहात्। पाकसंस्थादिवाजपेयपौण्डरीकगो-सवादिमहायज्ञान्तकर्म्मणामपि बहुतरधनसाध्यानां पित्रादि-क्रमागततावद्धनवतः कर्त्तुं सौकर्य्यात्। एवं

वृत्त्यर्थादधिकं गृह्णन् नरो भवति किल्बिषी।

इति बहुतरधनस्वीकारदोषस्य दायादिष्वसम्भवः। तस्य प्रतिग्रहादिविषयत्वात्।

तथाच व्यासः,—

प्रतिग्रहरुचि र्न स्यात् वृत्त्यर्थं तं समाचरेत्।

स्थित्यर्थादधिकं गृह्णन् ब्राह्मणो यात्यधोगतिम्॥

इति। किञ्च

विद्वांस्तु ब्राह्मणो 'लब्ध्वा पूर्व्वोपनिहितं निधिम्।

अशेषतोऽप्यादटीत सर्व्वस्याधिपतिर्हि सः॥

---

(१) मुद्रितमनोः—नेहेतार्थान् प्रसङ्गेन०। Prof. Jolly's edition. अ० ४। श्लो० १५।

(२) मुद्रितमनोः—इहा०। Prof. Jolly's edition अ० ८। श्लो० ३७।

इति मनुवचनेन निधिग्रहणे दोषाभावात् तद्धनवतो महा-यज्ञाद्यनुष्ठानम्। एवं तपसा जपहोमादिना यज्ञब्धं। तथा यजुर्विधानादौ सुवर्णपात्रशतमुत्पाद्यत इत्यादिश्रवणात् तल्लब्ध-धनवतो बहुधनसाध्यकर्म्मानुष्ठानम्। एवं सति

धर्म्मार्थं यस्य वित्तेहा तस्यानीहा गरीयसी।
प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम्॥

इत्येतन्महाभारतवचनम्। तन्निन्दितमहादानादिप्रतिग्रहादि-परमेव। प्रक्षालनाद्धि पङ्कस्येति वाक्यशेषात् दायाद्यादिधने पङ्काभावात्।

यस्य त्रैवार्षिकं [1]द्रव्यं पर्य्याप्तं भृत्यवृत्तये।
अधिकं वापि विद्येत स सोमं पातुमर्हति॥

इत्यादिना मनुवचनेन त्रैवार्षिकाधिकान्नत्वस्य दायाद्यादि-धनवत्तयैव विवक्षितत्वात्।

यत्तु ब्रह्मवैवर्त्ते,—

मातापितृगुरोरर्थे विवाहार्थेञ्च धर्म्मतः।
अध्वरार्थञ्च विदुषा ग्रहीतव्यं धनं सदा॥

इति तन्नित्यसोमयागार्थं सत्प्रतिग्रहाभ्यनुज्ञातं मातापित्रादि-नित्यपोष्यमात्रचर्य्यात्।

ननु च गृहस्थमात्राधिकारिकत्वान्महाक्रतुविधीनां पुनश्च स्नातकधर्म्मत्वेन पाकसंस्थाहविःसंस्थासोमसंस्थामहायज्ञस्वरूप-

(१) कुल्लूकभट्टः—भक्तं। Prof. Jolly's edition. अ० ११ श्लो० ७।

पञ्चविधक्रतूनां देवलप्रभृतिभिः स्मरणात् तेषाञ्च धनं विना अशक्यानुष्ठानत्वेन महादानादिप्रभृतिग्रहेणापि धनार्जनं क्रतुविधिभिरेव प्रयुज्यते। यद्यपि धनार्जनं क्रत्वङ्गं नयाधानवद् विध्यन्तरासिद्धमुपजीव्यते। यस्मिन् प्रीतिः पुरुषस्य 'तन्निष्पार्थलक्षणेति। स्वतः प्राप्तत्वेनाविधेयत्वात्। किन्तु उपायान्तरपरिसंख्यारूपेण प्राप्यते। तदुक्तं भाष्यकृता द्रव्यवत्ता तु न केनचिद्विधिना कृप्तेति। तथापि द्रव्यं विनाऽसिद्धता क्रतुना द्रव्यमाक्षिप्यते द्रव्येण तु तदुपार्जनाक्षिप्यत इत्येवमपि प्रतिग्रहादिकविध्यपेक्षितत्वात् कर्त्तव्यमेव। अतएव षष्ठे नयाणां द्रव्यसम्पन्नः कर्म्मणो द्रव्यसिद्धित्वादिति पूर्व्वपक्षं कृत्वा अनित्यत्वात्तु नैव स्यादिति निर्धनोऽप्यर्जयित्वा अधिक्रियेतेत्युक्तमिति चेन्नैवम्। यद्यपि क्रतुविधिभिर्द्रव्यमाक्षिप्यते द्रव्येण तु नार्जनोपाय आक्षेप्तुं शक्यते। उपायं विनापि दायादिधनसम्भवेनानैकान्तिकत्वात्। यत्तु षष्ठे—निर्धनोप्यर्जयित्वा अधिकारी इति तत्र नायमर्थः क्रत्वर्थमर्जनं कर्त्तव्यमिति। किन्तु निर्धनस्य पुरुषस्य धनमभिलषितमेव तेन तदुपाये तस्य प्रयत्नः सिद्ध एव। स यदि धनं लभ्यते तदा क्रतुकरणे शक्तत्वादधिक्रियत एवेति। तत्रैतत् स्यात् जीवनार्थं धनसत्त्वेऽपि क्रतुपर्य्याप्तं धनाभावे जीवनार्थं धनेच्छा किन्तु क्रत्वर्थमेवेति फलतः क्रत्वर्थमेव धनार्जनमिति। नैवं न जीवनमात्रपर्य्याप्तधनवन्तं प्रत्याह

(१) P तन्निष्टार्थ०।

त्वक्रान्त(?)विधिरस्य करोति किन्त्वविशेषफलार्थिनं कर्त्तृशक्तिमन्तं तेन जीवनार्थोपात्तधनेनैव निराकाङ्क्षत्वात् क्रतुविधिर्न स्वयं धनार्जनं प्रयुङ्क्ते। पुरुषस्तु यदि जीवनार्थधनस्याल्पत्वेन बहुधन-साध्यक्रतावपर्य्याप्तत्वेन क्रतुसिद्धिमेवोद्दिश्य प्रतिषिद्धोपायेन धनमर्जयति तदा तदपि धनं क्रतुना गृह्यत एव। धनं क्रत्वङ्गं नोपायः। जीवनार्थमपि धनं जीवनार्थत्वेन क्रत्वङ्गं किन्तु व्रीहित्वादिरूपेण क्रतुमुद्दिश्यार्जितमपि व्रीह्यादिकं व्रीह्यादिक-मेव। यथा क्रतुफलमुद्दिश्य क्रियमाणमप्याधानं न तु क्रतुविधिना प्रयुज्यते। तत्र स्वविधिसिद्धवदिहापि द्रव्यस्वरूपस्य पुरुषाभि-लषितत्वमेव तदुपाये प्रवर्त्तकम्। अयन्तु विशेषः द्रव्यस्याभि-लषितत्वं कदाचिज्जीवनोपायत्वेन कदाचिच्च क्रत्वादिफलाकाङ्क्षया। तदुपायप्रवृत्तिश्च लोकतः। आहवनीयादीनामपेक्षितत्वञ्च क्रतु-फलद्वारकमेव तदुपायस्याधाने शास्त्रत एव प्रवृत्तिः। न चैतावता क्रतुविधिभिराहवनीयोपायग्रहणं द्रव्योपायग्रहणं वा माना-भावात्। पुरुषस्य धनार्जने उपायविशेषनियमात् तदतिक्रमे यथाशास्त्रं प्रायश्चित्तम्। यत्तु मनुवचनम्,—

> सप्त वित्तागमा धर्म्या दायो लाभः क्रयो जयः।
> प्रयोगः कर्म्मयोगश्च सत्प्रतिग्रह एव च॥

इति। तत्र दायः पित्रादिक्रमागतम्। लाभो निध्यादिलाभः। क्रयः प्रसिद्धः। जयः क्षत्रियस्य। ब्राह्मणस्यापदि युद्धाद् विना (?)। प्रयोगः कुसीदवृत्तिः। कर्म्मयोगः कृषिवाणिज्यादि वैश्यस्य। ब्राह्मणस्याप्यापदि। सत्प्रतिग्रहः द्विजातिभ्यः प्रशस्तेभ्यः।

इत्यादि यद्धर्म्महेतुत्वमर्जनस्योक्तं नैतावतापि क्रतुविधिप्रयुक्तत्वं किन्तु पुरुषस्य शुद्धधनेन कर्म्मकरणे देवत्वमित्यादिकमेव वचनात् कल्प्यते। केवलं यो लोभेन गर्हितमहादानादिप्रतिग्रहं करोति लोभेन भ्रमेण वा तत्त्यागपूर्व्वकं प्रायश्चित्तमकृत्वा पश्चात् तापेन तेन महायज्ञं करोति तस्य क्रतुफलं स्यादेव। धनस्य राजसत्वादिना फलं मध्यमम्। प्रतिग्रहदोषस्तु स्यादेव। धर्म्माकाङ्क्षया तत्करणमनुचितम्। निन्दितः प्रतिग्रहः कृतः। कदाचिच्च दैवमानुषविघ्नेन धर्म्मो नानुष्ठितः तदा महाननर्थः स्यात्।

हारीतः,—

पतितदुष्कृतिभ्यः प्रतिगृहीतमस्वर्ग्यमयज्ञीयं न च तेन पुण्यार्थीनाप्नोति। इति वचनात् पतितादिचाण्डालादिप्रतिगृहीतेन धनेन यज्ञादिकरणे फलाभावः। तस्माद् गृहिभिस्तन्न कर्त्तव्यम्। तस्मिद्धं दायाद्यादिधनासत्वेनार्जनार्थं तृतीयभागे यत्नः।

तथाच मनुः,—

नेहेतार्थान् प्रसङ्गेन न विरुद्धेन कर्म्मणा।
न कल्पमानेष्वर्थेषु नार्त्यामपि यतस्ततः॥

अर्थेषु कल्पमानेषु जातेषु धनार्थं नेहेतेत्यर्थः। यस्य तन्नास्ति समाप्तं वा तस्य शास्त्रोक्ता वृत्तयः।

तत्र मनुः,—

अध्यापनमध्ययनं यजनं याजनं तथा।
दानं प्रतिग्रहश्चैव षट् कर्म्माण्यग्रजन्मनः॥

पश्चात्तु कर्म्मणामस्य त्रीणि कर्म्माणि जीविका।
याजनाध्यापने चैव विशुद्धाच्च प्रतिग्रहः॥

विशुद्धोऽत्र यदीयप्रतिग्रहे न विशेषतः प्रायश्चित्तमाम्नातम्। च शब्दात् देशकालद्रव्यस्वरूपनिबन्धनदोषाभावरूपविशुद्धत्वं प्रतिग्रहविशेषणम्।

याज्ञवल्क्यः,—

इज्याध्ययनदानानि वैश्यस्य क्षत्रियस्य च।
प्रतिग्रहोऽधिको विप्रे याजनाध्यापने तथा॥

गौतमः,—

द्विजातीनामध्ययनमिज्यादानं ब्राह्मणस्याधिका प्रवचनयाजनप्रतिग्रहाः। पूर्व्वेषु नियमः। पूर्व्वेष्वध्ययनादिषु आवश्यकत्वं नियमः। न तु प्रवचनादिषु विभागादिप्राप्तकुटुम्बपोषणपर्य्याप्तधनस्य धनार्जननियमाभावादिति विज्ञानेश्वरः।

मनुः,—

अद्रोहेणैव भूतानामल्पद्रोहेण वा पुनः।
या वृत्तिस्तां समास्थाय विप्रो जीवेदनापदि॥
यात्रामात्रप्रसिद्ध्यर्थं स्वैः कर्म्मभिरगर्हितैः।
अक्लेशेन शरीरस्य कुर्व्वीत धनसञ्चयम्॥
ऋतामृताभ्यां जीवेत मृतेन प्रमृतेन वा।
सत्यानृताभ्या[1]मथवा न श्ववृत्त्या कदाचन॥

---

(१) सत्यानृताभ्यामपि वा०। Prof, Jolly's edition. अ० ४ श्लो० ४।

ऋतमुञ्छशिलं ज्ञेयममृतं स्यादयाचितम्।
मृतन्तु याचितं भैक्ष्यं प्रमृतं कर्षणं स्मृतम्॥
सत्यानृतन्तु वाणिज्यं तेन चैवापि जीव्यते।
सेवा श्ववृत्तिराख्याता तस्मात् तां परिवर्जयेत्॥

गौतमः,—

आद्यास्त्रयः श्रेष्ठाः स्युः। उञ्छशिलायाचितयाचितरूपास्त्रय इत्यर्थः।

हारीतः,—

ऋतामृतसत्योपहृतसम्पन्नापवृत्तयो भवन्ति। ऋतमुञ्छशिलम्। भैक्ष्यममृतम्। अयाचितोपपन्नं सत्यम्। अध्यापनाच्छिष्योपहृतम्। सम्पन्नवृत्तिः सद्भ्यो याचितम्। अपवृत्तिः कृषिः। तासां पूर्व्वाः पूर्व्वा श्रेयस्यो भवन्ति। ब्राह्मणस्येत्यनुवृत्तौ।

गौतमः,—

कृषिवाणिज्ये वाऽस्वयं कृते कुसीदञ्च। कुसीदं स्वयं कृतमपि। कुसीदवृत्तिर्धर्म्मोऽति प्रदेशान्तरे गौतमेनाप्यभिधानात्।

पैठीनसिः,—

गृहस्थधर्म्माचरिष्यन् न लोभेत येन धर्म्मस्य वृत्तिमुपाददीत।

आपस्तम्बः,—

दायाद्यं शिलोञ्छौ यच्चापरिगृहीतम्। अपरिगृहीतमस्वामिकं शाकनीवारादिकमिति लक्ष्मीधरः। निध्यादिकं वा।

अत्रच ग्राम्यादेर्निपतितस्य परित्यक्तवल्लरीग्रहणं शिलम्। एकैकस्य त्यक्तस्य कणस्योपादानं उञ्छमिति विज्ञानेश्वरः।

हारीतः,—

अयोनि। कण्डनम्। गोस्थानम्। धान्यकरणम्। लवनम्। इति पञ्च उञ्छस्थानानि। लूनं शीर्णमनुज्ञातं शिलमित्याहुः। अयोनि मार्गादि। कण्डनस्थानं प्रसिद्धम्। गोस्थानं गोभ्यो धान्यादिदानस्थानम्। धान्यकरणं खलम्। लवनं लूयतेऽस्मिन् इति व्युत्पत्त्या क्षेत्रम्। अनुज्ञातं स्वाम्युपेक्षितम्। अयाचितं याचितञ्च प्रतिग्रहरूपं प्रीतिदायरूपं च विशेषेण निर्द्देशात्।

अयाचिताहृतं ग्राह्यमपि दुष्कृतकर्म्मणः।
अन्यत्र कुलटाषण्डपतितेभ्यस्तथा द्विषः॥

इति याज्ञवल्क्येन प्रतिग्रहप्रकरणेऽभिधानात्। अपि दुष्कृतकर्म्मणः किमुत विशुद्धादित्यर्थः।

प्रख्यापनं प्रध्यापनं प्रश्नपूर्व्वः प्रतिग्रहः।
याजनेऽध्यापने वादः षड्विधो वेदविक्रयः॥
न वेदविक्रयं कुर्य्यादग्निविक्रयमेव च।

इति भारते याजनाध्यापननिन्दा वेतनपूर्व्वकयाजनाध्यापनविषयेति लक्ष्मीधरव्याख्यानात्। भृतकाध्यापनस्य उपपातकमध्ये गणनाच्च। अपणपूर्व्वकं ये याजनाध्यापने तयोरनावहत्तित्वम्। अतएव

कृतज्ञोऽद्रोही मेधावी शुचिः कल्याणसूचकः।
अध्याप्या धर्म्मतः साधुशक्ताप्तज्ञातिवित्तदाः॥

इति याज्ञवल्क्यवचने विस्तदस्याध्यापनागुप्ता । तत्रच विस्तद इति अपणपूर्व्वकमर्थप्रदातेति विज्ञानेश्वरेण व्याख्यातम् ।

यत्तु मनुः,—

राजतो धनमन्विच्छेत् संसीदन् ब्राह्मणः क्षुधा ।

याज्यान्तेवासिनो वापि नत्वन्यत इति स्थितिः ॥

तथाच याज्ञवल्क्यः,—

राजान्तेवासियाज्येभ्यः सीदन्निच्छेद्धनं क्षुधा ।

इति याजनाध्यापनयोरापद्धर्म्मत्वमुक्तम् । वृत्तौ सीदन्निति-पदाद् विधानाभाव इति विज्ञानेश्वरेण व्याख्यानात् न वृत्त्यन्तरा-सम्भवरूपत्वेन आपद्वृत्तित्वम् । यद्वा राजप्रतिग्रहसाहचर्य्यात् पणपूर्व्वकयाजनाध्यापनापरम् । सीदन्निच्छेदिति धनकामनया पणपूर्व्वकयाजनाध्यापनप्रतीतेः । तेन अपणपूर्व्वकप्रशस्तयाजना-ध्यापनयोरनापद्यपि स्नातकधर्म्मत्वम् ।

तथाच ब्रह्माण्डे,—

अनापद्यपि धर्म्मेण याज्यतः शिष्यतोऽपि वा ।

गृह्णन् प्रतिग्रहं विप्रो न धर्म्मात् परिहीयते ॥

तत्सिद्धम् ।

याजनाध्यापनप्रतिग्रहा मुख्या वृत्तयः । तत्रापि प्रतिग्रहाऽ-सम्भवे अध्यापनम् । अध्यापनासम्भवे याजनम् । ब्राह्मणस्येत्यनु-वृत्तौ गौतमः,—

याजनाध्यापनप्रतिग्रहाः सर्व्वेषां पूर्व्वः पूर्व्वो गुरुः । सर्व्वेषां प्रशस्तानामपि गुरु र्दोषावहः । विशुद्धप्रतिग्रहाद् विशुद्धा-

ध्यापनं गुरुः। विशुद्धाध्यापनाच्च विशुद्धयाजनं गुरुरिति भावः। युक्तञ्चैतत्। पतितसंसर्गे याजनाध्यापनयोः सद्यः पातित्य-हेतुत्वम्। पतितप्रतिग्रहस्य संवत्सरेणेति गौरवस्य व्यक्तत्वात्।

यत्तु याजनाध्यापनप्रतिग्रहमध्ये प्रतिग्रहस्य गर्हितत्ववचनं मानवे—

प्रतिग्रहः प्रत्यवरः प्रेत्य विप्रस्य गर्हितः।

इति तद्विशुद्धयाजनाध्यापनापेक्षया गर्हितप्रतिग्रहविषयम्। तथाच वाक्यशेषे।

याजनाध्यापने नित्यं क्रियेते संस्कृतात्मनाम्।
प्रतिग्रहस्तु क्रियते [1]शूद्रादप्यन्त्यजन्मनः॥

इति याज्यशिष्ययोः संस्कृतत्वेन प्रशस्तत्वं याजनाध्यापन-प्राशस्त्ये हेतुः। अन्त्यः शूद्रचाण्डालादिरूपः प्रतिग्रहगर्हितत्वे हेतुरुक्तः।

यच्च हेतन्तरमुक्तम्—

जपहोमैरपैत्येनो याजनाध्यापनैः कृतम्।
प्रतिग्रहनिमित्तन्तु त्यागेन तपसैव च॥

इति तदपि विशुद्धयाजनाध्यापनापेक्षया गर्हितप्रतिग्रहस्य निन्दापरं सङ्गच्छते। अन्यथा निन्दितयाजनाध्यापनयोरिति धनत्यागपूर्व्वकमेव प्रायश्चित्तमिति। जपहोमैरपैत्येन इत्य-सङ्गतेः।

(१) मुद्रितमनौ :—शूद्रादप्यन्त्यजन्मनः। Prof. Jolly's edition. अ० १० श्लो० ११०।

यद्गर्हितेनार्जयन्ति कर्म्मणा ब्राह्मणा धनम्।
तस्योत्सर्गेण शुद्ध्यन्ति जप्येन तपसैव च॥

इति मनुविष्णुभ्यां गर्हितार्जनमात्रे सामान्येन त्यागविधानात्। तथा पुरोहितयाजनाध्यापनाधिकारे यमेन

कर्म्मणा गर्हितेनेह यद्वित्तं समुपार्जितम्।
तस्य त्यागेन शुद्ध्यन्ति * * * न्वेषणेन च॥

हारीतः,—

शूद्रयाजने गर्हितधनं न............प्रक्षिप्य ब्राह्मणानुपेत्य ब्रूयादिति।

वशिष्ठः,—

गर्हितयाजनाध्यापनदक्षिणात्यागात् पूता भवन्ति। अयाज्ययाजने पुनः संस्कारः श्रूयते। नत्वस्य प्रतिग्रहे। पतितयाजने पातित्यं न पतितप्रतिग्रहे। तस्माद् यथोक्तमेव सम्यक्। अतएव लक्ष्मीधरेण तथैव व्याख्यातम्। प्रतिग्रहः प्रत्यवर इति प्रतिग्रहनिन्दा प्रशस्तयाजनापेक्षयेति।

यत्तु वशिष्ठवचनम्,—

अग्नय इव दीप्यन्ते जपहोमैर्द्विजातयः।
प्रतिग्रहेण शाम्यन्ति उदकेनाग्नयो यथा॥

इति। तत्र प्रतिषिद्धप्रतिग्रहेणेति लक्ष्मीधरेण व्याख्यातम्।

मनुः,—

कुसूलधान्यको वा स्यात् कुम्भीधान्यक एव वा।
त्र्यहैहिको वापि भवेदश्वस्तनिक एव वा॥

चतुर्णामपि चैतेषां द्विजानां गृहमेधिनाम्।
ज्यायान् परः परो ज्ञेयो धर्म्मतो लोकजित्तमः॥
षट्कर्म्मको [1]भवेदेषां त्रिभिरन्यः प्रवर्त्तते।
द्वाभ्यामेकश्चतुर्थस्तु ब्रह्मसत्रेण जीवति॥

कुसूलधान्यकः कोष्ठिकापरिमितधान्यवान्। कुम्भी मृद्भाण्डविशेषः। ईहा चेष्टा तस्यां भवं ऐहिकं त्र्यहं ऐहिकं यस्य स तथा। श्वोभवं श्वस्तनं धर्म्म न तदस्तीत्यश्वस्तनिकः सद्य इत्यर्थः। अत्र चाश्वस्तनापेक्षया त्र्यहैहिके त्रैगुण्यदर्शनात् कुसूलकुम्भीधान्यकयोरपि पूर्व्वं पूर्व्वं त्रिगुणम्। कुम्भीधान्यकः त्र्यहत्रिगुणनवदिनकुटुम्बभरणयोग्यधान्यवान्। एवं कुसूलधान्यकः नवत्रिगुणसप्तविंशतिदिनकुटुम्बभरणयोग्यधान्यवान्। दर्शाद्यर्थघृतश्राद्धाद्युपकरणवस्त्रव्यञ्जनदक्षिणादिसाधनमजाद्रव्यं प्रविश्य दिनपर्य्याप्तिसाधनत्वं धान्यानां बोद्धव्यम्। षट्कर्म्मको भवदेषामिति एषां चतुर्णां मध्ये एकः कुसूलधान्यकः षट्कर्म्मा भवेत्। षड्भिः कर्म्मभिः सप्तविंशतिदिनपर्य्याप्तधनमर्जयेत्। षट्कर्म्माणि च पूर्व्वोक्तानि उञ्छशिलायाचितयाचितकृषिवाणिज्यरूपाणि। अन्यो द्वितीयः कुम्भीधान्यकः त्रिभिरुञ्छशिलायाचितैर्नवदिनपर्य्याप्तधनमर्जयेत्। एकस्तृतीयः त्र्यहैहिकः उञ्छशिलाभ्यां त्रिदिनपर्य्याप्तधनमर्जयेत्। चतुर्थस्तु अश्वस्तनिकः केवलेन उञ्छेन जीवति। दिनमात्रपर्य्याप्तधनमर्जयेत्। ब्रह्म-

---

(१) हस्तलिखितग्रन्थे :—भवत्येषां ०। Prof. Jolly's edition, अ० ४ श्लो० ९।

सत्रशब्द उञ्छपरः । ब्रह्म सततं त्रायत इति व्युत्पत्त्या । एते च वृत्तिप्रकारा न सर्व्वेषां ब्राह्मणानाम् । तथा सति—

यस्य त्रैवार्षिकं द्रव्यं पर्य्याप्तं भृत्यवृत्तये ।
अधिकं वापि विद्येत स सोमं पातुमर्हति ॥

इत्यादिना मनुनैव सप्तविंशतिदिनाधिकधनवतो गृहस्थस्य दर्शितत्वात् तद्विरोधापत्तेः । किन्तु धनसाध्यकर्म्मणा यः परलोकजयं नेच्छति धनजीवयोरनियतकालनाशित्वात् किन्तु वृत्तिसङ्कोचेनैव तपोरूपेण परलोकमिच्छति तस्येमे वृत्तिविशेषाः । तत्राप्युत्तरोत्तरस्य दुःखातिशयेन तपःप्रकर्षात् श्रेष्ठलोकप्राप्तिः फलम् ।

तदेतदुक्तम्,—

ज्यायान् परः परो ज्ञेयो धर्म्मतो लोकजित्तमः ।

इति । तेन कृच्छ्रचान्द्रायणादिकतपोरूपत्वेनैषां वृत्तिविशेषाणां फलसाधनत्वम् ।

कृच्छ्रकृद्धर्म्मकामस्तु महतीं श्रियमाप्नुयात् ।

इत्यादिवत् । तदुक्तं श्रीधरेण

अयञ्च वृत्तिविशेषपरिग्रहो धर्म्मातिशयार्थिगृहस्थमात्रविषयः ।

अत्रैव याज्ञवल्क्यः,—

कुसूलकुम्भीधान्यो वा त्र्यहिकोऽश्वस्तनोऽपि वा ।
जीवेद्वापि शिलोञ्छेन श्रेयानेषां परः परः ॥

इति । अत्र विज्ञानेश्वरव्याख्या,—कुसूलधान्यो द्वादशाहकुटुम्बपोषणपर्य्याप्तधनः । कुम्भीधान्यः षडहपर्य्याप्तधनः ।

त्र्याहिकस्त्र्यहपर्य्याप्तधनः। अश्वस्तनः एकदिनपर्य्याप्तधनः।
एते चत्वारः शिलवृत्तयः उञ्छवृत्तयो वेति जीवेद्वापि शिलोञ्छेने-
त्युक्तम्। गृहस्थो द्विविधः। शालीनो यायावरश्च। तत्र
प्रतिग्रहाधिको विप्र इत्यादिना

त्रैवार्षिकाधिकान्नो यः स हि सोमं पिवेद् द्विजः।

प्रतिसंवत्सरं सोमं पशुः प्रत्ययनं तथा॥

इत्यादिना शालीनस्य वृत्तयो दर्शिताः। कुसूलकुम्भी-
धान्योवेत्यादिना यायावरस्य चतुर्विधस्य शिलोञ्छवृत्तिरुक्ता।
यदाह

देवलः,—

द्विविधो गृहस्थो यायावरः शालीनश्च। तयोर्यायावरः
प्रवरो याजनाध्यापनप्रतिग्रहरिक्थचयविवर्जनात्। षट्कर्म्मा-
धिष्ठितः प्रेष्यचतुष्पदगृहग्रामधनधान्ययुक्तो लोकानुवर्त्ती शालीन
इति। शालीनोऽपि चतुर्विधः। याजनाध्यापनप्रतिग्रहकृषि-
वाणिज्यपाशुपाल्यैः षड्भिर्जीवत्येकः। याजनाध्यापनप्रति-
ग्रहैरन्यः। याजनाध्यापनाभ्यामपरः। चतुर्थस्तु अध्यापनेनैव।

यदाह मनुः,—

षट्कर्म्मैको भवत्येषां त्रिभिरन्यः प्रवर्त्तते।

द्वाभ्यामेकश्चतुर्थस्तु ब्रह्मसत्रेण जीवति॥

इति। तत्र विज्ञानेश्वरमते ब्रह्मसत्रपदमध्यापनपरम्।

नैत्यिके नास्त्यनध्यायो ब्रह्मसत्रं हि तत्स्मृतम्।

इति ब्रह्मयज्ञे मनुनैव ब्रह्मसत्रशब्दप्रयोगात्।

हारीतः,—

द्विविधमेव गृहस्थं प्राहुः । शालीनं यायावरञ्च । शालीनात् पुण्यतरो यायावरः । श्रेयान् सर्व्वारम्भेषु । शाला विद्यतेऽस्य इति शालीनः । स द्विविधः । सम्पन्नवृत्तिरसम्पन्नवृत्तिश्च । तयोरसम्पन्नवृत्तिः श्रेयान् । उञ्छशिलवृत्तिरित्यर्थः । सम्पन्नवृत्तिश्च उञ्छशिलभैक्ष्यायाचिताध्यापनयाजनकृषिवाणिज्यवृत्तिरिति शालीनो द्विविध इत्युक्ता यायावरं प्रत्याह शालीनात्मवृत्तियापनतया यायावरः । दश दश रात्रिर्वा वसन् यातीति यायावरः । वरासु वा वक्ष्यमाणासु वृत्तिषु यापयत्यात्मानमिति वा यायावरः । स द्विविधः कृतप्रस्थानोऽकृतप्रस्थानश्च । यस्य ऋत्विजः वपनपूर्व्वं पूर्व्वेद्युराग्नेयीं कारयित्वा प्रातर्वैश्वानरीं कारयित्वा इमां दिशं व्रज इदं द्रव्यमाहरेति व्यवस्थापयन्ति स कृतप्रस्थानः । अकृतप्रस्थानश्च यस्य ऋत्विजः वपनं कारयित्वा प्रातर्वैश्वदेवेनेष्ट्वा अस्यां दिशि इदं व्रीह्यादिद्रव्यं तिष्ठतीति कथयन्ति न स्वयं गच्छन्ति ।

स एतयोरुभयोः साधारणधर्म्मानाह मन्वतः,—

शयनासनाहारविहारोत्थानाशनप्रतिग्रहाः । पर्व्वसु वपनम् । पञ्चाग्निपरिचरणम् । स्वयं होमोपस्थानम् । यथोक्तबलिहोमकरणम् । स्वाश्रमधर्म्मचरणम् । निषेधवर्जनम् । धनमाहृत्य गार्हपत्याय निवेदनम् । षण्मासकृच्छ्राचरणम् ।

अस्य वृत्तयश्च,—

उञ्छशिलमयाचितम् । तत्रासम्भवे शूद्रादपि द्रव्यं वाप्यु-

पेषितस्य व्रीह्यादेः स्वामिसन्दर्शने ग्रहणं न तु प्रार्थनमसन्दर्शे वा ग्रहणं स्वर्णवर्णवृषस्कन्धे वा हलवाहनं चतुर्विंशतिसीतापर्य्यन्तं पलाशशाखया चतुःपञ्चाञ्जलिक्रमेण वीजवपनं यावत् तावत् कृष्या वा जीवनं राज्ञो भागदानम्। पक्षे कुदालेन वा यावत् कर्षितुं शक्नोति तावता जीवनम्। तत्र नियमेन राज्ञे भागदानम्। अयाचितादिभ्योऽत्राधिक्ये सोमयागं साग्निचित्य-मनग्निचित्यं ज्ञात्वा तत्र सर्व्वस्वं दत्त्वा पूर्व्ववत् पात्रं ग्रीवाया-मासज्य धान्यवहनपात्राद् भिन्नाद् विशीर्णाद् भूमौ पतितधान्यं तस्मादनामिकाङ्गुष्ठाभ्यामेकैकं धान्यमादाय पात्रे करोति तेन जीवनं भिक्षवृत्तिः। एतासामष्टवृत्तीनामेकया वृत्त्या द्रव्यमाहृत्य गार्हपत्ये निवेद्य कालं नयन् संवत्सरमध्ये षण्मासं प्राजापत्यं कृच्छ्रं कुर्व्वन् यमनियमवान् यायावरो भवति। तस्य फलं परं ब्रह्मामृतमाप्नोतीति यत्कृत्वा नेह जायेतेत्यत्रापि यायावरस्य वृत्तिविशेषाणां ब्रह्मावाप्तिरूपमोक्षफलार्थविधानात् यथोक्त-कृष्यादेरपि विहितत्वादेव नाधर्म्मजनकत्वम्।

अत्र बौधायनः,—

शालीनयायावरचक्रचरधर्म्मकाङ्क्षिणां नवभिर्वृत्तिभिर्वर्त्तमाना-नाम्। तेषान्तद्वर्त्तनाद्वृत्तिरित्युच्यते। शालाश्रयत्वाच्छालीनत्वम्। वृत्त्या वरया यातीति यायावरत्वम्। अनुक्रमचरणाच्चक्रचरत्वम्। ता अनु व्याख्यास्यामः। इत्युक्त्वा तत्र धर्म्मविशेषानुक्त्वा दशधा वृत्तिमाह। तत्र धर्म्मविशेषाः,—

आ नववृत्तेः। केशश्मश्रुवपनम्। कृष्णाजिनकमण्डलुभार-

यष्टिखनित्रादीनामुपकल्पनम् । त्रेधातवीयेन वैश्वानर्य्या पूर्व्वदिने इष्ट्वा प्रातरुदिते प्रस्थानम् । आहवनीये वास्तोष्पतीयं हुत्वा ग्रामान्तेऽवस्थानम् । तत्र मठं कृत्वा प्रवेशः । अन्यकृते मठे वा प्रवेशः । वक्ष्यमाणध्रुवावृत्तिपक्षे तत्र कृष्णाजिनादीनामुपयोगं कृत्वा वृत्त्यवगमनम् । वृत्त्या यदर्जयति तेषां विश्वेभ्यो देवेभ्यो जुष्टं निर्वपामीति निर्वापः । विश्वेभ्यो देवेभ्यो जुष्टं प्रोक्षामीति प्रोक्षणम् । तूष्णीं वा । तेन द्रव्येणाग्निहोत्रं दर्शपौर्णमासौ आग्रयणञ्च संस्कृत्य पञ्चा पञ्चयज्ञानुष्ठानपूर्व्वकं व्रतोपायनम् । भोजनं क्षीरलवणमांसपर्य्युषितवर्जं सर्पिर्दधि-मिश्रम् । ब्रह्मचर्य्यमृतौ वा गमनम् । पर्व्वणि पर्व्वणि केश-श्मश्रुनखरोमवपनम् । मृज्जलादिना वाह्यशुद्धिः । सत्यदमादि-नान्तरशुद्धिः । एते दशवृत्तीनां साधारणधर्म्माः ।

दश वृत्तयश्च,—

षण्निवर्त्तनी । कौद्दाली । ध्रुवा । सम्प्रक्षालनी । समूहा । पालनी । शिलोञ्छा । कापोता । सिद्धेच्छा । वान्या ।

तत्र,—

दशहस्तेन दण्डेन त्रिंशद्दण्डा निवर्त्तनम् ।

षण्निवर्त्तनपरिमितां भूमिं अस्यूतनासिकाभ्यां समुष्काभ्यां कर्षति भोजनपर्य्यन्तं नातिश्रमं कृत्वा यावद्भिर्दिनैस्तावद्भूमि-कृषिनिर्वाहो भवति तावत् कर्षणीयं तेन जीवनं षण्निवर्त्तनी ।

जलाभ्याशे कुद्दालेन फालेन तीक्ष्णेन काष्ठेन वा खात्वा धान्य-वपनं कन्दमूलफलशाकौषधिनिष्पादनं तेन जीवनं कौद्दाली ।

अथ ध्रुवा । पूर्व्वोक्तमठे भूत्यै त्वा शिरो वेष्टयामीति शुक्लवासो धारणम् । ब्रह्मवर्चसमसि, ब्रह्मवर्चसाय त्वेति कृष्णाजिनदानम् । मन्त्रः इति पवित्रम् । बलमसि, बलायत्वेति कमण्डलुधारणम् । धान्यमसि, पुष्ट्यैत्वेति भारयष्टिधारणम् । सखा मा गोपायेति [१]खनित्रम् । यथोपनिष्क्रम्य व्याहृतीर्जपित्वा दिशामनुमन्त्रणम् ।

पृथिवी चान्तरिक्षं च द्यौश्च नक्षत्राणि च या दिशः ।
अग्निर्वायुश्च सूर्य्यश्च पान्तु मां पथि देवताः ॥

इति पृथिव्यन्तरिक्षं द्यौ नक्षत्राणि या दिशः मानस्तोकीयं जपित्वा गच्छन् गृहद्वारे भारयष्ट्या सद्वात्मानं सन्दर्शयेत् तत्र ग्रावलभेत तेन जीवनं ध्रुवा । तत्र यद्यपि न लभेत यद्यपि बहु लभेत तथापि तस्यां निवर्त्तमानत्वाद् ध्रुवा वृत्तिः । एतद्वृत्तिसम्बन्धादेव चक्रचर इति प्रसिद्धः ।

अथ सम्प्रक्षालनी । यथाकथञ्चिद् व्रीह्यादिकं लब्ध्वा सद्य एव तद्धूत्वा पाकपात्राणि प्रक्षाल्य न्युब्जतया स्थापयति न दिनान्तरार्थं सिद्धमन्नं पाकपात्रे स्थापयति न वा कुशादौ धान्यं स्थापयति न वाऽन्यहस्ते तण्डुलादिकं स्थापयति सा सम्प्रक्षालनी ।

---

(१) मुद्रितबौधायने,—द्वयकम् । Ānandāśrama Series स्मृतीनां समुच्चयः । २ प्रश्ने । २ अध्याये । १५ खण्डे ।

अथ समूहा। पथि वा क्षेत्रे वा यत्र यत्रौषधयः प्रकीर्णा-स्तिष्ठन्ति स्वाम्युपेक्षितास्तत्रोञ्छनादिना वस्त्रीकृत्य ताभिर्जीवनं समूहा।

अथ पालनी। बीजनाशभयान्न च धान्यानि गृह्णाति किन्तु सज्जनेभ्यस्तुषविहीनतण्डुलान्येव चिनोति तेन जीवनं बीज-पालनाद् बीजरक्षणाच्च पालनी।

अथ शिलोञ्छा। यत्रौषधयो विद्यन्ते तत्राङ्गुलिभ्या-मेकैकमुञ्छयित्वा शिलैर्वर्त्तयतीति शिलोञ्छा।

अथ कापोता। अवारितस्थानेषु पथिषु क्षेत्रेषु वा अप्रति-हतावकाशेषु यत्र यत्रौषधयो विद्यन्ते तत्र तत्राङ्गुलिभ्यामेकैक-मादाय कपोतवत् सन्दर्शनात् कापोता।

अथ सिद्धेच्छा वृत्तिः। श्रान्तो वृद्धो य आत्मन्यग्नीन् समा-रोप्य सन्न्यासिवदुदासीनवृत्तिः पुत्रभार्य्यादिकं परित्यज्य सज्जनेभ्यः सिद्धान्नं भक्षयति तेन जीवनं सिद्धेच्छा।

अथ वान्या। वन्येन श्यामाकनीवारादिना वृक्षगुल्मलता-दिना वा वर्त्तनं वान्या।

एतासां दशवृत्तीनां एकया वर्त्तयन् पूर्व्वोक्तधर्म्मवान् नरो भवति न पुनः संसारं प्रविशतीति मुक्तिफलत्वम्। एवं वृत्तिभि-र्मुक्तिफलमभीप्सतां वृत्तय उक्ताः। ये तु प्रवृत्तिधर्म्मेण धन-साध्यकर्म्मभिरेव धर्म्ममोक्षाभिलाषुकास्तेभ्यः प्रतिग्रहाध्यापन-याजनादयो वृत्तयः। तत्र प्रथमं उञ्छवृत्तिः ततः शिलवृत्तिः तयोश्च प्रशस्तादाहरणमेव मुख्यवृत्तिः। तदाहृतेनाग्निहोत्र-

दर्शपौर्णमासपशुबन्धपर्य्यन्तश्रौतकर्म्माणि श्राद्धदेवपूजातिथिपूजा स्मार्त्तकर्म्माणि च कुर्य्यात्। यदाह मनुः,—

वृत्तयस्य शिलोञ्छाभ्यामग्निहोत्रपरायणः।
इष्टीः पर्व्वायणान्तीयाः केवला निर्वपेत् सदा॥

इति। पर्व्वणि अयने च तदन्ते वा भवा इष्टयः पर्व्वान्ते दर्शपौर्णमासाग्रयणादि। अयनान्ते पशुबन्धः। यत्तु—

प्राक् सौमिकीः क्रियाः कार्य्या यस्याब्दं वार्षिकं भवेत्।

इति याज्ञवल्क्यीयं तत्प्रतिग्रहादिवृत्तिकगृहस्थविषयमेव। शिलोञ्छवृत्तेस्तावद्धनाभावान्मनुना दर्शाद्यविधानादिति।

प्रशस्तत्वानात् शिलोञ्छवृत्त्यभावे यतस्ततोऽपि कुष्टादपि शिलोञ्छवृत्तिः। न तु प्रतिग्रहः।

यदाह मनुः,—

शिलोञ्छमप्याददाति विप्रो जीवन् यतस्ततः।
प्रतिग्रहाच्छिलः श्रेयान् ततोऽप्युञ्छं प्रशस्यते॥

यतस्ततोऽपीत्यपिशब्दः क्रमः। शिलः श्रेयान् श्रेष्ठप्रतिग्रहादप-कुष्टोऽपि शिलः श्रेयान्।

---

## अथायाचितम्।

तद्द्विविधम्। प्रीतिदायरूपं प्रतिग्रहरूपञ्च। तद्द्विविधमपि ब्राह्मणक्षत्रियवैश्येभ्यः साधुवृत्तेभ्यः। साधुवृत्त्यसम्भवे जातिमात्रेभ्यो न कथञ्चिदपि शूद्रात्।

यदाह व्यासः,—

द्विजातिभ्यो धनं लिप्सेत् प्रशस्तेभ्यो द्विजोत्तमः ।
अपिवा जातिमात्रेभ्यो न तु शूद्रात् कदाचन ॥

लिप्सेत् स्वीकर्त्तुमिच्छेत् ।

बौधायनः,—

तस्य वृत्तिर्ब्राह्मणक्षत्रियवैश्यरथकारेभ्यो धनं लिप्सेत् । अयाचितमिति शेषः । रथकारस्य माहिष्येण करण्यां जातः ।

शूद्रयाजनान्तरं मनुः,—

वेदवानपि विप्रोऽस्य कृत्वा लोभात् प्रतिग्रहम् ।
विनाशं व्रजति क्षिप्रमामपात्रमिवाम्भसि ॥

याज्ञवल्क्यः,—

अयाचिताहृतं ग्राह्यमपि दुष्कृतकर्म्मणः ।
अन्यत्र कुलटाषण्ढपतितेभ्यस्तथा द्विषः ॥

एतेन शूद्रादपि अयाचिताहृतं ग्राह्यमुक्तम् । जातिमात्रद्विजादयाचितासम्भवे चैतत् । न तु शूद्रादिति पर्य्युदासात् ।

आहृताभ्युदितां भिक्षां पुरस्तादप्रचोदिताम् ।
मेने प्रजापतिर्ग्राह्यामपि दुष्कृतकर्म्मणः ॥
नाश्नन्ति पितरस्तस्य दशवर्षाणि पञ्च च ।
न च हव्यं वहत्यग्निर्यस्तु तामवमन्यते ॥
चिकित्सकाज्ञतघ्नानां शल्यहन्तुश्च वार्द्धुषेः ।
षण्ढस्य कुलटायाश्च उद्यतामपि वर्जयेत् ॥

चाहृताभ्युदितां प्रतिग्रहीतृगृहे आनीयोपस्थापिताम्। भिक्षां कुटुम्बभरणयोग्यद्रव्यरूपाम्। आमान्नसिद्धान्नरूपामिति भ्रमो न कार्य्यः।

यमः,—

चिकित्सकस्य मृगयोर्वेश्यायाः कितवस्य च।
षण्ढसूतिकयोश्चैव उद्यतामपि वर्जयेत्॥

अयाचिताधिकारे वशिष्ठः,—

अश्रद्दधानस्य भोक्तव्यं चौरस्यापि विशेषतः।
नत्वेव बहुयाज्यस्य यश्चोपनयते बहून्॥

जाबालः,—

अभ्युदितं गृहे भैक्ष्यं ग्राह्यं तत्सर्व्वतः स्वयम्।
आत्मन्येव शुभायातं नियुञ्ज्यात् भृतकेऽपरम्॥

एवकारो भिन्नक्रमः। शुभायातमेवात्मनीत्यर्थः। अपरं निन्दित-प्रकारोपलब्धं भृतकेऽवश्यभरणीये नियुञ्ज्यात् इत्यर्थः।

एतदयाचितं राजमहिषीराजामात्यपुरोहितेभ्योऽपि गृह्णी-यात्। अयाचितानुज्ञाकाले विशेषतः कलशादीनामेव पर्य्यु-दासात्।

यत्तु यमः,—

तथैव राजमहिषीराजामात्यपुरोहिताः।
पापेनार्ज्जन संयुक्ताः सर्व्वे ते राजधर्म्मतः॥

इति प्रतिग्रहनिन्दामाह तदयाचितप्रतिग्रहेऽपि सङ्कुचत एव।

एवं राज्ञोऽप्ययाचितं ग्राह्यमेव । अयाचितवाक्ये द्विजातिमात्रो-पादानात् राज्ञश्च कुलटादिमध्ये प्रवेशात् प्रतिप्रसवाभावात् । यत्तु आदित्यपुराणेऽपि,—

अपि पापकृतां राज्ञां प्रतिगृह्णन्ति साधवः ।
पृथिवीं नान्यदिच्छन्ति पावनं ह्येतदुत्तमम् ॥

इति राजकीयद्रव्येषु ग्राह्यत्वेन पृथिव्या एव नियमात् । द्रव्या-न्तरमयाचितमप्यग्राह्यमिति । तदपि पापकृतामिति विशेषणो-पादानात् तदीयद्रव्यविषयमेव । अथवा याचितप्रतिग्रहविषयम् । तत्र दुष्कृतकर्मभ्यो ग्रहणं नानुज्ञातमिति राज्ञोऽयाचितप्रति-ग्रहे भूमिर्ग्राह्यत्वेन नियम्यते ।

अतएव मनुः,—

राजतो धनमन्विच्छेत् संसीदन् ब्राह्मणः क्षुधा ।
याज्यान्तेवासिनो वापि नत्वन्यत इति स्थितिः ॥

तथा याज्ञवल्क्यः,—

राजान्तेवासियाज्येभ्यः सीदन्निच्छेद्धनं क्षुधा ।

अत्र सीदन्निति प्रशस्तद्विजातिभ्यो याचितायाचितप्रतिग्रहवृत्त्य-सम्भवे राजतोऽपि अयाचितं धनं ग्राह्यमिति गम्यते । विज्ञानि-श्वरेण तु सीदन्निति दादाद्यधनाभावे राजप्रतिग्रहशिष्यधन-ग्रहयोर्ग्राह्यत्वमिति व्याख्यातम् ।

न चैतद् राजपदं परिपालनवृत्तिक्षत्रियपरमिति वाच्यम् । नारदेन परिपालनवृत्तिक्षत्रियधनग्रहणस्य मुख्यकल्पत्वेनाभि-धानात् ।

तथाच नारदः,—

[1]अर्थानां भूरिभावाद्धि देवतात्वाच्चमहीभृताम्।
श्रेयान् प्रतिग्रहो राज्ञां नान्येषां ब्राह्मणादृते॥
ब्राह्मणश्चैव राजा च द्वावप्येतौ धृतिं श्रितौ।
नैतयोरन्तरं किञ्चित् प्रजाधर्म्माभिरक्षणात्॥
धर्म्मज्ञस्य कृतज्ञस्य रक्षार्थं शासतोऽशुचीन्।
मेध्यमेव धनं ग्राह्यं तीक्ष्णस्यापि महीपतेः॥
शुचीनामशुचीनाञ्च सन्निपातो यथाम्भसाम्।
समुद्रे समतां याति तद्वद्राज्ञां धनागमः॥

---

(१) मुद्रितनारदस्मृतौः—
अर्थिनां भूरीभावाच्च देयत्वाच्च महात्मनाम्।
श्रेयान् परिग्रहो राज्ञां सर्वेषां ब्राह्मणादृते॥ ४१
ब्राह्मणश्चैव ० दृढ़व्रतौ।
नानयोरन्तरं किञ्चित् प्रजा धर्म्मेण रक्षतोः॥ ४२
मेध्यमेव धनं प्राहुस्तीक्ष्णस्यापि ०।
० तद्वद्राज्ञो धनागमः॥ ४५
यथाग्नौ स्थितं दीप्ते ०।
० नायान्ति राजसु॥ ४६
० ब्राह्मणस्तिष्ठेद् ०
० परिगृह्णीयात् वर्णेभ्यो नियमे सति॥ ५१
० भवति मानवः।
० सम्यक् कथं राजा ०॥ ५०
तस्य ते प्रतिगृह्णन्तो न लिप्यन्ते कथञ्चन॥ ४९
Prof. Jolly's edition. प्रकीर्णकं नाम व्यवहारपदं समाप्तम्।

यथाग्नौ संस्थितं दीप्ते शुद्धिमायाति काञ्चनम्।
एवं धनागमाः सर्व्वे शुद्धिमायान्ति राजनि॥
स्वधर्म्मे ब्राह्मणस्तिष्ठन् वृत्तिमाहारयेन्नृपात्।
नासद्भ्यः प्रतिगृह्णीयाद् ब्राह्मणो विभवे सति॥
अशुचि वचनाद् यस्य शुचिर्भवति पूरुषः।
शुचिश्चैवाशुचिः सद्यः कथं राजा न दैवतम्॥
विदुर्य एवं देवत्वं राज्ञो ह्यमिततेजसः।
तस्य ये प्रतिगृह्णन्ति न दूष्येयुः कथञ्चन॥

देवत्वञ्च राज्ञो मन्वादिभिरष्टलोकपालांशत्वेन स्तवनात्। तीक्ष्णस्यापीति दण्डप्रधानत्वात् पीड़ापरस्यापि। बहुधनिकत्वेन तदन्वयस्य च ग्राह्यत्वम्। भारते अगस्त्येन समानान्वयराज्ञो धनस्वीकारात्। अद्रोहेणैव भूतानामिति मनुवचनात्। अशुचिर्वचनात् शुचिः। जननाद्यशौचे राजा यस्य शुद्धिमिच्छेत् स शुद्धो भवतीति स्मृतिः। शुचेरशुचित्वं दण्डादिना। तत् सिद्धं परिपालनादिगुणयुक्तात् क्षत्रियादयाचितप्रतिग्रहे न दोषः। याचितप्रतिग्रहे तु क्षत्रियनृपते विंशेषतो निन्दावचनाभावेऽपि याचितप्रतिग्रहे द्रव्यविशेषनियमादेव तदितरप्रतिग्रहे दोषः। तथाच मनुः,—

सीदद्भिः कुप्यमिच्छद्भि र्धनं वा पृथिवीपतिः।
याचितः स्नातकैर्विप्रैरदित्संस्त्यागमर्हति॥
अकृतञ्च कृतं क्षेत्रं गौरजाविकमेव च।
हिरण्यं धान्यमन्नञ्च पूर्व्वं पूर्व्वमदोषवत्॥

कुप्यं सुवर्णरजताभ्यामन्यद् द्रव्यम्। अक्षतं अकृष्टं क्षेत्रं भूमिः। पूर्व्वं पूर्व्वमदोषवदिति पूर्व्वपूर्व्वालाभे उत्तरोत्तरस्वीकारे न दोषः। अदित्संस्त्यागमर्हतीति यदा न ददाति तदा न तस्य राष्ट्रे वस्तव्यमित्युक्तं भवति।

एवञ्च सत्ययाचितप्रतिग्रहाभावे प्रशस्तेभ्यो याचितप्रतिग्रहालाभे च एषा वृत्तिरित्युक्तं भवति। ननु कृष्यादिवृत्त्यर्थमपि च देशवाससम्भवानिन्दितेतरकृष्यादिवृत्त्यन्तरासम्भव एव एषा वृत्तिरिति वाच्यम्। तस्य स्वधर्म्म एव श्रेयान्, स्वल्पोऽप्यनुष्ठितो नान्य आदरसेवितः, स स्यात् प्रशस्तसमयाचारः, सर्व्वतः प्रतिगृह्णीयादिति शङ्खलिखिताभ्यां सर्व्वप्रकारप्रतिग्रहासम्भवे सत्येव पारक्यकृष्यादिकस्यानुज्ञानात्।

मनुरपि,—

वरं स्वधर्म्मो विगुणो न पारक्यस्त्वनुष्ठितः।
परधर्म्मेण जीवन् हि सद्यः पतति याचितः॥

तेन तद्राजनि प्रतिग्रहालाभे देशान्तरे प्रतिग्रहसम्भावनया गच्छन् न तत्रैव कृष्यादिवृत्त्या तिष्ठेदित्यर्थः। एवं शूद्रादिभ्यो याचितायाचितप्रतिग्रहालाभे पारक्यकृष्यादिवृत्तिरित्यवगन्तव्यम्।

यस्तु क्षत्रियव्यतिरिक्त उच्छास्त्रेणैव परिपालको भवति तस्य याचितायाचितरूपो द्विविधोऽपि प्रतिग्रहो न ग्राह्यः। याचितप्रतिग्रहे तावन्नृपस्य दशवेश्यासमत्वप्रतिपादनात् वेश्यायाश्च यमेन

चिकित्सकस्य मृगयोर्वेश्यायाः कितवस्य च।

इति निन्दनात्। अयाचितप्रतिग्रहे प्रतिप्रसवान्न प्रतिग्रह-प्रसङ्गसम्भावनाऽपि। प्रतिग्रहानुज्ञावचनानां राजपुरस्कारेण प्रवृत्तेः। राजशब्दस्य च अव्यध्यधिकरणन्यायेन क्षत्रियनृपति-विषयत्वात्। वर्णान्तरनृपेऽनुज्ञावचनान्न प्रतिग्रहनिन्दावचनानां वर्णान्तरनृपविषयत्वान्नितरां वर्णान्तरनृपानायाचितप्रतिग्रहः। तथाच,—

निन्दावाक्येषु सर्व्वेषु अराजन्यप्रसूतितः।

अराजन्यप्रसूतस्येत्येवं विशेषणं दृश्यते न चैतदुद्देश्यविशेषण-स्यापि ब्राह्मणपदस्य विवक्षा। न च नारदवचनमत्यन्तापदि अश्नतस्त्व क्षतं चेत्वमित्यादिना द्रव्यविशेषप्रतिग्रहो योऽनुज्ञात-स्तत्प्रशंसापरत्वेन सामान्यतो राजप्रतिग्रहानुज्ञापरमिति शङ्क-नीयम्। अश्नतस्त्व क्षतं चेत्वमित्यादेर्याचितविषयत्वेन नारद-वचनस्यायाचितविषयत्वेन सामान्याकारत्वेऽपिच संहितान्तर-गतत्वेनासन्निधानात् स्तावकत्वानुपपत्तेः। तदुक्तं जैमिनिना विधिना त्वेकवाक्यत्वात् स्तुत्यर्थेन विधिना स्युरिति।

तत्राक्षत्रियनृपप्रतिग्रहे मनुः,—

न राज्ञः प्रतिगृह्णीयादराजन्यप्रसूतितः।
सूनाचक्रध्वजवतां वेशेनैव च जीवताम्॥
दशसूनासमं चक्रं दशचक्रसमो ध्वजः।
दशध्वजसमो वेश्या दशवेश्यासमो नृपः॥
दश सूनासहस्राणि यो वाहयति सौनिकः।
तेन तुल्यः स्मृतो राजा घोरस्तस्य प्रतिग्रहः॥

यो राज्ञः प्रतिगृह्णाति लुब्धस्योच्छास्त्रवर्त्तिनः ।
स पर्य्यायेण यातीमान् नरकानेकविंशतिम् ॥
तामिस्रमन्धतामिस्रं महारौरवरौरवौ ।
नरकं कालसूत्रञ्च महानरकमेव च ॥
सञ्जीवनं महावीचिं तपनं सम्प्रतापनम् ।
संहातञ्च सकाकोलं कुड्मलं पूतिमृत्तिकम् ॥
लोहशङ्कुमृजीषञ्च पन्थानं शाल्मलीं नदीम् ।
असिपत्रवनञ्चैव लोहचारकमेव च ॥
एतद्विदन्तो विद्वांसो ब्राह्मणा ब्रह्मवादिनः ।
न राज्ञः प्रतिगृह्णन्ति प्रेत्य श्रेयोऽभिकाङ्क्षिणः ॥

अत्र यो राज्ञः प्रतिगृह्णाति लुब्धस्येति निषेधान्तरं तेन लुब्धस्य शास्त्रातिक्रमकारिणः क्षत्रियाक्षत्रियस्य नृपमात्रस्य प्रतिग्रहोऽनेन निषिध्यते ।

तथाच याज्ञवल्क्यः,—

न राज्ञः प्रतिगृह्णीयाल्लुब्धस्योच्छास्त्रवर्त्तिनः ।
प्रतिग्रहे सूनी चक्री ध्वजी वेश्या नराधिपाः ।
दुष्टा दशगुणं पूर्व्वात् पूर्व्वादेते यथाक्रमम् ॥

सूना प्राणिवधस्थानं यस्य जीविकात्वेन धर्म्मः स सूनी । यथा मांसविक्रयी । चक्री तैलकारः । ध्वजी शौण्डिकः । वेश्या प्रसिद्धा । यमः,—

अराजन्यप्रसूतस्य राज्ञः स्वच्छन्दवर्त्तिनः ।
घोरः प्रतिग्रहस्तस्य मध्वास्वादो विषोपमः ॥

राजकिल्बिषदग्धानां विप्राणामकृतात्मनाम्।
छिन्नानामिव बीजानां पुनर्जन्म न विद्यते॥
तस्मात् प्रतिग्रहं राज्ञो वर्जयन्ति मनीषिणः।
देवताग्नैर्द्विजाग्नैश्च पुनराप्याययन्ति ये॥
तथैव राजमहिषीराजामात्यपुरोहिताः।
तत्पापेनार्द्धसंयुक्ताः सर्व्वे ते राजधर्म्मिणः॥

देवताग्नैरिति देवस्वब्राह्मणस्वाभ्यामाप्याययन्ति शरीरं न तु राजप्रतिग्रहं कुर्व्वन्तीति तात्पर्य्यम्।

हारीतः,—

दश सूनासहस्राणि श्रक्ता राजा करोति वै।
अन्यच्च कुरुते रात्रौ घोरस्तस्य प्रतिग्रहः॥

इति यद्यपि चत्रियनृपस्यापि दण्डादिना दशसूनासहस्रकरणं समानं तथापि तस्य सम्यक् परिपालनात् तद्राज्यवासिधर्म्माचरणषष्ठांशेन तत्पापचयात् तद्दोषाभावात् तत्प्रतिग्रहे न दोषः। यथा गृहस्थस्य पञ्चस्थानसूनावतः पञ्चमहायज्ञानुष्ठाने तद्दोषाभावात् तदन्नभोजनम्। यस्य तु पञ्चमहायज्ञानुष्ठानं नास्ति तदन्नमभोज्यमिति। तथाच महाभारते धर्म्मेण चण्डालरूपेण राजप्रतिग्रहे दोषमभिधाय,—

यद्ददाति यज्जुहोति यत्तपस्यति यदर्चति।
तस्य षड्भागभुग् राजा सम्यग्भवति रक्षणात्॥
आहिताग्निस्तु यो विप्रः प्रातःस्नायी जितेन्द्रियः।
तस्य षड्भागमात्रेण तत्पापं सन्तरिष्यसि॥

अतएव—

राजान्तेवासिशिष्येभ्यः सीदद्भिश्छेदनं क्षुधा।

इत्यत्र विज्ञानेश्वरेण राज्ञो विदितवृत्तान्तादिति व्याख्यातम्।

अयाचितन्तूञ्छास्त्रवर्त्तिनोऽपि नृपाद् भूमिमात्रं ग्राह्यम्। नान्यत्। आदित्यपुराणेऽपि पापकृतामित्यनुज्ञानात्।

यत्तु मनुवचने अकृतं क्षेत्रमित्यादि द्रव्यान्तरानुज्ञावचनं तत्र नृपपदस्य राजन्यशास्त्रातिक्रान्तनृपविषयत्वेऽपि देवब्राह्मणद्रव्यस्तेयवृत्त्यपेक्षया तदीयधनप्रतिग्रहगुरुत्वाभिधानात् सर्व्वप्रकारस्वकीयवृत्त्यसम्भवे

कर्म्मणा येन केनापि मृदुना दारुणेन वा।
उद्धरेद्दीनमात्मानं समर्थो धर्म्ममाचरेत्॥

इति न्यायेन ग्रामस्थोञ्छास्त्रराजप्रतिग्रहस्य द्रव्यविशेषनियमः क्रियते अकृतञ्च कृतं क्षेत्रमित्यादिना।

तस्मिद्धं क्षत्रियनृपादयाचितं मुख्यवृत्तिः। अयाचितासम्भवेऽपि तत्प्रतिग्रहप्रसङ्गे क्षित्यादिद्रव्यविशेषनियमः। तस्याप्युञ्छास्त्रवर्त्तिनः प्रतिग्रहो न याचितो ग्राह्यः। दशवेश्यासाम्यात्। याचितप्रतिग्रहस्तु कष्टायामापदि द्रव्यविशेषो भूमिस्तस्या ग्राह्यतैव। अराजन्यनृपस्य तु नायाचितप्रतिग्रहो न वा याचितप्रतिग्रहो ग्राह्यः। सर्व्वप्रकारस्वकीयवृत्तिराजवृत्तिसेवादिवृत्त्यन्तरासम्भवे तस्य अकृतञ्च कृतं क्षेत्रमेवं रूपेण द्रव्यविशेषप्रतिग्रह इति ब्राह्मणवृत्त्यन्तरं स्मृतिः। तदसम्भवे चत्र-

वृत्त्या वैश्यवृत्त्या वाऽसाधुभ्यः प्रतिगृह्णीयात् । असाधुरत्र यदीय-प्रतिग्रहः क्षत्त्राद्यपेक्षया हीनः । श्रेयान् स्वधर्म्म इति तु विगुण-प्रतिग्रहश्रेष्ठत्वं शूद्रादिप्रतिग्रहविषयम् । तेन वैश्यवृत्त्यसम्भवे उच्छास्त्रवर्त्तिराजादिप्रतिग्रह इति लक्ष्मीधराभिप्रायः ।

इति राजप्रतिग्रहविधिनिषेधौ ।

---

## अथ शूद्रप्रतिग्रहः ।

अयाचितप्रतिग्रहविषये,—

अयाचिते प्रीतिदाये च जातिमात्रद्विजातिभ्योऽप्यलाभे शूद्रादपि प्रसङ्गोऽस्ति । तदुक्तं हारीतेन,—ब्राह्मणक्षत्रियविड्भ्यो-ऽयाचितोपपन्नं शूद्रेभ्योऽप्येक आपदीति। एवञ्च नार्त्तामपि यतस्तत इति मनुवचनं चाण्डालादिपरम्। अतएव कल्पतरौ तस्य स्वधर्म्म एव श्रेयान्, नान्य आदरसेवितः, स स्यात् प्रशस्त-समयाचारः, सर्व्वतः प्रतिगृह्णीयादिति शङ्खलिखितवाक्ये सर्व्वतः शूद्रादेः प्रतिगृह्णीयान्न तु क्षत्रियादिवृत्तिं कुर्य्यादिति व्याख्यातम्। याचितविषये तु द्रव्यविशेषप्रतिग्रहगुणदोषौ वक्ष्यामः ।

यत्तु याज्ञवल्क्यः,—

शूद्रेषु दासगोपालकुलमित्रार्द्धसीरिणः।
भोज्यान्ना नापितश्चैव यश्चात्मानं निवेदयेत् ॥

इति एतद्व्यतिरिक्तशूद्रेभ्योऽयाचितमग्राह्यमिति । तत्र

हारीतेनायाचितविषये द्विजातिभ्योऽलाभे शूद्रादपि अयाचित-
प्रतिग्रहानुज्ञानादस्याविशेषप्रवृत्तस्य याचितविषयमौचित्यात्।

यमः,—

अनिर्दशाहे प्रेतस्य प्रतिगृह्णन्ति ये द्विजाः।
समागतं समग्रं ते नरकं पर्य्युपासते॥

इति। अत्र यद्यप्ययाचितप्रतिग्रहे विशेषेण कुलटादि-
वन्मृतकाशौचद्रव्यप्रतिप्रसवो नास्ति तथापि तद्द्रव्यस्याशुचित्व-
प्रसिद्धेस्तस्य ग्राह्यत्वाभावात् तेन प्रतिदत्तमप्ययाचितं न ग्राह्यम्।

अङ्गिराः,—

संस्कारैः शुध्यति ह्यामं धान्यं तेन शुचि स्मृतम्।
तस्माद्धान्यं ग्रहीतव्यं मृतिसूत्यन्तरेष्वपि॥
पक्वान्नवर्जं विप्रेभ्यो गो धान्यं क्षत्रियात् तथा।
वैश्येभ्यः सर्व्वधान्यानि शूद्राद् ग्राह्याः पणास्तथा॥

एतेन एतेभ्य एते द्रव्यविशेषा ग्राह्या मृतकेऽपि।

यत्तु कल्पतरौ,—

एतत्सर्व्वमापन्नतस्य बोद्धव्यं शूद्रस्य सर्व्वथा अप्रतिग्राह्य-
धनस्याशौचे पणग्रहणाभ्यनुज्ञानादिति।

तत्र शूद्रस्याप्रतिग्राह्यधनत्वेन तद्विषयमात्रमापद्विषयम्।
ब्राह्मणादीनान्तु तथात्वाभावेन तद्विषये अनापद्यपि मृतककाले
द्रव्यविशेषप्रतिग्रहे अनुज्ञायाः किं बाधकम्। अत्र पठन्ति

लवणं सर्पिर्मांसञ्च पुष्पमूलफलानि च।
काष्ठं शाकं तृणं तोयं दधि क्षीरं घृतं तथा॥

औषधं तैलमजिनं शुष्कमन्नञ्च नित्यशः।
अशौचिनां गृहाद् ग्राह्यं स्वयं शस्यञ्च मूलकम्॥

इति। एवञ्च तोयस्य ग्राह्यत्वमयाचितविषये। याचित-विषये तु,—

अङ्गिराः,—

सूतके तु यदा विप्रो ब्रह्मचारी विशेषतः।
पिबेत् पानीयमज्ञानात् सम्यक् स्नायात् स्पृशेच्च वा॥
पानीयमाने कुर्व्वीत पञ्चगव्यस्य भक्षणम्।

इति ब्रह्मचारिसाहचर्य्येणायाचितविषयत्वासम्भवात्। यद्यप्यत्रा-शौचिनां गृहाद् ग्राह्यमित्यस्य विशेषण उक्तं नत्वयाचितमित्युक्तं तथाप्ययाचितस्य सामान्यतोऽपि दुष्कृतकर्म्मणः अनुज्ञानेन लब्धत्वात् तद्विषयत्वमेव न्याय्यम्। एवमशौचिनामपि मृतिसूति-साधारणमेव। सूतौ द्रव्यसामान्यनिषेधाभावेन तन्मात्रविषये द्रव्यविशेषानुज्ञावैयर्थ्यादिति। अत्र गारुड़पुराणे—

द्रव्यराशिरपि श्रेयान् न निन्द्यात् प्रतिगृह्णताम्।
निन्द्यस्य द्रव्यलेशोऽपि निरयायैव जायते॥

एवं दातृविशेषेणायाचितप्रतिग्रहप्रीतिदाययोर्ग्राह्याग्राह्यत्वमुक्तं तत्तद्द्रव्यविशेषेणोच्यते। वशिष्ठः,—शस्त्रं विषं मद्यान्यपि ब्राह्म-णस्य। शङ्खलिखितौ,—न मद्यं दद्यान्न प्रतिगृह्णीयात्। मद्यं मादकं सुराभिन्नमपि जातिफलादि। आदित्यपुराणे—

तरिष्यन्नित्यसौ विप्रो गृह्णन्नुभयतोमुखीम्।
सहस्रं वारणान् पाशानात्मनि प्रतिमुञ्चति॥

सहस्रं वारुणाः पाशाः क्षुरधाराग्निसन्निभाः ।
पूर्णे वर्षसहस्रे तु पाश एको विमुच्यते ॥
एतामवस्थामाप्नोति गृह्णनुभयतोमुखीम् ।

आग्नेयपुराणे,—

हस्त्यश्वरथयानानि मृतशय्यासनानि च ।
कृष्णाजिनञ्च गृह्णाति अनापत्सु गतो द्विजः ॥

निरयं यातीत्यर्थः ।

कृष्णाजिनाधिकारे मत्स्यपुराणे,—

अस्पृश्यः स द्विजो राजन् चितियूपसमो हि सः ।
दाने च श्राद्धकाले च दूरतः परिवर्जयेत् ॥

मृतशय्याधिकारे पद्मपुराणे—

तेन दुष्टा तु सा शय्या न ग्राह्या द्विजसत्तमैः ।
गृहीतायान्तु तस्यां स पुनः संस्कारमर्हति ॥

स्कन्दपुराणे,—

अजिनं मृतशय्याञ्च मेषीञ्चोभयतोमुखीम् ।
कुरुक्षेत्रे च गृह्णानो न भूयः पुरुषो भवेत् ॥

पद्मपुराणे,—

ब्रह्माण्डं भूमिदानञ्च ग्राह्यं नैव च तद् भवेत् ।

भूमिदानमत्र ब्रह्माण्डसाहचर्य्यात् षोड़शमहादानान्तर्गतकाञ्चन-मेदिनीदानमिति हेमाद्रिः । विद्याकरपद्धतौ,—

ब्राह्मणः प्रतिगृह्णीयात् वृत्त्यर्थं साधुतः सदा ।
अन्यत्रतिलपात्रञ्च मणिर्हेमाश्च वर्जयेत् ॥

मणिः प्राणी। अत्र तिलशब्दो निन्दिततिलधेन्वादिपरः।
तिलानां सामान्यतोऽग्राह्यत्वाभिधानात्।

अजिनं मृतशय्याश्च धेनुश्चोभयतोमुखीम्।
कृष्णाजिनद्वयग्राही न पुनर्मानवो भवेत्॥

तथा—मर्त्तव्याद् यद् गृहीतन्तु तत् कथं सन्तरिष्यति।
मर्त्तव्यान्मुमूर्षोः। मृतस्य चेति पठन्ति।

शय्यालङ्कारवस्त्राणि मृतस्य प्रतिगृह्य च।
नरकान्न निवर्त्तन्ते धेनुं तिलमयीमपि॥

तथा उदीच्याः पठन्ति।

तिलधेनुर्गजो वाजी प्रेतान्नमजिनं मणिः।
सूरिभिः श्रूयमाणाश्च घोराः सप्त प्रतिग्रहाः॥

शतपथश्रुतिः,—तस्माद्धस्ती दुष्परिग्रह इत्याहुः। तथा न केशरिणो ददाति नोभयतोदतः प्रतिगृह्णाति। तथाच शाबरभाष्ये अश्वा-श्वोपकारकरा भवेयुर्यदेषां दानप्रतिग्रहौ न प्रतिषिद्धौ स्याताम्। तथा रोगप्रतिकृतिदानाधिकारे

दुष्प्रतिग्रहदग्धस्य तस्य विप्रस्य नो मुखम्।

पश्येदिति। हारीतः,—मणिवासोगवादीनां प्रतिग्रहे सावित्र्यष्ट-सहस्रं जपेत्। पञ्च मध्यमे दशोत्तमे। तथा नारदः,—

हिरण्यरत्नकौषेयाः स्त्रीपुंसौ गजवाजिनः।
देवब्राह्मणराज्ञाञ्च द्रव्यं विज्ञेयमुत्तमम्॥

देवलः,—अन्नमधुदधिगोकन्याश्वहस्तिदानान्युत्तमदानानि। तथा मध्यमद्रव्ये नारदः,—

वासः कौषेयवर्जञ्च गोवर्जं पशवस्तथा।

हिरण्यवर्जं लोहञ्च मध्यं ब्रीहियवा अपि॥

देवलः,—रत्नक्षेत्रे वेश्म हेमरूप्याद्याभरणानि धान्यकार्षापणादीनि मध्यानि। एतद्व्यतिरिक्तानि द्रव्याण्यधमानि। एषां मध्ये यन्नामतो निषिद्धं तत्र न प्रतिग्रहप्रायश्चित्तम्। अन्येषान्तु देशकालाद्यपेक्षया अग्राह्यत्वदशायां ग्रहणे प्रायश्चित्तविशेषविधानम्। न तु उत्तमादिद्रव्याणां तेन रूपेण ग्राह्यत्वमिति। तथा—

एकां गां प्रतिगृह्णीयान्नद्वितीयां कदाचन।

अत्र महादानानां ब्रह्माण्डमेदिनीव्यतिरिक्तानां विशेषेण निषेधाभावेऽपि कर्म्मविपाके महादानग्रहणस्य रोगहेतुत्वब्रह्मराक्षसादिहेतुत्वस्मरणादग्राह्यत्वम्। तथा ब्रह्माण्डे,—

समाः षण्मासमासैकषड्हत्रिदिनत्र्यहम्।

एकाहिकञ्च धर्माय गृह्णीयादुत्तरोत्तरम्॥

इति वर्षपर्य्यन्तकुटुम्बभरणयोग्यधनस्य कथञ्चिदनुज्ञायामपि तदधिकग्रहणे

स्थित्यर्थादधिकं गृह्णन् नरो भवति किल्बिषी।

इति दोषापत्तेः। त्रैवार्षिकाधिकान्नादेश्च दायाद्यनिध्यादिधनेनाप्युपपत्तेरित्युक्तत्वात्।

तथा,—शतपथश्रुतौ 'गायत्रीब्राह्मणे। अन्यदिह वाप्येवं विद्वदिव प्रतिगृह्णाति न हैतत् गायत्र्या एकञ्चन पदं प्रतीति।(१)

(१) P. गायत्रीब्राह्मणेऽन्यदिह०।

बहुप्रतिग्रहस्यातिदुष्टस्यापि गायत्र्युपासनं तारकमित्युक्तम्। स य इमांस्त्रीन् लोकान् पूर्णान् प्रतिगृह्णीयात्तत्साचादेतदेवं प्रथमं पदमाप्नुयादित्येवं रूपेण प्रतिग्राह्यद्रव्यबाहुल्यं दोषातिशयहेतुत्वेन गायत्रीप्रशंसयैव दर्शयति। तदुक्तं सुरेश्वरवार्त्तिके,—

महाप्रतिग्रहेणापि [1]नैवंविद्दोषमृच्छति।

द्रव्यदर्शनस्तुतिरेवेयं स य इत्यादिनोच्यते।

प्रतिग्रहस्य निन्दा वा विद्वान् वा तत्प्रसञ्जितः।

निःशेषपुण्यमोषित्वान्निषेधार्थाय कल्प्यते॥

विद्वानप्येतादृशं प्रतिग्रहं न कुर्य्यादिति दर्शयितुं श्रुतिराह नैव कश्चनाप्य कुत्रचित् एतावद्गृह्णीयादिति। निन्दा प्रशंसैवेषा बहुप्रतिग्रहस्य निन्द्यत्वस्य लिङ्गादवगम्यत इति वार्त्तिकार्थः।

बौधायनः,—बहु प्रतिगृह्य तरत्समन्दीयं जपेत्।

छन्दोगब्राह्मणे,—यो बहुप्रतिगृह्य गरगीरिव मन्येत स पुनस्तोमेन यजेत। गरं विषं गिरतीति गरगीर्विषभोजिनमात्मानं मन्यत इत्यर्थः।

एवञ्च प्रीतिदायरूपेणापि बहुधनस्वीकारी निषिद्ध एवेत्यवगम्यते। महादानानि मत्स्यपुराणे,—

आद्यन्तु सर्व्वदानानां तुलापुरुषसंज्ञकम्।

हिरण्यगर्भदानञ्च ब्रह्माण्डं तदनन्तरम्॥

कल्पपादपदानञ्च गोसहस्रञ्च पञ्चमम्।

हिरण्यकामधेनुश्च हिरण्याश्वस्तथैव च॥

---

(१) P. नैवं विद्दोषमृच्छति।

हिरण्याश्वरथस्तद्वद्धेमहस्तिरथस्तथा।
पञ्चलाङ्गलकं तद्वद्धरादानं तथैव च॥
द्वादशं विश्वचक्रञ्च तथाकल्पशतात्मकम्।
सप्तसागरदानञ्च रत्नधेनुस्तथैव च॥
महाभूतघटस्तद्वत् षोड़शः परिकीर्त्तितः।

तथा—

धान्यलवणतिलसुवर्णगुड़कार्पासघृतरजतरौप्यशर्कराकूपदशा-चलदानानि।

तथा—

कनकाश्वतिला नागा दासीरथमहीगृहाः।
कन्या च कपिलाधेनुर्महादानानि वै दश॥

अत्र यस्य प्रतिग्रहो विशेषेणाम्नातस्तद् विहायान्येषां ग्रहणे दोषः। एतेषान्तु विशेषेणायाचितोपस्थितानामप्यग्राह्यत्वम्। अयाचिताभ्यनुज्ञावाक्ये दातृदोषस्यैव सङ्कलनेनोक्तत्वात् अपि दुष्कृतकर्म्मण इति।

---

## अथ देशविशेषेऽग्राह्याणि।

तत्र प्रयागप्रतिग्रहे तीर्थनिष्फलत्वमभिधाय मत्स्यपुराणे,—

न तस्य फलदं तीर्थं [1]यावत्तद्धनमश्नुते।
तस्मात्तीर्थे न गृह्णीयात् पुण्येष्वायतनेषु च॥

(१) P. ० यावत्तत्फलमश्नुते।

निमित्तेषु च सर्व्वेषु अप्रमत्तो भवेद् द्विजः॥

अत्र तीर्थशब्देन पुण्यप्रदजलाशयस्थानमुच्यते। समुद्रगङ्गापुष्कर-सरस्वतीप्रभृतीनि। पुण्यायतनशब्देन क्षेत्रमुच्यते। पुरुषोत्तम-कुरुक्षेत्रवाराणसीप्रभृतीनि।

तत्र तीर्थप्रतिग्रहनिषेधातिक्रमेऽनिष्टफलापेक्षया न तस्य फलदं तीर्थमिति वाक्यशेषोपात्ततीर्थफलानुत्पत्तिरेवानिष्टफल-त्वेन कल्प्यते। नाधिकं नरकपातादि। तीर्थफलानुत्पत्ति-रपि प्रतिग्रहधनसत्वे तदुपभोगकाले च द्रव्यक्रयविक्रयलभ्य-द्रव्यान्तरसत्वेऽपि [1]तद्धनाविशेषात्। तद्धनसमाप्तौ न तीर्थफल-प्रतिबन्धः।

याजनादौ तु तीर्थे कृते तद्धनसत्वेऽपि न तीर्थफलप्रतिबन्धः। प्रतिग्रहनिषेधवाक्य एव तीर्थफलप्रतिबन्धश्रवणात्। याजनादौ दक्षिणास्वीकारे प्रतिग्रहस्वरूपाविशेषेऽपि क्रय इव प्रतिग्रह-दोषाभावात्। अतएव वाजपेयादौ हस्त्यश्वानां बहुशः प्रतिग्रहेऽपि न प्रतिग्रहदोषः।

यत्तु वार्त्तिककारैरश्वप्रतिग्रहाधिकरणेऽश्वक्रयोऽपि अश्व-प्रतिग्रहरूप इत्युक्तं तत्प्रौढ़िवादमात्रम्।

एवं श्राद्धेऽपि देवतोद्देश्यद्रव्यत्यागस्य श्राद्धपदार्थत्वाद् ब्राह्मणस्याहवनीयादिवत् प्रक्षेपाधारत्वाच्छ्राद्धद्रव्यस्वीकारस्य न प्रतिग्रहरूपत्वम्। पितृभ्यो यद्ददातीति दानश्रुतावपि पितॄणां

---

(१) P. तत्फलाविशेषात्। तत्फलसमाप्तौ न०।

प्रतिग्रहीतृत्वाभावात् ब्राह्मणस्य प्रतिग्रहीतृत्वेऽपि दानविधावुद्देश्यत्वात्। उद्देश्यत्वे सति प्रतिग्रहीतुरेव सम्प्रदानत्वात्। [1]सम्प्रदानानि दद्यादित्यर्थस्याभावात् श्राद्धस्य त्यागरूपत्वमेव।

न च

ज्ञात्वा ध्येयाश्च पितरस्त एव द्विजसत्तमाः।

इत्यादिवचनात् पित्रादिरूपेण ध्यातेभ्यो ब्राह्मणेभ्यो दानं श्राद्धं न पित्रादिभ्य इति वाच्यम्। वचनाभावात्। पित्राद्यावाहनं पित्रादिरूपध्यानं ग्रह्यवचनात्। आह्वनीयेऽग्न्याद्यावाहनवत्। पशोर्यागसाधनत्वे विशसनानन्तरं हृदयादिद्रव्यावस्थपशोर्यागसाधनत्ववत् पित्रादेर्देवतात्वावगमस्य ब्राह्मणद्वारकत्वे मानाभावात्। अतएव विज्ञानेश्वरः श्राद्धं नाम पितॄनुद्दिश्य द्रव्यत्याग इत्येतावन्मात्रमेव श्राद्धपदार्थमाह।

तथा मेधातिथिः,—

परिवेषणकालेऽपि पितर एवोद्देश्या [2]'युष्मभ्यमिदं न ममेति। ब्राह्मणस्त्वाह्वनीयस्थानीयः। एतावांस्तु विशेषो यदाह्वनीये हविः प्रक्षिप्यते। ब्राह्मणाः सन्निधाप्यन्ते।

तेन यागोऽपि सन् श्राद्धकर्म्म पित्रर्थमिति। ब्राह्मणस्वीकारस्य श्राद्धपदार्थान्तर्भावे प्रमाणसत्वेऽपि असम्प्रदानस्वीकारगर्भत्वात् दानशब्दार्थाभावाच्च। एवं प्रक्षेपाधिकरणक-

---

(१) P. सम्प्रदानत्वे दद्यादित्यर्थस्याभावात् ०।

(२) P. युष्मभ्यं नम इति।

ब्राह्मणस्वीकारोपाधिकं श्राद्धं नाम कर्म्मान्तरम्। यथा यागे प्रक्षेपाधिको होमः। एवञ्च श्राद्धे [1]प्राक् पितॄनुद्दिश्य द्रव्यत्याग-माचरन्ति शिष्टाः। विष्टरब्राह्मणकश्राद्धञ्च कुर्व्वन्ति। व्यक्तञ्चै-तदस्मत्कृते श्राद्धप्रदीपे। तेन सर्व्वथा श्राद्धस्य दानरूपत्वा-भावाच्छ्राद्धद्रव्यस्य प्रतिग्रहो न प्रतिग्रहपङ्क्तिप्रविष्टः। तेन तीर्थे श्राद्धप्रतिग्रहे न तीर्थफलप्रतिबन्धः। एवं क्षेत्रे पुण्यदिवसे च प्रतिग्रहे न दोषः। द्रव्यविशेषप्रतिग्रहदोषश्च नेह केवलं पतित-श्राद्धस्वीकारे शूद्रश्राद्धस्वीकारे च याजनान्तर्गतत्वाम्महान् दोषः। एवं देवेभ्यो दत्तस्य नैवेद्यस्य।

विप्रेभ्यस्त्वथ तद्देयं ब्राह्मणे यन्निवेदितम्।

[2]तद्दानतत्स्वीकारे न दोषः। नैवेद्यप्रतिपत्तेरपि पूजाङ्ग-त्वेन स्विष्टिकृद्वदित्युक्तम्। स्वीकारपूर्व्वकदानत्वेऽपि पूजा-प्राधान्यात् तत्स्वीकारो याजनान्तर्गत एव। एवं व्रताङ्गदानादा-वपि बोद्धव्यम्। यथा जन्माष्टम्याम्।

हिरण्यं रजतं गावो वासांसि कुसुमानि च।

इत्यादि। तुलापुरुषादौ तु ऋत्विजां दानाङ्गहोमसम्बन्धेऽपि प्रतिग्रहप्राधान्यान्न याजकत्वम्।

गङ्गातीरे विशेषः,—

सार्द्धहस्तशतं यावत् परितस्तीरमुच्यते।

---

(१) P. पृथक् ०।

(२) P. तद्दानं तत्स्वीकारे न प्रतिग्रहदोषः।

तत्र नारायणः स्वामी नान्यः स्वामी कथञ्चन ॥
तत्र न प्रतिगृह्णीयात् प्राणैः कण्ठगतैरपि ।
गङ्गाविक्रयणाद् राजन् ! विष्णोर्विक्रयणं भवेत् ॥
विक्रीते तु जगन्नाथे विक्रीतं भुवनत्रयम् ।

इति वचनात् तत्र प्रतिग्रहः अधर्म्मजनकोऽपि क्षेत्रप्रतिग्रहे तत्तत्तीर्थवद् वाक्यविशेषाभावान्न क्षेत्रफलप्रतिबन्धः फलं किन्तु पुरुषार्थोऽधर्म्मः ।

कुरुक्षेत्रे विशेषः स्कन्दपुराणे,—

कुरुक्षेत्रे च गृह्णानो न भूयः पुरुषो भवेत् ।

निमित्तेषु सर्व्वेष्विति निमित्तपदेन प्रतिग्रह उपरागादौदयादिप्रशस्तकाल उच्यते। तत्राप्ययाचितोपस्थितमपि न ग्राह्यम् । तत्र विशेषो मनुः—

जाते कुमारे यज्ञः स्यात् कामं कुर्य्यात् प्रतिग्रहम् ।
हिरण्यधान्यगोवासस्तिलाज्यगुड़सर्पिषाम् ॥

शङ्खः—

कुमारप्रसवे नाड्यामच्छिन्नायां गुड़तिलहिरण्यवस्त्रगोधान्यप्रतिग्रहेऽप्यदोषः। अन्यदपि। कुमारप्रसवनिमित्तद्रव्यान्तरप्रतिग्रहेऽप्यदोषः ।

बृहस्पतिः,—

विवाहोत्सवकालेषु अन्तरा मृतसूतके ।
पूर्व्वसङ्कल्पितं द्रव्यं न दुष्यति कदाचन ॥

---

## अथ प्रतिग्रहविध्यनभिज्ञेनाप्रतिग्राह्याणि ।

तत्र मनुः,—

न द्रव्याणामविज्ञाय विधिं धर्म्यं प्रतिग्रहे ।
प्राज्ञः प्रतिग्रहं कुर्य्यादवसीदन्नपि क्षुधा ॥
हिरण्यं भूमिमश्वं गामन्नं वासस्तिलान् घृतम् ।
अविद्वान् प्रतिगृह्णानो भस्मीभवति दारुवत् ॥
हिरण्यमायुरन्नञ्च भूर्गौश्चाप्योषतस्तनुम् ।
अश्वश्चक्षुस्त्वचं वासो घृतन्तेजस्तिलाः प्रजाः ॥

एतद्द्रव्याणां प्रतिग्रहं विध्यनभिज्ञेन कृतानामिमे न दोषाः । इतरद्रव्याणां प्रतिग्रहविध्यज्ञानेऽपि दोष ऊहनीयः ।

---

## प्रतिग्रहविधिः ।

पारस्करे छागलेयः,—

दक्षिणहस्तमध्ये ब्राह्मणस्याग्नेयं तीर्थं तेन प्रतिगृह्णीयात् ।

विष्णुधर्म्मोत्तरे,—

प्रतिग्रहीता सावित्रीं सर्व्वत्रैवानुकीर्त्तयेत् ।
ततस्तु कीर्त्तयेत् सार्द्धं द्रव्ये तद्द्रव्यदेवताम् ॥
समापयेत् ततः पश्चात् कामस्तुत्या प्रतिग्रहम् ।
तदन्ते कीर्त्तयेत् स्वस्ति प्रतिग्रहविधिस्त्वयम् ॥
प्रतिग्रहे पठेदुच्चैः प्रतिगृह्य द्विजोत्तमात् ।
मन्दं पठेत्तु राजन्यादुपांशु च तथा विप्रः ॥

मनसा तु तथा शूद्रात् स्वस्तिवाचनकं भवेत्।
सोङ्कारं ब्राह्मणे कुर्य्यान्निरोङ्कारं महीपतौ॥
उपांशु च तथा वैश्ये स्वस्ति शूद्रे प्रकीर्त्तयेत्।

वृद्धपराशरः,—

भूमेः प्रतिग्रहं कुर्य्याद् भूमिं कृत्वा प्रदक्षिणम्।
करे गृह्य तथा कन्यां दासीदासौ तथैव च॥
करन्तु हृदि विन्यस्य धर्म्मो ह्येष प्रतिग्रहः।
आरुह्य तु गजस्योक्तः कर्णे चाश्वस्य कीर्त्तितः॥
तथा चैकशफानाञ्च सर्व्वेषामविशेषतः।
प्रतिगृह्णीत गां पुच्छे शृङ्गे कृष्णाजिनं तथा॥
कर्णेऽजां पशवः सर्व्वे गृह्याः सर्व्वैं र्विचक्षणैः।
प्रतिग्रहं तथोष्ट्रस्य आरुह्यैकन्तु पादुके॥
ईषायान्तु रथो ग्राह्यश्छत्रदण्डे[1] च धारयेत्।
द्रुमाणामथ सर्व्वेषां मूले न्यस्तकरो भवेत्॥
आयुधानि समाधाय तथामुष्य विभूषणम्।
वर्म्मध्वजौ तथा स्पृष्ट्वा प्रविश्य च तथा गृहम्॥
अवतीर्य्य च सर्व्वाणि जलस्थानानि चैव हि।
उपविश्य तु शय्यायामुपस्पृश्य करेण वा॥
द्रव्याण्यन्यान्यथादाय स्पृष्ट्वा वा ब्राह्मणः पठेत्।
कन्यादाने तु न पठेत् द्रव्याणि तु पृथक् पृथक्[2]॥

---

(१) P. छत्रदले।

(२) P. Adds after it प्रतिग्रहं द्विजश्रेष्ठा कुर्वीवान्नभवन्ति ते।

आमुच्य अङ्गे धृत्वा।

विष्णुधर्म्मोत्तरे,—

गृह्णीयान्महिषं पृष्ठे खरं वै पृष्ठदेशतः।
प्रतिग्रहमथोष्ट्रस्य यानानाञ्चाधिरोहणात्॥
बीजानां मुष्टिमादाय रत्नान्यादाय सर्व्वतः।
वस्त्रं दशान्तादादद्यात् परिधायाथवा पुनः॥
आरुह्योपानहौ चैवमारुह्यैव तु पादुके।

परिशिष्टे,—

प्रतिगृह्णीत गां पुच्छे कर्णे वा हस्तिनं करे।
रत्यै भार्य्यां परां दूर्व्वां प्रतिगृह्णीत पार्श्वगाम्॥
पुत्रमुत्सङ्गमारोप्य प्रतिगृह्णीत दत्तकम्।
रथं रथमुखे स्पृष्ट्वा प्रतिगृह्णीत कूवरे॥

अत्र गवादीनां स्थलभेदे प्रतिग्रहा वैकल्पिकाः।

विष्णुधर्म्मोत्तरे,—

अभयं सर्व्वदैवत्यं भूमिर्वै विष्णुदेवता।
कन्या दासस्तथा दासी प्राजापत्याः प्रकीर्त्तिताः॥
प्राजापत्यो गजः प्रोक्तस्तुरगो यमदैवतः।
तथा चैकशफं सर्व्वं कथितं यमदैवतम्॥
महिषश्च तथा याम्य उष्ट्रो वै नैरृतो भवेत्।
रौद्री धेनुर्विनिर्द्दिष्टा छाग आग्नेय ईरितः॥
शेषन्तु वारुणं विद्याद् वराहो वैष्णवः स्मृतः।
आरण्याः पशवः सर्व्वे कथिता वायुदेवताः॥

जलाशयानि सर्व्वाणि वारिजानि कमण्डलुः ।
कुम्भं सकरकं चैव वारुणानि विनिर्दिशेत् ॥
समुद्रजानि रत्नानि सामुद्राणि तथैव च ।
आग्नेयं कनकं प्रोक्तं सर्व्वं लोहं तथैव च ॥
प्राजापत्यानि बीजानि यच्चौयमपि च द्विजाः ।
ज्ञेयानि सर्व्वबीजानि गान्धर्व्वाणि विचक्षणैः ॥
बार्हस्पत्यं स्मृतं वासः सौम्यान्यथ रसानि तु ।
पक्षिणश्च तथा सर्व्वे वायव्याः परिकीर्त्तिताः ॥
विद्या ब्राह्मी समुद्दिष्टा विद्योपकरणानि च ।
सारस्वतानि सर्व्वाणि पुस्तकादीनि पण्डितैः ॥
सर्व्वेषां शिल्पभाण्डानां विश्वकर्म्मैव दैवतम् ।
द्रुमाणामथ सर्व्वेषां लताहरितकैः सह ॥
फलानामपि सर्व्वेषां तथा ज्ञेयो वनस्पतिः ।
मत्स्यमांसे विनिर्द्दिष्टे प्राजापत्ये तथैव च ॥
छत्रं कृष्णाजिनं शय्या रथमासनमेव च ।
उपानहौ तथा यानं यच्चान्यत् प्राणिवर्ज्जितम् ॥
उत्तानाङ्गिरसश्चैव प्रतिगृह्णीत मानवः ।
जपोपकरणं द्रव्यं कथितं शक्रदैवतम् ॥
गृहस्य शक्रदैवत्यं यदनुक्तं द्विजोत्तमाः ।
तज्ज्ञेयं विष्णुदैवत्यं सर्व्वं वा विष्णुदैवतम् ॥

## अथ प्रतिगृहीतृभेदेन निषेधः ।

याज्ञवल्क्यः,—

विद्यातपोभ्यां हीनेन न तु ग्राह्यः प्रतिग्रहः ।
गृह्णन् प्रदातारमधो नयत्यात्मानमेव च ॥

मनुः,—

अतपा ह्यनधीयानः प्रतिग्रहरुचिर्द्विजः ।
अम्भस्यश्मप्लवेनेव सहितेनैव मज्जति ॥
तस्मादविद्वान् बिभियाद् यस्मात् कस्मात् प्रतिग्रहात् ।
स्वल्पकेनाप्यविद्वान् हि पङ्के गौरिव सीदति ॥

अत्र—

मन्त्रपूर्व्वन्तु यद्द्रव्यममन्त्राय प्रदीयते ।
दातुर्निकृत्य हस्तं हि भोक्तुर्जिह्वां निकृन्तति ॥

एतेन विद्यातपोहीनेन प्रीतिदायादिरूपमेव प्रतिग्रहीतव्यं न समन्त्रकप्रतिग्रहरूपमिति ।

याज्ञवल्क्यः,—

प्रतिग्रहसमर्थोऽपि नादत्ते यः प्रतिग्रहम् ।
ये लोका दानशीलानां स तानाप्नोति पुष्कलान् ॥

अत्रायाचितप्रतिग्रहोपस्थितौ त्यागे यद्दानसम्बन्धप्रतिग्रहस्तद्दानफलं प्राप्नोति । यत्तु गृहागतस्य त्यागे दोषश्रवणं नाश्नन्ति पितरस्तस्येत्यादि तद्विहितविषयत्वासम्भवाद्दानफलकामिनश्च प्रतिग्रहत्यागस्य विहितत्वादन्यपुरुषं प्रति दोषः ।

मनुः,—

प्रतिग्रहसमर्थोऽपि प्रसङ्गं तत्र वर्ज्जयेत्।

प्रतिग्रहेण तस्याशु ब्राह्मं तेजः प्रशाम्यति॥

सर्व्ववेदाधिगमनात् सर्व्वतीर्थावगाहनात्।

गवां कोटिप्रदानाच्च श्रेयान् हस्तस्य निग्रहः॥

इदन्तु सर्व्ववेदाध्ययनसर्व्वतीर्थस्नानकोटिगोप्रदानाधिकफलप्राप्तिफलकं यावज्जीवप्रतिग्रहनिवृत्तिसङ्कल्परूपं कर्म्मान्तरम्। तेन गृहीतद्रव्यत्यागनिषेधो विहिततत्सङ्कल्पव्यतिरिक्तविषय एव। एवमयाचितप्रतिग्रहालाभे प्रशस्तेभ्यो द्विजातिभ्यो निषिद्धद्रव्यनिषिद्धदेशनिषिद्धकालपरिहारे याचित्वाऽपि प्रतिगृह्णीयात्। प्रीतिदायेन च प्रतिगृह्णीयात्। अध्यापनयाचनयोर्याचितप्रतिग्रहापेक्षयाऽपि गुरुत्वात्। तदसम्भवे निर्गुणेभ्योऽपि निन्द्यवर्ज्जितेभ्यः। तदसम्भवे धार्म्मिकक्षत्रियनृपात्।

अक्षतञ्च क्षतं क्षेत्रं गौरजाविकमेव च।

हिरण्यं धान्यमन्नञ्च पूर्व्वं पूर्व्वमदोषवत्॥

एवं क्रमेण। तत्र निषिद्धदातृविषये यमः,—

नटनर्त्तक[1]वैताल चर्म्मकारसुवर्णकृत्।

श्वाशुकाषण्डगणिका अभोज्यान्नाः प्रकीर्त्तिताः॥

गन्धर्व्वो लोहकारश्च शुचिकस्तन्तुवायकः।

चक्रोपजीवी रजकः कितवस्तस्करस्तथा॥

---

(१) P. तक्षकः।

ध्वजी मीनोपजीवी च शूद्राध्यापकयाजकौ।
कुलालश्चित्रकर्त्ता च वार्द्धुषी चर्म्मविक्रयी॥
समार्घ्यं पण्यमादाय महार्घ्यं यः प्रयच्छति।
स वै वार्द्धुषिको नाम यश्च वृद्धिं प्रयोजयेत्॥
वृथाश्रमी वृथा दाता आश्रमाणाञ्च दूषकः।
पुण्यस्य विक्रयी यश्च योनिसंकरजश्च यः॥
रङ्गोपजीवी कुण्डाशी वीरहा गुरुगुप्तिकः।
भिषक् च गरदश्चैव रूपाजीवी च सूचकः॥
शौण्डिकः पार्षिकश्चैव निषादेन समाः स्मृताः।
कर्म्मस्वेतेषु यो मोहाद् ब्राह्मणो वर्त्तते सदा॥
प्रायश्चित्तेऽपि चरिते परिहार्य्यो भवेत् स हि।
एते ब्राह्मणचण्डालाः सर्व्वे ब्रह्महताः किल॥
तस्माद्दैवे च पित्रे च वर्ज्जयेत् तत्त्वदर्शिभिः।
एतेषामेव सर्व्वेषां प्रत्याहृत्तिं तु मार्गताम्॥
भिक्षान्नमुपयुञ्जानो द्विजश्चान्द्रायणं चरेत्।
एतेषां ब्राह्मणो भुक्त्वा दत्वा कृत्वा प्रतिग्रहम्॥
प्राजापत्येन शुध्येत तस्मात् पापान्न संशयः।

स्थाणुक्ता अभ्राह्नमती। गन्धर्व्वो गायनवृत्तिः। कुलालोऽत्रास्वकीयः। देवलेन कुलालस्य भोज्यान्नताभिधानात् तस्य स्वकीयविषयत्वम्। वृथा दाता दृष्टादृष्टप्रयोजनमनुद्दिश्य दाता। आश्रमभेदको दूषकः। गुरुगुप्तिकः गुरुं गोपायति। रूपाजीवी वेशकरणेन यो जीवति। पार्षिकः पत्रोपजीवी।

सुमन्तुः,—अभिशस्तपतितपौनर्भवभ्रूणहपुंश्चल्यशुचिशस्त्रकार-तान्त्रिकतैलिकध्वजीसुवर्णकारषण्ढबन्धकिगणिकान्नानि वर्जयेत्। शौनिकव्याधचर्म्मकारनिषादानामन्नमप्रतिग्राह्यम्। तदन्नप्रतिग्रहयोश्चान्द्रायणं चरेत्। तत्पदेनाभिशस्तादयः सर्व्वे परामृश्यन्ते। अत्रापि प्रायश्चित्तं साकाङ्क्षत्वात्। तेनैतेभ्यः प्रतिग्रहो निषिद्धः।

हारीतः,—पतितदुष्कृतेभ्यः प्रतिगृहीतमसत्स्थमयज्ञीयं तेन न पुण्यार्थानाप्नोति आदेशवदृयथार्थं ब्राह्मणमभिजित्य तामसमन्यस्मै दीयमानं प्रतिषिद्धस्स्वयं प्रतिगृह्णीतस्य दुष्कृतमाप्नोति। आनृण्यार्थे प्रतिगृहीतेभ्योऽकृत्वोपयोगात् स्तैन्यम्। असत्कार्य्यार्थं निमज्जत्यात्मार्थे निबध्नीतेत्याहुः। एते प्रतिग्रहोपयोगाः। यैः प्रतिगृह्णन् निरयाय कल्प्यते।

---

## अथ द्रव्यविशेषेण निषिद्धेभ्योऽपि प्रतिग्रहानुज्ञा।

तत्र गौतमः,—एधोदकमूलफलशय्यासनावसथयानपयोदधिधानाप्रियङ्गुशाकान्यप्रणोद्यानि सर्व्वेभ्यः। पितृदेवगुरुभृत्यभरणे चान्यत्। सर्व्वेभ्य इति। निन्दितेभ्योऽपि दातृभ्यः। केवलमयाचितप्रतिग्रहे येषां कुसूलादीनां प्रतिप्रसवः। येषामयाचितप्रतिग्रहे नचैतदेवमपि वचनमयाचितप्रतिग्रहविषयं किन्त्वेषतेै।

अत्राभ्युदितपदेनायाचितस्य द्रव्यमात्रस्य पृथगुपादानात्। अयाचितप्रतिग्रहे निषिद्धकृष्णाजिनादिव्यतिरिक्तद्रव्यमात्रस्याप्रत्याख्येयत्वेन द्रव्यविशेषानर्थक्यात्। तेन सामान्यप्रार्थनया दाता

चेदेधोदकादिद्रव्यं दित्सति तदा तन्न प्रत्याख्येयमित्येवं युज्यते। एवमुत्तरत्रापि पितृदेवभृत्यभरणार्थं याचितमयाचितं वा लब्धा न प्रत्याख्यानं कुर्य्यादित्यर्थः।

केवलं,—

न यज्ञार्थं धनं शूद्राद् विप्रो भिक्षेत कर्हिचित्।
यजमानो हि भिक्षित्वा चण्डालः प्रेत्य जायते॥

इति मनुवचनाच्च यज्ञार्थं शूद्रात् प्रार्थनम्। अयाचितं यज्ञार्थं शूद्रादपि ग्राह्यम्। पितृदेवभृत्यभरणे चान्यदिति देवार्थस्य प्रत्याख्याननिषेधात्। केवलं—

यज्ञार्थं लब्धमददन्भासः काकोऽपि वा भवेत्।

इति याज्ञवल्क्यवचनात् तस्यान्यत्र विनियोगो न कार्य्यः।

सुमन्तुः,—अभोज्यान्नानामपि पुष्पमूलफलशाकतृणकाष्ठधान्यानि क्षेत्रस्थानि गोष्ठस्थं पयश्चाददतामदोषः। क्षेत्रमत्र उत्पत्तिस्थानम्। मनुः—

एधोदकं मूलफलं पुष्पमभ्युदितं च यत्।
सर्व्वतः प्रतिगृह्णीयात् तथैवाभयदक्षिणाम्॥

शय्यां गृहं कुशान् गन्धानापः पुष्पं मणिं दधि।
धान्यं मत्स्याः पयो मांसं शाकञ्चैव न निर्वपेत्॥

न नीत्वा कुर्य्यात्। एवं निन्दितद्विजातिभ्य एतानि द्रव्याणि प्रतिगृह्यन्ते न शूद्रात् किमपि।

अङ्गिराः,—

षण्मासान् यो द्विजो भुङ्क्ते शूद्रस्यान्नं जुगुप्सितम्।

जीवन् स च भवेच्छूद्रो मृतः श्वा चाभिजायते।
एते दोषा भवन्त्यत्र शूद्रादेव प्रतिग्रहे॥

तथाच मनुः,—

वेदविद्यापि विप्रोऽस्य कृत्वा लोभात् प्रतिग्रहम्।
विनाशं व्रजति क्षिप्रमामपात्रमिवाम्भसि॥

तथा—

शूद्रोऽपि धनवान् भूत्वा ब्राह्मणानेव बाधते।
प्रतिग्रहदानेन नरकपातात्।

तथा—

पक्वान्नवर्ज्जं विप्रेभ्यो गौर्धान्यं क्षत्रियादपि।
वैश्यस्य सर्व्वधान्यानि शूद्राद् ग्राह्यं न किञ्चन॥

तथापि निर्गुणद्विजातिभ्यः प्रतिग्रहलाभे प्रशस्ताध्यापनयाजनासम्भवे अयाचितशूद्रप्रतिग्रहासम्भवे शूद्रादपि याचितप्रतिग्रहः।

तथाचाङ्गिराः,—

अनुगृह्य प्रवृत्तस्य न दोषोऽङ्गिरसो मतम्।
गुर्व्वीयमतिथीनाञ्च भृत्यानाञ्च विशेषतः॥
शूद्रान्नं प्रतिगृह्णीयात् न तु भुङ्क्ते स्वयं ततः।

अनुगृह्य प्रवृत्तस्य गुर्व्वाद्यनुग्रहप्रवृत्तस्य न तु स्वयं भुङ्क्ते इति गोपालादिव्यतिरिक्तशूद्रविषयम्।

तत्र तु याज्ञवल्क्यः,—

शूद्रेषु दासगोपालकुलमित्रार्द्धसीरिणः।
भोज्यान्ना नापितश्चैव यश्चात्मानं निवेदयेत्॥

एषामन्नं प्रतिगृह्य स्वयमपि भुञ्जीतेत्यर्थः।

यत्तु क्षेत्रगतं धान्यं खले वाथ गृहाद् वहिः।
सर्व्वकालं ग्रहीतव्यं सर्व्वेभ्योऽङ्गिरसो मतम्॥

सर्व्वकालमनापत्तावपि। तथा—

स्वपात्रे यच्च निक्षिप्तं दुग्धं तच्छुचिरिष्यते।
पात्रान्तरगतं ग्राह्यं शूद्रात् स्वगृहमागतम्॥
शूद्रवेश्मनि विप्रेण क्षीरं वा यदि वा दधि।
निमित्तेनैव भोक्तव्यं शूद्रान्नं तदपि स्मृतम्॥
आमं मांसं दधि घृतं धाना क्षीरमथौषधम्।
शुक्लक्रेयरसा ग्राह्या निवृत्तेनापि शूद्रतः॥
शाकमत्स्यमृणालानि कन्दुकाः सक्तवस्तिलाः।
इक्षुः फलानि पिण्याकं प्रतिग्राह्याणि सर्व्वतः॥

सर्व्वतः सूतकादावपि सवर्णेभ्यश्च।

मनुः,—

नाद्याच्छूद्रस्य पक्वान्नं विद्वानश्राद्धिनो द्विजः।
आददीताममेवास्मादावृत्तावेकरात्रिकम्॥

आवृत्तौ आपदि। याज्ञवल्क्यः,—

कुशाः शाकाः पयो मत्स्या गन्धाः पुष्पं दधि क्षितिः।
मांसं शय्यासनं धान्यं प्रत्याख्येयं न वारि च॥

अङ्गिराः,—

संस्कारैः शुध्यति ह्यामं धान्यं तेन शुचि स्मृतम्।
तस्माद्धान्यं ग्रहीतव्यं सूतसूतान्तरेष्वपि॥

पक्वान्नवर्जं विप्रेभ्यो गोधान्यं क्षत्रियात् तथा।
वैश्येभ्यः सर्व्वधान्यानि श्राद्वाद् ग्राह्याः पणास्तथा॥

संस्कारैस्तर्पणादिभिः। तान्त्रिकः कार्षिकः पणः। एतच्चा-पद्गतस्येति लक्ष्मीधरः।

अत्र गर्हितप्रतिग्रहाणां धनत्यागपूर्व्वकं प्रायश्चित्तम्। धनभोगेऽवशेषधनत्यागपूर्व्वकं प्रायश्चित्तम्। भोगेन धनसमाप्तौ वैराग्यं धनत्यागरूपाङ्गवैगुण्यात् प्रायश्चित्तं कर्त्तव्यं न वेति सन्देहे कर्त्तव्यमेवेति निर्णयः। अदिष्टप्रायश्चित्तानामसम्भवेऽपि

यत्रोक्तं यत्र वा नोक्तमिह पापप्रणाशनम्।
प्राजापत्येन कृच्छ्रेण शुध्यते नात्र संशयः॥

इति विशेषप्रायश्चित्तस्थलेऽपि प्राजापत्यकृच्छ्रविधानात् तदेव कर्त्तव्यम्। गुरौ च दोषे तस्यावृत्तिः। एनसि गुरुणि गुरू-णीति स्मरणात्। प्रायश्चित्तविशेषात् तद्विधिश्च प्रायश्चित्तप्रदीपे-ऽस्मत्कृतेऽनुसन्धेयः। यथोक्तासत्प्रतिग्रहप्रायश्चित्तमितिधनत्याग-रूपाङ्गत्यागाभावेऽपि कर्त्तव्यम्। नैमित्तिकेऽशक्याङ्गहानेऽपि पाप-क्षयफलोत्पत्तिः।

अन्येत्वाहुः,—अति निषिद्धानभ्यनुज्ञातप्रतिग्रह एव धनत्याग-पूर्व्वकमेव प्रायश्चित्तम्। यस्यां दशायां यः प्रतिग्रहोऽनुज्ञातस्तत्-प्रतिग्रहस्य कालान्तरे निषिद्धत्वेऽपि गर्हितपदानुविधेयत्वाच्च न तत्र धनत्यागपूर्व्वकं प्रायश्चित्तम्।

यद्गर्हितेनार्ज्जयन्ति कर्म्मणा ब्राह्मणा धनम्।
तस्योत्सर्गेण शुध्यन्ति जप्येन तपसैव च॥

इति वचनात् । तेनाधर्म्मत्वेनाज्ञातशूद्रप्रतिग्रहादेरपि धन-त्यागपूर्व्वकं प्रायश्चित्तम् ।

किन्तु पतितचाण्डालादिधनप्रतिग्रहे तथेति चौर्य्यादेरपि सर्व्वथाननुज्ञातत्वं तत्रापि धनत्यागपूर्व्वकमेव प्रायश्चित्तम् ।

यस्तु परोपकारार्थमेव गृह्णातीति कुटुम्बभरणे विनियुङ्क्ते तस्य गर्हितप्रतिग्रहेऽपि दोषाभावः । मनुः,—

असाधुभ्योऽर्थमादाय साधुभ्यो यः प्रयच्छति ।
स कृत्वा प्लवमात्मानं सन्तारयति तावुभौ ॥

बृहस्पतिः,—

असतो यः समादाय साधुभ्यः संप्रयच्छति ।
धनस्वामिनमात्मानं सन्तारयति दुष्कृतात् ॥

यमः,—

यस्तु द्रव्यं पुनर्दद्यात् प्रतिगृह्य यतस्ततः ।
यमः पृच्छति राजानं केषा भवति दक्षिणा ॥
जानताऽजानता वापि यत्किञ्चिद् दुष्कृतं कृतम् ।
सर्व्वं तरति धर्म्मात्मा प्रतिगृह्य पुनर्द्ददत् ॥

इति प्रतिग्रहप्रकरणम् ।

---

## अध्यापनप्रकरणम् ।

एवं प्रतिग्रहेण वृत्त्यसम्भवे साधुभ्योऽध्यापनेन जीवनम् । प्रति-ग्रहसम्भवे न तत्कार्य्यम् । तच्च मूल्यनिर्णयं विनैव ।

गृहीत्वाऽपि च यो विद्वान् दक्षिणां न प्रयच्छति ।

तस्य कृतघ्नत्वस्मरणात् कृतघ्ने नास्ति निष्कृतिरिति दोषातिशयस्मरणाच्च शिष्यैर्गृह्यते तेन जीवनम् ।

वेदाक्षराणि यावन्ति नियुञ्ज्यात्तेऽर्थकारणात् ।

तावतीर्भ्रूणहत्यास्तु वेदं विप्लाव्य चाप्नुयात् ॥

भृतकाध्यापको यस्तु भृतकाध्यापितश्च यः ।

तावुभौ पतितौ विप्रौ स्वाध्यायक्रयविक्रयात् ॥

इति दोषः । एवं सम्पूर्णे वेदाध्यापने मूल्यपणपूर्व्वके पातित्यश्रवणात् एकदेशस्य पणपूर्व्वकाध्यापने चोपपातकश्रवणाद् वर्जनीयम् । अन्यो यदि मूल्यं दत्वा धर्म्मार्थं परानध्यापयेत् तदाध्यापकस्य धर्म्मविक्रय एव परार्थजपादिवत् । धर्म्मविक्रयोऽपि निषिद्ध एव ।

अत्र वेदविक्रय एव दोषाभिधानाद् वेदादिमीमांसादीनां पणपूर्व्वकमध्यापनेऽप्यदोषः । तथा पुराणश्रावणमध्यापनान्तर्गतम् । यत्तु व्यवहारनिर्णयोऽपि शास्त्रोपदेशरूपमेवेति नाध्यापनान्तर्भावः । व्यवहारान् नृपः पश्येदिति क्षत्रियधर्म्मविधानात् क्षत्रियवृत्तिमध्ये देवलेन गणनाच्च क्षत्रियवृत्तिरूपमेव व्यवहारार्ज्जनम् । एवं पर्षदि स्थित्वा प्रायश्चित्तस्योपदेशोऽपि नाध्यापनान्तर्गतः किन्तु पृथगेव कर्म्मान्तरम् ।

आर्त्तानां मार्गमाणानां प्रायश्चित्तानि ये द्विजाः ।

जानन्तो न प्रयच्छन्ति तेषां ते फलभोगिनः ॥

इत्यादिकमन्यविधिविषयम् । सत्रादष्टधेनुग्रहणञ्च नैमित्तिक-

दानप्रतिग्रहरूपमेव। एवं महापातकादावपि नाध्यापनात् सद्यः पातित्यम्। एवं न शूद्राय मतिं दद्यादिति न चास्योपदिशेद्धर्म्मिति चानुपसन्नशूद्रविषयमिति व्याख्यानात्। उपसन्नशूद्रे दोषाभावः। अनुपसन्ने तु स्नातकव्रतलोपमात्रमिति न धर्म्मोपदेशस्याध्यापनान्तर्गतिः। एवं यज्ञादावुपदेष्टृत्वेन ऋत्विजां कर्म्मप्रचारणमपि नाध्यापनं याजनान्तर्गतम्। तन्मूल्यग्रहणं प्रीतिदायरूपम्। पणपूर्व्वकञ्च प्रत्युपकारदानस्वीकारः। प्रहृतेभ्यश्चान्यदिति यद्दीयते यज्ञात्रेयाय हिरण्यं ददातीत्यादि तत्प्रतिग्रहान्तर्गतम्। यज्ञार्थप्रतिग्रहपदार्थत्वेनार्त्विज्यं याजनान्तर्गतं चेति नाध्यापने प्रवेशः। व्रात्याधिकारे पारस्करः,—नैतानुपनयेयुर्नाध्यापयेयुः।

अथ शूद्रपतिताध्यापने महान् दोष इति सर्व्वथा न कर्त्तव्यम्। पतिते पातित्यं शूद्रे च। यमः,—

वृषलाध्यापको यश्च वृषलाध्यापितश्च यः।
तावुभौ नरके मग्नौ वसेतां शरदां शतम्॥

शूद्राध्यापकयाजकानित्युक्त्वा यमः,—

एते ब्राह्मणचण्डालाः सर्व्वे दुर्ब्राह्मणाः किल।

इति दोषाधिक्यात्। विकर्म्मस्थब्राह्मणाध्यापनमपि यथा कथञ्चिदपि। शूद्रापप्रतिग्रहासम्भवे पापसंसर्गगुरुत्वात्।

कृतज्ञोऽद्रोही मेधावी शुचिः कल्योऽनसूयकः।

इति शुचेरध्यापनीयत्वात्।

इत्यध्यापनप्रकरणम्।

---

## याज्यप्रकरणम्।

एवमध्यापनवृत्त्यसम्भवे प्रशस्तयाजनं वृत्तिः। तस्य तु महत्त्वं प्रतिग्रहाध्यापनापेक्षया प्रशस्तत्वम्। प्रतिग्रहः प्रत्यवर इति मनुः। तथा पद्मपुराणे,—

अयाज्यानां याजकश्च याज्यानां च विवर्ज्जकः।
रेतोविण्मूत्रसेवी च स प्रेतो जायते नरः॥

याज्यत्यागे दोषकीर्त्तनात् प्रशस्तत्वं गम्यते। तथा

याजनाध्यापनादिभ्यस्तथा दानप्रतिग्रहैः।
विरजाः स्वर्गमायान्ति विमानैः सङ्कृता दिवः (?)॥

इति प्रशस्तता स्मर्य्यते। तेन पौण्डरीकबहुसुवर्णवाजपेयादि-याजनेन बहुग्रहणेऽपि न दोषः। एवं प्रशस्तयाज्यत्यागे दोषश्रव-णाच्च बहुयाजनेऽपि न दोषः।

वृत्त्यर्थादधिकं गृह्णन् नरो भवति किल्बिषी।

इति तस्य प्रतिग्रहविशेषपरत्वात्। यत्तु बहुयाजक इति निन्दावचनं तत् "तथैव ग्रामयाजकः" "याजयन्ति च ये बहून्" इति वाक्ययोः समवादायाद् बहुवर्णयाजक इत्येवंपरम्। तदुक्तं दानसागरे,—बहुयाजको बहुवर्णयाजक इति। ब्रह्मपुराणे,—

यश्चोपनयनं चक्रे बहूनां बहुयाजकः।

इति। याजनं नाम श्रौतकर्म्मणि गृह्ययज्ञादि स्मार्त्तकर्म्मणि च वरणाभरणाभ्यां सत्कृतेन दक्षिणालाभमुद्दिश्याध्वर्य्यवादि कर्म्म-करणम्। षोड़शर्त्विजो नवयज्ञमखे चत्वार ऋत्विज इत्यादि

रूपेण यत्र ऋत्विक्समाख्या तत्र ऋत्विग्भ्यो दक्षिणां ददातीति ऋत्विक्सम्प्रदानजदानस्य दक्षिणात्वादृत्विजामेव याजनं वृत्तिरिति केचित् ।

अन्येषान्तु चमसाध्वर्य्युप्रभृतीनां न याजनवृत्तिरिति केचित् । ऋत्विग्यज्ञकृदुच्यते इति स्मृतेः यजमानस्याप्यार्त्विज्यात् । क्रतुयजननिमित्तत्वाच्च यज्ञार्थकर्तृत्वञ्च ऋत्विक्त्वम् । तन्निमित्तधनार्जनमेव याजनम् । कल्पसूत्रेतु व्यवहारार्थं संज्ञाकरणमिति प्रतिभाति ।

यत्तु वरणपूर्व्वकं त्र्यम्बकजपसहस्रनामदेवीमाहात्म्यादिपाठदेवपूजातीर्थस्नानगयाश्राद्धादिकं परार्थं कृत्वा दक्षिणाग्रहणं तन्न याजनम् । यज्ञसम्बन्धाभावात् ।

तत्र त्र्यम्बकजपादौ—

भ्रातरं पितरं शिष्यं गोसहस्रप्रदायिनम् ।

रक्षेदनेन मन्त्रेण—

इति दक्षिणाभिधानमस्ति । यत्र सहस्रनामपाठादौ समाचारप्रमाणकं दक्षिणादानं तदुभयत्रापि प्रतिग्रहशब्दार्थसत्वात् प्रतिग्रहरूपमेव ।

अर्थलोभेन यो दद्याद् गृह्णीयाच्च प्रतिग्रहम् ।
स पूर्व्वं नरकं याति ब्राह्मणस्तदनन्तरम् ॥

इति यच्छातातपवचनं तद्दृव्यलोभरूपकार्य्यविषयमेव । तेनात्र तुलापुरुषादिदक्षिणावद्दक्षिणाशब्दाद्दक्षिणाग्रहणेतिकर्त्तव्यता नैतद्धर्मेतिकर्त्तव्यता । तच्च प्रत्युपकारार्थं दानमेव ।

यथा गीतायाम्।—

यत्तु प्रत्युपकारार्थं फलमुद्दिश्य वा पुनः।
दीयते तु परिक्लिष्टं तद्राजसमुदाहृतम्॥

इति। यथा व्रतादौ

असामर्थ्ये शरीरस्य व्रते च समुपस्थिते।
कारयेद्धर्म्मपत्नीं वा पुत्रं वा विनयान्वितम्॥

इति।

भ्रातरं पितरं शिष्यं ब्राह्मणं दक्षिणादिभिः।

इति। अत्र पत्न्यादीनां प्रतिनिधित्वेन कर्म्मकर्तृत्वम्। दक्षिणाक्रीतस्य न प्रत्युपकारलाभेन प्रतिनिधित्वमिति विशेषः। यद्यपि तथा स्वामिनः फलसमवायादिति षष्ठाधिकरणन्यायेन स्वामिनः प्रतिनिधिर्नास्ति। कर्त्रंशे तु भवत्येव। तदुक्तं 'बहूनान्तु प्रवृत्तावन्यमागमयेदवैगुण्यादित्यधिकरणे सत्रे कस्मिंश्चिद् यजमाने मृते तत्स्थानेऽन्यः प्रतिनिधेयः सप्तदशसंख्याधिकरणककर्तृकत्व-निर्वाहाय इत्युक्तम्। तथा स्मरन्ति

यज्ञदानव्रतजपतीर्थयात्रादिकञ्च यत्।
यस्त्वेवं कारयेदन्यं तेन सर्व्वमनुष्ठितम्॥

इति। एतेन पौरोहित्यं व्याख्यातम्। तत्रापि

नित्ये नैमित्तिके काम्ये त्वं मे प्रतिनिधिर्भव।

इति स्मरणात्।

(१) मुद्रितपुस्तके,—बहूनां तु प्रवृत्तेऽन्य० जैमिनीयन्यायमालाविस्तरः अ० ६. पा० ३ सू० २२।

त्वया मया च भोक्तव्यमिदं राज्यमकण्टकम्।

इति धनदानस्वीकाराद् व्यक्तमेव प्रतिनिधिकर्तृत्वम्। तत्र प्रतिनिधित्वेन वरणविधिवत् तत्रापि कारयेदिति कर्त्तारं प्रयोजयेदिति विधानादेव प्रतिनिधित्वम्। अतएव मण्डनः,—

पत्नग्रामपित्वशक्तायां नियुक्तः कश्चनो यजेत्।

इति स्वयमेव यागेऽपि प्रतिनिधिकर्त्तारं दर्शयति।

प्रभासखण्डे च,—

पत्नी पुत्रः पुरोधाश्च भ्राता वापि सखाऽपिवा।
यात्रायां धर्म्मकार्य्येषु जायते प्रतिहस्तकाः॥
एभिः कृतं महादेवि स्वयमेव कृतं भवेत्।

आपस्तम्बः,—

प्रयोजयिता अनुमन्ता कर्त्तेति स्वर्गनरकफलेषु भागिनः केवलम्।

तथैव राजमहिषी राजामात्यपुरोहिताः।
पापेनार्द्धेन संयुक्ताः सर्व्वे ते राजधर्म्मिणः॥

इति यमवचनात् पुरोहितवृत्तिर्गर्हिता। स्तुतिजपपाठादिकरणं न तथा गर्हितमिति विशेषः। तेन प्रतिग्रहाश्रयदेशकालद्रव्यदोषास्तत्रापि भवन्त्येव। यत्तु—

इष्टमध्यापितं पूर्त्तं तप्तं वा ह्यात्मनस्तपः।
प्रयच्छत्यपरेभ्यश्च धनार्थं धर्म्मविक्रयी॥

इति वरणव्यतिरेकेण स्वयमेव यागं कृत्वा जपं कृत्वा तपः कृत्वा परस्माद्धनलाभेन तद्विक्रीणीते न कर्म्मणा तस्य वृत्तिः स्वकृतापूर्व्वं

विनश्यति धनदातरि चापूर्व्वमुत्पद्यत इति कल्प्यते स धर्म्म-विक्रयः।

देवतानां गुरूणाञ्च मातापित्रोस्तथैव च।
पुण्यं देयं प्रयत्नेन नापुण्यं चोदितं क्वचित्॥

इति पुण्यदानविधौ पुण्यस्य कृतस्य दानेन स्वगतापूर्व्वं नश्यति सम्प्रदानेऽपूर्व्वान्तरमुत्पद्यते तन्न धर्म्मविक्रये। यथा,—

तस्माद् यत् सुकृतं किञ्चिन्ममास्ति त्रिदशाधिप।
तेन पुण्येन मुच्यन्तां पितरो यातनागताः॥

इति पुण्यदानम्। तथाच ययातेः स्वर्गप्रच्युतस्य दौहित्रदत्त-पुण्येन स्वर्गगमनम्। एवं धर्म्मविक्रयः कृतस्य धर्म्मस्य मूल्यग्रहण-पूर्व्वकं परस्मै दानम्। स च निषिद्धः। पुण्यविक्रये तप्तकृच्छ्रं कुर्य्यादिति प्रायश्चित्तविधानात्। तथाच शङ्खलिखितौ,—चैत्य-देवगृहोद्यानारामसभाप्रपापुण्यतड़ागसेतुविक्रयं कृत्वा तप्तकृच्छ्र-माचरेदिति। तेन परार्थजपाद्याचरणं न धर्म्मविक्रयो न याजनं तद्धनग्रहणं प्रतिग्रह एव। मनुः—

गोवधायाज्यसंयाजपारदार्य्यात्मविक्रयौ।

इत्यादिनाऽयाज्ययाजनमित्ययाज्ययाजननिन्दायां तिलोत्पाद-नविक्रययोर्निन्दनाच्च तिलवपनमस्वकृतकृषौ कृष्यन्तरासम्भवे। एव-मिक्षुं न पीड़येत् इक्षुपीड़ात्मघातका इति पीड़ननिषेधादिक्षु-कृषिरपि न कार्य्यः। हारीतः—

अष्टगवं धर्म्महलं षड्‌गवं जीवितार्थिनाम्।
चतुर्गवं नृशंसानां द्विगवं ब्रह्मघातिनाम्॥

तथा--

वालानां दमनञ्चैव वाहनं न च शस्यते।

वृद्धानां दुर्ब्बलानाञ्च प्रजापतिवचो यथा॥

देवलः—

पुंस्त्वोपघातं नस्यं वा वाहनानां न कारयेत्।

वृषं युगे न युञ्जीत जीर्णं व्याधितमेव च॥

न षण्डं वाहयेदेनं न च भारेण पीड़येत्।

न वाहनीयाः शिखरे वृषभा यत्र कुत्रचित्॥

देवीपुराणे—

सुजातान् (?) पृष्ठदेशे तु स्कन्धदेशे तु यो वृषम्।

वाहयेद् गुरुभारेण स तु भारशतं वहेत्॥

रामायणे,—

यो दुर्बलं परिश्रान्तं वालिशः पापनिश्चयः।

वाहयिष्यत्यनड्वाहं स गोघ्नः पापमाप्स्यति॥

शक्तं समर्थं बलिनं वृषं यो वाहयिष्यति।

ग्रासोपहारसंयुक्तं न स पापमवाप्स्यति॥

स्वयं कृषौ विशेषः। पुण्याहे लाङ्गलयोजनमिति स्मृत्यनुसाराल्लाङ्गलयोजनविधिना कृष्यारम्भः। तथा—

ब्रह्मा विष्णुश्च रुद्रश्च काश्यपः सुरभिस्तथा।

इन्द्रः प्रचेताः पर्ज्जन्यः शेषचन्द्रार्कवह्नयः॥

बलदेवो हलं भूमिर्वृषभौ रामलक्ष्मणौ।

रक्षोघ्नौ जानकी सीता युगं गगनमेव च॥

एते द्वाविंशतिः प्रोक्ताः कृष्यारम्भमहोत्सवे।

हारीतः,—आपत्सु कृषिं प्राहुः कृषेरायोजनवदायोऽर्थं बाल-वृद्धकृशादीन् वर्ज्जयेत्। आयोजनवत् चयनभूसंस्कारः कृषावायो-जनं यथा सम्यक् क्रियते तथेत्यर्थः।

देवलः—

यो लाङ्गले तु सम्पूज्य कृष्यारम्भमहोत्सवे।
गन्धैः पुष्पैस्तथा धूपैर्माल्यै रत्नैः पृथक् पृथक्॥
सदक्षिणैर्दधानेन होमैर्ब्राह्मणतर्पणैः॥
ततः शक्तिविमुक्तेन ब्रह्मवादेन भूरिणा।
हलयेद् वाहयेद् भूमिं स्वयं स्नातः स्वलङ्कृतः॥
पूर्व्वोत्तरां दिशं गच्छेत् क्रमात् पौरन्दरीं शुभाम्।
कृत्वा प्रदक्षिणाहुतिमीशानाभिमुखस्ततः॥
विमुच्य वृषभं वीजं पुरुषो लक्षणान्वितः।
तुष्टः सुवासाः स्रग्वी च सुवर्णे जलसेचकः॥
सुवर्णपात्रसंयुक्तं प्राङ्मुखो निवपेत् भुवि।
उप्त्वा वीजञ्च तत्रैव भोक्तव्यं सह बन्धुभिः॥
उत्सवश्चैव कर्त्तव्यो गीतवाद्यसमाकुलः।

हारीतः,—अदीर्घेण प्रतोदेन शनैः शनैर्वाहयेत्। न पर्व्वसु सन्धिवेलयोर्वाहयेत्। छिद्रकृते परित्यागेऽवश्यञ्च भेक्षणम्। तथा वाहकानां छायासु करणं जलदानं घासदानं दंशाद्युपद्रव-निवारणं रोगार्त्तानां चिकित्सनञ्च हारीतोक्तं कर्त्तव्यम्। धान्य-वपनकाले छेदनकाले मर्द्दनकाले निर्वपणकाले गृहानयनकाले

च बलिहोमकरणञ्च हारीतोक्तम् । गवां स्वस्तिकामनया ब्राह्मण-
भोजनम् । स्नापयित्वानडुहामलङ्करणम् ।

धान्यानयनकाले च बृहस्पतिः—

राज्ञे दत्त्वा तु षड्भागं देवतानाञ्च विंशकम् ।
विंशभागञ्च विप्राणां कृषिं कृत्वा न दोषभाक् ॥

पुनर्हारीतः—

यूपोऽयं निहितो मध्ये मेध्यानामिह कर्षकैः ।
तस्मादतन्द्रितो दद्यादत्र धान्यञ्च दक्षिणाः ॥
भूमिं भित्त्वौषधीर्भित्त्वा भित्त्वा कीटपिपीलिकाः ।
पुनन्ति खलयज्ञेन कर्षका नात्र संशयः ॥

खलयज्ञो यथोक्तरूपेण खले विभज्य दानम् ।

इति कृषिप्रकरणम् ।

---

कृष्या जीवनासम्भवे स्वयङ्कृतवाणिज्येन जीवनम् । तत्र
शङ्खलिखितौ,—आपद्गतो ब्राह्मणः कामं जिजीविषुः वैश्या-
चरणम् । वृत्तिमास्थाय न पण्यं पण्यमिति ब्रूयात् । सकृदेवोक्तं
मूल्यमिच्छेदित्यर्थः । आपस्तम्बः,—अक्रीतपण्यैर्व्यवहरेत । मुञ्ज-
बल्वजैर्मूलफलैः । तृणकाष्ठैरविकृतैः । नात्यन्तमवस्येत् । वृत्तिं प्राप्य
विरमेत् । अक्रीतपण्यैः क्रयादतिरिक्तव्यवहारवर्जितैः । नात्यन्त-
मवस्येदासक्तो भवेदित्यर्थः । अत्र मूलफलानामविक्रेयत्वे अक्रीत-
त्वेन विक्रेयत्वम् । विक्रयनिषेधः क्रीतमूलफलविषय इत्येके ।
एवञ्चास्य मते फलानां विक्रयनिषेधः क्रीतलब्धफलविषयः ।

बौधायनः—

पशवश्चैकतोदन्ता अश्मा च लवणाद्दृते।

एतद् ब्राह्मण ते पण्यं तन्तुश्चारजनीकृतः॥

लवणाद्दृते लवणादन्यः पाषाणः। अयमश्मनो विक्रयोऽत्यन्ता-पदि स्मृत्यन्तरे निषेधादिति लक्ष्मीधरः। अरजनीकृतः कुसुम्भा-दितररञ्जीकृतः। नारदः,—

ब्राह्मणस्य तु विक्रेयं शुष्कं दारु तृणानि च।

गन्धद्रव्यैरकावेत्रं तूलस्तूलीकृताद्दृते॥

स्वयं शीर्णञ्च विदलं फलानां वदरेङ्गुदे।

रज्जुः कार्पासमूत्रञ्च तच्चेदविकृतं वदेत्॥

एरका तृणविशेषः। तूलः शाल्मल्यादिभवः। विदलं वल्कलम्। तथाऽविक्रेयाणि। याज्ञवल्क्यः,—

लाक्षालवणमांसानि पतनीयानि विक्रये।

पयो दधि च मद्यञ्च हीनवर्णकराणि च॥

हीनवर्णः शूद्रः। हारीत मनु-वशिष्ठ-शातातपाः,—

त्र्यहेण शूद्रो भवति ब्राह्मणः क्षीरविक्रयात्।

सद्यः पतति मांसेन लाक्षया लवणेन च॥

इतरेषामपण्यानां विक्रयादिह कामतः।

ब्राह्मणं सप्तरात्रेण वैश्यभावं नियच्छति॥

मनुः अविक्रेयाधिकारे

सर्व्वान् रसानपोहेत कृतान्नञ्च तिलैः सह।

अश्मनो लवणञ्चैव पशवो ये च मानवाः॥

सर्व्वन्तु तान्तवं रक्तं शाणक्षौमाविकानि च ।
अपि चेत् स्युररक्तानि फलमूले तथौषधीः ॥
अपः शस्त्रं विषं मांसं सोमं गन्धांश्च सर्व्वशः ।
क्षीरं क्षौद्रं दधि घृतं तैलं मधुगुड़ं कुशान् ॥
आरण्यांश्च पशून् सर्व्वान् दंष्ट्रिणश्च वयांसि च ।
मद्यं नीलिञ्च लाक्षाञ्च सर्व्वानेकशफांस्तथा ॥
रङ्गं सीषं तथा लोहं तैजसानि च सर्व्वशः ।
वालान् चर्म्म तथास्थीनि [1]सस्नायूनि च वर्जयेत् ॥

अपोहेत त्यजेत । कृतान्नं पक्वान्नम् । रसनिषेधेन सिद्धेऽपि पुनर्लवणनिषेधो दोषाधिक्यार्थः । याज्ञवल्क्यः,—

[2]फलोपधक्षौमसोममनुष्यापूपवीरुधः ॥
तथामृच्चर्म्मपुष्पाणि केशतक्रविषक्षितीः ॥
शाकार्द्रौषधिपिण्याकपशून् पक्षींस्तथैव च ।
वैश्यवृत्त्यापि जीवंस्तु विक्रीणीत ना जातुचित् ॥

न विक्रीणीतेत्यनुवृत्तौ यमः,—

कुसुम्भनारिकेलञ्च कुनाकं पूतिकं तथा ।
सोमः श्लेष्मातको धर्म्मस्तोमं यश्च सर्व्वशः ॥

शङ्खलिखितौ,—यानभक्ष(?)जतुलोह-पाषाण-कुतपशस्त्रवि-

---

(१) मूले —० वसुसर्द्धिनि रोचनाः (?) ॥

(२) मुद्रितयाज्ञवल्क्ये,—फलोपलक्षौम ० ॥ मद्यचर्म्मपुष्पकुतपकेशतक्र शाका—पशून् गन्धांस्तथैवच । वैश्य—जीवन्नो विक्रीणीत कदाचन ॥ ३यः प्रायश्चित्ताध्यायः । आपद्धर्म्मप्रकरणम् । श्लो० ३५—३७ । आनन्दाश्रम Series.

मानुषक्षौमकृष्णाजिनैकशफेभ्यः। आपस्तम्बानुवृत्तौ गौतमः,—तस्यापण्यं क्षीरं सविकारम्। अपथ्यानि। पशवश्च हिंसासंयोगी। पुरुषवशाकुमारीवेहतश्च नित्यं ब्रीहियवाश्च। ऋषभधेन्वनडुहश्चैके। अपथ्यं विषादि। वशा वन्ध्या गौः। कुमारी अवत्ससाचा गौः। वेहद् गर्भघातिनी गौः। विष्णुः,—श्लेषतोक्म मधूच्छिष्टशङ्खशुक्तित्रपुसीसकृष्णलोहोदुम्बरविक्रयी मद्यासात्म्यपनम्। बौधायनः,—श्लेष-तोक्म-किण्व-सुक्तता अविक्रेया इत्यर्थः। श्लेषा चर्म्मादिसन्धानहेतु वृक्षनिर्यासः। तोक्म ईषदविरूढ़ं बीजम्। किण्वं सुरासाधनमन्नम्। सुक्तता दुहिता। तथा,—धान्यस्य मध्ये तिलतण्डुला अविक्रेयाः। पैठीनसिः,—जिह्वापूर्त्तिमपुंगावः गङ्गयोर्मा चेत्यविक्रेयाणि। बौधायनः,—पितॄन् वा एष विक्रीणीते यस्तिलान् विक्रीणीते तण्डुलान् विक्रीणीते। मनुः,—

भोजनाभ्यञ्जनाद्दानाद् यदन्यत्कुरुते तिलैः।
[१]कृमिर्भूतः स विष्ठायां पितृभिः सह मज्जति॥

तथा —

काममुत्पाद्य कृष्यां तु स्वयमेव कृषीवलः।
विक्रीणीत तिलान् शुद्धान् धर्म्मार्थमचिरस्थितान्॥

एवञ्चात्र शुद्धान् द्रव्यान्तरामिश्रितान्। अचिरस्थितान् मूल्याधिक्याय चिरं न रक्षयेदित्यर्थः। विक्रयश्चात्र धान्येन विनिमयः।

---

(१) मुद्रितमनौ,—कृमिभूतः श्वविष्ठायां पितृभिः सह मज्जति।
१०माध्यायः श्लो० ९१।

सर्व्वन्तु तान्तवं रक्तं शाणक्षौमाविकानि च ।
अपि चेत् स्युररक्तानि फलमूले तथौषधीः ॥
अपः शस्त्रं विषं मांसं सोमं गन्धांश्च सर्व्वशः ।
क्षीरं क्षौद्रं दधि घृतं तैलं मधुगुड़ं कुशान् ॥
आरण्यांश्च पशून् सर्व्वान् दंष्ट्रिणश्च वयांसि च ।
मद्यं नीलिञ्च लाक्षाञ्च सर्व्वानेकशफांस्तथा ॥
रङ्गं सीसं तथा लोहं तैजसानि च सर्व्वशः ।
बालान् चर्म्म तथास्थीनि [1]सस्नायूनि च वर्जयेत् ॥

अपोहेत त्यजेत । कृतान्नं पक्वान्नम् । रसनिषेधेन सिद्धेऽपि पुनर्लवणनिषेधो दोषाधिक्यार्थः । याज्ञवल्क्यः,—

[2]फलोपधक्षौमसोममनुष्यापूपवीरुधः ॥
तथाम्लचर्म्मशुष्काणि केशतक्रविषक्षितीः ॥
शाकार्द्रौषधिपिण्याकपशून् पक्षींस्तथैव च ।
वैश्यवृत्त्यापि जीवंस्तु विक्रीणीत ना जातुचित् ॥

न विक्रीणीतेत्यनुवृत्तौ यमः,—

कुसुम्भनारिकेलञ्च छत्राकं पूतिकं तथा ।
सोमः श्लेष्मातको धर्म्मस्तोमं यत्नाय सर्व्वशः ॥

शङ्खलिखितौ,—यानभक्ष(?)जतुलोह-पाषाण-कुतपशस्त्रविष-

---

(१) मूले —० वसुसर्द्दिनि रोचनाः (?) ॥

(२) मुद्रितयाज्ञवल्क्ये,—फलोपलक्षौम ० ॥ लवणमांसपुष्पकुतपकेशतक्र ० ॥ शाका पशून् गन्धांस्तथैव च । वैश्य जीवनो विक्रीणीत कदाचन ॥ ३यः प्रायश्चित्ताध्यायः । आपद्धर्म्मप्रकरणम् । श्लो० ३५—३७ । आनन्दाश्रम Series.

मानुषक्षीमक्षणाजिनैकशफेभ्यः। ब्राह्मणानुवृत्तौ गौतमः,—तस्या-पण्यं क्षीरं सविकारम्। अपण्यानि। पशवश्च हिंसासंयोगे। पुरुष-वशाकुमारीवेहतश्च नित्यं ब्रीहियवाश्च। ऋषभधेन्वनडुहश्चैके। अपण्यं विषादि। वशा वन्ध्या गौः। कुमारी अवत्सासन्ना गौः। वेहद् गर्भघातिनी गौः। विष्णुः,—श्लेषतोक्म मधूच्छिष्टशङ्ख-शुक्तित्रपुसीसक्षणलोहोदुम्बरविक्रयी महासान्तपनम्। बौधा-यनः,—श्लेष-तोक्म-किण्व-सुक्तता अविक्रेया इत्यर्थः। श्लेषा चर्मादिसन्धानहेतु वृक्षनिर्यासः। तोक्म ईषद्विरूढं बीजम्। किण्वं सुरासाधनमन्नम्। सुक्तता दुहिता। तथा,—धान्यस्य मध्ये तिलतण्डुला अविक्रेयाः। पैठीनसिः,—जिह्वापूर्त्तिमपुंगावः शङ्खयोर्वा चेत्यविक्रेयाणि। बौधायनः,—पितॄन् वा एष विक्री-णीते यस्तिलान् विक्रीणीते तण्डुलान् विक्रीणीते। मनुः,—

भोजनाभ्यञ्जनाद्दानाद् यदन्यत्कुरुते तिलैः।
[1]कृमिर्भूतः स विष्ठायां पितृभिः सह मज्जति॥

तथा —

काममुत्पाद्य कृष्यां तु स्वयमेव कृषीवलः।
विक्रीणीत तिलान् शुद्धान् धर्मार्थमचिरस्थितान्॥

एवञ्चात्र शुद्धान् द्रव्यान्तरामिश्रितान्। अचिरस्थितान् मूल्याधिक्याय चिरं न रक्षयेदित्यर्थः। विक्रयश्चात्र धान्येन विनिमयः।

---

(१) कुल्लूकमते,—कृमिभूत श्वविष्ठायां पितृभिः सह मज्जति। १०माध्यायः श्लो० ९१।

अशक्तो भेषजस्यार्थे यज्ञहेतोस्तथैव च।
यथवश्यश्च विक्रेयास्तिला धान्येन तत्समाः॥

धान्यसामान्यन्तु धान्यान्यूना देया इत्यर्थः।

विक्रेता दानपुण्यानां प्रोच्यते भ्रूणहा बुधैः।
वक्ता च दानधर्म्माणां शपथे सोमविक्रयी॥
रत्नशुक्तिप्रवालानां मणीनां मच्चिकस्य च।
प्रतिरूपककर्त्ता च भ्रूणहा प्रोच्यते बुधैः॥

दानपुण्यानां शपथे वक्ता एतन्मिथ्या मम दानपुण्यं नश्यतीत्येवं रूपेण। भविष्यपुराणे—

अनुयोगेन यो दद्याद् ब्राह्मणाय प्रतिग्रहम्।
स पूर्व्वं नरकं याति ब्राह्मणस्तदनन्तरम्॥
वेदाक्षराणि यावन्ति नियुञ्ज्यन्तेऽर्थकारणात्।
तावतीर्भ्रूणहत्यास्तु वेदविक्रय्यवाप्नुयात्॥
गवां विक्रयकारी तु गवि रोमाणि यानि तु।
तावद्वर्षसहस्राणि गवां गोष्ठे कृमिर्भवेत्॥

छागलेयः,—

न वेदविक्रयं कुर्य्यादग्निविक्रयमेव वा।
प्रख्यापनं प्राध्ययनं प्रश्नपूर्व्वः प्रतिग्रहः॥
याजनाध्यापने वादः षड्विधो वेदविक्रयः।

अग्निविक्रयश्चानाहिताग्नित्वम्। शङ्खलिखितौ,—वस्त्राद्यादीन्विक्रीणीयादित्युक्त्वा सद्यः पततीत्याह। सुमन्तुः,—देवर्षिसोमचैत्यापत्यभृत्योदपानानां विक्रयी तप्तकृच्छ्रम्। देव

प्रतिमा। ऋषिप्रतिमा। अन्यत् प्रसिद्धम्। भविष्यपुराणे,—गुड़तिलविक्रयं तमसक्रयापनोद्यमाह। हारीतः,—हिङ्गुहिङ्गुल-सर्जरसमनःशिलाञ्जनक्षीरलवणगैरिकामणिमौक्तिक-प्रवालावर्त्तन-शङ्खशुक्तिवेणुवैणवमृन्मयविक्रये तथारामतड़ागोदपानपुष्करिणी-पुण्यसुकृतविक्रये त्रिषवणस्नायी अधःशायी चतुर्थकालभुक् संवत्-सरेण पूतो भवति। हारीतः,—

यस्तु सम्भृत्य सम्भारं दुर्भिक्षं समुदीक्षते।
हीनार्थमानदाता वै प्रोक्तो दुर्भिक्षकण्टकः॥
हीनसङ्करमानैश्च यश्चैव हरते मलम्।
स मलः प्रोच्यते पापः प्रजानां मलहारकः॥

हीनोऽर्थो मानश्च यस्य द्रव्यस्य तस्य बहुमूल्येन विक्रीणीत इत्यर्थः। हीनेनाल्पसारेण। सङ्करेणापद्रव्यमिश्रीकरणेन। मानेन तत्तद्द्रव्याल्पहेतुना। एतैर्यो हरते मलं मलिनद्रव्यं पापहेतुत्वात्। हारीतः,—मानोन्मानसङ्कीर्णसङ्करविक्रये। मानं मापकादि। उन्मानं तदादिमापनेन विक्रयः। सङ्कीर्णं द्रव्यान्तरमिश्रणम्। सङ्करः सङ्कीर्य्यत इति व्युत्पत्त्या। द्रव्यं कु[सु]म्भादि।

---

## अथ विनिमयः।

यद्यपि द्रव्यविनिमय इतिस्मृतेः क्रयोऽपि विनिमय एव तथापि लोके साक्षादुपयोगिद्रव्यं गृहीत्वा द्रव्यादानं विनिमय उच्यते। कपर्द्दकताम्रमुद्रादिग्रहणपूर्व्वकं द्रव्यादानं विक्रय

उच्यते। द्रव्यव्यवहारद्वैविध्येन पदार्थद्वैविध्यं स्मृतावपि क्रयस्य परिवृत्तिश्चेत्येवं निर्देशभेदो दृश्यते तेन येषां पदार्थानां विक्रये दोषः स विनिमये नास्ति। कपर्दकसङ्कलनया यदि द्रव्यमेव मूल्यरूपेण गृह्यते तदा क्रय एव। तदा च क्रयदोषः स्यादेव। न च येषामेव द्रव्याणां रसारसैर्निर्मातव्य इत्येवं विनिमयः श्रूयते तेषामेव विनिमयदोषाभावो नान्येषां विनिमये दोषः स्यादिति वाच्यं तथा सति परिसंख्यायां त्रिदोषापत्तेः। न च विनिमयस्य विक्रयविशेषत्वे दोषप्रसङ्गे प्रतिप्रसवार्थं वचनम्। यत्र प्रतिप्रसववचनं नास्ति तत्र दोष एवेति वाच्यम्। व्यवहारद्वैविध्येन क्रयत्वसिद्धेः। किञ्चप्राप्तविध्यपेक्षया नियमविधेर्लाघवात् तेषु द्रव्येषु विनिमये द्रव्यविनिमयः। सोमाभावे पूतिकाप्रतिनिधिनियमवदिति। द्रव्यान्तरे यथेष्टद्रव्यैरेव विनिमयेन दोष इति। नन्वेवं

विनिमयस्तु रसादीनां विक्रयो नैव दुष्यति।
यज्ञार्थदक्षिणानाञ्च प्रजापतिवचो यथा।

इति। हारीतेन विनिमयरूपे विक्रये रसादीनां दोषाभावादिति चेत् मैवं तत्र रसादिविनिमये दोषाभावमनूद्य यज्ञार्थदक्षिणाविक्रये विभागार्थं यज्ञादेः क्रियमाणे ऋत्विजां न दोष इति कथ्यते अन्यथा वाक्यभेदापत्तेः।

तत्र विनिमयः। वशिष्ठः,—रसा रसैः समतो वा न्यूनतो वा विनिमातव्याः। नत्वेव लवणं रसैः। तिलतण्डुलपक्वान्नविद्यामनुष्याश्च विहिताः परिवर्त्तकेन। न्यूनत इति स्वयं न्यून-

ग्रहणेनेत्यर्थः । तिलतण्डुलानुवृत्तावापस्तम्बः,—विहितश्चैषां मिथो विनिमयोऽन्नेनान्नस्य । मनुष्याणां मनुष्यैः । रसानां रसैः । गन्धानां गन्धैः । विद्यया विद्यानाम् । गौतमः,—विनिमयस्तु रसै रसानां पशूनाञ्च । न लवणकृतान्नयोस्तिलानाञ्च समेनासमेन तु पक्वान्न[स्य] सम्प्रत्यर्थे । पशूनां पशुभिरित्यर्थः । पक्वान्नस्य सम्प्रत्यर्थं आमस्य तदानीमुपयोगाय पक्वान्नं दत्त्वा संग्राह्यमित्यर्थः । लवणस्य च रसत्वेन रसेन विनिमये प्राप्ते पर्य्युदासः । तेन लवणव्यतिरिक्तरसै रसानि मातव्यानीत्यर्थः । एवञ्च तस्य रसव्यतिरिक्तद्रव्यान्तरेण विनिमये दोष इति प्रतिभाति ।

इति वाणिज्यप्रकरणम् ।

---

एवं वाणिज्येन जीवनासम्भवे कुसीदवृत्त्या जीवेत् । एतच्च च स्वयं कृतमपि काम्यम् । स्मृत्यन्तरे च ।

बहवो वृत्तिदोषा ये ऋषिभिः परिकीर्त्तिताः ।
सर्व्वेषामपि चैतेषां कुसीदमधिकं विदुः ॥

इति प्रशंसादर्शनाञ्च ।

यत्तु नारदः,—

आपत्स्वपि च कष्टासु ब्राह्मणो न च वार्द्धुषी ।
वृद्धिस्तयोक्ता धान्यानां वार्द्धुष्यं तदुदाहृतम् ॥

छागलेयः,—

न कुर्य्याद् ब्राह्मणो वृद्धिं ब्रह्महत्याविशेषतः ।
ब्रह्महत्याञ्च वृद्धिञ्च तूलया समतोलयत् ॥

इति वचनात् कृषिवाणिज्यादिवैश्यवृत्तिसम्भवे न कर्त्तव्यं कुसीदम्। प्रशंसावाक्यं कृषिवाणिज्यासम्भवविषयम्।

मनुः,—

ब्राह्मणः क्षत्रियो वापि वृद्धिं नैव प्रयोजयेत्।

कामन्तु खलु धर्म्मार्थं दद्यात् पापीयसेऽल्पकम्॥

धर्म्मार्थं कृषिवाणिज्यासम्भवेऽवश्यकर्त्तव्यधर्म्मार्थमित्यर्थः। पापीयसे हीनवर्णाय। अल्पकं अवश्यकार्य्यार्थम्। नतु भोगार्थमित्यभिप्रायः। व्यासः,—

सबन्धे भाग आशीतः षाष्टभागः सलग्नके।

निराधानं द्विकशतं मासलाभ उदाहृतः॥

सबन्धके ऋणप्रयोगे आशीतो भागः। अशीतिकार्षापणे कार्षापणं मासेन वर्द्धते। सलग्नके यत्र दर्शनप्रत्ययवानेकत्र प्रतिभूस्तिष्ठति तत्र धनप्रयोगे पणद्वयाधिककार्षापणो वर्द्धते। अशीतितमभागस्याष्टमांशप्रवेशात्। निराधाने बन्धकप्रतिभूरहिते द्विकशतं द्विसहितं शतं गृह्णीयात्। शतपणस्य मासे पणद्वयवृद्धिरित्यर्थः। एतच्च ब्राह्मणात्। याज्ञवल्क्यः,—

वर्णक्रमाच्छतं द्वित्रिचतुः पञ्चकमन्यथा।

शतपणस्य ब्राह्मणात् पणद्वयवृद्धिग्रहणम्। क्षत्रियात् पणत्रयग्रहणम्। वैश्याच्चतुःपणी। शूद्रात् पञ्चपणी। मासि मासि वृद्धिरित्यर्थः। तथा—

कान्तारगास्तु दशकं सामुद्राद् विंशकं स्मृतम्।

कान्तारं वर्त्म दुर्गमम्। समुद्रगाः पोतवणिजः। कान्तारगेभ्यः

शतपणस्य दशपणवृद्धिर्मासि मासि ग्राह्या। सामुद्रेभ्यः पण-शतस्य विंशतिपणवृद्धिर्मासि मासि ग्राह्या। मूलनाशस्य शङ्कि-तत्वात्।

याज्ञवल्क्यः,—

सन्ततिस्तु पशुस्त्रीणां रसस्याष्टगुणापरा।
वस्त्रधान्यसुवर्णानां चतुस्त्रिद्विगुणापरा॥

पशुस्त्री यदि व्याधैर्ह्रीयते तदा तस्य सन्ततिवृद्धिः। रसस्य वृद्ध्यर्थं दत्तस्य मासि मासि वृद्धिं चेन्न गृह्णाति तदा बहुकालातिक्रमेऽपि अशीतिभागद्विशतादिक्रमेणाष्टगुणपर्य्यन्तमेव अतोऽधिकत्वेऽपि न ग्राह्यम्। एवं वस्त्रे चतुर्गुणपर्य्यन्तं वृद्धिः काष्ठा। धान्ये त्रिगुणपर्य्यन्तम्। हिरण्ये द्विगुणपर्य्यन्तम्।

मनुः,—

धान्ये शदे लवे वाह्ये नातिक्रामति पञ्चताम्।

शदः क्षेत्रफलं लवो मेषलोमानि वाह्योऽश्वबलीवर्द्दादिः। एतेषु पञ्चता नातिक्रामति पञ्चगुणपर्य्यन्तं वृद्धिर्भवतीत्यर्थः। अत्र धान्यस्य त्रिगुणं पञ्चगुणं वा अधमर्णयोग्यतावशेन दुर्भिक्षादि-कालवशेन व्यवस्थितम्। वशिष्ठः,—द्विगुणं हिरण्यम्। त्रिगुणं धान्यम्। धान्येनैव रसा व्याख्याताः। पुष्पफलानि चातुलाघृत-मष्टगुणम्।

कात्यायनः,—

मणिमुक्ताप्रवालानां सुवर्णरजतस्य च।
तिष्ठति द्विगुणा वृद्धिः फलकैश्याविकस्य च॥

कौष्यं कीटप्रभवं आविकं कम्बलादि। बृहस्पतिः,—

हिरण्ये द्विगुणा वृद्धि स्त्रिगुणा वस्त्रकुप्यके।
धान्ये चतुर्गुणा प्रोक्ता शदवाहलवेषु च॥

बृहस्पतिः,—

तृणकाष्ठेष्टकासूत्रकिण्वचर्म्मास्थिवर्म्मणाम्।
हेतिपुष्पफलानान्तु वृद्धिस्तु न निवर्त्तते॥

एतद्द्विगुणाधिकं मासि मास्यनर्पणे। मासि मासि ग्रहणे तु त्रिगुणाधिकमपि बहुकालेन वर्द्धते। तथा पुरुषान्तरसञ्चाराद्द्विनाधिकवृद्धौ न दोषः। सकृदाहितेति मनुवचनात्।

याज्ञवल्क्यः,—

[1]बहुवासकृतां वृद्धिं सर्व्वे सर्व्वासु जातिषु।

स्वयमेतदशीतिभागन्यूना ततोऽप्यधिका वा धनिकाधमर्णाभ्यां कृतसम्बन्धके वर्द्धते न वा तदा तामेव वृद्धिं विदुः। अन्यत्र न्यूनग्रहणे न दोषः। अधिकस्याप्यकृतत्वेऽपि ग्रहणे न दोषः। अशीतिभागं द्विकशतं वा गृह्णानो न भवत्येव किल्बिषीति वचनात्।

तथा कृतवृद्धिः। कात्यायनः,—

कृत्वोद्धारमदत्वा यो याचितस्तु दिशं व्रजेत्।
ऊर्द्धं मासत्रयात् तस्य तदर्द्धं वृद्धिमाप्नुयात्॥

---

(१) इद्रितयाज्ञवल्क्यस्मृतौ न दृश्यत एष श्लोकार्द्धः। (Anandāçrama series.)

पथि गृहीत्वा यो मूल्यमदत्त्वैव दिशं व्रजेत्।
ऊर्द्धं मासत्रयात् तस्य तद्धनं वृद्धिमाप्नुयात्॥
निक्षेपं वृद्धिशेषञ्च क्रयं विक्रयमेव च।
याच्यमानो न चेत् दद्याद् वर्द्धते पञ्चकं शतम्॥
यो याचितकमादाय तमदत्त्वा दिशं गतः।
ऋतुत्रयस्योपरिष्टात् धनं वृद्धिमवाप्नुयात्॥

---

## अथायाच्या वृद्धिः।

याज्ञवल्क्यः,—

दीयमानं न गृह्णाति प्रयुक्तं यः स्वकं धनम्।
[1]मध्यस्थस्थापितस्यास्य वर्द्धते न ततः परम्॥

नारदः,—

पण्यमूल्यं भृतिन्यासो दण्डो यश्चाभिहारिकम्।
वृथादानाक्षिकपणा वर्द्धन्ते नापि वर्द्धिताः॥

आभिहारिकं छलेन। आक्षिकं द्यूतोत्थम्।

कात्यायनः,—

धर्म्मग्रस्तासवद्यूतपणमूल्येन सर्व्वदा।
विशुल्केन च वृद्धिः स्यात् प्रातिभाव्यागतेषु च॥

(१) मुद्रितयाज्ञवल्क्ये,—मध्यस्थस्थापितं तत्स्यात् वर्धते न ततःपरम्। AnandaÇrama series व्यवहाराध्यायः ऋणादानप्रकरणम्।

सम्वर्त्तः,—

न वृद्धिः स्त्रीधने लाभे निक्षेपे च तथा स्थिते।

सन्दिग्धे प्रातिभाव्ये च यदि न स्यात् स्वयं कृतः॥

याज्ञवल्क्यः,—

गोप्याधिभोगे नो वृद्धिः सोपकारेऽथ ह्रासिते।

---

## अथ गर्हिता वृद्धिः।

मनुः,—

नातिसंवत्सरीं वृद्धिं न चादृष्टां पुनर्हरेत्।

चक्रवृद्धिर्न च ग्राह्या कारिका कायिका च या॥

मासमारभ्य संवत्सरपर्य्यन्तं वृद्धिनिर्णय उत्तमर्णेन कर्त्तव्यः। अधिकमधमर्णे चेच्छया। संवत्सरादूर्द्ध्वमपि वृद्धिं दास्यति यदि मया ऋणं देयमिति समयो न कर्त्तव्य इत्यर्थः। एवञ्च भूम्यादौ बन्धककरणे समयसमाचारो लाभमूल एव। न चादृष्टां शास्त्रेण निरूपितामशीतिभागाधिकां स्वयं कृतामपि न गृह्णीयात्।

याज्ञवल्क्यः,—

'[१]वृद्धेर्वृद्धिश्चक्रवृद्धिः प्रतिमासं तु कालिका।

इच्छाकृता कारिका स्यात् कायिकाकायकर्म्मजा॥

नारदमते—अशीतिभागस्य प्रतिदिनं व्यवस्थां कृत्वा दिने

---

(१) मुद्रितयाज्ञवल्क्ये न दृश्यत एष श्लोकः Anandaçrama series.

दिने ग्रहणं कार्यमित्युक्तम्। एतेन मासद्वयैरपि पीड़या प्रतिमासमवश्यं न ग्राह्या। किन्त्वधर्म्मत्वाच्छन्देनेत्युक्तं भवति।

मनुः,—

धर्म्मेण व्यवहारेण छलेनाचरितेन च।

धर्म्मेण सत्यबलेन व्यवहारेण साक्ष्याद्युपन्यासेन। छलेन उत्सवादिव्याजेन। अलङ्करणादिग्रहणात्। आचरितेन अभोजननिगड़बन्धनादिना।

याज्ञवल्क्यः,—

हीनजातिं परिक्षीणमृणार्थं कर्म्म कारयेत्।
ब्राह्मणस्तु परिक्षीणः शनैर्दाप्यो यथोदयम्॥

अधिकं विज्ञानेश्वरनिबन्धादावनुसन्धेयम्।

इति कुसीदवृत्तिप्रकरणम्।

---

कुसीदवृत्त्यसम्भवे पाशुपाल्यम्। मूल्यं गृहीत्वा गोमहिषीजातिरक्षणम्। गोषु विशेषः। शङ्खलिखितौ—गां रक्षेत्। तासु पीतासु पिबेत्। तिष्ठन्तीषूपविशेत्। न स्वयमुत्थापयेत्। शनैरार्द्रशाखया पृष्ठतोऽभिहन्यात्। नातीर्थे न विषमे नाल्पोदके अवतारयेत्। बालवृद्धरोगार्त्तश्रान्तमुपासीत शक्तितः। प्रतिकारं कुर्य्यात्। गवामेषधर्म्मोऽन्यथाभिप्लवः। ब्रह्मपुराणे,—

उन्मार्गगां तर्जयेत् तां क्षीरवृक्षोत्थविस्तजैः।
हे श्रीमातर्मां पाहि वत्सायेति ब्रुवन् वचः॥

गोब्राह्मणार्थे संग्रामे निहतः शङ्करं पदम् ।
गोपकश्चेन्नरो याति किं पुनर्ब्राह्मणादयः ॥
इति पाशुपाल्यम् ।

---

## अथात्यन्तापवृत्तयः ।

तत्र न वृत्तिसङ्करं कुर्य्यादिति वृत्तिसङ्करनिषेधातिक्रमेणापि वर्त्तनम् । न च ब्राह्मणादिपरवृत्तिपरस्य प्रतिग्रहालाभे योगा-नौचित्याद् वृत्तिसङ्करनिषेधः सद्वृत्तिकाले न्यायप्राप्तकुवृत्ति-निषेधानुवाद इति वाच्यम् । अतोऽन्यतमया वृत्त्या वर्त्तयनित्य-नुवादायोगात् । किन्तु विपत्तौ नियमान्तरवदयमपि नियम-स्त्याज्य एव । तथाच गौतमः,—सर्व्वथा वृत्तिरशक्तौ । सर्व्वथा प्रतिषिद्धवृत्तिसङ्करादिभिरिति लक्ष्मीधरः । यच्छङ्खलिखितौ,—नान्तरितां नाविमिश्रां नाधिकां नासमां न हीनां न कुत्सितां नानर्थकरीं वृत्तिं लिप्सेत् । अन्तरिता व्यवहिता । यथा क्षत्रि-यस्य शूद्रवृत्तिः । विशुद्धासम्भवेऽविशुद्धा प्रतिग्रहरूपा । अधिका तूत्कृष्टवर्णसम्बन्धिनी । असमा अवश्यभृत्यभरणासम्बन्धा । हीना वर्णसम्बन्धिनी । कुत्सिता गर्हिता चौर्य्यवर्ज्जिता । अनर्थकरी अहिता । हारीतः,—अपरे स्ववृत्तिचिकित्सितम् । उपपति-दूषवेश्योपजीवनम् । वणिक् किरटकवार्द्धुषिकौ । अनृता कितव-वृत्तिः । विवादप्रेष्यवृत्तिस्तार्किकवृत्तिः । राजपौरुषादिभिर्जीवनं बकवृत्तिः परस्वापहरणं स्तेयवृत्तिः । वधबन्धोपजीवनप्रभृतय-

ह्येताः किल्बिषवृत्तयो भवन्ति। किल्बिषवृत्तयो निरयानुभिष्टाः पापयोनिषु जायन्ते। वृषवेश्योपजीवनं गोषु वृषदानेन मूल्य-ग्रहणम्। वणिक् पण्योपजीवनम्। किरटो घृतादिविक्रयी। निषिद्धवृद्ध्युपजीवी वार्द्धुषी। एतत्स्वनृतवृत्तिः। कलहेन जीवनं विवादवृत्तिः। सेवया प्रेष्यवृत्तिः। हेतुवादजीवनं तार्किकवृत्तिः। राजभयदर्शनेन उत्कोचग्रहणं राजपौरुष्यम्। देवलः,—

चिकित्सां ज्योतिषं रूपं शकटं तिलपातनम्।
सुरातुलाञ्च नाजीवेत् पुत्राचार्य्यत्वमेव च॥

रूपं अर्जनार्थं शरीरशोभाकरणम्। शकटं वाहनामूल्य-दानेन। सुरा विक्रयेण। परस्य द्रव्यस्य क्रयादिकालोत्तलनया जीवनं तुला। पुत्राचार्य्यत्वम् अध्याप्य पुत्रान् धनग्रहणम्।

मनुः,—

नेहेतार्थं प्रसङ्गेन न विरुद्धेन कर्म्मणा।
न कल्पमानेष्वर्थेषु नार्त्त्यामपि यतस्ततः॥

प्रसङ्गेन गीतवाद्यादिना। यतस्ततोऽभिशस्तपतितादेः। अति-कष्टायामप्यापदि एतान् न कुर्य्यादित्यर्थः। अतिकष्टापद्दुर्भिक्षादौ सामान्यानुज्ञातं सर्व्वमेव कर्त्तव्यम्। किन्तु विशेषेण यस्यानुज्ञा तदसम्भवे पूर्व्वोक्ताः कुवृत्तयः।

---

## अथ विशेषविहिताः।

अत्र मनुः,—

विद्या शिल्पं भृतिः सेवा गोरक्ष्यं विपणिः कृषिः।
'धृतिर्भैक्ष्यं कुसीदञ्च दश जीवनहेतवः॥

विद्या गारुडादिविद्या। शिल्पं चित्रादिकर्म्म। भृतिर्वेतनम्। कर्म्मकरणार्थम्। सेवा प्रसिद्धा। धृतिर्धैर्य्यम्। गर्हितकृषिवाणिज्यकुसीदानामत्र निर्द्देशः। बृहस्पतिः,—

सेवा गोशकटारामयाच्ञावृत्तिर्वणिक् कृषिः।
अनूपं पर्व्वतो राजा विपत्तौ जीवनानि तु॥

अनूपं जलप्रायो देशः। शालूकाद्याहरणेन। राजा सर्व्वप्रकारवृत्त्यसम्भवे अशास्त्रवृत्त्यराजन्यप्रसूतोऽपि प्रतिग्रहेण जीवनहेतुः। छागलेयः,—

शकटं शाकटी गावो जालमस्यन्दनं वनम्।
अनूपं पर्व्वतो राजा विपत्तौ नृप वृत्तयः॥

शाकटी शाकटिकः। एतद्द्वयं धान्यादिवहनमूल्यभावेन। जालं मत्स्यादिहरणेन। अस्यन्दनम् एकत्रावस्थानम्। व्ययाधिकविरहात्। मद्यादिलाभाच्च जीवनं फलमूलाहरणेन। यत्तु हारीतस्मृतौ शकटनिन्दनं तत् सुखविषयम्। यथाह युक्तभारप्रयोगक्षेमपञ्चशून(?)मनो मन्यते। दशशूनं (?) रात्रौ। शतशूनं (?) वर्षासु। तस्माच्च रात्रौ चरेच्च वर्षासु। मासेन किल्बानोवृत्तिः पतति। धर्म्मविद्द्योऽग्निदेवातिथिगृहयज्ञोपकरणेनानेनोभवती

(१) मनु reads शिलैर्भैक्ष्यं०।

त्वाहुः। अतघून(?)मित्ययन्नम्। भारो व्रीह्यादिसमूहः। अयोग्य-शाकटिकाधिष्ठितत्वेनायोगक्षेममनः शकटं रात्रौ दग्धंघूनम् (?)। अन्याद्युपकरणसमिदाहरणादनेनो निष्पापो भवतीत्यर्थः।

गौतमः,—सर्व्वधातुवृत्तिरशक्तावशूद्रेण तदप्येके प्राणसंशये। तद्वर्णसङ्करोऽभक्ष्यनियमस्तु प्राणसंशये ब्राह्मणोऽपि शस्त्रमाददीत। अशक्तौ सर्व्ववृत्त्यसम्भवे अशूद्रेण सेवादि। शूद्रवृत्तिव्यतिरेकेण सर्व्वथा वृत्तिसङ्करादिनापि वृत्तिः। शौद्रमपि प्राणसङ्करे तद्वर्ण-सङ्करः। शूद्रवर्णसहासनादिनियमवृत्तिरित्यर्थः। अङ्गिराः,—

व्याधितस्य कदर्य्यस्य कुटुम्बात् प्रच्यावितस्य।
अथानङ्गप्रचालस्य भिक्षाचर्य्या विधीयते॥

मनुः, —

तथैव सप्तमं भक्तं भक्तानि षड्नश्नता।
अश्वस्तनविधानेन हर्त्तव्यं हीनकर्म्मणः॥
खलात् क्षेत्रादगाराद् वा यतो वाऽप्युपलभ्यते।
आख्यातव्यन्तु तदा तस्मै पृच्छते यदि पृच्छति॥

स्वामिनि पृच्छति वक्तव्यमुपवासत्रयं कृतमलाभे न तेन नीयत इति। इदं चाब्राह्मणात्। अब्राह्मणाद्धरेदिति याज्ञवल्क्यात्। ब्राह्मणयोरपि नित्यकर्म्महीनयोर्हर्त्तव्यम्।

दस्युनिष्क्रिययोश्च स्वमजीवन् हर्त्तुमर्हति।

इति मनुवचनात्।

अधिकारी तु यो यस्य सदस्यस्तस्य कीर्त्तितः।
तस्यापि योत्तमैनैतदकार्य्यं कर्म्मगर्हितम्॥ (?)

इति हारीतवचनं स्वस्थविषयम् । अधिकारः परद्रव्यरक्षणाय व्ययादिकरणेनोपजीवनम् ।

याज्ञवल्क्यः,—

आपद्गतः सम्प्रगृह्णन् भुञ्जानोऽपि यतस्ततः ।
न लिप्यतैनसा विप्रो ज्वलनार्कसमो हि सः ॥

अत्र येषां निषिद्धानां कथञ्चिदनुज्ञातेऽप्यत्यन्तकष्टापदि दोषाभावः । येषां विशेषानुज्ञा नास्ति किन्तु सामान्यानुज्ञा तत्र कियान् दोषः ।

तदुक्तं भट्टैः—

एकं विनाप्यनुज्ञानात् क्रियते न्यायसम्भवात् ।
क्रियतेऽनुज्ञया चान्यद् विशेषस्तु तयोर्महान् ॥
सामान्येनाभ्यनुज्ञानाद् विशेषो हि विशिष्यते ।
विशेषोऽत्यन्तनिर्दोषस्तोकदोषेतरा क्रिया ॥

तथा,—

तत्रत्यपापशेषाणामन्ते शौचं विधीयते ।
कर्म्मणा येन केनेह मृदुना दारुणेन वा ॥
उद्धरेद्दीनमात्मानं समर्थो धर्म्ममाचरेत् ।
धर्म्मस्य प्रथमं तावत्प्रायश्चित्तात्मको भवेत् ॥
ततस्तेन विशुद्धस्य फलार्थोऽन्यो भविष्यति ।

इति नित्याचारप्रदीपे तृतीयभागकृत्ये वृत्तिनिर्णयप्रकरणम् ।

---

## अथ तृतीयभागे देवतायतनगुरुधार्म्मिकब्राह्मण-गृहगमनम्। योगक्षेमार्थमीश्वर-सन्निधिगमनञ्च।

अलब्धलाभो योगः। लब्धपरिपालनं क्षेमः। मनुः,—

देवतान्यभिगच्छेत्तु धार्म्मिकांश्च द्विजोत्तमान्।
ईश्वरं चैव रक्षार्थं गुरूनेव च पर्व्वसु॥
अभिवादयेत वृद्धांश्च दद्याच्चैवासनं स्वकम्।
कृताञ्जलिरुपासीत गच्छतः पृष्ठतोऽन्वियात्॥

तथा—

ऊर्द्धं प्राणा ह्युत्क्रामन्ति यूनः स्थविर आयति।
प्रत्युत्थानाभिवादाभ्यां पुनस्तान् प्रतिपद्यते॥
अभिवादनशीलस्य नित्यं वृद्धोपसेविनः।
चत्वारस्तस्य वर्द्धन्ते आयुः प्रज्ञा यशो बलम्॥

वृहस्पतिः—

सांख्यं सामाधिकैः कुर्य्यादुपेयादीश्वरं सदा।

इदं देवायतनादिगमनं मनुना स्नातकव्रतमध्ये गणितम्।

ततोऽन्यतमया वृत्त्या वर्त्तयन् स्नातको द्विजः।
स्वर्गायुष्ययशस्यानि व्रतानीमानि धारयेत्॥

इत्युपक्रम्य वेदोदितं स्वकं कर्म्म नित्यं कुर्य्यादित्यादिना स्नातकधर्म्मानुक्त्वा अन्ते च पुत्रे सर्व्वं समासज्य ब्रह्मध्याननिष्ठो भवेदित्युक्त्वा—

एषोदिता गृहस्थस्य वृत्तिर्विप्रस्य शाश्वती।
स्नातकव्रतकल्पश्च सर्व्ववृद्धिकरः शुभः॥

इत्युपसंहृत्य—

एतेन विप्रो वृत्तेन वर्त्तयन् वेदशास्त्रवित्।
व्यपेतकल्मषो नित्यं ब्रह्मलोके महीयते॥

इति फलमुक्तम्। तत्रोपक्रमोपसंहारेण सर्व्वेषां फलोद्देशेन विधानप्रतीतेः। नेहेतार्थान् प्रसङ्गेन इत्यादीनामपि निषेधरूपाणां पर्य्युदासरूपेण प्रसङ्गपदवाच्यगीतवाद्यकरणकधनार्थचेष्टाप्रसङ्गे तदभावसङ्कल्पः कार्य्यं इत्येवं व्रतविधानरूपेण गम्यते। यद्यपि पर्य्युदासत्वेन नोपलक्षणादोषस्तथापि व्रतानीमानि धारयेदिति प्रथमं व्रतस्य विधेयत्वप्रतीतेः। तस्य स्वरूपशङ्क्यैव उत्तरवाक्यानि त्वन्तरावाक्येभ्यो गृह्यन्ते। यथोच्चै ऋचा क्रियत इत्यादौ प्रथमं त्रयोवेदा अजायन्त इत्येवं वेदानां विधिसम्बन्धप्रतीत्या पश्चात् प्रतीत्य ऋगादिपदं लक्षणावृत्तं कल्पते। विधिमात्रन्तु वाक्याद् गृह्यते। तथेह व्रतसविधेयत्वनिषेधवाक्यानामपि व्रतविधिरूपत्वम्।

ननु चैवं ब्राह्मणताड़नादौ—

शोणितं यावतः पांशून् संगृह्णाति द्विजन्मनः।
तावन्त्यब्दसहस्राणि तत्कर्त्ता नरके वसेत्॥

तथा—

यो राज्ञः प्रतिगृह्णाति लुब्धस्योच्छास्त्रवर्त्तिनः।
स पर्य्यायेण यातीमान् नरकानेकविंशतिः॥

इत्यादिरूपेण निषेधापेक्षितनरकादिफलवर्णनमसङ्गतम्। निवृत्तिसङ्कल्परूपव्रतस्य फलार्थाभिधेयत्वेन निषेधाभावे तदतिक्रमे नरकपाताभावात्। तथाच संख्याधिकरणे,—यो ब्राह्मणायावगुरेत् तं शतेन यातयेत्। यः शोणितं कुर्य्यात् यावतः पांशून् संगृह्णीयात् तावतः परिसंवत्सरान् स्वर्गान् लोकान् न प्रजानीयात् तस्मान्न ब्राह्मणायावगुरेन्न शोणितं कुर्य्यात् इत्युदाहृत्य निषेधरूपत्वेन निवर्त्तनापेक्षितानिष्टफलत्वेन नरकसाधनत्वं ब्राह्मणावगोरणादि-रूपनिषिद्धकर्म्मणो यदुक्तं तदविरुद्धते। यच्च प्रजापतिव्रते नेक्षे-तोद्यन्तमादित्यमित्याद्युदाहृत्य स्वरूपेणानीक्षणसङ्कल्पे विधेय उक्तः तत्र विपर्य्यये नरकपाताश्रवणादेव ता एनसा युक्तो भवतीति फलश्रवणादेव तथोक्तम्। एवमिहापि यत्र निषेध अनिष्टफलश्रवणं नास्ति तत्रास्तु नानोपक्रमोपसंहारयोर्व्रतरूप-प्रतीतेः।

स्नातकव्रतकल्पश्च सह वृत्तिकरः परः।
अनेन विप्रो वृत्तेन वर्त्तयन् वेदशास्त्रवित्॥
व्यपेतकल्मषो नित्यं ब्रह्मलोके महीयते।

इति फलश्रवणाच्च पर्य्युदासरूपेण निवृत्तिसङ्कल्परूपस्य व्रतस्य विधानम्। नरकपातावनिष्टपातश्रवणस्थले कथं पर्य्युदास इति चेत् उच्यते यथाग्निहोत्रदर्शपौर्णमासपशुसोमादेः श्रुतौ तत् तत् फलावनिहितस्य यजमानादेश्च धनप्राप्तिरूपेष्टफलार्थस्य याव-ज्जीवमग्निहोत्रं जुहुयादित्यादिविधानात् पृथगेव फलार्थित्वं याजनादौ तु नियमस्यैव स्नातकव्रतत्वम्। किम्बहुना मेहनादौ

देशकालदिङ्मुखादिनियमस्यापि स्नातकव्रतत्वम्। एवं निषेधत्वे-मान्यत्र नरकपातादिफलत्वेऽपि ब्राह्मणावगोरणराजप्रतिग्रहा-दीनां संयोगान्तरे चेह स्नातकव्रतरूपत्वमपि। यथा सत्यवदन-स्यानृतवदननिषेधसङ्कल्पस्यापि स्नातकव्रतत्वम्। दर्शपौर्णमासा-दिप्रकरणपाताच्च असत्यवदनप्रतिषेधस्य धर्म्माङ्गत्वम्। तदुक्तं विधिर्वा संयोगान्तरादिति। अनृतवदने दोषश्रवणाच्च पृथगनृतवदनस्य निषिद्धत्वं विधिसंयोगभेदादेव तत्र प्रायश्चित्तभेदवत्। इहापि ब्राह्मणावगोरणाभावसङ्कल्पातिक्रमेण नरकपातफलनिषेधातिक्रम प्रायश्चित्तम्। गुरुः स्नातकव्रतलोपप्रायश्चित्ती च लघुद्रव्यकम्

स्नातकव्रतलोपे च प्रायश्चित्तमभोजनम्।

इति विधानात्। अतएव

यत्कर्म्म कुर्व्वतोऽस्य स्यात् परितोषोऽन्तरात्मनः।

तत्प्रयत्नेन कुर्व्वीत विपरीतं विवर्जयेत्॥

इत्यन्तमनुवचने आत्मतुष्टेः पुनर्वचनं स्नातकव्रतत्वज्ञापनार्थ-मिति लक्ष्मीधरः। अत्र स्नातकव्रतलोपे प्रायश्चित्ताम्नानादेवा वश्यकर्त्तव्यतालाभात् अवश्यकर्त्तव्यस्य काम्यफलार्थत्वे विरोधात्। स्वर्गायुर्यशो ब्रह्मलोकादीनामर्थवादोपस्थितत्वे ह्यपि न फलत्वं किन्तु स्तुतिमात्रोपयुक्तं नित्यकर्म्मान्तरवत् पापक्षय एव फलं सत्वस्थविपदेनात्मपापक्षयस्य विवक्षितत्वादपेतकल्मष इति च व्यक्तमभिधानात्। तत्तद्विधिभेदाच्च प्रत्येकमेव व्रतत्वम्। व्रता-नीति बहुवचनाच्च न राजसूयवदेकप्रयोगत्वम्। अतएव क्रमादरः। यथाकालमेव विध्यन्तरानुसारादनुष्ठेयः।

अथवा येषां बलवता प्रमाणेन निषेधरूपत्वं गम्यते स्नातकव्रतकाण्डान्तःपातित्वेऽपि तासां पृथगेव निषेध्यत्वं यथा दर्शपौर्णमासप्रकरणपठितानामपि पूपानुमन्त्रणादीनामुत्कर्ष इति।

अतएव—

वारिदः तृप्तिमाप्नोति सुखमक्षयमन्नदः।

इत्यादेः पृथक् फलार्थं विहितस्य दानस्य स्नातकव्रतत्वम्। तथासति सर्व्वदा दानानां प्रत्यहमकरणे दोषापत्तेः। किन्तु धनत्वेन किञ्चिदेव दानं स्नातकधर्म्मः। एकस्मिन्नेव दत्ते स्नातकव्रतमनुष्ठितं भवति। तत्र मानसकायिकदशेन्द्रियद्वारकप्रवृत्तीनां तद्द्वारकद्वादशविधप्रसक्तनिवृत्तानां भेदाच्च मानससङ्कल्परूपं व्रतं द्वादशविधं भवति। तत्र मानसं यज्ञदानपूर्त्ततपोध्यानभेदात् पञ्चविधम्। निवासभोगस्नानसङ्करवर्जनभेदेन चतुर्व्विधम्। कायिकं प्रतिग्रहगुरुशुश्रूषादिपाणिजं गमनागमनादिचेष्टादिकं पादिकं मेहनसम्बन्धि पायुजं मूत्रोत्सर्गब्रह्मचर्य्यादिसम्बन्धमौपस्थकं घ्राणमाघ्रेयात् घ्राणं भक्ष्याभक्ष्यं पेयापेयं रासनिकं अवलोकनीयावलोकनं चाक्षुषं स्पृश्यस्पर्शस्त्वाचिकः श्रव्यश्रवणं श्रौतिकमिति। तथाच—

एकादशेन्द्रियैः पापं यत्कृतं वेश्यमानवैः।

इति पद्मपुराणे। गीतायाम्—

कायेन मनसा बुद्ध्या केवलैरिन्द्रियैरपि।
ये जनाः कर्म्म कुर्व्वन्ति सङ्गं त्यक्त्वात्मशुद्धये॥

मनुः—तत्र मानवे यज्ञादि।

व्यासः,—

प्रधानं वैदिकं कर्म्म गुणभूतमथेतरत् ।

गुणनिष्ठोऽतिप्रमाणं बाधयन् यात्यधोगतिम् ॥

गुणनिष्ठः सत्याचारनिष्ठः । अतिप्रमाणं वेदः । मनुः,—

अग्निहोत्रञ्च जुहुयादाद्यन्तेद्युनिशोः सदा ।

दर्शेन चार्द्धमासान्ते पौर्णमासेन चैव हि ॥

सस्यान्ते नवसस्येष्ट्या तथर्त्वन्ते द्विजोऽध्वरैः ।

पशुना त्वयनस्यादौ समान्ते सौमिकैर्मखैः ॥

ऋत्वन्तेऽध्वरैश्चातुर्मास्यैः ।

याज्ञवल्क्यः,—

कर्त्तव्याऽग्रयणेष्टिश्च चातुर्मास्यानि चैव हि ।

एषामसम्भवे कुर्य्यादिष्टिं वैश्वानरीं द्विजः ॥

त्रैवार्षिकाधिकान्नो यः स हि सोमं पिबेद् द्विजः ।

प्राक् सौमिकीः क्रियाः कार्य्या यस्यान्नं वार्षिकं भवेत् ।

वैश्वानरीं प्रकृत्य मनुः,—

क्लृप्तानां पशुसोमानां निष्कृत्यर्थमसम्भवे ।

वशिष्ठः,—अवश्यं ब्राह्मणोऽग्नीनादधीत दर्शपौर्णमासाग्रयणेष्टिचातुर्मास्यपशुसोमैश्च यजेत् । नैयमिकं ह्येतादृशं संस्तुतञ्च नित्यमेकं नित्यं ऋणसंस्तुतं जायमानो वै ब्राह्मण इति सोमाकरणे ऋणस्तुतिः । देवलः,—हुतः अहुतः प्राहुतः शूलगवः वलिहरणं प्रत्यवरोहणमष्टकाहोमश्चेति प्राक् संस्थाः सप्त अग्न्याधेयमग्निहोत्रं दर्शपौर्णमासावाग्रयणमयनयज्ञश्चातुर्मास्यानि सौत्रा-

मग्निरिमा हविर्यज्ञसंस्थाः सप्त अग्निष्टोमोऽत्यग्निष्टोम उक्थः षोडशी वाजपेयोऽतिरात्रो आप्तोर्याम इति इमाः सोमसंस्थाः सप्त। एकविंशतिविधो यज्ञाध्वरो वेदोक्ता वाजिमेधराजसूय-पौण्डरीकगोसवादयो महायज्ञाः। एतावदिति कालमुद्दिश्य यज्ञानुष्ठानं सत्रम्। पक्वापक्वान्नेन पञ्चयज्ञप्रवृत्तिर्हुतम्। देवेभ्यो होमः स्मार्त्तोऽग्नौ प्रहुतो ब्राह्मणाय पक्वावदानमहुतो बलिहरणं शूलगवः स्मार्त्त एव। पुंगवः पशुयागः। बलिहरणं सर्पबलि-हरणम्। प्रत्यवरोहणं मार्गशीर्षप्रत्यवरोहणमित्याद्युक्तम्। एता-वदिति द्वादशरात्रादिसहस्रदिनपर्य्यन्तं कालमपेक्ष्य विहितं सत्र-मित्यर्थः। एवं प्रकारेण यज्ञस्य वृत्तिः पञ्चपदा पञ्चप्रकारा प्राक्-संस्था हविर्यज्ञसंस्थाः सोमसंस्था महायज्ञाः सौत्रामणी चेति। हारीतेन यज्ञप्रकारान्तरेण यज्ञसंस्था दशहोमः अष्टकानुष्ठानं पश्वादिकरणं अमावास्यादिश्राद्धं श्रवणाकर्म्म आग्रयणक्रिया आश्वयुजीकर्म्म। अथेमान्यजस्राणि भवन्तीत्युपक्रम्य बौधायनेन प्रतिवसन्तसोमपर्य्यन्तं दर्शिताः। तथा जावालेनाग्निहोत्रदर्श-पौर्णमासाग्रयणचातुर्मास्यपशुबन्धसोमानुक्त्वा इष्ट्या युक्तो न संशय इत्युक्तम्। विष्णुः,—

नास्त्ययज्ञस्य लोको वै नायज्ञो विन्दते सुखम्।
अनिष्टयज्ञोऽपूतात्मा भ्रश्यते चलपर्णवत्॥
यजमानस्य ये निन्दां प्रवदन्त्यबुधा जनाः।
यज्ञाषोढ़न्तु तं तस्य पापं गच्छन्त्यचेतसः॥

यज्ञाषोढं पापं यज्ञवैराग्यरूपम्। तथा प्रायश्चित्तविषये

गौतमः,—पुनस्तोमेनेष्ट्वा चरति मृत्युं तरति पाप्मानं तरति ब्रह्महत्यां येऽश्वमेधेन यजन्तेऽग्निष्टुताऽभिशस्यमानं याजयेदिति च। वशिष्ठः,—

वैश्वानरीं व्रतपतिं पवित्रेष्टिं तथैव च।

ऋद्वावृत्तौ प्रयुञ्जानः पुनाति दश पूरुषम्॥

मनुः,—

पुण्यान्यन्यानि कुर्व्वीत श्रद्दधानो जितेन्द्रियः।

न त्वल्पदक्षिणैर्यज्ञैर्यजेतेह कदाचन॥

प्राजापत्यमदत्वाश्वमग्न्याधेयस्य दक्षिणाम्।

तथाहिताग्निर्भवति ब्राह्मणो विभवे सति॥

तथा—

रथं हरेदथाध्वर्य्युर्ब्रह्माधाने च वाजिनम्।

इति। अत्राग्न्याधाने—

अश्वस्य ब्रह्मणे दानं केषाञ्चिच्छाखिनामिति।

व्याख्यातेनान्यशाखिनामश्वस्य विभाज्य नयनमेवच। हारीतः,—असद्द्रव्यप्रणीतो यज्ञः स्रवति अनर्त्विक्प्रणीतो व्यथते अविद्यप्रणीतो नावकः सङ्कीर्णप्रणीतोऽसिद्धार्थोऽकृतत्र्योऽतेजस्कः विधिविहीनो यातयामः अध्रुवः सोपधोऽल्पफलोऽश्वट उपदस्यत्यदक्षिणोऽनृतः एते यज्ञस्योपसर्गाः। यैरुपसृष्टो यज्ञोऽनावुको भवति असद्द्रव्यं असदुपार्जितं द्रव्यं तद्द्रव्यकृतः स्रवति न फलति अनर्त्विजः यज्ञानुष्ठानज्ञानरहित—ऋत्विक् कृतः अविद्ययजमानप्रणीतो नावकः। नास्ति अवको रक्षको यस्य।

सङ्कीर्णः पापकृत् .तत्प्रणीतो निष्फलः। मन्त्रतन्त्रोऽङ्गहीन अतेजस्कः फलातिशयासमर्थः। विधिहीनः इतिकर्त्तव्यताहीनः। अध्रुवः अल्पकालफलदः। सोपधः दृष्टकीर्त्त्यर्थमनुष्ठितः। अमदः येनान्नं दीयते स उपदस्यति क्षीणो भवति। अदक्षिणः अनृतः मिथ्या भवति। मनुः,—

ये शूद्रादधिगम्यार्थमग्निहोत्रमुपासते।

ऋत्विजस्ते हि शूद्राणां ब्रह्मवादिषु गर्हिताः॥

छागलेयः,—

ये शूद्रादधिगम्यार्थमग्निहोत्रमुपासते।

दाता तत्फलमाप्नोति कर्त्ता च नरके वसेत्॥

इदं च यज्ञानुष्ठानार्थमेव शूद्रात् प्रार्थनात् पूर्व्वग्रहणे।

न यज्ञार्थं धनं शूद्राद् विप्रो भिक्षेत—

इति भिक्षानिषेधात्। अयाचितस्य तु देवपित्रर्थे अन्यदित्यप्रत्याख्येयत्वोक्तेः। एवं प्रतिग्रहादिरूपेण वृत्त्यर्थं शूद्रार्थं शूद्राद् ग्रहणे ततो यज्ञकरणेऽपि नायं दोष इति भाव्यम्। अतएव—

यज्ञार्थं लब्धमददद्भासः काकोऽपि वा भवेत्।

इति यज्ञार्थमेव गृहीतस्य धनस्यानुपयोगे दोषः। हारीतः,—योन्वय इत्युक्त्वा यजति महान्तं वाक्रान्तं संवीक्ष्य स्वल्पेन कृतेष्ट्या न सर्वमुपयुनक्ति तत्र त्रैधातवीया प्रायश्चित्तिः। तथा उत्सृज्याग्निं प्रवसन् प्रवत्स्यन् वा वैश्वानर्य्या यजेत। अयाज्यं याजयिष्यन् अप्रतिग्राह्यस्य प्रतिग्रहीष्यन् वैश्वानर्य्या यजेत। तथा अभिशस्तोऽभिद्रोह्य अग्नावारुण्या यजेत। अभिद्रोह्यो गुरुमित्राद्यपकारी

आरब्धयज्ञस्य तु दैवाद् दक्षिणार्थद्रव्यासम्भवे दक्षिणाद्रव्यं यथा-निर्व्वाहम् । तत्र प्रकारमाह ।

मनुः,—

यज्ञश्चेत् प्रतिरुद्धः स्यादेकांशेनैव यज्वनः ।
ब्राह्मणस्य विशेषेण धार्म्मिके सति राजनि ॥
यो वा वैश्यो बहुपशुर्हीनक्रतुरसोमपः ।
कुटुम्बात् तस्य तद् द्रव्यमाहरेद् यज्ञसिद्धये ॥
आहरेत् त्रीणि वा द्वे वा कामं शूद्रस्य वेश्मनः ।
नहि शूद्रस्य यज्ञेषु कश्चिदस्ति परिग्रहः ॥
योऽनाहिताग्निः शतगुरयज्वा च सहस्रगुः ।
तयोरपि कुटुम्बाभ्यामाहरेदविचारयन् ॥
आदाननित्याच्चादातुराहरेदप्रयच्छतः ।
तथा यशोऽस्य प्रथते धर्म्मश्चैव विवर्द्धते ॥

प्रतिरुद्धः विलम्बितः । आहरेत् तेन दीयमानमपि तदङ्गभूतं द्रव्यं तस्माद् गृह्णीयात् । वैश्यादलाभे शूद्रादपि बलादाहरेत । तदीयधनस्य सर्व्वथा यज्ञानुपयुक्तत्वेनोक्तविधिना यज्ञार्थं हरणेऽप्यदोष इत्यर्थः । शूद्रादलाभेऽन्योऽपि यः शतगुः सन्नाहिताग्निः सहस्रगुर्वा नासोमपस्तयोर्गृहादाहर्त्तव्यम् । तयोरप्यलाभे यः प्रत्यहमर्जनेन धनं सञ्चिनोति न किञ्चिद्दानादिना व्ययं करोति तद्गृहादिकं साङ्गं कुर्य्यात् । धार्म्मिके सति राजनीति सर्व्वत्र सम्बध्यते । अधार्म्मिको राजा कदाचिदेवम्विधं शास्त्रमज्ञात्वा कदाचिद् दण्डयेन्निवारयेद्वा । गौतमः,—द्रव्यादानं विवाह-

सिद्धयर्थं धर्म्मान्ते प्रसङ्गे च। विवाहकालातिक्रमशङ्कया धर्म्मान्त-
स्याग्निहोत्रादेर्लोपप्रसङ्गे द्रव्यादानम्। शूद्रादिभ्यो बलेन द्रव्य-
मादेयमित्यर्थः। अङ्गिराः,—

खलक्षेत्रगतं धान्यं वापीकूपगतं पयः।
अभोज्यादपि तद्ग्राह्यं यच्च गोष्ठगतं पयः॥
विहितानेषु यज्ञेषु हविष्याग्रयणेषु च।
इष्टिं तत्र मतीं (?) कुर्य्यात् सुमृतं न तु लोपयेत्॥

अभोज्यशूद्रादेर्यज्ञविच्छेदशङ्कया प्रतिग्रहः कर्त्तव्य इत्यर्थः।
एवं च यज्ञानुष्ठानं ऋषियज्ञ इत्यादिना मनूक्तम्। तथा इन्द्रिय-
वृत्तिरोधरूपेण वाचि प्राणहोमेन ध्यानेन वा पञ्चयज्ञानुष्ठानं
एतानेव महायज्ञानित्यादिना मनूक्तं कर्त्तव्यम्।

इति यज्ञरूपस्नातकप्रकरणम्।

---

## अथ दानम्।

मनुः,—

शक्तितो यतमानेभ्यो दातव्यं गृहमेधिना।
संविभागश्च भूतेभ्यः कर्त्तव्योऽनुपरोधतः॥

तथा—दानधर्म्मं निषेवेत नित्यमैष्टिकपौर्त्तिकम्।

इति दानं स्नातकव्रतम्।

तथा—वारिदस्तृप्तिमाप्नोति सुखमक्षयमन्नदः।
तिलप्रदः प्रजामिष्टां दीपदश्चक्षुरुत्तमम्॥

भूमिदो भूमिमाप्नोति दीर्घमायुर्हिरण्यदः।
गृहदोऽग्र्याणि वेश्मानि रूपदो रूपमुत्तमम्॥
वासोदश्चन्द्रसालोक्यमश्विसालोक्यमश्वदः।
अनडुहः श्रियं पुष्टां गोदो व्रध्नस्य पिष्टपम्॥
यानशय्याप्रदो भार्य्यामैश्वर्य्यमभयप्रदः।
धान्यदः शाश्वतं सौख्यं ब्रह्मदो ब्रह्म शाश्वतम्॥
सर्वेषामेव दानानां ब्रह्मदानं विशिष्यते।

याज्ञवल्क्यः,—

हेमशृङ्गी शफै रौप्यैः सुशीला वस्त्रसंयुता।
सकांस्यदोहा दातव्या क्षीरिणी गौः सदक्षिणाः॥
दशसौवर्णिके शृङ्गे खुराः पञ्चपलानि तु।

इति स्मृत्यन्तरोक्तं ग्राह्यं साकाङ्क्षत्वात्।

स्मृतिशास्त्रविकल्पः स्यादाकाङ्क्षापूरणे सति।

इति न्यायात् कांस्यपात्रमुधःसमानं तत्स्थाने धार्य्यम्। कांस्यदोहमिति स्मृत्यन्तरात्। ताम्रपृष्ठादिकं विकल्पेन।

तथा—

दातास्याः स्वर्गमाप्नोति वत्सरान् रोमसम्मितान्।
कपिला चेत् तारयति भूयश्चासप्तमं कुलम्॥

तथा—

सवत्सारोमतुल्यानि युगान्युभयतोमुखी।

---

(१) सहितयाज्ञवल्क्ये,—सकांस्यपात्रा ० Anandāçrama series आचाराध्यायः दानप्रकरणम्।

दातास्याः स्वर्गमाप्नोति पूर्व्वेण विधिना ददत्।

पूर्व्वविधिः सुवर्णशृङ्गादिः। वत्सरोमसहितगोरोमसमान-युगमितस्वर्गः फलम्। गोदानानुवृत्तौ विष्णुः—शतप्रदो ब्रह्म-लोकम्। महाभारते—

गवां सहस्रदः प्रेत्य नरकं न प्रपद्यते।

बृहद्वशिष्ठः,—

यत्किञ्चित् कुरुते पापं जन्मप्रभृति मानवः।
अपि गोचर्म्ममात्रेण भूमिदानेन शुद्ध्यति॥
गवां शतं वृषश्चैको यत्र तिष्ठत्ययन्त्रितः।
एतद्गोचर्म्ममात्रं हि प्राहुर्व्वेदविदो जनाः॥

तथा—

दशहस्तेन दण्डेन दशवंशान् समन्ततः।
पञ्च वाभ्यधिकं दद्यादेतद्गोचर्म्ममुच्यते॥

पञ्च वाभ्यधिकमेकस्मिन् पार्श्वे। बृहस्पतिः,—

अपि गोचर्म्ममात्रेण सम्यग्दत्तेन मानवः।
धौतपापो विशुद्धात्मा स्वर्गलोके महीयते॥
दशहस्तेन दण्डेन त्रिंशद्दण्डा निवर्त्तनम्।
दश तान्येव गोचर्म्म ब्राह्मणेभ्यो ददाति यः॥
राजाधिराजो भवति तद्धि दानमनुत्तमम्।
नगरञ्च तथा दत्वा राजा भवति भूतले।
कर्पटं खेटकं वापि ग्रामं वा शस्यशालिनम्॥
निवर्त्तनशतं वापि तदर्द्धार्द्धमथापि वा॥

अपि गोचर्ममात्रं वा दत्त्वोर्वीं सर्वभाग् भवेत्।
योजनार्द्धार्द्धविष्कुम्भमष्टभागायतं पुरम्॥

तथा—

वाञ्छन्ति पितरोऽप्येवं सर्वलोकव्यवस्थिताः।
यदस्मत्कुलजः कश्चिद् भवेदवनिदः क्वचित्॥

इति वचनात् पितृतारणार्थं भूमिदानम्। नामास्याः प्रियदत्तेति वचनात् प्रियदत्तामितिदानवाक्यम्। यमः,—रुक्मदः सर्वमाप्नोति। सर्वफलं पर्य्यायेण।

नन्दिपुराणे,—

कुम्भलाः पञ्च मासास्तु माषैः षोडशभिः स्मृतम्।
सुवर्णमेकं तद्दानाद् दाता स्वर्गमवाप्नुयात्॥

विष्णुधर्मोत्तरे,—

दत्त्वा कुम्भलमात्रन्तु नरः पापात् प्रमुच्यते।
दत्त्वा तु माषकं तस्य फलं पुण्यमवाप्नुयात्॥

तथा त्रिसन्ध्यं सुवर्णदानात् सर्वपापक्षयः। आग्नेयपुराणे,—

पुष्ये वा जन्मनक्षत्रे विषुवे अयनेषु च।
ग्रहणे च व्यतीपाते संक्रान्तौ च दिनक्षये॥
यानमश्वमनड्वाहं हेम रूप्यमणी तिलान्।
ये प्रयच्छन्ति पापेषु नियताः सर्वदा मुने॥
न तेषां भैरवः पुण्याद्दत्तेषां दानमुत्तमम्।

सम्वर्त्तः—रूप्यदो रूप्यमुत्तमम्।

रत्नानाञ्च प्रदानेन राजेवेह प्रजायते।

तथा,—तिलपूर्णन्तु यो दद्यात् ताम्रपात्रं द्विजातये।
गुरौ प्रदक्षिणं शक्त्या सर्व्वपापैः प्रमुच्यते॥
ताम्रपात्रं तिलैः पूर्णं प्रस्थमात्रं द्विजातये।
सहिरण्यन्तु यो दद्यात् श्रद्धावित्तानुसारतः॥
सर्व्वपापविशुद्धात्मा लभतेऽत्र गतिं पराम्।
ताम्रपात्रं दशगुणं जघन्यं परिकीर्त्तितम्॥
द्विगुणं मध्यमं प्रोक्तं त्रिगुणं चोत्तमं स्मृतम्।
स्वर्णमेकं जघन्ये तु द्विगुणं मध्यमे क्षिपेत्॥
त्रिगुणं चोत्तमे तद्वत् सुवर्णं दक्षिणेष्यते।

माहात्म्ये,—वैशाखी-पौर्णमासी-चन्द्रसूर्य्यग्रहौ माघ्याषाढ़ी-कार्त्तिकी-उत्तरायणं द्वादशी च कृष्णाजिनदानकालः। आहिताग्निः पात्रम्। गोमयोपलिप्ते कम्बलास्तरणम्। तत्र सशृङ्गं सखुरकृष्णाजिनास्तरणम्। दशसौवर्णिकं शृङ्गद्वयं सुवर्णेन दन्तपंक्तिद्वयं मुक्तानेत्रं विद्रुमो लाङ्गूलं कृष्णाजिने तिलद्रोणेनाच्छादनं सुवर्णं नाभौ। पूर्व्वस्यां दिशि घृतपूर्णं कांस्यपात्रं मृन्मयपात्रञ्च। दक्षिणस्यां दिशि क्षीरपूर्णं तत्पात्रद्वयं पश्चिमे दधिपूर्णं तत्पात्रद्वयम्।

यानि चान्यानि पापानि मया लोभात् कृतानि तु।
लोहपात्रप्रदानेन प्रणश्यन्तु ममाशु वै॥

इति मन्त्रेण तिलपूर्णलोहपात्रस्य वामपदे स्थापनम्।

यानि कानीह पापानि कर्म्मोत्थानि कृतानि वै।
कांस्यपात्रप्रदानेन तानि नश्यन्तु मे सदा॥

अनेन मन्त्रेण मधुपूर्णकांस्यपात्रं दक्षिणपादे ।

परापवादपैशुन्यात् पृष्ठमांसस्य भक्षणात् ।
तत्रोत्थितञ्च पापं मे ताम्रपात्रात् प्रणश्यतु ॥

अनेनोत्कृष्टसुवर्णयुतं ताम्रपात्रं अग्रवामपादे ।

कन्यानृतं गवां चैव परदारप्रधर्षणम् ।
रौप्यपात्रप्रदानाद्द्वै क्षिप्रं नाशं प्रयान्तु मे ॥

अनेनोत्कृष्टमुक्तायुतं रूप्यपात्रं अग्रदक्षिणपादे ।

यद्वयजन्मसहस्रेषु कृतं पापं कुबुद्धिना ।
सुवर्णपात्रदानात् तन्नाशमीयात् जनार्द्दन ॥

अनेन विद्रुमयुतस्वर्णपात्रं मध्ये । वामकर्णे दाड़िमफलं दक्षिणे बीजपूरं खुरचतुष्टयं शृङ्गाटकसर्व्वशाकसर्व्वफलयुतं नवरत्नाद्युत्तमरत्नत्रयेण गन्धैश्चालङ्करणम् । एवं कृष्णाजिनं प्रकल्प्य दानस्थानाद्दक्षिणस्यां चम्पकशाखया सहितजलकुम्भं गात्रसम्मार्जनार्थं जीर्णपीतवस्त्रञ्च स्थाप्यम् । ब्राह्मणमग्निमन्तं वस्त्रद्वयेनाच्छाद्य गन्धाद्यैरभ्यर्च्च्य दद्यात् प्रीयतां वृषध्वज इति पुच्छदेशे प्रतिग्रहः । दक्षिणां दत्वा ब्राह्मणं प्रेष्य मण्डलं कृत्वा तन्मध्ये पूर्व्वस्थापितजलकुम्भेन चम्पकशाखान्तरितेन स्नानं जीर्णपीतवस्त्रेण गात्रसम्मार्जनं अहतवस्त्रद्वयधारणम् । वस्त्रकुम्भयोश्चतुष्पथे प्रक्षेपः । समग्रभूमिदानफलम् । सर्व्वलोकजयकामचारिविमानेनाकाशगामित्वं पितृपुत्रमरणभार्य्यावियोगदुःखानननुभूय कल्पान्तस्वर्गलाभः । स्कन्दपुराणे,—

शालग्रामशिलाचक्रं यो दद्याद्दानमुत्तमम् ।

भूचक्रं तेन दत्तं स्यात् सशैलवनकाननम् ॥

महाभारते,—

न तं त्यजन्ति पशवः संग्रामे विजयत्यपि।
पुत्रं श्रियञ्च लभते यश्छत्रं सम्प्रयच्छति ॥

बृहस्पत्युक्तम्,—छत्रोपानद्दानमसिपत्रनरकसन्तरणफलम्। विषमसन्तरणफलमुपानद्दानम्। भारते नन्दिपुराणेऽपि गजदानं ब्रह्मलोकभोगपूर्व्वकराज्यदम्। एवमश्वदानं रथदानञ्च। विष्णुधर्म्मोत्तरे महिषदानं यमलोकसुखदम्। महिषीदानं वारुणलोकदम्! सम्बर्त्तः,—

भूताभयप्रदानेन सर्व्वकामानवाप्नुयात्।

रामायणे,—शरणागतरक्षणमश्वमेधतुल्यं तत्त्यागी सर्व्वपुण्यक्षयः। विष्णुधर्म्मोत्तरे,—चक्षुरुत्पाटनभयत्राणे ब्रह्मलोकावाप्तिः। अङ्गच्छेदभयत्राणे रुद्रलोकावाप्तिः। वधबन्धनभयत्राणे भृगुलोकावाप्तिः।

पशूनाञ्च मृगाणाञ्च पक्षिणाञ्च तथा द्विजाः।
तृणद्रुमलतानाञ्च त्राणाद् भवति नाकभाक् ॥

तथा,—सर्व्वोपकरणयुक्तगृहदानं कल्पान्तस्वर्गभोगपूर्व्वकराज्यदम्। विष्णुः,—शय्यादाने भार्य्यां प्राप्नोति। विष्णुधर्म्मोत्तरे,—चन्दनदानं सर्व्वपापक्षयदं कुङ्कुमदानं सौभाग्यदं कर्पूरदानं यशःप्रदं अगुरुदानं यशःप्रदम्। ब्राह्मे,—कर्पूरदानं धर्म्मपुरप्राप्तये। विष्णुः,—पुष्पदाने श्रीमान् भवति। मधुघृततैलदाने-नारोग्यं प्राप्नोति। तैलामलकपादाभ्यङ्गदानं सम्बर्त्तोक्तं तेजस्वित्व-

सुखिलाय। स्कान्दे,—पीठासनकाष्ठपादुकादानं यममार्ग-सुखदम्। तैजसपात्रदानं विष्णूक्तं सर्व्वकामदम्। जलपात्रदानं सुखदम्। आग्नेये,—

ब्रह्महत्याकृतं पापमन्नदस्य प्रणश्यति।

पुण्यं यशस्यमायुष्यं तथा पुष्टिविवर्द्धनम्॥

कौर्म्मे,—

आममन्नं गृहस्थाय दत्वाप्नोति परां गतिम्।

नन्दिपुराणे,—

अपि कीटपतङ्गानां शुनां चाण्डालयोनिनाम्।

दत्वान्नं लोकमाप्नोति प्राजापत्यसमां गतिम्॥

अन्नादिदानं सङ्कल्प्य तन्मूल्यकपर्द्दकदानेऽपि तद्द्वारा तस्यान-स्वीकारात् दानसिद्धिर्भवत्येव। केवलं प्रतिग्रहीत्रा जयकाले तदादाय कपर्द्दकेन तण्डुलं गृह्णामीति बुद्धिः कार्य्या। अतएव रामायणे,—श्वेतेन राज्ञाऽन्नदानरूपेणागस्त्याय कङ्कणं समर्पितं तच्च तेन रामचन्द्राय समर्पितमिति प्रवादः।

तथाच-यज्ञपार्श्वे,—

द्वात्रिंशत्पणिका गावश्चतुः कार्षापणो वरः। (?)

वृषे षट्कार्षापणिक अष्टावनडुहः स्मृताः॥

दशकार्षापणा धेनुरश्वे पञ्चदशैव तु।

हिरण्ये कार्षापणकाः पणा नव तथाऽधिकाः॥

वस्त्रे कार्षापणश्छागेऽष्टौ पणा द्वादशाविके।

इष्टमूल्यमयमूल्यं कार्षापणाः स्मृताः॥ (?)

निष्के पञ्चाशदेव स्याद् ध्वजे पञ्चशतानि तु।
पञ्च कार्षापणाः प्रोक्ता दोलायां षड्रथे रथाः॥ (१)
षड्वेऽष्टौ कार्षापणिकास्ताम्रकर्षे पणः स्मृतः।
कांस्यकर्षेण च पण इति मूल्यप्रकल्पना॥
अधिकं कल्पयेन्मूल्यं नोनं वित्तानुसारतः।

इत्युक्तम्। यत्र यन्नादौ मूल्यकल्पना इति चादिशब्दाद् यद्यपि दक्षिणायामावश्यकप्रायश्चित्तादिदानान्तरप्रारब्धेनानेन मूल्यकल्पना।

ताम्बूलदानं मेधाविलाय सर्व्वत्रोक्तम्। विष्णुधर्म्मोत्तरे,—प्राश्वदः सर्व्वमाप्नोति परमान्नेन शश्वत् तृप्तिः। वाराहे,—दधिक्षीरघृतदानं परलोके गोरसपूर्णसत्पात्रप्राप्तये। विष्णुधर्म्मोत्तरे,—प्रपाणकदाने सर्व्वकामसमृद्धिः। बालक्रीड़नकदानेऽग्निष्टोमफलम्। शिविकादानेऽग्निष्टोमफलम्। दन्तकाष्ठदाने सौभाग्यम्। मृत्तिकादाने शुचिः। शक्तुदाने तृप्तिः। आरण्यपशुदाने वायुलोकप्राप्तिः। शिल्पिकभाण्डदाने विद्यादानफलम्। विष्णुः,—तालवृन्तदानेनादुःखित्वम्। वितानकदाने सर्व्वपापक्षयः।

विष्णुधर्म्मोत्तरे,—

वेददानादवाप्नोति सर्व्वयज्ञफलं नरः।
उपवेदप्रदानेन गन्धर्व्वैः सह मोदते॥
वेदाङ्गानां प्रदानेन धर्म्मेण सह मोदते।
सिद्धान्तानां प्रदानेन मोक्षमाप्नोत्यसंशयम्॥

सिद्धान्ताः पञ्चरात्रकापिल-सनत्कुमार-पाशुपतादयः । मीमांसादानं चन्द्रपूरदम् । वैद्यशास्त्रदानमग्निलोकदम् । भक्तिशास्त्रदानं वारुणलोकदम् । नन्दिपुराणे,—विद्यादानमध्यापनं पुस्तकदानञ्च । ग्रन्थनिर्म्माणन्तु न विद्यादानम् । किन्तु एकः शब्दः सुप्रयुक्तः सम्यक्ज्ञातः स्वर्गलोके महीयते कामधुग् भवेदित्यादिफलकम् । परोपकारभूयस्त्वेन फलभूयस्त्वम् । नन्दिपुराणे,—दीपदानादक्षयफलम् ।

तथा दीपप्रदो नित्यं सन्तारयति वै पितॄन् ।

कार्त्तिके दीपदानं शाश्वतफलम् । विष्णुधर्म्मोत्तरे,—सम्वत्सरतिलदानम् । सम्वत्सरसंज्ञके वर्षे तिलदानम् । दारुदानञ्च महाफलम् । परिसम्वत्सरे यवदानम् । अनुसम्वत्सरे धान्यदानम् । उदावत्सरे रजतदानम् । उत्तरायणे वस्त्रदानम् । तिलदानं दक्षिणायने । वस्त्रदानं शिशिरे इन्धनदानञ्च महाफलम् । वसन्ते स्नानाय विलेपनदानम् । ग्रीष्मे प्रपाणकदानम् । वर्षासु कटुद्रव्यदानम् । शरद्यन्नदानम् ।

मेषसंक्रमणे भानोर्मेषदानं महाफलम् ।

वृषसंक्रमणे वृषाणाम् । मिथुनसंक्रमणे शयनासनानाम् । कर्कटसंक्रमणे शर्करासक्तुगुड़फाणितखण्डदानम् । उदकुम्भदानम् । सिंहप्रवेशे तैजसपात्रदानम् । कन्याप्रवेशे धूपितवस्त्राणाम् । तुलप्रवेशे धान्यानां मुद्गानाञ्च । वृश्चिकप्रवेशे खड्गादिशस्त्रदानम् । गृहदानञ्च । धनुःसंक्रमणे वस्त्रत्रयदानम् । नौकादियानदानञ्च । मकरसंक्रमणे इन्धनदानम् । वह्निदानञ्च ।

कुम्भसंक्रमणे गोग्रासदानम्। मीनसंक्रमणे पानीयदानम्। वामनपुराणे,—माघे माधवप्रीत्यै तिलधेनुहोमसाधनकाष्ठेन्धनकम्बलतुलघटीदानम्। फाल्गुने गोविन्दप्रीत्यै व्रीहियवस्त्रकृष्णाजिनदानम्। चैत्रे विष्णुप्रीत्यै चित्रवस्त्रशयनासनदानम्। वैशाखे मधुसूदनप्रीत्यै सुरभिगन्धमाल्यदानम्। ज्येष्ठे त्रिविक्रमप्रीत्यै उदकुम्भचन्दनतालवृन्तव्यजनदानम्। आषाढ़े वामनप्रीत्यै छत्रोपानत्कम्बलदानम्। श्रावणे श्रीधरप्रीत्यै घृतकुम्भक्षीरघृतधेनुफलानाम्। भाद्रपदे हृषीकेशप्रीत्यै पायसमधुसर्पिर्लवणगुड़ोदनदानम्। आश्विने पद्मनाभप्रीत्यै तिलहेमवृषदधिमस्त्रायसदानम्। कार्त्तिके दामोदरप्रीत्यै रजतकनकदीपमणिमुक्ताप्रवालदानम्। मार्गशीर्षे केशवप्रीत्यै खरोष्ट्राश्वतरशकटरथाजीविकदानम्। पौषे नारायणप्रीत्यै प्रासादनगरग्रामखर्व्वटगृहप्राङ्गणोत्तरीयदानम्।

तिथिदानानि। विष्णुधर्म्मोत्तरे,—

प्रतिपद्यथ पुष्पाणां द्वितीयायां घृतस्य च।
तृतीयायान्तु वस्त्राणां चतुर्थ्यां कनकस्य च॥
पञ्चम्यान्तु फलानां वै षष्ठ्यां लवणस्य मानवाः।
सप्तम्याञ्चाप्यपूपानामष्टम्यान्तु गुड़स्य च॥
कुल्माषस्य नवम्यान्तु दशम्यां रजतस्य च।

कुल्माषो राजमाषः।

एकादश्यां सुवर्णस्य द्वादश्यां वसनस्य च।
त्रयोदश्यां सुगन्धानां शितायास्तदनन्तरम्॥

दानन्तु परमान्नस्य पञ्चदश्यां महाफलम् ।
यस्तु कृष्णचतुर्दश्यां स्नात्वा देवं पिनाकिनम् ॥
आराधयेद् विप्रमुख्यो न तस्य पुनरुद्भवः ।

शिवमुद्दिश्य ब्राह्मणाय गन्धपुष्पभक्ष्यादिदानम् । स्कान्दे,—
अमावास्यायां तिलपात्रत्रयदानं पितृलोके सुखप्रदम् ।

नक्षत्रदानानि । विष्णुधर्म्मोत्तरे,—

कृत्तिकासु सुवर्णस्य दानं बहुफलं स्मृतम् ।
रक्तवस्त्रस्य रोहिण्यां सौम्ये च लवणस्य च ॥
कृशरस्य तथार्द्रायामादित्ये लवणस्य च ।
घृतस्य च तथा पुष्ये चन्दनानां च सर्पभे ॥
गन्धानाञ्च मघायोगे प्रियङ्गोर्भगदैवते ।
आर्य्यम्णे चाप्यपूपानां साविते पायसस्य तु ॥
चित्रायां चित्रवस्त्राणां शक्तूनां वायुदैवते ।
ऐन्द्राग्ने चैव लोहानां मैत्रे माल्यफलस्य च ॥
पुष्पस्य च तथा शाक्रे मूले मूलफलस्य च ।
हिमस्य मधुयुक्तस्य दानमाप्ये महाफलम् ॥
विश्वेश्वरेऽन्नदानस्य श्रवणे वसनस्य च ।
धान्यस्य वासवे विप्रा वारुणे चौषधस्य च ॥
आजे पुराणबीजानां शय्यानां तदनन्तरे ।
गोरसानां तथा पौष्णे शाद्वलानां तथाश्विने ।
तिलानाञ्च तथा दानं भरणीषु महाफलम् ॥

वारदानानि । विष्णुधर्म्मोत्तरे,—गुडाज्यलवणोपेतसहिरण्या-

पूपदानं सूर्य्यप्रीत्यारोग्यफलम् । सोमवारे पूर्व्वोक्तापूपदानं सौभाग्यदम् । अभ्यङ्गस्नानीयदानं रोगघ्नम् । भौमवारे काष्ठदानाच्छत्रुनाशः । बुधवारे बालेभ्यः क्रीडणकदानं जीववारे वस्त्रदानं परमपुष्टिदम् । शुक्रवारे रत्युपयोगिगन्धमाल्यवस्त्रादिदानम् ।

अभ्यङ्गं सौरदिवसे दत्वा जीवितमाप्नुयात् ।

विष्णुधर्म्मे,—श्रावणशुक्लपक्षे गोविन्दं स्नापयित्वा सम्पूज्य ब्राह्मणाय गां दद्यात् । गोविन्दप्रीत्यर्थं पौषशुक्लद्वादश्यां गोदानं गोलोकप्राप्तये । आश्विनशुक्लद्वादश्यां जलधेनुदानं जलशायिप्रीत्यै । विष्णुधर्म्मोत्तरे,—चैत्रशुक्लद्वादश्यां तुलघटीदानं धनप्राप्त्यै । मार्गशीर्षद्वादश्यां लवणदानं महाफलम् । माघशुक्लद्वादश्यां दारुदानं फाल्गुने सर्व्वगन्धदानं महाफलम् । एतासु द्वादशीषु क्रमेण पूर्व्वफल्गुनीहस्तास्वातीज्येष्ठामूलाश्रवणापूर्व्वभाद्रपदरेवतीकृत्तिकामृगशिरःपुनर्वसुपुष्याणां यथासंख्ययोगे एतान्येव दानानि महाफलानि । विष्णुधर्म्मोत्तरे,—माघ्यां कृष्णतिलप्राधान्येन श्राद्धकरणे सर्व्वपापक्षयः । फाल्गुन्यां स्वास्तीर्णशयनदाने रूपधनयुतकुटुम्बिनीभार्य्यालाभः । चैत्र्यां पूर्व्वमुपोष्य चित्रवस्त्रद्वयं दत्वा ब्राह्मणान् सन्तर्प्य सौभाग्यं लभते । वैशाख्यां कृष्णाजिनदानं महाफलम् । यमः,—वैशाख्यां सप्तभ्यः पञ्चभ्यो वा विप्रेभ्यो मधुसहितपायसदानं यावज्जीवकृतपापक्षयदम् । दानान्ते प्रीयतां धर्म्मराज इति वदेत्तथुक्ते प्रीयतां धर्म्मराज इति ब्राह्मणा ब्रूयुः । कौर्म्मे,—घृतान्नमुदकुम्भञ्च ब्राह्मणेभ्यो देयं धर्म्मराज प्रीयतामिति वाचनं भयं न भवति । आदित्यपुराणे,—ज्येष्ठ्यां

जलदानमश्वमेधफलम्। आषाढ्यामन्नदानेन बहुधनलाभः। श्रावण्यां जलधेनुदानं स्वर्गदम्। प्रौष्ठपद्यां गोदानं महाफलम्। आश्वयुज्यां घृतपूर्णसहिरण्यकांस्यपात्रदानं दीप्ताग्नित्वदम्। तथा प्रदोषसमये लक्ष्मीं पूजयित्वा देवगृहे दीपवृक्षदानम्। नदीपर्व्वत-चतुष्पथश्मशानवेश्मसु विलद्वारेषु च दीपदानं महापुण्यफलदम्। कार्त्तिक्यां चन्द्रवर्णं वृत्तं चतुर्दिगवस्थितदीपचतुष्टयं नवरत्नसप्त-धान्यकर्पूरागुरुचन्दनकस्तूरीयुक्तं च चन्द्रोदयं दत्त्वा यममार्गे सर्व्वभोगसुखलाभः। नदीषु दीपदानं महाफलम्। पौष्यां पूर्व्व-मुपोष्यापरदिने प्रातः श्वेतसर्षपकल्केन उद्वर्त्त्य गव्यघृतकुम्भेन स्नातस्तण्डुलचूर्णादिभिर्विभूषणं कृत्वा सर्व्वधान्यमिश्ररत्नगन्धफल-युतजलेन स्नातः ससुवर्णघृते मुखे वीक्ष्य तं घृतं ब्राह्मणाय दत्वा विष्णुं घृतेन संस्नाप्य पूजयित्वा ब्राह्मणद्वारा होमं कारयित्वा होमकर्त्रे वस्त्रयुगं दक्षिणां दत्वा घृतमर्चितमर्चिताय विप्राय दद्यात्। एवं कृते महती पुष्टिः।

तथा,—

पौर्णमासीषु चैतासु मासर्क्षसहितासु च।
एतेषामेव दानानां फलं दशगुणं भवेत्॥
महत्पूर्व्वासु चैतासु फलमक्षय्यमश्नुते।

मासर्क्षाणि च मार्गशीर्षमृगशिरःप्रभृतीनि।

मासर्क्षगतौ यस्यां चन्द्रबृहस्पती सा महती।

महामाघ्यादिशब्दवाच्या। तस्यां दत्तानि दानानि अक्षय्य-फलानि।

इत्येते सहितौ यस्यां दिवि चन्द्रबृहस्पती।
पौर्णमासी तु महती प्रोक्ता संवत्सरस्य तु॥

विष्णुधर्म्मोत्तरे,—माघकृष्णद्वादश्यां तिलदानं महाफलम्।
श्रवणायोगे विशेषतः।

विष्णुधर्म्मोत्तरे,—

वैशाखे शुक्लपक्षे तु तृतीयायां द्विजोत्तमाः।
यद्ददाति नरश्रेष्ठ तत्तदक्षयमश्नुते॥

रामायणे,—

आषाढ़ी कार्त्तिकी माघी तिथयः पुण्यसंज्ञिताः।
अप्रदानवतो यान्तु यस्यासौऽनुमते गतः॥

मनुः,—

यद् यदिष्टतमं लोके यच्चास्य वर्द्धितं गृहे।
तत्तद् गुणवते देयं तदेवाक्षयमिच्छता॥

तथा,—

यत्किञ्चिदपि दातव्यं याचितेनानसूयता।
इच्छानुरूपो विभवः कदा कस्य भविष्यति॥
सान्तानिकं यक्ष्यमाणमध्वगं सर्व्ववेदसम्।
गुर्व्वर्थं पितृमात्रर्थं स्वाध्यायार्थ्युपतापिनौ॥
नवैतान् स्नातकान् विद्याद् ब्राह्मणान् धर्म्मभिक्षुकान्।
निःस्वेभ्यो देयमेतेभ्यो दानं विद्याविशेषतः॥
एतेभ्योऽपि द्विजाग्रेभ्यो देयमन्नं सदक्षिणम्।
इतरेभ्यो बहिर्वेदिकृतान्नं देयमुच्यते॥

सान्तानिकं विवाहार्थिनम्। अध्वगमध्वनीतं तीर्थयात्रायर्थम् सर्व्ववेदसं विश्वजिदादौ दत्तसर्व्वस्वम्। स्वाध्यायार्थी अध्ययनकालनिमित्तम्। उपतापी रोगी। एतेभ्योऽदाने दोषः। तथाच श्रीकृष्णदेहत्यागेन निःश्रीकमर्ज्जुनं प्रति व्यासवाक्यम्—

सान्तानिकादयो वा ते याचमाना निराकृताः।

इति। एतेभ्योऽत्यन्ताशक्तौ न देयम्।

बृहस्पतिः,—

कुटुम्बभक्तवसनाद् देयं यदतिरिच्यते।

मनुः,—

शक्तः परजने दाता स्वजने दुःखजीविनि।

मध्वापातो विषास्वादः स धर्म्मप्रतिरूपकः॥

इति। शिवधर्म्मे,—

तस्माद् विभागं वित्तस्य जीवनाय प्रकल्पयेत्।

भागद्वयन्तु धर्म्मार्थमनित्यं जीवितं यतः॥

एतेभ्यो याचमानेभ्यः शक्तिसत्त्वेऽदाने दोषः। स्नातकव्रतलोपात्। यत्तु व्यासवचनं—

कुटुम्बं पीड़यित्वापि ब्राह्मणाय महात्मने।

इति। तदावश्यकातिथ्यादिविषयमिति हेमाद्रिः।

तत्र दानविधिः। याज्ञवल्क्यः,—

[1]देशे काले च पात्रे च दानं श्रद्धासमन्वितम्।

पात्रे प्रदीयते यत् तत् सकलं धर्म्मलक्षणम्॥

(१) मुद्रितयाज्ञवल्क्ये श्लोका एते न दृश्यन्ते।

शूद्रे समगुणं दानं वैश्ये तु द्विगुणं स्मृतम्।

क्षत्रिये त्रिगुणं प्रोक्तं ब्राह्मणे षड्गुणं स्मृतम्॥

श्रोत्रिये चैव साहस्रमाचार्य्ये द्विगुणं ततः।

आत्मज्ञे शतसाहस्रमानन्त्यं चाग्निहोत्रिणि॥

अत्रिः,—

आचार्य्ये पञ्चरात्राणां सहस्रगुणितं भवेत्।

पञ्चरात्रं हयग्रीवादि। मनुः,—

समममब्राह्मणे दानं द्विगुणं ब्राह्मणब्रुवे।

सहस्रगुणमाचार्य्ये अनन्तं वेदपारगे॥

अमनुष्ये सर्व्वदानं येषु देयं महाफलम्। (?)

द्विगुणं वर्णसङ्करे।

श्रोभ्रष्टे चातिरोगार्त्ते दत्तमक्षयमुच्यते।

इति पठन्ति। शातातपः,—अब्राह्मणाः षट् राजवेतनभृतः निषिद्धवाणिज्यजीवी बहूनां वर्णानां याजकः ग्रामस्य वेतनपूर्व्वकं याजकः ग्रामनगरयोर्भृतिजीवी सन्ध्योपासनहीनश्च। व्यासः,—उपनीतोऽपि यो नाध्यापयति नाधीते स ब्राह्मणब्रुवः। अत्र मनुः,—

न वार्य्यपि प्रयच्छेत्तु वैडालव्रतिके द्विजे।

न वकव्रतिके पापे नावेदविदि धर्म्मवित्॥

एवं सति पूर्व्वोक्तवचनेषु शूद्रवैश्यक्षत्रियब्राह्मणब्रुवादीनां पात्रत्ववचनं प्रीतिदानापेक्षं प्रीतिदायस्य सर्व्वेषां शुद्धधनभाजित्वात्।

तथाच वशिष्ठः,—

मन्त्रपूर्व्वन्तु यद्दानममन्त्राय प्रदीयते।
दातुर्विकृत्य हस्तं तु भोक्तुर्जिह्वां निकृन्तति॥
उपरुध्यति कान्तारं गौरश्वः काञ्चनं चितिः।
अश्रोत्रियस्य विप्रस्य हस्तं दृष्ट्वा निराकृतः॥

इति। विष्णुधर्म्मोत्तरे,—

उपाध्यायर्त्विजश्चैव गुरावपि च मानवैः।
वर्णापेक्षा न कर्त्तव्या मातरं पितरं प्रति॥

व्यासः,—

मातापितृषु यद्दत्तं भ्रातृस्वसृसुतेषु वा।
जायापत्येषु यद्दत्तं सोऽनन्त्यः स्वर्गसंक्रमः॥
पितुः शतगुणं दानं सहस्रं मातुरुच्यते।
अनन्तं दुहितृणान्तु सोदर्य्ये दानमक्षयम्॥

विष्णुधर्म्मोत्तरे,—

मातृस्वसा स्वसा चैव तथैव च पितृस्वसा।
मातामही भागिनेयी भागिनेयस्तथैव च॥
दौहित्रो विट्पतिश्चैव तेषु दत्तमथाक्षयम्।

स्कान्दे,—

प्रथमन्तु गुरोर्दानं दद्यात् ज्येष्ठानुक्रमात्।
ततोऽन्येषान्तु विप्राणां दद्यात् पात्रानुरूपतः॥

तथा,—पञ्चयोजनमध्ये तु श्रूयते च गुरुर्यदि।
तदा नातिक्रमेद्दानं दद्यात् पात्रान्तरेऽन्यथा॥

गुरोरभावे तत्पुत्रं तद्भार्य्यां तत्सुतं तथा।
पौत्रदौहित्रमेवास्य यदि वा तत्कुलोद्भवम्॥

पात्रं कुर्य्यात्तु तदभावेऽन्यपात्रान्वेषणाश्रयः। भविष्यपुराणे,—

तस्मान्नातिक्रमेत् प्राज्ञो ब्राह्मणान् प्रतिवेश्यकान्।
सम्बन्धिनस्तथा सर्व्वान् दौहित्रं विट्पतिं तथा॥
भागिनेयं गृहपतिं सुमुखानपि गोपते।

एवञ्च सति यमपार्श्ववचनम्,—

'यस्य चैव गृहे मूर्खो दूरे चैव बहुश्रुतः।
बहुश्रुताय दातव्यं नास्ति मूर्खे व्यतिक्रमः॥

इति। एतदुक्तव्यतिरिक्तमूर्खविषयम्। तथाच विष्णुः,—
पुरोहितस्त्वात्मन एव पात्रम्। श्वसृदुहितृपुत्रजामातरश्च।
गुणहीनापेक्षया। शातातपः,—

सन्निकृष्टमधीयानं ब्राह्मणं यो व्यतिक्रमेत्।
भोजने चैव दाने च दहत्यासप्तमं कुलम्॥

स्कान्दे,—

त्यक्त्वा क्रमागतं विप्रं पूजितं प्रपितामहैः।

न दद्यादित्यर्थः। ब्रह्मवैवर्त्ते,—

ये पूर्व्वपूजिता ये च पुरस्तात् सुनमस्कृताः।
तान्निराकृत्य चान्येषु यद्दत्तं तत्पतत्यधः॥

शातातपः,—

अन्नदाने न कर्त्तव्यं पात्रान्वेषणमण्वपि।

अपात्राणि। विष्णुधर्म्मोत्तरे,—मारूढ़पतितः पतितस्तारः

गुरुद्वेषी कृतघ्नः ग्रामयाजकः वेदविक्रयी सोपपतिभार्य्यः स्त्रीजितः व्यालग्राहः ब्रह्मबन्धुः वृषलीपतिः परिचारकब्राह्मणश्च । एतेभ्यो दत्तं निष्फलम् । विष्णुः,—अनृतगोनग्नालेभ्यः । (?) यमेन तु,—अविमन्तुस्वजान्मिहोत्रिणः ।(?) शूद्राध्यापकाय न देयमित्युक्तम् । शौचहीनसन्ध्याहीनयज्ञोपवीतहीनेभ्यो न देयमिति व्यासः । मनुः,—वैडालव्रतिकवकवृत्तिसमव्ययशीलत्यागदानेन (?) सचय-कारिणः अपात्रभूताः । यमेन च कपटलेखित्रिपुरुषोत्सन्नवेद-विद्याभ्यो न देयमित्युक्तम् । दक्षः,—

धूर्त्ते वन्दिनि मल्ले च कुवैद्ये कितवे शठे ।
चाटुचारणचौरेभ्यो दत्तं भवति निष्फलम् ॥

महाभारते,—

पङ्ग्वन्धबधिरा मूका व्याधिनोपहिताश्च ये ।
भर्त्तव्यास्ते महाराज न तु देयः प्रतिग्रहः ।

यमः,—

अव्रतानाममन्त्राणां जातिमात्रोपजीविनाम् ।
नैषां प्रतिग्रहो देयो न शिला तारयेच्छिलाम् ॥

तथा,—

दरिद्रान् भर कौन्तेय मा प्रयच्छेश्वरे धनम् ।
व्याधितस्यौषधं पथ्यं नीरुजस्तु किमौषधैः ॥

तथा,—

किञ्चिद् वेदमयं पात्रं किञ्चित्पात्रन्तु गोमयम् ।
पात्राणामपि तत्पात्रं शूद्रान्नं यस्य नोदरे ॥

शूद्रान्नं शूद्रेण भोजनार्थं दीयमानं यत् तण्डुलादि। भोजनकाले च शूद्रस्वामिकत्वात्। न तु प्रतिग्रहलब्धं भोजनकाले शूद्रस्वामिकत्वाभावात्। अङ्गिराः,—

बहुभ्यो न प्रदेयानि गौर्गृहं शयनं स्त्रियः।

विष्णुधर्म्मोत्तरे,—

नाच विक्रीणीते राजन् वचसा कल्पषीकृताम्।
तस्याधर्म्मप्रवृत्तस्य लुब्धस्यानृतवादिनः॥
हव्यकव्यव्यपेतस्य न देया गौः कथञ्चन।

विक्रेष्यत्ययमिति सम्भावनायां गौस्तस्मै न देयेत्यर्थः। अग्निपुराणे,—

मनसा पात्रमुद्दिश्य तोयं भूमौ समुत्सृजेत्।
विद्यते सागरस्यान्तो दानस्यान्तो न विद्यते॥

दानस्य प्रतिग्रहावसानत्वात् पश्चात् प्रतिग्रहेऽपि दानसादगुण्यम्। दातुः सर्व्वातिशायिफलोत्कर्ष इत्यर्थः। अतएव तीर्थे प्रतिग्रहाकरणेऽपि दातुस्तीर्थफलं स्यादेव। धौम्यः,—

परोक्षेण च यद्दत्तं तीर्थदानेन सोदकम्।
तद्दानं सोदकं प्राहुरनन्तफलदायकम्॥

परोक्षे पात्राभावे।

स्वगोत्रेभ्यस्तथा दद्यादभावे गन्धिबन्धुषु।

नारदः,—

यदा च न सकुल्याः स्युर्न च सम्बन्धिबान्धवाः।
तदा दद्याद्द्विजेभ्यस्तु अभावे चाप्सु निक्षिपेत्॥

वृद्धपराशरः,—

पात्रं मनसि संस्मृत्य क्रियावन्तं गुणान्वितम् ।
अप्सु ब्राह्मणहस्ते वा भूमौ वापि जलं क्षिपेत् ॥
अन्यविप्रकरे कृत्वा दानं पात्राय दीयते ।

अत्र स्नातकव्रतत्वेन नित्यदानस्य कथनाद् दानदेशकालाः । नारदः,—देशकालविशेषात् फलविशेषः स्यादेव ! मलमासादिवर्जनस्याप्यत्रासम्भवः तस्य महादानविषयत्वात् । वृहद्दाने तस्मादेव देशकालापेक्षा । गीतायाम्,—

ॐ तत्सदिति निर्द्देशो ब्रह्मणस्त्रिविधः स्मृतः ।
तस्मादोमित्युदाहृत्य यज्ञदानतपःक्रियाः ॥
प्रवर्त्तन्ते विधानोक्ताः सततं ब्रह्मवादिनाम् ।

अत्र समाचारात् सङ्कल्पः ।

केचित्तु तस्माद् यः पुरुषो मनसाभिगच्छति तद्वाचावदति कर्म्मणा करोतीति स्मृतिः । क्रियमाणस्य कर्म्मणः पूर्व्वं वाचाभिलापे प्रमाणमिति तदसत् अनुवादकत्वेन लोकसाधारणकर्म्ममात्रे कदाचिदभिलापः कदाचिन्नेत्येवं रूपस्यानुवादात् । एकान्तेनाभिलापे मानाभावात् । यत्तु यज्ञो प्रजापतिर्वाचि व्याहृतायामिति प्रायश्चित्ताम्नानं तदपि लौकिकजनसमक्षवचनपरमेव । तथाच कल्पतरौ,—यो यक्ष्य इत्युक्त्वा न यजते तस्य त्रैधातवीया प्रायश्चित्तिरित्यत्र ऋत्विक्सन्दापनसम्भारादि कृत्वा यक्ष्य इत्यभिप्रायेति व्याख्यातम् । यत्तु वार्त्तिके रूपात्प्रायादिति सूत्रे इह खलु सर्व्वं क्रियमाणं मनसा सङ्कल्प्य वाचाभिलप्य क्रियत इति

लौकिकसाधारणकर्म्ममात्रे वाङ्मनसोर्यथाप्राप्तमेव व्यापारमनु-वदति। तस्मात् समाचारादेव सङ्कल्पः। एवञ्च सति यत्र काम्य-कर्म्मणि समाचारो नास्ति तत्राकरणेऽप्यदोषः।

योऽर्च्चितं प्रतिगृह्णाति ददात्यर्च्चितमेव वा।

इति मनुः। अर्च्चितं प्रतिगृह्णाति इत्यनेन द्रव्यार्च्चनं दातृ-कर्त्तृकमित्युक्त्वा ददात्यर्च्चितं पात्रमुद्दिश्य ददातीति पात्रस्यार्च्च-नमुक्तम्। तेन सम्प्रदेयार्च्चनं कृत्वा सम्प्रदानमर्च्चयित्वा दद्या-दित्यर्थः।

वृद्धवशिष्ठः,—

नामगोत्रे समुच्चार्य्य सम्प्रदानस्य चात्मनः।
सम्प्रदेयं प्रयच्छन्ति कन्यादाने तु पुंस्त्रयम्॥

स्मृत्यन्तरे,—

सङ्कीर्त्त्य देशकालादि तुभ्यं सम्प्रददेति च।
न ममेति स्वसत्ताया निवृत्तिमपि कारयेत्॥
अर्द्धसोमार्कग्रहणसंक्रान्त्यादौ च कालके।
गङ्गागयाप्रयागादितीर्थे देशे महागुणे॥
तथाचामुकगोत्राय तथाचामुकशर्म्मणे।
वेदवेदाङ्गयुक्ताय विशिष्टाय महात्मने॥
द्रव्यनाम गृहीतव्यं विष्णुरुद्रादिदैवतम्।
सर्व्वपापोपशान्त्यर्थं स्वर्गार्थं मुक्तिसिद्धये॥
एतत् तुभ्यं सम्प्रददे प्रीयतां मे हरिः शिवः।

अत्र कालपदेन मासपक्षतिथिवारनक्षत्रादीनामपि ग्रहणम्।

देशविशेषणत्वेन तीर्थं भारतवर्षादेरप्युपलक्षणम्। हरिः शिवः प्रीयतामिति सूर्य्यादेरप्युपलक्षणम्। विष्णुधर्म्मोत्तरे,—

द्रव्यस्य नाम गृह्णीयाद्ददानीति तथा वदेत्।
तोयं दद्यात् तथा दाता दाने विधिरयं स्मृतः॥

एवञ्च दानवाक्ये ददानीति पदं प्रयोज्यं सम्प्रददे पदं वा प्रयोज्यमिति द्वयोर्विकल्पः। स्मृतिः,—

अन्तर्जानु करं कृत्वा पुष्पं कुशतिलं तथा।
फलञ्च प्रतिसन्धाय प्रदद्यात् श्रद्धयान्वितः॥

अमुकोऽहमिति धर्म्मशास्त्रनामग्रहणं विश्वासार्थं श्रद्धारूपदानाङ्गसम्पादनायावश्यकं द्रव्यम्। श्रद्धासमन्वितमिति याज्ञवल्क्यस्मरणात्। एवं दत्ते उक्तप्रतिग्रहविधिना प्रतिग्रहे कृते पश्चाद् दक्षिणादानम्। दक्षिणादानस्य दृष्टसम्भवेऽदृष्टकल्पनानवकाशादधिकद्रव्यलाभे सम्प्रदानावधिरेव प्रयोजनमिति नान्यस्मै दक्षिणादानप्रसङ्गसम्भावनापि। तथा—

देवद्रव्यदत्तीयांशं दक्षिणात्वेन कल्पयेत्।
अनुक्तदक्षिणे दाने दशांशं वापि शक्तितः॥
सर्व्वेषामेव दानानां सुवर्णं दक्षिणेष्यते।
सुवर्णे हीयमाने तु रजतं दक्षिणेष्यते॥

अत्र सर्व्वेषामिति सर्व्वनामपदस्य विशेषरूपेणैव सुवर्णदानस्याप्युपस्थानात् सुवर्णदाने रजतसुवर्णयोर्विकल्पः। द्वयोर्विशेषत्वेन सामान्यविशेषबाधाभावादिति न सुवर्णदाने दक्षिणात्वेन रजतनियम इति। दक्षिणाभावे फलानां मूलानां भक्ष्याणां वा

दद्यादिति वचनादग्रतो माङ्गल्याय फलादि ज्ञेयम्। अत्र स्नातक-
व्रतमध्ये विष्णुसम्प्रदानकदानस्याग्रहणेऽपि

श्रुतिस्मृत्युदितं सम्यङ्निबद्धं स्वेषु कर्म्मसु।
धर्म्ममूलं निषेवेत सदाचारमतन्द्रितः॥

इति सामान्यतो मनुना स्वकीयवर्णाश्रमानुगतसम्यक्सदा-
चारस्य स्नातकव्रतत्वेनाम्नानात् सदाचारमध्ये च विष्णुभक्तेर्मूर्द्धा-
भिषिक्तत्वाविशेषतश्च

यत्कर्म्म कुर्व्वतोऽस्य स्यात् परितोषोऽन्तरात्मनः।
तत् प्रयत्नेन कुर्व्वीत विपरीतन्तु वर्ज्जयेत्।

इति स्वमनोविश्वासविषयकर्म्मणः स्नातकव्रतत्वाभिधानात्
सर्व्वविवेकिनाञ्च विष्णुभक्तेरेव मनोविश्वासविषयत्वाद् विष्णुभक्ति-
रूपत्वेन विष्णुसम्प्रदानकदानस्यापि स्नातकव्रतत्वम्।

किञ्च—

दानं धर्म्मं निषेवेत नित्यमैष्टिकपौर्त्तिकम्।

इत्यैष्टिकपदेन देवताप्रतिष्ठादिकर्म्मण एव विवक्षितत्वम्।
यज्ञानां पूर्व्वमुक्तेन पुनरुक्तिप्रसङ्गात्। तेन प्रतिमाप्रतिष्ठा प्रति-
ष्ठितप्रासादस्य प्रतिमायै दानं तदुपकरणद्रव्यदानञ्च देवतायै सर्व्व-
मैष्टिकपदेन लभ्यते। तत्र प्रासादविषये दद्यात्यर्थाश्रवणेऽपि
विष्णुधर्म्मोत्तरे—

यत्किञ्चिद्देव देवाय दद्याद् भक्तिसमन्वितः।
तदेवाक्षयमाप्नोति स्वर्गलोकञ्च गच्छति॥

इति सर्व्वद्रव्याणां दानम्। तदेव द्रव्यं परत्रानन्तं भोक्तुः

स्वर्गश्च विधीयते । प्रतिष्ठितप्रासादस्यापि दानं तेन प्रकारेण विहितमेव ।

ननु च प्रासादादिकरणस्य फलं श्रूयते न तु देवतायै प्रासाददानस्य ।

हयशीर्षे,—

अष्टेष्टकासमायुक्तं यः कुर्य्याद् वैष्णवं गृहम् ।
न तस्य फलसम्प्राप्तिर्वक्तुं शक्येत केनचित् ॥

वामनपुराणे,—

पितामहस्य पुरतः कुलान्यष्टौ तु यानि तु ।
तारयेद् वामनः सार्द्धं विष्णोर्मन्दिरकल्पकः ॥

नरसिंहपुराणे,—

यः कुर्य्याच्छोभनं वेश्म नरसिंहस्य भक्तिमान् ।
सर्व्वपापविनिर्मुक्तो विष्णुलोकमवाप्नुयात् ॥
प्रतिमां लक्षणोपेतां नरसिंहस्य कारयेत् ॥
सर्व्वपापानि सन्त्यज्य स तु विष्णुपुरे वसेत् ॥
प्रतिष्ठां नरसिंहस्य यः करोति यथाविधि ।
निष्कामो नरशार्दूल देहबन्धात् प्रमुच्यते ॥

हयशीर्षे,—

यो विष्णुं स्थापयेद् देवं सर्व्वदेवनमस्कृतम् ।
स्थापितं तेन सर्व्वस्माज्जगत्स्थावरजङ्गमम् ॥
अतीतान् दश पूर्व्वांस्तु तथैवानागतान् दश ।
आत्मानं सपरीवारं विष्णुलोकं नयेन्नरः ॥

कोटिजन्मकृतं पापं स्वल्पं वा यदि वा बहु।

तत्सर्वं भस्मसात् [भूतं] स्थापनाग्रधुघातिनः॥

तथा,—

प्रासादबिम्बद्रव्याणां यावन्तः परमाणवः।

तावद्वर्षसहस्राणि तत्कर्त्ता विष्णुलोकभाक्॥

एतत् पुण्यं कोटिगुणं भवेदारोपिते ध्वजे।

कुम्भाण्डवेदिबिम्बानां धारणाद् वायुनानघ॥

कपेऽस्य (?) वेष्टनात् ज्ञेयं फलं कोटिगुणं ध्वजात्।

विष्णुः,—यस्य देवस्यालयं करोति तस्यैव लोकमाप्नोति। सुधासितं कृत्वा यशसा विराजते। विचित्रं कृत्वा ब्रह्मलोकमाप्नोति। यमः,—

कृत्वा देवकुलं शुभ्रं प्रतिष्ठाप्य च देवताम्।

विधाय विविधं चित्रं तल्लोकं विन्दति ध्रुवम्॥

भविष्यपुराणे,—

प्रशस्तदेवभूभागे प्रशस्तभवनं रवेः।

कारयित्वाक्षयान् लोकान् स नरः प्रतिपद्यते॥

तथा,—

मार्दैष्टकशैलं वा यः कुर्य्याद् ब्रह्मणो गृहम्।

त्रिःसप्तकुलसंयुक्तो ब्रह्मलोके महीयते॥

तथा—

पक्वेष्टकासमायुक्तं यः कुर्य्याच्छङ्करालयम्।

विधूय पापं सकलं स गच्छेच्छङ्करालयम्॥

देवीपुराणे,—

देव्या गृहन्तु यः शक्त संस्कारयति शोभनम्।
उद्घाटयति स्वर्गस्य कवाटमर्गलान्वितम्॥
तस्मिन् घण्टां ध्वजं छत्रं वितानं दर्पणानि च।
दत्वा मुरजवंशादिनृत्यगीतादिकानि च॥
देवीशास्त्रार्थवेत्तारं पूजकन्तु नियोजयेत्।
दशपूर्व्वान् परांस्तात चात्मानं चैकविंशकम्॥
उद्धृत्य स कुलं पापाद् ब्रह्मलोके महीयते।

भविष्यपुराणे,—

मृण्मयात् कोटिगुणितं फलं स्याद् दारुभिः कृते।
कोटिकोटिगुणं पुण्यं फलं स्यादिष्टकामये॥
द्विपरार्द्धगुणं पुण्यं शैलजेतु विदुर्बुधाः।

विष्णुधर्म्मोत्तरे,—

ततो दशगुणं पुण्यं ताम्रेण त्रिगुणं ततः।
सहस्रगुणितं रौप्ये तस्मात् फलमुपाश्नुते॥
ततः शतसहस्रं वै सौवर्णे द्विजसत्तमाः।
अनन्तफलमाप्नोति रत्नचित्रे कृते नरः॥

एवं सर्व्वत्र प्रतिष्ठारूपं शिल्पादिपरद्वारा प्रासादप्रतिमाघटना-पूर्व्वकमाचार्य्यद्वारा स्थापनमेव फलार्थं विधीयते न तु प्रासाद-दानम्। सत्यं यथावचनमेव फलावगतेः प्रतिष्ठाकर्म्मण एव फलम्। घटनादिकन्तु होमादिवत् तदङ्गम्। तथापि घटितस्य प्रासादादेर्निवृत्तौ यथेष्टद्रव्यव्यवहारप्रसङ्गात् पूर्व्वोदाहृतसामान्य-

द्रव्यदानवाक्याच्च यज्ञावभृथो यागद्रव्यार्थमण्डपमित्यादियाग-समाख्यानाच्च देवतोद्देशेन सोपकरणप्रतिष्ठितप्रतिमासहितप्रासा-दोत्सर्गः शास्त्रीय उत्सर्गस्यापि च पृथगेव फलं विधिसंयोगभेदा-देव। तथा,—

स्वर्गार्थस्यापि होमस्य दधिरे साधनं तदा।

इन्द्रियफलकं विधिप्रामाण्यादवगम्यते। श्रुत्याद्यभावाच्च। प्रासादयागतत्प्रतिष्ठयोर्नाङ्गाङ्गीभावः द्वयोरपि फलसाधनाङ्गत्वेन निराकाङ्क्षत्वात्। तथाच लिङ्गं दृश्यते। हयशीर्षे ध्वजप्रतिष्ठा-नन्तरम्—

ध्वजदानेन चाप्नोति स्वर्लोकं शक्रदुर्लभम्।

इति। तथा देवीपुराणे,—देवीगृहं त्यक्त्वा—

तस्मिन् घण्टां ध्वजं छत्रं वितानं दर्पणानि च।
दत्वा मुरजवंशादिनृत्यगीतादिकानि च॥

इत्युपकरणेषु दानमनुवदन् गृहस्यापि दानं सूचयति। विष्णुधर्म्मोत्तरे स्पष्टं वचनम्—

कूटागारं तथा दत्वा नगराय पतिर्भवेत्।
दत्वा तु देवकर्म्मार्थं नवां देवीं हर्म्यं शुभाम्॥ (?)
पार्थिवत्वमवाप्नोति देवो हि पृथिवीपतिः।

वासः कूटो द्वयोः शालेति कोषाद् विष्णुप्रतिमानिवास-योग्यं गृहं दत्वा नगराधिपतिरित्युक्ते प्रासादमण्डपगृहेषु सर्व्व-प्रकारं प्रतिमास्थितियोग्यगृहदानं विहितम्। पूर्व्वोक्तवाक्याच्च—

मृण्मयाद्दारुघटिते फलं कोटिगुणं भवेत्।

इति। एवं रत्नपर्य्यस्तगृहे फलविशेष ऊहनीयः। एवं प्रतिमाद्रव्यविशेषात् फलविशेषः। तथा प्रतिमापरिमाणविशेषेण फलविशेषः। योगशिवीये,—प्रासादवाह्यप्रतिमा प्रासादप्रतिमा गृहप्रतिमेति त्रिधा प्रतिमामाह।

महार्च्चान्तःस्थिता वाह्ये हस्तमानात् सपिण्डिका।

तथा,—

सर्व्वोत्तमेषुकोणैः स्यात् त्रिरामैर्मध्यमोत्तमा।
कन्यसाग्रा चमायुग्मैः करैर्वाह्ये समुच्छ्रिताः॥
इयं इयमधोऽधोऽपि चतुष्करपरिच्युतैः।
सान्तरा हस्तदानेन रसरामैर्दशान्तिकम्॥

प्रासादं विनैव वाह्ये प्रशस्तस्थाने या प्रतिमा स्थाप्यते सा महाप्रतिमा सा हस्तमानेन पञ्चचत्वारिंशद्धस्तमिता श्रेष्ठोत्तमा पिण्डिका तस्या तावद्धस्ता। एवं मध्यमोत्तमा त्रयस्त्रिंशद्धस्ता। एवं कनिष्ठोत्तमा एकविंशतिहस्ता। चतुर्हस्तहान्या इयं इयं त्रयोदशहस्तेन कनिष्ठकनिष्ठिका। सप्तदशहस्तेन मध्यमकनिष्ठा। एवमूनत्रिंशद्धस्तेन मध्यममध्यमा। पञ्चविंशद्धस्तेन कनिष्ठमध्या। सप्तत्रिंशद्धस्तेन कनिष्ठोत्तमा। एकचत्वारिंशद्धस्तेन मध्यमोत्तमा। एवं नवविधा। दशहस्तावधि एकैकहस्तवृद्ध्या पञ्चचत्वारिंशद्धस्तपर्य्यन्तं वा षट्त्रिंशद्। वाह्यप्रतिमा। लिङ्गमप्येवं रूपेण। एतासां प्रतिष्ठादिविधिना प्रतिष्ठामात्रं मात्र तदूर्द्ध्वं पूजादिनियमः। प्रतिष्ठामात्रादेव देवताङ्गपरमाणुसंख्यकल्पसहस्रपर्य्यन्तं तद्देवलोकावाप्तिः फलम्।

तदुक्तं तत्रैव—

दारुमृद्ग्रावताम्रादि तथा हेमादिरूपिणाम्।
देवीप्रासादलिङ्गानां यावन्तः परमाणवः॥
तावत् कल्पसहस्राणि निजदेवालये वसेत्।
दार्व्वादिभिः क्रमेणैव द्विगुणं द्विगुणं भवेत्।
मणिरत्नविशेषे स्यात् फलमूर्द्धं पृथक् पृथक्॥

लिङ्गपदमत्र लिङ्गप्रतिमासाधारणम्। तथा प्रासादप्रतिमा। तत्रैव,—

कर्त्तव्या गर्भरूपेण प्रतिमेष्टा सुरालये।
नवहस्तात्रिहस्तान्ता ज्येष्ठमध्यकनीयसी॥
हस्तद्विनवहस्तान्ता पादहस्तेन सान्तरा।

अस्यार्थः—प्रासादे प्रतिमाहस्तमानेन दारुमानेन गर्भमानेन वा त्रिहस्ता कनिष्ठोत्तमा। षड्हस्ता मध्यमोत्तमा। नवहस्तोत्तमोत्तमा। तथा कनिष्ठकनिष्ठा हस्तमिता। कनिष्ठमध्यमा द्विहस्ता। कनिष्ठोत्तमा त्रिहस्ता। मध्यमकनिष्ठा चतुर्हस्ता। मध्यममध्या पञ्चहस्ता। मध्यमोत्तमा षड्हस्ता। सप्तहस्ता कनिष्ठोत्तमा। अष्टहस्ता मध्यमोत्तमा। नवहस्ता उत्तमोत्तमा। एवं नव भवति। एकहस्तादिषट्षडङ्गुलहृद्धा सान्तरा प्रतिमाः सप्तविंशतिः। सम्भूय षट्त्रिंशद्भेदाः। एवं द्वारदैर्घ्यं त्रिधा विभज्य तद्भागद्वयेन प्रतिमा द्वाराणां दैर्घ्यानुरूपेण भिद्यते। प्रासादगर्भस्य कोणात् कोणं विभज्य तत्तृतीयांशेन प्रतिमा गर्भभेदाद् भिद्यन्ते। एवमासां प्रतिमानां तद्भेदेन फलभेदः।

शिलामृद्दारुलोहोत्था त्रिधैकैका पुनर्मता।

लोहा अयःप्रभृतिसुवर्णान्तास्तेषां सारविशेषात् फलविशेषः।

हयशीर्षे तु—

लेपजा * * * चान्या चित्रजा पुष्पजा तथा।
शैलजा वृक्षजा चैव शस्त्रोत्कीर्णा तथैव च॥
स्फाटिकी प्रतिमा शस्ता राजपट्टप्रवालजा।
मणिजा रत्नजा गन्धा सर्व्वकामफलप्रदा॥

सौरकाण्डे,—

एकहस्तादिहारभ्य यावद्धस्ता नव द्विज।
कन्यसा मध्यमा ज्येष्ठा प्रतिमा स्यात् त्रिभिस्त्रिभिः॥

एतासां प्रतिमानां प्रासादे प्रतिष्ठा विशिष्टफलदा।

---

## प्रतिष्ठानन्तरं तत्र पूजादिनियमः।

पूजोपयोगिद्रव्यस्य यावत्कालं दानम्। तथाच नरसिंह पुराणे,—

नारसिंहं प्रतिष्ठाप्य यः पूजामारभेद् द्विजः।
तस्य कामाः प्रसिद्ध्यन्ति पुत्रपौत्रादयो भुवि॥

हयशीर्षे,—

एकाङ्गुलात् समारभ्य यावद्धस्तं गृहे शुभम्।

मत्स्यपुराणे,—

अङ्गुष्ठमात्रादारभ्य वितस्तिर्यावदेव तु।
गृहेषु प्रतिमा कार्य्या नाधिका शस्यते बुधैः॥

योगप्रिवीये,—

अङ्गुलादिवितस्त्यन्ता क्वचित् तिथ्याङ्गुलान्तिका।
क्वचिच्च जिनपर्य्यन्ता क्वचिद्बिन्दुयुगाङ्गुला॥

तिथ्याङ्गुला पञ्चदशाङ्गुला। चतुर्विंशतिपर्य्यन्ताङ्गुला जिनपर्य्यन्ता। बिन्द्वङ्गुला त्रिंशदङ्गुलपर्य्यन्ता वेत्यर्थः। एतासां प्रतिमानां गृहे स्थापयित्वा पूजनम्। तदुक्तं हयशीर्षे,—

प्रतिष्ठितापि न त्याज्या यावज्जीवं समर्चयेत्।

---

## अथ प्रासादविशेषाः।

हयशीर्षे,—

वैराजपुष्पकैलासा मणिकोऽथ त्रिपिष्टकः।
पञ्चैते मेरुशिखरे क्रमेणैव व्यवस्थिताः॥
आद्यो वेदास्रकस्तत्र चित्रे वस्रायतोऽपरः।
वृत्तवृत्तायतौ चाद्यावष्टास्रः पञ्चमो मतः॥
भिद्यते नवधा भेदे त्वेकैको न संशयः।
एवं भवन्ति प्रासादाश्चत्वारिंशच्च पञ्च च॥
तत्राद्यः कथितो मेरुर्मन्दरस्तु द्वितीयकः।
विमानो भद्रकश्चैव सर्व्वतोभद्रकस्तथा॥
रुचिको नन्दकश्चैव नन्दिवर्द्धन एव च।
श्रीवत्सश्च नवैते ये वैराजे तु समुत्थिताः॥

अयमर्थः,—चतुरस्राः प्रासादा वैराजसंज्ञका भवन्ति। तत्र चोत्तमादिक्रमेण मेरुप्रभृतयो नव।

तथा,—

वड़भीच्छन्दराजौ तु तथा शालागृहोऽपरः।
मन्दरश्च विशालश्च ब्रह्ममन्दिर एव च॥
भवनः प्रभवश्चैव शिविका वेश्म एव च।
नवैते सुरशार्दूल कीर्त्तिताः पुष्पकोद्भवाः॥

अयमर्थः—चतुरस्रायताः प्रासादाः पुष्पसंज्ञकाः। तत्र चोत्तमादिक्रमेण वड़भीप्रभृतयो नव।

वलयः प्रथमो नाम द्वितीयो दुन्दुभिः स्मृतः।
तथा पद्ममहापद्मे मुष्टिकस्वस्तिकौ तथा॥
शङ्खश्च कलशश्चैव श्रीवृक्षश्च तथा परः।
वृत्ता नवैते कैलाससम्भवाः परिकीर्त्तिताः॥

एतेषां वृत्तानां नवानां कैलाससंज्ञा।

गजो वृषो हंसनामा गरुड़ो सिंह एव च।
भूषणो भूधरश्चैव श्रीजयः पृथिवीधरः॥
वृत्तायता नवैतेऽपि कीर्त्तिता मणिकोद्भवाः।

नवानां मणिकसंज्ञाविशेषसंज्ञा चोत्तमादिक्रमेण गजादयः।

तथा,—

वज्रचक्रौ स्वस्तिकश्च वज्रस्वस्तिक एव च।
चक्रस्वस्तिकनामा च गरुड़ो गद एव च॥

श्रीकण्ठो विजयश्चैव त्रिपिष्टपसमुद्भवाः।

अयमर्थः,—अष्टावत्रप्रासादा न च तेषां त्रिपिष्टपसंज्ञा विशेष-संज्ञा चोत्तमादिक्रमेण गजादयः। पञ्चविधेषु उत्तमा मेर्व्वा-दयः। पञ्चाशद्धस्तविस्तृताः शतहस्तोच्छ्रिताः। अन्ये पञ्च पञ्च ह्रासक्रमेण।

लिङ्गकाण्डे,—

त्रयस्त्रिंशत् समारभ्य यावत् पञ्चाशसंख्यया।
ज्येष्ठमेतत् तत्प्रासादं ज्येष्ठं लिङ्गं निवेशयेत्॥
करषोड़शमारभ्य यावद् द्वात्रिंशद्धस्तकम्॥
मध्यमं कथितं धाम तत्र लिङ्गन्तु मध्यमम्।
चतुर्हस्तात् समारभ्य यावत् पञ्चदश द्विज॥
प्रासादं कन्यसस्तत्र कन्यसं स्थापयेच्छ्रदम्।
मध्यमेषु भवेद् ज्येष्ठं कन्यसं मध्यमेषु च।

एवं विस्तारमुक्त्वा उच्चतामाह,—

सुरधाम्नान्तु सर्व्वेषां विस्ताराद् द्विगुणोच्छ्रयः।
सार्द्धद्विगुणो वापि सपादद्विगुणोऽपि वा॥

एवं मेरुप्रासादः पञ्चाशद्धस्तविस्तृतः। शतहस्तोच्छ्रित इत्युक्तं भवति।

शतशृङ्गः स्मृतो मेरुचतुर्द्वारो मनोहरः।
भूमिको षोड़शैर्युक्तो विचित्रशिखरोज्ज्वलः॥
द्विषट्कभौमो बहुभिः शिरोभिर्मन्दरः स्मृतः।
चतुर्मुखस्त्रिभौमस्तु अनेकशिखरोज्ज्वलः॥

नन्दिवर्द्धनसंज्ञोऽयं विशालच्छन्दकं शृणु।
चतुर्द्वारोऽष्टभौमश्च शिखरानेकसंयुतः॥
एवमादिलक्षणानि विस्तरभयान्नेह लिख्यन्ते।

---

## तथा प्रासादविशेषे देवताविशेषाः।

चतुष्कोणात्मकश्चैव चतुः प्राक् शिवमण्डपः।
चतुर्मुखस्य लिङ्गस्य तथा पद्मासनस्य च॥
त्रिमुखस्य तु लिङ्गस्य तथा त्रिशिरसो हरेः।
एकद्वारः समाख्यातस्तथान्येषां दिवौकसाम्॥
वृत्तो रुद्रप्रियो नित्यमात्मनश्च मधुद्विषः।
विष्णोर्भवति चेष्टा सा दृष्टास्तेलमुखस्तु यः॥ (?)
वृत्तायतास्तथा ये च चतुरस्राकृतास्तु ये।
शयितस्य हरे स्ते तु भैरवस्य वृषाकपेः॥
एकद्वारास्तु ते सर्व्वे चण्डिकायास्तु ये प्रियाः।
हंसे प्रजापतिः स्थाप्यो वृषे देवो महेश्वरः॥
गरुत्मति तथा कृष्णः सर्व्वकल्याणमिच्छता।
गजे सुरेश्वरः स्थाप्यो घटे नित्यं जलेश्वरः॥
वराहश्चापि कलशे वड़भ्याञ्च नृकेशरी।
मन्दरे धनदस्तद्वन्मन्दरे कुसुमायुधः॥
श्रीभवान्यौ सदा विप्र वड़भ्यां स्थापिते शुभ।
सर्व्वत्र स्थापयेल्लिङ्गमव्यक्तं लिङ्गमेव च॥

सर्व्वत्र स्थापयेद् विष्णुं स्थितं चक्रगदाधरम् ।
सर्व्वे सर्व्वत्र वा देवा स्थापनीया यथाविधि ॥
प्रासादेषु च सर्व्वेषु बाणलिङ्गं निवेशयेत् ।

हयशीर्षे,—

यो लिङ्गं स्थापयेदेकं सम्यक् श्रद्धासमन्वितः ।
न तस्य फलसम्प्राप्तिर्वक्तुं शक्येत केनचित् ॥
यदि वक्त्रसहस्राणां सहस्राणि भवन्ति हि ।
आयुश्च ब्रह्मणस्तुल्यं वक्तुं शक्ये न विस्तरम् ॥
किं तत्रोद्देशतो वत्स यद्वक्ष्यामि च तत् शृणु ।
सर्वयज्ञफलं प्राप्य सर्व्वतीर्थतपःफलम् ॥
शिवलोके वसेद्धीमान् यावदाभूतसंप्लवम् ।
भिन्ने देहे स तत्रैव लीयते परमात्मनि ॥

इति सामान्यलिङ्गस्थापनफलम् ।

तस्य च महत्त्वेन द्रव्यविशेषे फलविशेष उक्तः । बाणलिङ्गे विशेषः । हयशीर्षे,—

वैदिकेन विधानेन यथावत् स्थापयेत्तु यः ।
सहस्रमेकं लिङ्गानां प्रासादे चोत्तमोत्तमे ॥
तत्फलं कोटिगुणितं बाणलिङ्गे निवेशिते ।

मयसङ्ग्रहे,—लिङ्गप्रतिष्ठानन्तरम्—

एवमुक्तक्रियायोगं साधको लिङ्गमाश्रयन् ।
प्राप्नोत्यभिमतान् लोकान् मोक्षार्थी मोक्षमाप्नुयात् ॥

भवत्सागरसंहितायां प्रतिष्ठानन्तरम्,—

या या प्रतिष्ठिता मूर्त्तिस्त्रिकालञ्च तदर्चनम्।
कर्त्तव्यमिति यत्नेन प्राहुरागमराशयः।

प्रतिष्ठाङ्गत्वेन पूजायामवधिः—

अवधिर्बोधकः प्रोक्तस्तथा षाण्मासिकोऽवधिः।
मासिकः पाक्षिकश्चेति नित्यपूजाविधिक्रमः॥

तथा,—

अथातः सम्प्रवक्ष्यामि प्रतिष्ठापितमूर्त्तिषु।
यथायथा प्रकर्त्तव्या पूजा साधकसत्तमैः॥
देवस्याग्नेयदिग्भागे नैवेद्यं स्थापयेच्छुभम्।
भक्ष्यं भोज्यं तथा लेह्यं पेयञ्चैव चतुर्विधम्॥
तत्र प्रस्थानां सहस्रं नैवेद्यमुत्तमार्चासु।
त्रिंशतं मध्यमोत्तमे कनिष्ठोत्तमे शतप्रस्थम्॥

मध्यमप्रतिमात्रये उत्तमे शतन्यूनं मध्यमे चतुःषष्टिः कनिष्टे द्वात्रिंशत् प्रस्थं कनिष्ठप्रतिमात्रये षोड़शप्रस्थं द्वादशप्रस्थं चतुःप्रस्थं एवं यथा भवति तथा पाकं देवालये कारयित्वा तत्र वैश्वदेवं तदुक्तविधिना कृत्वा नैवेद्यबलिदानादिकं कार्य्यमित्युक्तम्। प्रस्थः षोड़शपलम्।

एवं देवालयं कृत्वा तत्फलार्थं विष्णुसम्प्रदानकदानमिति। नरसिंहपुराणे,—गरुड़सहितध्वजदानेन विष्णुलोकप्राप्तिः। कपिलागोदाने गोसहस्रदानफलम्। वामनपुराणे,—बहुविधभोगार्थं फलान्वितान्नदानम्। विष्णुधर्म्मोत्तरे,—विष्णुलोकप्राप्तये विष्णुकथापुस्तकदानम्। ब्रह्मलोकमहित्वकामनया पुराण-

वाचकदक्षिणादानपूर्व्वकं पुराणपुस्तकदानम्। पार्थिवत्वकामनया पूजाद्रव्यस्थापनार्थं वेदिकादानम्। स्वर्गद्वाराधिकरणाय तोरण-दानम्। गणेशत्वकामनया नानाविधशिल्पभाण्डदानम्। वारुण-लोकाय कुम्भदानम्। चतुःकलशसागरदानम्। चतुःसागरान्तः पृथ्वीदानफलम्। वारिधानीदानं वारुणलोकदम्। कमण्डलु-दानं गोदानफलदम्। पूजोपयोगिनानाविधपानादिदानं यज्ञ-फलाय। माल्याधारपुष्पाधारधूपाधारगन्धाधारपात्रदानं काम-पात्रतायै। शुक्तिशङ्खतैजसपात्रदानं पूर्व्ववत्। पापक्षयार्थं पतद्-ग्रहदानम्। पतद्ग्रहः परिवा इति प्रसिद्धः। सर्षपदानं रूप-लाभार्थम्। देवाङ्गमार्ज्जनाय चित्रकूर्चदानं सन्तापशान्तये। श्रीकामस्य चामरकूर्चदानम्। आसनपादपीठदानम्। सर्व्वत्र स्थानलाभः फलम्। खट्टादानं शाश्वतस्थितिफलम्। उत्तर-च्छदादिदानं सर्व्वकामावाप्तये। सर्व्वपापक्षयार्थं वितानदानम्। सूत्रसमसंख्यवर्षसहस्रमितस्वर्गाय कार्पासवस्त्रयुग्मदानम्। महा-रजनरक्तवस्त्रदानं सौभाग्यफलम्। कुसुम्भरक्तवस्त्रदानं श्रीभव-त्वाय। नीलीव्यतिरिक्तवस्त्रदानं व्याधिनाशाय। दूकूलदानमग्नि-ष्टोमफलदम्। अश्वमेधफलाय कौषेयमृदुवस्त्रदानम्। तूलपटी-दानं पूर्व्वफलाय। नानाविधविचित्रदानं राजसूयफलदम्। आभरणदानमग्निष्टोमफलदम्। मुकुटदानं श्रेष्ठत्वफलम्। किरीट-दानं राजसूयफलम्। सर्व्वत्र स्मृतिलाभाय कर्णपूरदानम्। कर्णा-भरणदानं श्रीधरत्वफलम्। ग्रैवेयकदानं सर्व्वशास्त्रज्ञानाय। केयूर-दानं शत्रुक्षयाय। सौभाग्यायाङ्गुलीयकदानम्। अङ्गददानं

राज्यदम्। नूपुरदानं सर्व्वत्र स्थानदम्। पादाङ्गुलीयकदाने गुह्यकाधिपत्यम्। छत्रचामराद्यसाधारणराजलिङ्गदानं राज्यदम्। पादुकादानमुत्तमगतये। उपानद्दानं विमानाधिरोहणदम्। पाद्यदानं गोदानफलम्। आचमनीयदानान्निर्म्मलत्वम्। मधुपर्कदानं मधुक्षीरघृताप्तये। गोदानं विशिष्टस्वर्गदम्। गन्धतैलादिस्नानीयदानं गन्धर्व्वलोकलाभाय। वस्त्रदानं पूर्व्वमुक्तम्। यज्ञोपवीतदानं ब्रह्मदानफलदम्। कुङ्कुमचन्दनादिलेपनदानं रूपलाभाय। विष्णुधर्म्मे,—सुगन्धिमनोज्ञपुष्पदानं उत्तमभागवतत्वाय। विष्णुधर्म्मोत्तरे,—ग्रामप्राप्तये पुष्पवृक्षदानम। नगरप्राप्तये फलवृक्षदानम्। सगुग्गुलशर्करधूपदानं सर्व्वपापक्षयफलं नरसिंहपुराणीयम्। विष्णुधर्म्मोत्तरे,--कर्पूरदीपदानं कुलोद्धरणमश्वमेधफलदम्। पट्टसूत्रगन्धतैलदीपदानं नीरोगत्वसुभगत्वदम्। विष्ण्वालये दीपमालादानं चन्द्रास्पददम्। दीपवृक्षदानं स्वर्गे लक्ष्मीवाप्तिदम्। दीपागारदानं शक्रास्पददम्। एकादशद्वादशरात्रमभिव्याप्य दीपदानं सुवर्णमणिमुक्ताढ्यदीपान्वितविमानदम्। तथा,—महावर्त्तिदानं कृष्णपक्षे कार्त्तिके विशेषतः। तथाप्यमावास्यायां द्वादश्यां वा पूर्व्वदिने शेषेऽपि महावर्त्तिदानं वासुदेवस्य पार्श्वयोर्दक्षिणपार्श्वेऽष्टोत्तरशततैलपलपूर्णपात्रे समग्रं महारजनरक्तं वस्त्रं प्रवेश्य ज्वालयेत्। वामपार्श्वे तावद्घृतपात्रे तादृशं वस्त्रं प्रक्षिप्य ज्वालयेत्। स्वर्गरुचिरस्वर्गभोगोत्तरदम्। एकवर्त्तिदाने तदर्द्धफलम्। स्मृत्यन्तरे,—भक्ष्यभोज्यलेह्यपेयचतुर्व्विधनैवेद्यदानं विशिष्टस्वर्गदम्। स्कन्दपुराणीयं ताम्बूलदानं परि-

शुद्धिफलम् । पुनर्विष्णुधर्मोत्तरे, छत्रदानं राज्यदम् । तालवृन्तदानं सुखदम् । चामरदानं श्रीप्रदम् । पताकादानं वायुलोकप्रदम् । नीलपताकायुततालध्वजदानं राज्यदम् । मकरध्वजयुतश्वेतपताकादानं वरुणलोकदम् । रक्तपताकायुतहरिणध्वजदानं पापक्षयदम् । शिविकादानममरावतीप्रदम् । अश्वदानं स्वर्गलोकदम् । हस्तिदानं स्वर्गभोगपूर्वकभूराज्यदम् । अनडुद्दानं दशधेनुदानफलाय । अजाविमहिषीखरोष्ट्राश्वतरदानं वरुणलोकप्राप्तिसहस्रगुणितफलम् । आरण्यमृगपक्षिदानमग्निष्टोमफलदम् । दासीदानं स्वर्गभोगफलपूर्वकसुखज्ञानदम् । नृत्यगीतविशारदगणिकादानममरावतीप्रदम् । नृत्यसङ्कल्पं देवायतने कारयित्वा रुद्रलोकप्राप्तिः । श्रीनृत्यकरणं ब्रह्मलोकमहित्वदम् । गीतकरणाय द्रव्यं दत्वा कारयित्वा वा गन्धर्वलोकावाप्तिः । वाद्यदानं स्वर्गलोकावाप्तये । दुन्दुभिदानं कीर्त्तये । धान्यशस्यबीजदानं तस्य तस्यायुषः प्राप्तये । रम्यशाकादानं विशोकत्वाय । तथा व्यञ्जनोपकरणमुद्गादिदानं फलद्रुमदानञ्च गणाधिपत्यदम् । प्रतिमाचित्राद्याश्चर्य्यकारणप्रेक्षणीयवस्त्रदानं सुखलाभाय । रूप्यदानं रूपदम् । सुवर्णदानं सर्व्वकामाप्तये । अत्र च दानमात्रफलाय देवतोद्देशेन विधीयते । ददातिश्च यद्यपि स्वीकारान्तस्तथापि देवतायाः प्रतिग्रहीतृत्वाभावेऽपि तदुद्देशत्यागमात्रे गौणत्वं ददातेः कल्प्यते । विधिवाक्यशेषबलाच्च दीयमानद्रव्यस्य प्रतिमायां विनियोगः क्रियते ।

गन्धस्य लेपनं पुष्पस्य शिरसि दानं अलङ्करणस्याङ्गेषु धारणमेवं-

कमेव तेनात्र दानक्रिया। विष्णुलोकावाप्तये नरसिंहपुराणीय ध्वजदानमहं करिष्ये इति सङ्कल्पः। ध्वजपूजनं विष्णुमुद्दिश्य पूजनं विष्णवे ददानीति त्यागः। कृतैतद्दानप्रतिष्ठार्थं हिरण्यं दक्षिणां विष्णवे ददानीति सुवर्णदानम्। एवं दानं कृत्वा ध्वजस्य देवालयोपरि धारणम्। दक्षिणा सुवर्णस्य। देवागारे कोणदेशे स्थापनम्। देवद्रव्यं त्वया रक्ष्यमिति विष्वक्सेनस्य प्रतिष्ठाकाले प्रार्थनात्। एवं भूषणदानादौ। दानोत्तरं भूषणस्य प्रतिमाङ्गे धारणम्। एवमन्यद्रव्यम्। पूजोपयोगिनाञ्च पूजाकाले विनियोगः। नैवेद्यपाकस्य देवालये विहितत्वात्तदुपयोगि धान्यादि दत्वा तत्पाकादौ विनियोज्यम्।

यत्तु नरसिंहपुराणे—

चन्दनागुरुश्रीखण्डचन्दनैरच्युताकृतिम्।
विलिप्य भक्त्या राजेन्द्र कल्पकोटि वसेद् दिवि॥

यच्च—

ईदृशेनापि चैकेन पद्मेन मधुसूदनम्।
यदा कदाचिदभ्यर्च्य नरो विष्णुपुरं व्रजेत्॥

इति तत् पूजाप्रकरणाद् बहिर्यद्यपि श्रूयते तथापि वाक्येन पूजासम्बन्धे जुहू पर्णमयी न्यायेन फलश्रुतेरर्थवादत्वम्। यद्वा पूजाप्रकरणे पूजाङ्गत्वेन विहितानां पद्मादीनां पुनरनारभ्यवादे फलश्रवणपूर्व्वकं विधानम्। न दानरूपमर्चयति श्रवणात्। मध्याप्रकरणतो गुणफलसम्बन्धे वाक्येनैव पूजासम्बन्धे वाक्यभेदापत्तेः। किञ्च फलञ्च कर्म्मसन्निधाविति न्यायेन पद्मार्च्चनं गन्धानुलेपनं वा

क्रियारूपमेव फलार्थं विधीयते । तत्र च दानत्वाभावान्न दक्षिणा-दानादिरूपा दानेतिकर्त्तव्यता । न च पूजायां पञ्चोपचारत्व-नियमः । केवलगन्धादिसमर्पणस्य पूजात्वात् प्रीतिहेतुक्रियामात्रे पूजाशब्दप्रयोगात् ।

तदुक्तं—

स्तुतेरपि हि पूजात्वाज्जायेत यदि वाच्यता ।

इति । यस्य प्रकरणात् स्नानं नास्ति तस्यारभ्य विधानादपि पूजा-सम्बन्धे फलश्रुतेरर्थवादत्वम् । फलाश्रवणे स्पष्टपूजाङ्गत्वम् । यत्र तु पूजाप्रकरणाद् बहिरेव केतकीपुष्पं यो ददातीत्यादिरूपेण पुष्पदानं तत्र दानेतिकर्त्तव्यतया दानम् ।

प्रतिष्ठा च देवानां संक्षेपान्नरसिंहपुराणोक्ता । तत्रादौ मत्स्य-पुराणोक्तविधिनाऽर्घ्यः । प्रथमं भूमिसमकरणम् । मातेव पुत्र-मिति बलीवर्दपूजा । युञ्जान इति बलीवर्दयोजनम् । फालसाम्ना फालयोजनम् । शुनंसु फाला इति लाङ्गलपूजा । युनक्ति सीरेति हलवाहनम् । इने दावेति पीडनम् । इदं भूमिं यां विद्या महीस्याम भूरसि या ओषधीः एतैर्बीजावापः । धान्ये प्ररूढे गोभिः खादनम् । तत्र शुभदिने वास्तुपूजा । एकाशीतिपदवास्तु-लिखनम् । मध्ये नव पदम् । प्रान्तपंक्तिचतुष्टयमध्यमपञ्च-कोष्ठानां स्वस्यान्तरालकोष्ठेन एकीकरणम् । ईशानादिबहिर्द्वा-त्रिंशत्कोष्ठेषु द्वात्रिंशद्देवता ।

शिखी चैवाथ पर्जन्यो जयन्तः कुलिशायुधः ।

सूर्यसत्यभृशाकाशा दिशि प्राच्यां व्यवस्थिताः ॥

अग्निः पूषाथ वितथो गृहक्षेत्रयमावपि ।
गन्धर्व्वभृङ्गराजौ च मृग एते तु दक्षिणे ॥
प्रतीच्यां प्रथमं पितृगणा दौवारिकस्ततः ।
सुग्रीवः पुष्पदन्तश्च पञ्चमस्तु जलाधिपः ॥
असुरश्च तथा शेषो वायुरेते प्रकीर्त्तिताः ।
रोगाहिमुख्यभल्लाटाः सोमसूर्य्योऽदितिस्तथा ॥
दितिश्चैतास्तु विज्ञेया दिश्युदीच्यां व्यवस्थिताः ।

अन्तःकोष्ठस्तु ईशानो द्वितीयकोणकोष्ठे आपः । अन्तराग्नेय-कोणकोष्ठे सावित्रिः । नैर्ऋतकोणकोष्ठे जयः । वायव्यकोणकोष्ठे रुद्रः । मध्यनवपदस्य पूर्व्वत्रिपदे अर्य्यमा । आग्नेयतृतीयकोण-कोष्ठे सावित्रिः । नवपददक्षिणत्रिपदे विवस्वान् । नैर्ऋत-तृतीयकोणकोष्ठे विबुधाधिपः । नवपदपश्चिमत्रिपदे मित्रः । वायव्यतृतीयकोणकोष्ठे राजयक्ष्मा । नवपदोत्तरत्रिपदे पृथ्वी-धरः । ईशानतृतीयकोणकोष्ठे आपवत्सः । मध्ये नवपदे ब्रह्मा । एषां गन्धादिभिः पदार्थानुसमयेन पूजा । ततः पायसबलिः । एष पायसबलिः शिखिने नम इति मन्त्रेण गृह्योक्तविधिनाग्नि-मुपसमाधाय शिख्यादिभ्यो दश दश ब्राह्मणे शतं होमः । तत आग्नेये उक्तरीत्या ब्रह्मस्थाने विष्णुपूजनम् । श्रीपूजनम् । गणेश पूजा । वास्तुपुरुषपूजा । मध्ये वस्त्रयुग्मच्छन्नपञ्चरत्नपञ्चपल्लव-शोभिततीर्थजलपूर्णार्घ्यकुम्भस्थापनम् । तदुत्तरे ताम्रकर्करी । तत्र ब्रह्मपूजा । दिक्षिन्द्रादिपूजा । कर्करीं गृहीत्वा प्रासाद-सीमाप्रादक्षिण्येन जलधाराभ्रामणम् । जलधारायां सप्तबीज-

वपनम्। वास्तुमध्ये हस्तमात्रखाते चतुरङ्गुलगर्त्ते चन्दनाद्यैर्लिप्ते विष्णुं ध्यात्वार्घदानम्।

भूतानि राक्षसाश्चैव येऽत्र तिष्ठन्ति केचन।
सर्व्वे ते व्यपगच्छन्तु [१]वास्तुं गृह्णाम्यहं हरेः॥

इति मन्त्रे कर्करीजलेन गर्त्तपूरणम्। तत्र[२] रत्नपुष्पाक्षतन्यासः। दक्षिणावर्त्ते शुभम्। बीजैर्म्मृद्भिर्गर्त्तपूरणम्। ततः पादसंस्कारः स्मार्त्तेन विधिना। शिलाचतुष्टयस्येष्टकाचतुष्टयस्य वास्तेण क्षालनम्। पुनर्वक्ष्यमाणनन्दादिमन्त्रैः क्षालनम्। शिततण्डुलेषु स्थापनम्। नन्दायै नमः। भद्रायै नमः। जयायै नमः। पूर्णायै नमः। इत्येतैर्मन्त्रैर्गन्धाद्यैः पूजा। कोणेषु खातचतुष्टयम्। तत्र स्थाने मन्त्रः।

नन्दे नन्दिनि पुष्पं रक्ष स्थापयाम्यहम्।
अस्मिन् संतिष्ठ यावदाचन्द्रतारकम्॥
आयुष्कामं श्रियं मन्ये ददासि सर्व्वदा नृणाम्।
अस्मिन् रक्षा सदा कार्य्या [३]प्रस्तावे रक्ष सर्व्वदा॥

इतीशाने।

भद्रे त्वं सर्व्वदा भद्रं पुंसां कुरु शुभावहाः।
आयुष्कामप्रदे देवि श्रीप्रदा सर्व्वदा भव॥

इत्याग्नेय्याम्।

---

(१) वास्तुपूजामहं। (२) शुक्ल।
(३) प्रासादे।

जये त्वं सर्व्वदा भद्रे! सन्निह स्थापिता मया ।
[1]नित्यं जया-वहा देवि स्थास्यामि प्रीयतो भव ॥
इति नैर्ऋत्याम् ।

पूर्णे त्वं हि महावीर्य्ये सर्व्व[2]सम्मोहसम्पणे ।
सर्व्वं सम्पूर्णमेवात्र प्रासादे कुरु सर्व्वदा ॥
इति वायव्ये ।

एवं पाद्यं संस्कृत्य तदुपरि प्रासादघटनामत्स्यपुराणादेव्यायनु- सारेण । ततो यथोक्तदिने नरसिंहपुराणोक्तविधिना प्रतिष्ठा । स्वस्तिवाचनसङ्कल्पः ।

पुत्रपौत्रादिकामो मोक्षकामो वा नरसिंहप्रासादप्रतिष्ठामहं करिष्य आचार्य्यकर्म इति। आचार्य्यब्रह्मावरणम्। पुरुषसूक्तपूजाजाप- ककरणं, प्रासादाग्रे चतुर्द्वारमण्डपकरणं, मध्ये अष्टदलपद्मलिखनम्। घटोदकैः प्रतिमास्थापनम् । मण्डपे प्रवेशनं तत्रोत्तरभागे पञ्च- गव्येन स्नाप्य उष्णोदकेन स्नपनं। ततः शीतोदकेन हरिद्राकुङ्कुमादि- युक्तचन्दनैरुपलेपनम् । वस्त्रमाल्यैरलङ्कृत्य वैष्णवसूक्तैः प्रार्थनम् । नद्यां ह्रदे वा नीत्वा प्रवेश्य त्रिरात्रमधिवासनम् । सद्योऽधिवासो वा । तत्र उत्थाप्य पूर्व्ववत् स्नापयित्वा मण्डपे नयनम् । विष्णु- मन्त्रैः स्नपनम् । वस्त्रमाल्यगन्धैरलङ्करणम् । ब्राह्मणभोजनम् । पुष्पाक्षतमिश्रान्नेन दशदिक्षु बलिरिन्द्रः प्रीयतामित्यादिमन्त्रैः । एवं मध्यरात्रे तत्रोषित्वा । उदिते वा । मातृभ्यो नमः । विघ्नाय

(१) नित्यं जया जयादेवी । (२) सन्दोह ।

नमः। इति उदिते वह्निः। प्रभाते पुरुषसूक्तजापकस्य पुरुषसूक्त-जपः। आचार्य्यकर्म्म। ततः पुष्पोदकेन प्रासादप्रोक्षणम्। पञ्च-गव्यकषायोदकाभ्यां श्रीमन्त्रेण पिण्डिकाक्षालनम्। प्रासादे प्रवेश्य देवमानुषभागयोः किञ्चिदीशानिमाश्रित्य पिण्डिकास्थापनम्। उपोषितो यजमानो द्विजैः सह "उत्तिष्ठ ब्राह्मणस्य त" इति प्रतिमामुत्थाप्य प्रासादद्वारेण प्रवेश्यपार्श्वे स्थापयित्वार्घ-पाद्य-मधु-पर्कादिभिरभ्यर्च्य मन्त्रेणाच्छादयेत्। आचार्य्यः पिण्डिकागर्त्ते सुवर्णं किञ्चित् दत्त्वा वस्त्रेण गर्त्तमाच्छाद्य पञ्चघोषवाद्यब्रह्मघोषादिषु क्रियमाणेषु ध्रुवसूक्तेन पिण्डिकागर्त्ते देवं स्थापयेत्। "ध्रुवाद्यौ ध्रुवा पृथिवी ध्रुवं विश्वमिदं जगत्"। इति मन्त्रः। विष्णुसूक्तेन कुश-वारिणा प्रतिमाप्रोक्षणम्। तदग्रेऽग्निमुपसमाधाय परिस्तीर्य्य देवस्य जातकर्म्माद्यर्थं शतमः शतस्य आहुतीर्विष्णुगायत्र्या हुत्वा ऐन्द्र्यां त्रातारमिन्द्रमिति याम्यां परेऽपि वामिति वायव्यामिमं मे वरुण इति यत्ते सोमेति सौम्यां आज्यं चरुं च हुत्वा परो मात्रा तन्वेति सूक्ताभ्यां सर्व्वत्राहुतीर्हुत्वा जपं च कुर्य्यात्। यदस्य कर्म्मणोऽत्यरिरिचं यत् वा न्यूनमिहाकरम् अग्निः स्विष्टकृत् विद्यात्। सर्व्वं स्विष्टं सुहुतं करोतु। इति स्विष्टकृत्। वस्त्रे द्वे कुण्डले द्वे अङ्गुरीयकं गां काञ्चनं दक्षिणां दद्यात्। तूर्य्यवाद्यवेदध्वनिदीपपताकाछत्रचामरादिषु सत्सु कलशाष्टशतेनाष्टशतेनैकविंशेन वा देवस्य स्नपनम्। ब्राह्मण-भोजनं ब्रह्मजापकदक्षिणा च मत्स्यपुराणोक्तविधिना प्रतिष्ठा। प्रासादस्य प्राच्यामुदीच्यां वा दशहस्तचतुर्हस्तावरवेदिकमण्डप-

करणम् । पूर्व्वादिद्वारेषु प्लक्षोदुम्बराश्वत्थवटकृतानि भूपत्यैकहस्तानि चतुर्हस्तोच्छ्रितानि द्वाराणि । उपरि पताकादिपुष्पमालाशोभा । द्वारेष्वष्टौकलशा वस्त्रयुग्माच्छन्नाश्चन्दनोदकपूर्णाः काञ्चनचूत-पल्लवादिगर्भाः अष्टदिक्षु अष्टौ ध्वजाः । त्रातारमिन्द्रं । त्वमोऽग्ने । सुयावोदेवाः । असुन्वन्तं तत्त्वया[१] । आनोनियुभिः । वयं सोम । तमीशानम् । आब्रह्मन् नमोऽस्तु सर्पेभ्य इति मन्त्रैस्तत्र लोक-पालपूजा । तेभ्यो मासभक्तबलिं च दद्यात् । मण्डपोत्तरे चतुर्भागेन-स्नानमण्डपः तत्र कुशास्तरणे प्रतिमास्थापनम् । स्वामिनः शिल्पि-पूजा । चमध्वमिति वचनम् । आचार्य्याय गोदक्षिणादानम् ।

"नमो भगवते तुभ्यं शिवाय हरये नमः ।

हिरण्यरेतसोविष्णोर्विश्वरूपाय ते नमः" ॥

इत्यामन्त्र्य काञ्चनेन नेत्रज्योतिःप्रकल्पनम् ।

समुद्रज्येष्ठेति पञ्चगव्येन स्नानम् । या आपो देव्या इति कषायेण [२]या सा त्यज्येति मृत्तिकोदकेन । आपो हिष्ठेति भस्मोदकेन एवं शुद्धिं कृत्वा संस्थाप्य गन्धादिभिः पूजा । वस्त्रयुग्मदानम् तेषु ब्राह्मणाश्च त इत्युपस्थाप्य रथे तिष्ठेति शिल्पिभिः सह रथे करणम् । आकृष्णेनेति मण्डपे प्रवेशः । शय्यायां कुशपुष्पाण्यास्तीर्य्य प्राङ्मुखं स्थापनम् । आपो देवा आपो अस्मानिति मन्त्राभ्यां वस्त्रकाञ्चनादि युते निद्राकलशस्य शिरःप्रदेशे स्थापनम् । दुकूलपट्टाच्छन्नचो-पधानस्य शिरसि दानम् । मधुसर्पिभ्यामञ्जनम् । सिद्धार्थैं प्रयुज्य

---

(१) असुन्वन्तं तत्वायामि । (२) यासां राजे ।

याते आप्यायस्व याते रुद्रेति मन्त्राभ्यामालम्भः। गन्धपुष्पैः पूजा। बार्हस्पत्येन प्रतिसरबन्धनम्। चित्रवस्त्रैराच्छादनम्। छत्रचामर-दर्पणपुष्करौषधिविचित्रशयनास(१)नादिभाजनानि अभितश्च शूरे इति पार्श्वतः कार्य्याणि। चारचौद्रघृतपायसभक्ष्यभोज्यबहुविध-रसानां समन्ततः स्थापनम्। त्र्यम्बकमिति सर्व्वतो बलिदानम्। मूर्त्तिपानां दिक्षु निविशनम्। गृह्योक्तविधिना आज्यभागान्ते पालाशोदुम्बराश्वत्थापामार्गशमीनां प्रत्येकं शतद्वयेन सह होमः। इन्द्रादित्यादिशान्तिकैः त्र्यम्बकमित्यादिपौष्टिकैर्हुत्वा देवस्य पादस्पर्शनम्। पुनर्हुत्वा नाभिस्पर्शनं पुनर्हुत्वा वक्षस्पर्शनम्। पुनर्हुत्वा शिरःस्पर्शनम्। होमकाले च श्रीसूक्तं पावमानीं च सोमसूक्तं सुमङ्गलम्। शान्तिकया न सूक्तं च रक्षोघ्नं च प्राच्यां व्याहृतिः। रौद्रं पुरुषसूक्तं च श्लोकाध्यायं(२) च सुक्रियम्। (३)मण्डलाध्यायं च दक्षिणे अध्वर्य्युः।

वामदेव्यं बृहत्साम ज्येष्ठसामरथान्तरम्। पुरुषसूक्तं शान्तिकं भारुण्डानि च सामानि छन्दोगः पश्चिमे॥

अथर्वणा अङ्गिरसं नीलरुद्रमपराजिताम्। मधुसूक्तं शान्तिका-ध्यायं चोत्तरे आथर्वणो जपेत्। लोकपालेभ्यः।

"वसुधा वसुरेतांश्च यजमानो दिवाकरः।
जलं वायुस्तथा सोम आकाशं चेति मूर्त्तयः"॥

(१) विचित्रभोजनानि। (२) श्लोकाध्ययनं।
(३) मण्डलं।

शर्वः पशुपति-उग्र रुद्रभव-ईशानमहादेव इति मूर्त्तिभ्यो वैदिकैर्मन्त्रैर्यथाखं होममाचरेत् । हस्तमात्रेषु कुण्डेषु मूर्त्तिगाः सर्व्वतो दिशः । तथा शान्तिघटान् कुर्य्यात् । सर्व्वकुण्डेषु तेषु होमसंपातानयनम् । शतान्ते वा सहस्रान्ते स्रुचा पूर्णाहुतिर्भवेत् ।

"समपादस्तथो न्यस्तः समाङ्घ्रिमभिनिक्षिपेत् ।
मूलमध्योत्तमाङ्गेषु देवस्य च शिरःस्थिते" ॥

पूजा च सम्यक् कार्य्या । सर्व्वेभ्यो वस्त्रादिदानम् । हेमांगुरीयकदानं ब्राह्मणभोजनं नृत्यगीतादि । एवं प्रतिमायाः त्रिरात्रमेकरात्रं वाधिवासं क्वचित् सद्योऽधिवासनम् । पुष्पोदकेन प्रासादप्रोक्षणम् । मन्त्रेण तेन प्रासादमध्ये किञ्चिदीशा[१]नमाश्रित्य कूर्म्मशिला । तदुपरि तदुपमाना[२] ब्रह्मशिला स्थाप्या । ततो देवता-भार्य्याश्रयमन्त्रेण पञ्चगव्येन पिण्डिकाक्षालनम् । ततः कषायोदकेन प्रासादस्य मध्ये ब्रह्मभागः । तत्परितः देवभागः तत्परितो मनुष्यभागः । तत्परितः ईशानभागः । एवं ज्ञात्वा ब्रह्मभागात् किञ्चिदाश्रित्य देवमानुषभागयोः पिण्डिका स्थाप्या । मध्यात् किञ्चिदैशानीं दिशमाश्रित्य । उत्तिष्ठ ब्राह्मणस्य त इति देवोत्थापनं प्रासादमध्ये नयनम् । पीठे स्थापयित्वा पाद्यमधुपर्कादिदानं सर्व्वबीजानि सर्व्वधातूनि सर्व्वरत्नानि सर्वौषधीः स्वलोकपालानामोंकारपूर्व्वं न्यासः । सर्व्वबीजाभावे

(१) किञ्चिदैशानीं । (२) तदुन्नमाना ।

यवाः सर्व्वरत्नाभावे मुक्ताः हरितालम्। सर्व्वधात्वभावे सुवर्णं। सर्व्वौषध्यभावे सहदेवाः एषामष्टदिक्षु प्रत्यावरणे न्यासः ततः तत्तद्दिशि तल्लोकपालमन्त्रः।

"इन्द्रस्तु सर्वदा दीप्तः सर्वदेवाधिपो महान्।
वज्रहस्तो महासत्त्वस्तस्मै नित्यं नमो नमः॥
अरुणः पुरुषो दीप्तः सर्वदेवमयोऽव्ययः।
धूमकेतुरनाधृष्यस्तस्मै नित्यं नमो नमः॥
यमश्चोत्पलवर्णाभः किरीटी दण्डधृक् सदा।
सर्वसाक्षी विशुद्धात्मा तस्मै नित्यं नमो नमः॥
नैर्ऋतस्तु महान् कृष्णः सर्वरक्षोऽधिपो महान्।
खड्गहस्तो महासत्त्वस्तस्मै नित्यं नमो नमः॥
वरुणः पुरुषो दीप्तः सर्वदेवमयोऽव्ययः।
शवसो विष्णुपुरुषो वरुणो निम्नगाधिपः।
पाशहस्तो महाबाहुस्तस्मै नित्यं नमो नमः॥
हतयष्टिसमायुक्तः पवनो मृगवाहनः।
दाध्यश्च[1] चतुर्वक्त्रस्तस्मै नित्यं नमो नमः॥
गौरो यस्तु पुमान् सौम्यः सर्वौषधिसमन्वितः।
कुबेरोऽथ महाबाहुस्तस्मै नित्यं नमो नमः॥
ईशानः पुरुषः शुक्लः सर्वविद्याधरो महान्।
शुक्लहस्तो विरूपाक्षस्तस्मै नित्यं नमो नमः॥

(१) सोमाध्यक्ष।

पद्मयोनिश्चतुर्मूर्त्तिर्देवानाञ्च पितामहः ।
यश्चाध्वरश्चतुर्वक्त्रस्तस्मै नित्यं नमो नमः ॥
योऽसावनन्तरूपेण ब्रह्माण्डं सचराचरम् ।
पुष्पवत् धारयेत् मूर्ध्नि तस्मै नित्यं नमो नमः" ॥

रत्नन्यासानन्तरं शुक्लवस्त्रेण गर्त्ताच्छादनं तत्र शुभचणे भुवा द्यौरिति मन्त्रेण गर्त्तोपरि स्थापनम् । स्थिरीकरणं देवस्य मस्तके हस्तं दत्त्वा निरञ्जनानन्यब्रह्मत्वेन देवस्य मूर्त्त्यभिन्नत्वेन ध्यात्वा स्वस्य देवेनैक्यचिन्तनम् । देवव्रतवामरुद्रसूक्तपठनम् ।

"अतसीपुष्पसङ्काशं शङ्खचक्रगदाधरम् ।
संस्थापयामि देवेशं देवो भूत्वा जनार्द्दनम्" ॥

इत्युक्त्वा वैष्णववेदमततान्त्रिकस्मार्त्तमन्त्राणां च जपः । स्थापितस्य देवस्य पार्श्वस्थितानां परिचराणां स्मरणम्[१] । ततः पूजा ।

आगच्छ भवस्यानुग्रहाय शिवो भव शाश्वतो भव पूजां [२]गृहाण ।

ॐ नम इत्यावाहनं । स्वागतं भगवतः सोमाय [३]सग्रीवाय सपरिवाराय प्रतिगृह्णातु भगवन् मन्त्रपूर्वमिममर्घं पाद्यमाचमनीयमासनं ब्रह्मणा[४]विहितं नमो नमः । स्नाहा यज्ञोपवीतादीनामुपचरणात् गन्धादिताम्बूलान्तसमर्पणं च । गुणा हि मधुदोषैर्दधिक्षीरमधु[५]शर्करापुष्पगन्धोदकैः । यत् जायतः । ततो विराट् सहस्रशीर्षा अभित्वा शूरपुरुष एवेदम् । त्रिपादूर्द्ध्वं येनेदं

(१) सौकर्य्यं । (२) प्रतिगृह्णाय । (३) सगणाय ।
(४) ब्रह्मणाभिहितं । (५) घृत ।

भूतम् इत्येतैः स्नपनं। ततः कृत्वा सुग्रहदर्भमूले मध्ये शिरस्यपि। प्रासादोपरि ध्वजारोपणम्। यथोक्तफलकामनया प्रासादोत्सर्गः। विष्णवे [१]इदं शैलमयमिष्टकामयं वा मेरुनामानं मन्दरनामानं प्रासादं ददानीति। ततो यजमानस्य सर्व्वालङ्कारादैराचार्य्य-ब्रह्ममूर्त्तिपानां पूजनम्। अन्येषां च ततस्तु मधुना प्रथमेऽहनि लेपयेत्। हरिद्रासिद्धार्थेन द्वितीये। चन्दनयवैस्तृतीये। मनःशिलाप्रियङ्गुभ्यां चतुर्थे। कृष्ण[२]तिलैः पञ्चमे। "घृतचन्दन-केशरै रोचनानागपुष्पैः। यत्र सद्योऽधिवासः स्यात् तत्र सर्व्वं निवेदयेत्"। सिकतासर्ज्जर-सतैलादिभिः स्वर्णसन्धाने देवस्य निश्चलीकरणम्। चलने महान् दोषः। [३]पुण्याहजयमङ्गल-करणं, त्रिपञ्चसप्त वा दिनानि स्यात् महोत्सवः। चतुर्थे च महास्नानम्।

"दध्यक्षतकुशाग्राणि क्षीरं दूर्वास्तथा मधु।
यवाः सिद्धार्थकास्तद्वदष्टाङ्ग योषितैः सह"॥

इत्यर्घदानं कुम्भचये। गजाश्वरथवल्मीकवराहोद्धृतवेश्यागार-तीर्थह्रदम्रदो उद्धृतासीति मन्त्रेण प्रक्षेपः। शन्नोदेवीः आपो हिष्ठेति मन्त्रेण जलपूरणं। तैः स्नपनम्। गायत्र्या[४] गोमूत्रं, गन्धद्वारेति गोमयम्, आप्यायस्वेति पयः। तेजोऽसि इति घृतम्। देवस्य त्वेति कुशोदकं गृहीत्वा सर्व्वेषां पात्रे करणं। तेन

(१) इमं। (२) कृष्णाजिनतिलैः।
(३) अन्नसत्रदानं। (४) सावित्र्या।

स्नपनं। दधिक्राव्णो इति दध्ना[१]। आप्यायस्वेति क्षीरेण, तेजोऽसि इति घृतेन। मधुवातेति मधुना। सरस्वत्यै भेषज्येति पुष्पोदकेन। हिरण्यगर्भ[२]इति रत्नोदकेन। देवस्य त्वेति कुशोदकेन। [३]अशु-ष्टाया चिपक्लोदकेन। सावित्र्या गन्धोदकेन स्नापयित्वा सहदेवा व्याघ्रनखा अतिबला शङ्खपुष्पा वचासिंहसुवर्चला इति महौषध-ष्टकम्। यवगोधूमनीवारतिलश्यामाकशालिप्रियङ्गुव्रीहीत्यष्टकम् दत्त्वा सुवर्णरूप्यकांस्यानाम् अभावे मृत्तिकैः कुम्भैः सहस्रैः [४]पञ्च-शतैर्वा षष्टिभिः पञ्चाशद्भिः[५] पञ्चदशभिर्वा स्नपनम्। क्वचित्पात्रे गोमयेन मृदा वा स्वस्तिकशङ्खोत्पलश्रीवत्सदर्पणनन्द्यावर्त्तानि कृत्वा पञ्चवर्णोदकपञ्चवर्णरजतदूर्वाक्षततिलैः कृत्वा तेन नीराजनम्[६]।

"देव[७]सूत्रसमायुक्ते यवदानसमन्विते।
सर्ववर्णप्रभेदे च वाससी तव निर्मिते"॥

वस्त्रयुग्ममिदम्।

"शरीरं तेन जानामि चेष्टां नैव च नैव च।
मया निवेदितान् गन्धान् प्रतिगृह्य विलिप्यताम्"॥

इति कर्पूरकुङ्कुमगन्धदानम्।

"त्वं चन्द्रसूर्य्यज्योतिश्च विद्युदग्निस्तथैव च।
त्वं सर्वज्योतिषां ज्योतिर्दीपोऽयं प्रतिगृह्यताम्"॥

---

(१) केवल दध्ना। (२) हिरण्येति।
(३) अमध्याह्नो। (४) अष्टशतैर्वा।
(५) त्रिंशद्भिर्वा। (६) शङ्खोदकेनाचमनदानं।
(७) वेद—

इति दीपदानम्। महाभूषाय ते नम इति आभरणदानं। यवस्वरजकरजवल्लैश्चतुर्भिः कलशैरष्टभिर्वा देवस्य स्नेति स्नपनं[१] नवयज्ञाभिषेकमन्त्रै[२]र्यजमानाभिषेचनम्। यजमानस्य महोपचारेण देवपूजनम्। वस्त्रालङ्कारयज्ञभाण्डमण्डपादीनि आचार्य्याय दानम्। सर्व्वोपायेन आचार्य्यस्य प्रसादनं गृहस्थविप्र एव आचार्य्यः।

पाषण्डिनि कृते कुलक्षयम्। स्मार्त्तमते प्रासादध्वजप्रतिष्ठादेरभावाद्ध्वजारोपणं कृत्वा प्रासादोत्सर्ग एव तत् फलार्थः। प्रासादप्रासादगुणाधिक्यादुत्सर्ग एव विशेषः। इति स्मार्त्तदेवप्रतिष्ठा, पंचराचानुसारेण प्रतिष्ठा प्रतिष्ठादीपेऽस्मत्कृते विस्तरेणोक्ता। देवगृहप्रसङ्गात् मनुष्यगृहकरणविधिरुच्यते। पुण्याहे मातृकापूर्वकमाभ्युदयिकं श्राद्धं कृत्वा पूर्णाहुतिवदाज्यं संस्कृत्य स्तम्भस्थापनावटेषु चतुर्षु प्रत्येकमाग्नेयकोणादारभ्यमच्युताय भौमाय स्वाहेत्येका[३]हुतिर्होमः। होमक्रमेण प्रत्यवटं शिलास्थापनम्। तदुपरि स्तम्भोच्छ्रयणमाग्नेयादिक्रमेण। तत्र मन्त्रः।

"इमामुच्छ्रयामि भुवनस्य नाभिं,
वसोर्द्धारां प्रतरणीं वसूनाम्।
इहैव ध्रुवां निमिनोमि शालां,
क्षेमे तिष्ठतु घृतमुक्षमाणा॥
अश्वावतीगोमतीसूनृतावत्,
त्युच्छ्रयस्व महते सौभगाय" ॥

(१) आथर्वणैर्नवग्रहैर्होमः।
(२) अभिषेकमन्त्रैर्यजमानाभिषेचनं। (३) एकैकाहुति।

श्वाला शिशुराक्रन्दत्वा गावो धेनवो वाश्यमानाः।

श्वाला कुमारस्तरुण [१]श्वाच्छोजपदैः सह। [२]श्वात्माप्रसुतः कुम्भ आदध्नः कलशैरुपक्षेमस्य पत्नी बृहतीसु वासारयिनो धेहि सुभगेसुवीर्य्यं श्वावत्गोमद्यजस्वराणं इव। श्वभिन्नः पूजितारं यिरिदमनश्रेयोऽवसानः। इति चतुर्षु [३]स्तम्भेषु मन्त्रावृत्तिर्धवल-गृहेष्वनेनैव मन्त्रेण शिलाचतुष्टयस्थापनम्। अथार्द्धनिष्पन्न-शालाकर्म। गृहमध्ये आवसथ्याग्निस्थापनम्। [४]ब्रह्मवरम्। ब्रह्मोप-वेशनम्। अग्नेरुत्तरे जलपूर्णताम्रपात्रस्थापनम्। [५]परिस्तरणम्। पात्रासादनम्। [६]प्रोक्षणासंस्कारपात्रप्रोक्षणाज्यनिर्वाप्याधिश्रयणं च स्रुवाधिश्रयणं स्रुवसम्मार्जनाज्योद्वासनप्रोक्षण्युत्पवनान्ते गृहात् [७]वहिर्गमनम्। ब्रह्मन् प्रवेशामीति प्रश्नः। प्रविशेति ब्रह्मानु-ज्ञातस्य प्रवेशः। ऋतं प्रपद्ये शिवं प्रपद्ये। इति मन्त्रेण प्रवेशः, उपविश्य औपयमनकुशादानसमिधादानं पर्य्युक्षणानि।

अथ होमः। आज्येन षड़ाहुतयः। इह रति विहरमध्यमिह धृतिरिह स्वधृतिः स्वाहा। इदं अग्नये। उपसृजं धरुणमात्रे धरुणो मातरं धयताराय स्फोषमस्मासु दधरत् स्वाहा। इदमग्नये।

वास्तोष्पते प्रतिजानाह्यस्मांत्स्वां वेशो अनमीवो भवानः। यत्ते महे प्रतितन्नो जुषस्व शन्नोभव द्विपदेसं चतुष्पदे स्वाहा।

---

(१) आवत्सोजपदैः सह। (२) आत्वा। (३) स्तम्भेषु।
(४) निरग्नेर्लौकिकाग्निस्थापनं। (५) ततः प्रणीताप्रणयनं।
(६) प्रोक्षण्याज्यचरुर्वाप्याधिश्रयणं। (७) गृहाभिमुखस्य प्रश्नः।

इदं वास्तोष्पतये। वास्तोष्पते प्रतिरणेन एधि चायस्फा गोगोभि-रश्वेभिरेधि[१]। अजरास्ते राचेम पितेव पुत्रान् जुषस्व ग्रो भव द्विपदेषं चतुष्पदे स्वाहा। इदं वास्तोष्पतये वास्तोष्पतेऽश्वयट् संसजाते महामश्विरण्मथाग्नातु मथा।

पाहि क्षेड़पयोगे च रक्षो यूयं पातस्वस्तिभिः। सदा नः स्वाहा। इदं वास्तोष्पतये। अमीवहा वास्तोष्पते विश्वरूपाण्या विशन् सखासुशेव एधिनः स्वाहा। इदं वास्तोष्पतये। तच आघारावाज्यभागौ तच स्थालीपाकाङ्गतयः। अग्निमिन्द्रं वृहस्पतिं विश्वेदेवापनुत्तये। सरस्वतीं वाच वाजिनं च वास्तुदत्तवाजिनः स्वाहा। इदमग्नये इन्द्राय वृहस्पतये विश्वेभ्यो देवेभ्यः सरस्वत्यै वाजिने।

"सर्पदेवजनाः सर्व्वान् हिमवन्तं सुदर्शनम्।
वसुंश्च रुद्रानादित्यानीशानं जगवे[२] सह॥
एतान् सर्व्वान् प्रपद्येऽहं वास्तु मे दत्तवाजिनः स्वाहा"[३]॥

इदं कर्त्रे विकर्त्रे विश्वकर्मणे ओषधीभ्यः वनस्पतिभ्यः।

"धातारं च विधातारं निधीनां च पतिं सह।
एतान् सर्व्वान् प्रपद्येऽहं वास्तु मे दत्तवाजिनः स्वाहा॥
इदं धात्रे विधात्रे च निधीनां पतये नमः।
स्योनं[४] शुभमापदं वास्तुदत्तं ब्रह्मप्रजापतिम्"॥

(१) रिन्दो। (२) जगर्द।
(३) इदं सर्वदेवजनेभ्यो हिमवते सुदर्शनाय। (४) स्रोनं।

सर्वास्व देवताः स्वाहा । इदं ब्रह्मप्रजापतिभ्यां सर्वाभ्य देवताभ्यः । स्थालीपाकेन स्विष्टकृत् । भूरादिप्राजापत्यान्तम् । प्राशनम् । मार्जनं, ब्रह्मणे दक्षिणादानम् । कांस्यपात्रे सम्भारः । सक्षीराश्चौदुम्बराणि । दूर्वा-गोमय-दधि-घृत-कुश-यवानां चतुः-सम्भारैः वा सदन्त[१]स्थानेषु प्रोक्षणम् । अथ गृहस्य पूर्व्वे सन्धौ स्पर्शनम् । पूर्व्वकोणे मन्त्रपाठः । श्रीश्च ताश्च पूर्व्वे सन्धौ गोपाच यताम्[२] । इति यश्चत्वा सन्धौ गोपायेन[३] तामिति । दक्षिणांश-सन्धावभिमाशतियज्ञस्त्वादक्षिणा च दक्षिणसन्धौ गोपायेतामिति । अन्नं च त्वा ब्राह्मणश्च पश्चिमे सन्धौ गोपायेतामिति पश्चिमे सन्धौ । ऊर्ज्जित्वा सूनृता च मा उत्तरे सन्धौ गोपायेतामिति [४] उत्तरसन्ध्य मर्दशनम् । केता च मासुकेता च पुरस्तात् गोपायेतामित्यग्नि-र्वैके तातौ प्रपद्ये ताभ्यां नमोऽस्तु तौ मा पुरस्तात् गोपायेता मित्यनेन प्रत्युपस्थापनम् । गोपायमाना च वक्ष्यमाणा च दक्षिणतो गोपायेतामिह वै गोपायनम् । रात्रिं च रक्षणाते[५] प्रपद्ये ताभ्यां नमोऽस्तु ते नो दक्षिणतो गोपायेतामित्यनेन मन्त्रेण वा व्युपस्थापनम् । इति भृजागृविंशपश्चात् गोपायेता-मित्यन्नं वै दितिः प्राणोजाय विस्तौ प्रपद्ये ताभ्यां नमोऽस्तु तौ मा पश्चात् गोपायेतामित्यनेन प्रत्युपस्थापनम् ।

---

(१) गर्त्तस्थानेषु । (२) गोपायनिति ।
(३) गोपायतामिति । (४) उत्तरसन्धावभिमर्षनं ।
(५) रक्षमाणाते प्रपदेय ।

अस्वप्नश्चानवद्राणश्चोत्तरतो गोपायेतामिति चन्द्रमादाय स्वप्नो वायुरनवद्राणस्तौ प्रपद्ये ताभ्यां नमोऽस्तु तौ मोत्तरतो गोपायेतामित्यनेन उदीच्युपस्थापनम् । ततः[१] पवित्रप्रतिपत्तिः प्रणीताविमोकः । इत्यनिष्ठितकर्म । प्रवेशविधिः । सम्पूर्णे गृहकर्मणि ज्योतिःशास्त्रोक्तेऽहनि नववेश्मन इति वचनात् मत्पूजापूर्व्वकमाभ्युदयिकम् । उदकपात्रस्य धान्यस्य गृहे स्थापनं मङ्गलवाद्यब्रह्मघोषादिषु क्रियमाणेषु गृहं मङ्गल्यशोभितम् कृत्वा पूर्णकुम्भं द्विजानग्रतः कृत्वा सुवेशपुत्रदारसहितः शालाद्वारेण प्रविशति गोष्ठदत्तकरः प्रवेशमन्त्रः । "धर्मस्थूणा राज श्रीस्तूप महोरात्रे द्वारफलके इन्द्रस्य गृहावसुमतो वरुणस्य तस्तानहं प्रपद्ये सहप्रजया सह पशुभिर्यन्मे किञ्चिदस्त्युपहूता सर्पगणाः सखायः साधुसंवृतः । तां त्वा शाले वीरा गृहा नः सन्तु सर्व्वतः" । इति प्रविश्य देवब्राह्मणपूजनम् । ब्राह्मणभोजनम् । यथोक्तकल्पेन वास्तुपूजा च होमान्ता । प्रविष्टेऽपि विधानात् । तत्र गृहप्रवेशकाले च सर्व्वसम्पत्समृद्धये इति वचनात् त्र्यम्बकेन पायसचरुहोमपुरश्चर्यः । इति गृहप्रवेशविधिः ।

अथ पूर्त्तं हयशीर्षे । अश्वमेधसहस्रं यः समाचरेत् । एकाहं स्थापयेत् तोयं तत्पुण्यमधिकं विदुः । सर्व्वकर्म्मसुसम्पूर्णं वैदूर्य्यमणितोरणम् ।

"विमानं कामगं दिव्यं दिव्यस्त्रीगणशोभितम् ।
सौवर्णं शक्रलोके तु प्राप्नुयात् कूपकृन्नरः ॥

---

(१) अथ—

एवं वाप्यादिकर्म्मणां फलं स्यादुत्तरोत्तरम् ।
वर्षाकाले जलं यस्य तडागे तिष्ठति द्विजाः ॥
स स्वर्गलोकं संप्राप्य वर्षकोट्ययुतं वसेत् ।
शरत्काले जलं यस्य जलाधारे तु तिष्ठति ॥
न दुर्गतिमवाप्नोति पापकर्मापि यो नरः ।
हेमन्ते यस्य पानीयं तडागे तिष्ठति द्विज! ॥
शतमन्वन्तरं सोऽपि स्वर्गलोके महीयते ॥
शिशिरे यस्य पानीयं तडागे स प्रतिष्ठति ।
सप्तमन्वन्तरं यावत् चन्द्रलोके महीयते ॥
वसन्ते यस्य सलिलं तडागे भुवि तिष्ठति ।
ब्रह्मलोके स वसति यावदिन्द्राश्चतुर्द्दश ॥
निदाघे यस्य सलिलं तडागे तिष्ठतेऽमलम् ।
स ब्रह्मलोकमाप्नोति यावदाभूतसंप्लवम् ॥
तृषितं गोकुलं ग्रीष्मे तडागे यस्य तृप्यति ।
न तस्य दुष्कृतं किञ्चित् इह पश्यसि सर्व्वदा ॥
ब्राह्मणास्तृषितास्तोयं पिबन्ति यस्य निर्मलम् ।
तडागे घर्मसमये स याति परमां गतिम्" ॥ श्रुतिः ।

स्नानायोदकं गृह्णाति । स्नान एकजलकरणं स्नातेनेत्यर्थः ।

महाभारते,

"कुलं सन्तारयेत् सर्व्वं यस्तु पाने जलाशयः ।
तडागे यस्य यावन्तः पिबन्ति [१]तृषितं जलम् ॥

(१) च ।

मृगपक्षिमनुष्याश्च सोऽश्वमेधफलं लभेत् ।
यत् पिबन्ति जले तत्र स्नान्ति वा विश्रमन्ति च ।
तडागकर्त्तुस्तत्सर्व्वं प्रेत्यानन्ताय कल्पते" ॥

तत्रैव,

"वर्षाकाले तडागे तु पानीयं यस्य तिष्ठति" ॥

तस्याग्निहोत्रफलं निदाघकाले जलस्थले वा जलपेयफलं

विष्णुधर्मोत्तरे,—

"शस्यानां रोचनार्थाय नदीबन्धे तथा दृढे ।
अन्नदः प्राणदश्चैव पानदश्च सदा भवेत् ॥
भगीरथस्य लोकांस्तु समवाप्य न संशयः ।
पानीयशोधनं कृत्वा ह्रदे देवविनिर्मिते ।
पुरुषः फलमाप्नोति दशगोदानजं द्विजः" ॥
दारुपाषाणरचितं सुखसेव्यं जलाशयं ।
पुराणं मानवः कृत्वा [१]नाकलोके महीयते ।
प्रणालकरणाच्चैव तृप्तिमाप्नोत्यनुत्तमाम् ।
स्नवाङ्गखातं यः कुर्य्याद्राजसूयाश्वमेधभाक् ।

यमः,—

यस्य वप्रेऽथ गौरेका पिबते सलिलं क्वचित् ।
तडागं [२]प्रथमं कृत्वा स्वर्गे [३]दशसुखान् वसेत् ।

(१) नागलोके । (२) तादृशं ।
(३) दशयुगान् ।

विष्णुः,—

कूपकर्त्तुस्तत्कृते पानीये दुष्कृतं नश्यति ।

विष्णुपुराणे,—

सेतुबन्धकरा ये च तीर्थशौचकराश्च ये ।
तडागकूपकर्त्तारो [१]मुच्यन्तेऽ[२]तिभयाकुले ॥
चतुर्विंशाङ्गुलो हस्तश्चतुर्भिश्च करैर्द्धनुः ।
एकधन्वादिद्व्यन्तं कूपमानमुदाहृतम् ॥
शतधन्वन्तरा वापी पुष्करिण्यश्चतुर्गुणाः ।
सहस्रेण तडागः स्यादयुतेन तु सागरः ॥
त्रिगुणा दीर्घिका प्रोक्ता महत्पूर्वचतुर्गुणा ।

तथा,—

[३]खातत्रिराशिका जंघा कर्त्तव्या सुपरिचिता ।
तद्वाह्ये भित्तयः कार्य्या वर्त्तुलाः पर्व्वतोपमाः ॥

देवीपुराणे,—

वाजिमेधक्रतुर्यद्वत् सोपायं पुण्यदो भवेत् ।
वारिबन्धस्तथा तत्र पुण्यदो जायते नृणां ॥
[४]कुर्य्यात्तानि तडागानि अष्टौ पापहराणि च ।
तेषु [५]वारिभये श्रेष्ठो देवश्रमसमन्वितः ॥

---

(१) पच्यते । (२) अतिभयावृते ।
(३) खातत्र्यांशका । (४) उपान्तानि ।
(५) वारिभवे ।

तथा,—

(१)वारिबन्धः शिवोपेतः शक्तिर्वैनायकैर्युतः ।

तथा,—

(२)कूले चारामभूषितं सर्वकामफलप्रदम् ।

बन्धने (३)वारिरचेण वारिबन्धः। पर्व्वतादिसमीपे (४)बन्धनं कृत्वा जलस्थापनम् । तच्च दीर्घिकापेचाया अधिकपरिमाणपर्य्यन्तम् । तस्य समन्तादारामदेवतायतनकरणमित्येवं रूपं एवं जलाशयं कृत्वा प्रतिष्ठायां कृतायां यथोक्तफलम् । अन्यथा जलपाचकरणे जलदानोपकारफलम् ।

यद्वा,— तडागे यस्य पानीयं तिष्ठतीत्यादिफलमपि स्यादेवानुत्सर्गेऽपीति वदन्ति। जलाशयं चिकीर्षोः शुभदिने जलाशयार्थं (५)भूपरिग्रहः ।

"अत्र ये जन्तवः स्थूला ये च सूक्ष्मा जलाशये ।
मया संप्रार्थिताः सर्व्वे (६)इतोऽन्यत्र विराजते ॥
नमाम्यष्टकुलादिभ्यो वीराणां पतये नमः ।
भूशया येऽत्र तिष्ठन्ति ये तिष्ठन्ति जलाशयाः ॥
जलाशयात् जलाधारादितोऽन्यत्र प्रजन्तु ते ।
नो यावत् साध्यते खातः पुण्यप्रस्रवबिन्दुभिः ॥
तावदन्यत्र तिष्ठन्ति प्रार्थितास्ति सुस्वामिनः(७) " ।

(१) द्वारि । (२) तथा कूपजलाराम ।
(३) बन्धेन वारिरक्षायां वारिबन्धः । (४) सर्व्वत्र ।
(५) भूमिप्रतिग्रहः । (६) इतोऽन्यत्र व्रजन्तु ते । (७) सुखार्थिनः ।

इह भूपरिग्रहः तच स्वस्तिवाच्य संकल्प्य[१] आचार्य्यब्रह्मणो-र्वरणं। आचार्य्यकर्म। अष्टदिक्षु [२]माषरक्तेन कूरभूतवलिः।

वास्तुपूजा।

द्वादशकोष्ठे मण्डले कृतकोणसूत्रे ईशकोणादिषु।

शिखिपर्ज्जन्यजयन्तशक्रभारसत्यभृशान्तरीक्षाः।

आग्नेयादिषु पूषवितथ [३]गृहक्षतयमगन्धर्व [४]भृंगराजमृगाः।

नैर्ऋतकोणादिषु पितृदौवारिकसुग्रीवपुष्पदन्तवरुणासुरशोषरोगाः।

वायुकोणादिषु [५]रोगाहि-मुख्यभल्लाटकसोम[६]सूर्य्यादितिदितयः इति वाह्ये द्वात्रिंशत्। अथ मध्ये। मध्यकोष्ठात् पूर्व्वपंक्तिद्वये [७]दशकोष्ठे अर्य्यमा। आग्नेये कोष्ठद्वये सविता। सावित्री। दक्षिणपंक्तिद्वये दशकोष्ठे विवस्वान्। नैर्ऋते कोणद्वये कोष्ठ इन्द्र इन्द्रजयः। पश्चिमदशकोष्ठे मित्रः। वायव्यकोणकोष्ठद्वये रुद्ररुद्रजयौ। उत्तरदशकोष्ठे धराधरः। ईशानकोणकोष्ठद्वये आप आपवत्सौ। मध्ये ब्रह्मा। ऐशाने चरकी। आग्नेये [८]विदारी। नैर्ऋते पूतना। वायव्ये पापराक्षसी। पूर्व्वे स्कन्दः। दक्षिणे अर्य्यमा। पश्चात् जृम्भकः। उत्तरे पिलिपिच्छः। कुसुमदध्यक्षतगन्धादिभिरेषां पूजा। दुग्धान्नेन वलिः। ऐशान्यां कुण्डे स्थण्डिले वाग्निसंस्कारः। चतुमन्त्रशक्तिं विचिन्त्य योनौ

---

(१) संकल्प्यः।
(२) माषभक्तेन।
(३) गृहक्षतेच।
(४) भृङ्गमृगाः।
(५) नाग।
(६) गिरिश्रीश्चदितिर्दितयः।
(७) द्वादश।
(८) विदां।

वरुणबीजमग्निं संस्थाप्य गृह्योक्तविधिना वारुणाग्नेर्गर्भाधानादि [1]विहान्तं प्रत्येकं मूलेनाष्टाहुतिहोमं हुत्वा [2]आघारावाज्यभागे होमः। [3]ग्निशादिभ्य एकैकाहुतिः। ब्रह्मणे दद्यात्। मण्डलवाह्ये हैमन्तकं त्रिपुरघ्नं विरूपाक्षं दिग्जिह्वं [4]कालकरालिनं [5]एकाग्र-भीमं इत्यष्टचेत्रपालार्चनं।

## यन्त्रमण्डले यन्त्रपूजनम्।

पृथक्‌पद्मे अनन्तवासुकितक्षककर्कोटकशंखकुलिकपद्ममहा-पद्म इति नागानां पद्मा[6]चपला-सुपथ्या-सुमध्या-श्रिया दधिश्रिया दधिप्रिया श्वेतमुखी सुनेत्रा सुगन्धिनीति नागपत्नीनां च पूजनं। मण्डलमध्ये वेद्यां पञ्चधान्योपरि वस्त्रपुष्पकुशतिलयवफलशराव-पंचरत्नयुक्ततोयपूर्णतण्डुलफलसमवपिहितं कुम्भं संस्थाप्य तत्र हंसपृष्ठस्थमभयनागपाशहस्तं वरुणं संस्थाप्य संपूज्य [7]दिक्‌पाल-पत्नीभ्य एकैकं, वरुणाय शतं हुत्वान्यं पीठवरुणेभ्यश्च हुत्वा [8]गृह्यशेषं संस्थाप्य पूर्णाहुतिं हुत्वा प्रागाद्यैशानान्तजलं सिंचन् कलशं जलाशयसीमान्तं भ्रामयेत्। स्वं तु [9]कुद्दालेन त्रिः खात्वा[10] कृष्णपात्रे मृदं शिरसादाय यजमान ऐशान्यां क्षिपेत्। मधुघृतक्षीरैः खातमापूर्य्य गङ्गा-यमुना-सरस्वती-सुतीर्थ्याला

---

(१) विवाहान्तं। (२) आघारावाज्यहोमः।
(३) ईशानादिभ्यः। (४) कालीकराली।
(५) एकाग्निभीमे। (६) उत्पन्ना।
(७) दिक्‌पालनागनागिनीभ्यः। (८) शेषं समाप्य।
(९) स्वर्णकुद्दालेन। (१०) खनित्वा।

पुंवत्सां धेनुमाचार्य्याय दद्यात्। अष्टमीं चतुर्द्दशीं हित्वा प्रत्यहं स्नानयेत्। जीर्णसंस्कारे पूर्व्वं यष्टिं न चालयेत्। इति जलाशयार्थविधिः।

[१]निष्पन्ने ते यूपयष्टिः कर्त्तव्या। मध्यादेकां [२]काष्टां त्यक्ता ऐशान्ये वास्तुपूजाहोमौ। [३]यूपो प्रायः च तुल्यांशं खात्वा हस्त-मिताष्टाङ्गुलोच्छ्रितां शिलां [४]ऐष्टिके। इष्टकां प्रचाल्य गन्धपुष्पैरभ्यर्च्य पञ्चरत्नौषधियुतं कुम्भं संस्थाप्य तदुपरि शिला-न्यासः। तत्र मन्त्रः।

[५]आद्यंशे चाचते पूर्णे [६]मूले [७]लङ्गीरसः स्नुते।

अभ्यर्चिते प्रयच्छेष्टं प्रतिष्ठां कारयाम्यहमिति भूमौ प्रणामः।

स्तम्भकुले स्थिराकृतिर्होमः। स्थिराय स्वाहा। अप्रणाशाय स्वाहा। आदिबोधाय स्वाहा। नित्याय स्वाहा। पर्व्वताय स्वाहा। अविनाशिने स्वाहा। दृप्ताय स्वाहेति मन्त्र। आचार्य्याय धेनुं दद्यात्। तत्र यूपयष्टिघटनं। खातसमं द्विहस्तादिकं वा चतुस्त्रिंशोक्[८]पटकं कृत्वा तत्र वरुणस्थापनं। काष्ठयूपो वा मधु-खदिरविल्वादिसारदारुकाष्ठं कलशमस्तकं घटयित्वा गर्त्तं कृत्वा गर्त्ते रत्नौषधिदूर्व्वाशीर्षाणां प्रक्षेपं कृत्वा तस्मिन् यूपारोपणम्। निश्चलीकृत्य स्थिराकृतयः। कूपे तु न यूपादरः।

(१) निष्पन्ने खाते। (२) काष्ठिकां।
(३) यूपोच्छ्रायंतेवाग्रं। (४) ऐशाने।
(५) अव्यक्ते। (६) मुने।
(७) रङ्गरसः। (८) पटलं।

अथ प्रतिष्ठा, नारदीयोक्तसंक्षेपविधिः। पश्चिमे दशहस्त-मण्डपः मध्ये अर्द्धभागेन वेदी। यजमानस्य स्वस्तिवाचनं, संकल्पः, आचार्य्यब्रह्मणोर्वरणं। आचार्य्यकर्म। हैमं रौप्यं वा वरुणं कृत्वा पीठे स्थापनं। तत्पश्चिमे [(१)]कुण्डे गृह्योक्तवेदविधिना आज्यभागान्तं कृत्वा आज्येन गायत्र्या [(२)]घृतहोमः। उत्तरे [(३)]वरुणपीठे वरुणस्थापनं। आपो हिष्ठेति तिसृभिः जलकुम्भैः स्नपनं। गन्धद्वारेति गन्धोदकेन। पावकाः सरस्वतीति तीर्थ-वारिणा। वेद्यां स्थापयित्वा वस्त्रेण नपविवेण आच्छाद्य रात्रौ जागरणं। प्रभाते गायत्र्या गोचयदोहनं तत्पयसा चरुश्रपणं। अग्नये सूर्य्याय प्रजापतये दिवेऽन्तरीक्षाय पृथिव्यै हराय अन्तरीक्षाय। [(४)]दिविषते उग्राय भीमाय [(५)]भौमाय रौद्राय वैष्णवे इन्द्रायाग्नये यमाय नैर्ऋताय वरुणाय वायवे कुवेराय ईशानाय ब्रह्मणे अनन्ताय [(६)]महाराजाय वरुणाय च हुत्वा दधिसर्पिषा इदं विष्णुरिति होमः। दशदिक्षु दिक्पालेभ्यो-माषभक्तवलिदानम्।

"मन्त्राय सदारापत्यभृत्याय कोटिसंघटताय च।
वलिं ददाति शक्राय शक्रो गृह्णाति मे वलिं"॥

"वलिं ददाम्यग्नये अग्निर्गृह्णातु मे वलिं"। दशदिक्षु इन्द्राय नमः इति वलिहरणं इति माषभक्तवलिदानं।

शान्तिवारिणा वरुणप्रतिमासेचनम्।

---

(१) कुम्भे। (२) अष्टोत्तरघृत। (३) भद्र।
(४) विषते। (५) भीमाय। (६) महाराजाय।

उत्थाप्य रथे कृत्वा जलाशयं त्रिः सप्त वा भ्रामयित्वा आपो-हिष्ठेति जलमध्ये क्षिपेत्। ब्रह्मघोषादौ क्रियमाणे यूपं कृत्वा वरुणं ध्यात्वा सर्वमापोमयं ध्यात्वा यज्ञाय किंचित् वृक्षजं यूपं गन्धादिभिः पूजयित्वा प्रणिपत्य शान्तिमवधार्य्य दक्षिणादानं। ब्राह्मणभोजनं। आब्रह्मस्तम्बपर्य्यन्तं सर्व्वभूतेभ्योऽमुं जलाशय-मुत्सृजेत्।

"आब्रह्मस्तम्बपर्य्यन्तं ये केचित् सलिलार्थिनः।
ते तृप्तिमनुगच्छन्तु मदृत्तेनैव वारिणा" ॥

इति प्रार्थनं। आपो हिष्ठेति तिसृभि[१]र्गव्यप्रक्षेपः। तीर्थतोयञ्च शान्तितोयेन ध्वजं प्रोक्ष्य ध्वजदण्डं यूपे दत्त्वा ध्वजशीर्षसलाजतण्डुलं कांस्यपात्रे कृत्वा कांस्यपात्रं शिरसि कृत्वा जलाशयं प्रदक्षिणीकृत्य ध्वजमुत्सृजेदिति।

"हेमाक्तं रुप्यजं वापि वरुणं हंसपृष्ठकम्।
नागपाशधरं वामे दक्षिणेनाभयप्रदम् ॥
कूपे तु द्व्यङ्गुलं वाप्यां त्र्यङ्गुलं चतुरङ्गुलम्।
पुष्करिण्यां तडागे च पंचाङ्गुलमपेक्षया" ॥

अथ वरुणोत्संक्षेपविधिः। वापीकूपतडागयज्ञविधिं व्याख्या-स्यामः। [२]पुण्ये तीर्थकरणेषु शुभनक्षत्रे प्राचीं दिशमाख्याय प्राक्प्रवण उदक्प्रवण उदक्प्रवणेनाग्निमुपसमाधाय वारुणं चरुं श्रपयित्वा आज्यभागान्तं कृत्वा आज्याहुतीर्जुहुयात्। "समुद्रज्येष्ठ" इति प्रत्यृचं।

(१) पंचगव्य। (२) पुण्यतिथिकरणेषु।

"समुद्रज्येष्ठाः सलिलस्य मध्यात्,
पुनाना[१]यन्त्यनिविशमानाः।
[२]इन्द्रो या वज्री वृषभो[३]रराद्ता,
आपोदेवीरिह मामवन्तु स्वाहा"॥
"यासां राजा वरुणो याति मध्ये,
सत्यानृते अवपश्यन्जनानां।
मधुश्चुतः शुचयो याः पावकास्ता,
आपोदेवीरिह मामवन्तु स्वाहा॥
यासु राजा वरुणो यासु सोमो,
विश्वेदेवा यासूर्जं मदन्ति।
वैश्वानरोयास्वग्निः प्रविष्टस्ता
आपोदेवीरिह मामवन्तु स्वाहा॥

ततो वरुणाया[४]श्चार्चेण चरुहोमः।

तत्त्वायामि ब्रह्मणा वन्दमानः तदाशास्ते यजमानोहविर्भिः"।
"अहेलमानो वरुणेह बोध्युरुशंस मान आयुः प्रमोषीः स्वाहा।
तदिन्नक्तं तद्दिवामह्यमाहु स्तदयं[५] केतो हृद आविचष्टे"।
"शुनः शेफोयमह्वद्गृभीतः सोऽस्माराजा वरुणो मुमोक्तु स्वाहा"।
"शुनः शेफोह्यह्वद् गृभीतस्त्रिष्वादित्यं द्रुपदेषु बद्धः"।
"अवैनं राजा वरुणो ससृज्याद्विद्वाँ अदब्धोविमुमोक्तु पाशान् स्वाहा।

---

(१) यन्नति। (२) इन्द्रावज्री। (३) रराणः।
(४) असुर्च्चेण। (५) स्तदयं।

अवते हेलो वरुण नमोभिरवयज्ञेभिरीमहे हविर्भिः। चयन्नस्मभ्यमसुर प्रचेता राजन्नेनांसि शिश्रथः कृतानि: स्वाहा।

उदुत्तमं, त्वन्नो अग्ने, इमं मे वरुण। ततश्चरारेव स्विष्टकृत्। भूरादिप्राजापत्यान्ते पूर्णाहुतिं मूर्द्धानं दिवमिति। मार्ज-नान्तेन्द्रारणं। नैर्ऋत्या धेनोः प्रविशताचयया अवमन्त्रणं। नैर्ऋत्यादीशानान्तं धेनुतारणं जले। कूपे जलपार्श्वे अनुमन्त्रणे मन्त्रः। इदं सलिलं पवित्रं कुरुष्व शुद्धः पूतोऽमृतस्सर्णं नित्यं। चारयन्ति सर्व्वतीर्थाभिषिक्ता लोकालोकं चरन्ति नावेति। पुच्छाग्रे स्वयं लग्न आरुह्य तारयेत् ततः मन्त्रः। आगो अस्मा इत्यादि एमा[१]त्यन्तं। "स्वयं शुद्धा व्यजमानस्य तारणं सुयवसा भगवती भूया अथो वयं भगवतः साम[२] अद्धि तृणमन्ये विश्वदानीं पिब," शुद्धमुदकमाचरन्तीत्यनेन। ऐशान्यां धेनुस्थापनं हिङ्कृण्वती वसुपत्नी वसूनां वत्समिच्छन्ती मनसाभ्यागात् दुहामि स्विभ्यां पयोऽघ्न्येयं सा वर्द्धतां महते सौभ-गायेति। गोर्हिंकारे सति। सचेलाकरटीकांचनशृङ्गारौप्य-खुराकांस्यदोहागोर्हिंचणा[३]। शक्त्या वा कांचनादिकं किंचित्। तत उत्सर्गः। देशकालवाक्यानन्तरं देवपितृमनुष्याः प्रीयन्तां आब्रह्मस्तम्बपर्य्यन्तं सर्वभूतेभ्य इदं सलिलाश्रयाय समुत्सृजेत्। ब्राह्मणभोजनं स्वस्तिवाचनं इति जलाशयप्रतिष्ठा।

---

(१) एमा—। (२) स्याम। (३) दक्षिणा।

## अथ वृक्षारोपणं।

तद्विधया आरामकरणं। पथि वृक्षारोपणं च।

"यः कूपारामकारी च तथा वृक्षप्ररोपकः।
कन्याप्रदः सेतुकारी स्वर्गमाप्नोत्यसंशयम्"॥

शाबभाष्ये,—

आरामकृत् देवदत्तो नियतो स स्वर्गं इति। लोकप्रसिद्धि-प्रमाणमानं।

महाभारते,—

"किन्नरोरगरक्षांसि देवगन्धर्वमानवाः।
तथा महर्षयश्चैव संश्रयन्ति महीरुहान्॥
पुष्पिताः फलवन्तश्च तर्पयन्तीह मानवान्।
वृक्षदं पुत्रवत् वृक्षा तारयन्ति परत्र च॥
तस्मात्तडागे रोप्या वै रक्षाश्रयोऽर्थिभिः सदा।
पुत्रवत्परिपाल्याश्च पुत्रास्ते धर्मतः स्मृताः"॥

विष्णुः,— "वृक्षारोपयितुर्वृक्षाः परलोके पुत्रा भवन्ति"।

पद्मपुराणे,—

"अपुत्रस्य च पुत्रत्वं पादपा इह कुर्वते।
यच्छन्ति रोपकेभ्यश्च सुतीर्थे तर्पणादिकम्"॥

तर्पणजन्यतृप्तिं कुर्वन्तीत्यर्थः।

"यत्नेनापि च राजेन्द्र! पिप्पलारोपणं कुरु।
स ते पुत्रसहस्राणामेक एव करिष्यति"॥

पुत्रं सहस्रं कर्त्तव्यं करिष्यतीत्यर्थः।

तथा,—

"धनी चाश्वत्थवृक्षेण ह्यशोकः शोकनाशनः।
प्लक्षो यज्ञप्रदः प्रोक्तः चिरस्थायुःप्रदः स्मृतः॥
जम्बुकी कन्यका:(१) प्रोक्ता भार्य्यादा दाडिमी तथा।
रोगनाशाय पालाशो चिरं ब्रह्मप्रदः सदा॥
प्रेतत्वं जायते पुंसो (२)रोपितेन विभीतके।
निम्बप्ररोपको यस्तु तस्य तुष्टो दिवाकरः॥
श्रीवृक्षे शंकरो देवः पाटलायान्तु पार्वती।
पुत्रप्रदायकश्चैव चन्दनः पनसस्तथा॥
सौभाग्यदश्चम्पकस्तु करीरे पारदारिकः।
अपत्यनाशकस्ताली वकुलो दस्युदस्तथा॥
बहुभार्य्या नारिकेली द्राक्षा सर्व्वाङ्गसुन्दरी।
रतिप्रदा तथा केलिर्मोचकी शत्रुनाशिनी"॥

केलिः कदली, मोचकी शाल्मली।

भविष्यपुराणे,—

"बहुभिः किन्तु संजातैः पुत्रैर्द्धर्मार्थवर्जितैः।
वरमेकः पथि तरुर्यत्र विश्रमते जनः"॥

तथा,—

पत्रैर्देवान् फलैः पितॄन् तत्करोत्यग्निहोत्रं न स्वाध्याया-न्वितः सुतः।.

---

(१) कन्यदा। (२) रोपकेन।

"यत्करोति घनच्छायां पादपः पथि रोपितः।
स छाया च सपुष्पा च सफला वृक्षवाटिका॥
कुलयोषेव भवति भर्त्तुर्लोके दयानुगा।
अशोकपल्लवकरा [1]तिलकालकताननी॥
सर्वोपभोग्या वेश्येव वाटिका रतिदा सदा।"
"अश्वत्थमेकं पिचुमर्दमेकं न्यग्रोधमेकं दशतिन्तिडीकं।
कपित्थविल्वामलकत्रयं च पंचाम्ररोपी नरकं न पश्येत्।" इति
[2]पूर्त्तं मानसं खातकं इदं चेष्टं [3]प्रसादादि[4]पूर्त्तं। च तडाग-
वृक्षरोपणादि। [5]नित्यमैष्टिकमिति मनुवचनान्नित्यं। अतश्चा-
करणे दोषः।

भविष्यपुराणे,
"न खाताः पुष्करिण्योऽपि रोपिताश्च महीरुहाः।
मातुर्यौवनचौरेण तस्य जातेन किं कृतं"॥

स्कन्दपुराणे,—
"केशवायतने यस्तु कारयेत्तुलसीवनं।
लभते चाक्षयं स्थानं पितृभिः सह वैष्णवः॥
शिवालये फलं तद्-यत् तुलसीरोपणे भवेत्।
तावद्वर्षसहस्राणि याव[6]द्वीजदलानि तु।
वसन्ति वैष्णवे लोके तुलसीरोपका नराः।

---

(१) तिलकार्त्तं। (२) पूर्त्तं। (३) प्रासादादि।
(४) पूर्त्तं। (५) नित्यपौष्टिकं। (६) बीजवनानि।

"रोपणात् पालनात् सेकात् दर्शनात् स्पर्शनात् नृणां।
तुलसी हरते पापं वाङ्मनःकायसंचितम्"॥

अथ तपः गीतायां,—

"शमो दमस्तपः शौचं क्षान्तिरार्जवमेव च।
ज्ञानविज्ञानमास्तिक्यं ब्रह्मकर्म स्वभावजम्"॥

तथा,—

"मनःप्रसादः सौम्यत्वं मौनमात्मविनिग्रहः।
भावसंशुद्धिरित्येतत्तपो मानम उच्यते"॥

अथ यमनियमाः।

"यमान् सेवेत सततं न नित्यं नियमान् बुधः।
यमान् पतत्यकुर्वाणो नियमान् केवलान् भजन्"॥

इदं च यमनियमविरोधे समविकल्पः।

प्रसक्तं यमस्य तद्बाध्यत्वं दर्शयितुं विरोधाभावे द्वयोः कर्त्तव्यत्वं। व्यासो मनुश्च।

"अहिंसा सत्यवचनं ब्रह्मचर्य्यमकल्पता।
अस्तेयमिति पंचैते यमाश्चैते व्रतानि च॥
अक्रोधो गुरुशुश्रूषा शौचमाहार[1]मानवं।
अप्रमादश्च नियमाः पंचैवोपव्रतानि च"॥

ब्रह्मचर्य्यमत्र प्रसिद्धं परदारादिवर्जनं स्वदारे पर्वादिवर्जनं च। अकल्पता दम्भराहित्यं।

(१) लाघवं।

तथा,—

"शौचमिज्यातपोदानं स्वाध्यायोपस्थनिग्रहः।

व्रतोपवासमौनं च स्नानं च नियमाः स्मृताः"॥

याज्ञवल्क्यः।

"ब्रह्मचर्य्यं दया क्षान्तिर्ध्यानं सत्यमकल्कता।

अहिंसास्तेयमाधुर्यदमश्चेति यमाः स्मृताः॥

स्नानमौनोपवासेज्यास्वाध्यायोपस्थनिग्रहः।

नियमा गुरुशुश्रूषा शौचाक्रोधाप्रमादताः"॥

ध्यानं निराकारस्य ब्रह्मणः। साकारस्य विष्णोः। दमः बाह्येन्द्रियनिग्रहः। उपवासा एकादश्यादौ। व्रतं अनन्तव्रतानि च। ब्रह्मचर्य्यं निषिद्धमैथुनवर्जनं। यममध्ये गणितं। नियममध्ये तूपस्थनिग्रहः। ऊर्द्ध्वरेतस्त्वं। इदं पुत्राद्युत्पादनानन्तरं बोध्यं।

हारीतः,—"अहिंसा सत्यमस्तेयं शौचं [१]ब्रह्मचर्य्यनियमाः"। तत्र मनुः। क्रोधनियमास्त्वार्जवं। अकल्कता सन्तोषो गुरुशुश्रूषा चेति नियमाः। शौचस्य यम मध्ये च गणनं प्रकारभेदेन। तत्र कर्माधिकारसंपादकं लेपमूत्रकाद्यपनोदनरूपं यमः। [२]मानसादिरूपं नियमान्तर्गतं। एवमकल्पता अपि मानसदम्भराहित्यं यमः। वाह्यदम्भराहित्यं च नियम इति। [३]विवेकवक्तव्यं। अत्र यमानां निषेधान्तरवर्जितहिंसामिथ्याप्रतिषिद्धमैथुनदम्भचेष्टानां रागात् द्वेषात् लोभात् वाकरणप्रसङ्गे [४]तं

(१) ब्रह्मचर्य्यमितियमाः। (२) मनसा।
(३) विवेक्तव्यं। (४) तस्मिन्निहन्ते।

निवृत्ते संकल्पः कर्त्तव्यापाररूपव्रतत्वेन विधेयत्वात् । स्नातक-व्रतत्वेन गणनं तल्लोपे प्रायश्चित्तविशेषार्थं । तच्च एवोक्तं यमाश्चैते व्रतानि चेति । तेन हिंसाकरणेन हिंसादिनिषेधाति-क्रमादेकं पापं । व्रतलोपाच्चापरमिति । तत्द्वये प्रायश्चित्तद्वयं । नियमेषु व्रतमात्ररूपत्वादतिक्रमे एकमेव प्रायश्चित्तं । तत्रायं विशेषः । गृहस्थस्याध्यात्मज्ञानाभ्यासस्य वक्ष्यमाणत्वात् । स्नातकं व्रतत्वेनात्मज्ञानस्य नित्यत्वाच्च । निषिद्धकर्मानुष्ठानस्य कदाचित्-[१]भयादशक्त्या वा प्रसङ्गे अप्रसङ्गोदासीनाकर्त्तुः पुष्करपर्णसदृश-[२]निर्भेदात्मस्वरूपप्रतिसन्धाने नाहं कर्त्ता भूतान्येव भूतेष्विन्द्रिया-ण्येव इन्द्रियार्थेषु व्यवहरन्तीति । दृढनियमकरणेन पापोत्पत्तिः । तदुक्तं भगवता ।

"न मां कर्माणि लिम्पन्ति न मे कर्मफले स्पृहा ।
इति मां योऽभिजानाति कर्मभिः स [३]न लिप्यते ॥
त्यक्त्वा कर्मफलासङ्गं नित्यतृप्तो निराश्रयः ।
कर्मण्यतिप्रवृत्तोऽपि नैव किञ्चित् करोति सः" ॥

रागेण निषिद्धकर्मकरणे पापमवश्यं ।

त्यक्त्वा कर्मफलासंगमिति वचनात् । [४]निषिद्धकर्मणैव फलं आसंगात् ।

तथा,—

"नैव किञ्चित् करोमीति युक्तो मन्येत तत्त्ववित् ।

(१) पादशक्त्या । (२) निर्लेपात्मस्वरूप ।
(३) निबध्यते । (४) निषिद्धकर्मण्यैहिकफले आसंगात् ।

"पश्यन् शृण्वन् स्पृशन् जिघ्रन् अश्नन् गच्छन् स्वपन् श्वसन् ॥
प्रलपन् विसृजन् गृह्णन् उन्मिषन् निमिषन्नपि ।
इन्द्रियाणीन्द्रियार्थेषु वर्त्तन्त इति धारयन् ॥
ब्रह्मण्याधायकर्माणि सङ्गं त्यक्त्वा करोति यः ।
लिप्यते न स पापेन पद्मपत्रमिवाम्भसा" ॥

[१]इदं तद्रुचितरां निश्चयेनात्मनो कर्त्तृकत्वानोत्तरं करणे । अहिंसा च सामान्यतो हिंसावर्जनरूपा । देवलः,— दशविधा हिंसा । उद्वेगजननं । सन्तापजननं । रुजाकरणं । शोणितोत्पादनं । पैशून्यकरणं । सुखापहरणं । अतिक्रमः । संरोधो । हितविप्रतिषेधोवध इति । उद्वेगो मनोदुःखं । सन्तापस्तदेवाधिकतरं । रुजा शरीरदुःखं । अतिक्रमः अवज्ञा । संरोधोऽतिस्वेच्छाचारनिषेधः । हितविप्रतिषेधो भेषजादिनिषेधः । वधो मारणं । एते यद्यपि सर्वे मानसाः प्रयाणवाचिककायिकास्तथापि मनोव्यापारमूलकत्वेनास्माभिर्मानसमध्ये सौकर्य्याय कथ्यते । "यस्मान्नोद्विजते लोक" इति गीतायां । विष्णुपुराणे,—

"कर्मणा मनसा वाचा परपीड़ां करोति यः ।
तद्बीजं जन्म फलति प्रभूतिस्तस्य चाशुभम्" ॥

पुनर्देवलः,—वेश्मच्छेदस्य दहनं । [२]सेतुरेव न मार्गोद्धाधातनहतप्रणाशनं द्रव्यापध्वंसनं । गन्धदूषणमिति । एतच्च संताप-

(१) इदं च दृढ़निश्चयेनाकर्त्तृत्वमात्मनोज्ञात्वाकरणे ।
(२) सेतुभेदमनार्जवोपघातनं ।

जनकत्वेन प्राणिमात्रविषये ब्राह्मणविषये अधिकं गुर्व्वादि-
विषये ततोऽप्यधिकं।

उशनाः,—

"न ब्राह्मणस्यापदं कुर्य्यात्"।

मनुः,—

"आचार्य्यं च प्रवक्तारं मातरं पितरं गुरुं।
न हिंस्यात् ब्राह्मणं गां च सर्व्वांश्चैव तपस्विनः"॥

तथा,—

"अवगूर्य्य त्वब्दशतं सहस्रमभिहत्य च,
जिघांसायां ब्राह्मणस्य नरकं प्रतिपद्यते॥
शोणितं यावतः पांशून् संगृह्णाति द्विजन्मनः।
तावन्त्येव सहस्राणि तत्कर्त्ता नरके वसेत्"॥

मनुः,—

"हीनाङ्गानतिरिक्ताङ्गान् विद्याहीनान् वयोधिकान्।
रूपद्रविणहीनांश्च जातिहीनांश्च नाक्षिपेत्"॥

तथा,—

"क्षत्रियं चैव सर्पं च ब्राह्मणं च बहुश्रुतं।
नावमन्येत [१] वैकृताङ्गान् कृशानपि [२] विशेषतः॥
एतत्त्रयं हि पुरुषं निर्दहेत् [३] त्यवमानितं।
[४] आत्मानमवमन्येत [५] तत्पूर्व्वोत्तरसमृद्धिभिः॥

(१) वैभुष्णुः। (२) कदाचन। (३) त्यपि।
(४) नात्मान। (५) पूर्वातुर।

आमृत्योःश्रिय[1]माकांचेन्नैनां मन्येत दुर्लभां।
पूयशोणितसंपूर्णे अन्धे तमसि दारुणे॥
षष्टिवर्षसहस्राणि हत्वात्मानं विशेन्नरः"।

शङ्खलिखितौ, न शिष्टानमत्कुर्य्यात्॥

यमः,—

"विवादे ब्राह्मणं जित्वा यो हर्षमधिगच्छति।
श्मशाने जायते वृक्षः कंकगृध्रनिषेवितः"॥

हारीतः,—

"मनौपस्थो दहत्यग्निस्तेजसैवेन्द्रियं तनुम्।
[2]मन्यूनां तद्दहेद्विप्रः कुलमायुर्गतिं यशः"॥

हारीतः,—"[3]सवर्णेषु [4]शुचनं। वर्जयेदित्यनुषङ्गः। [5]शूचनं पैशून्यं। सत्यवचनरूपं यमं वाच्यावाच्यप्रभङ्गे वक्ष्यामः। तथा स्तेयं"।

देवलः,— "स्थूलमध्यक्षुद्राणां पदार्थानां प्रसह्य तूष्णीं वा प्रच्छन्नं वा हरणं स्तेयं। रत्नक्षेत्रवेश्महेमरूप्याभरणादीनि स्थूलानि। चतुष्पदद्विपदधान्यवस्त्रलोहकार्पास[6]स्वोपकरणादीनि मध्यानि। [7]दन्तनखदारुचर्मपाषाणमृण्मयादीनि क्षुद्राणि। प्रसह्य बलेन तूष्णीं [8]बलिं विनापि दृश्यमानस्यापि स्वामिना। हारीतः,— "द्विविधं च द्रव्यं, सचेतनमचेतनं स्थावरजङ्गमं। सचेतनमपि जङ्गमस्थावरभेदेन द्विविधमित्यर्थः। इत्यभिधाय दशधा स्तेय-

(१) मन्विच्छे। (२) मन्युना तु। (३) सवर्णा।
(४) सूचनं। (५) सूचनं। (६) सर्वोपकरणादीनि।
(७) प्रहृङ्ग। (८) बलं।

माह। स्वामिना अदत्तस्य ग्रहणं यावद्दत्तं ततोधिकपरिमाण-ग्रहणं। देवपितृमनुष्याद्यर्थमिति यद्द्रव्यं रचितं तस्य स्वयं च भोगः। भृत्यान् मूल्ये[१] कारयित्वा कर्ममूल्यदानं। पुनरानीय[२] दास्यामीति प्रार्थनया नीत्वा पुनरादानं। विश्वासेन स्थापितस्य धनस्याप्रत्यर्पणं। कूटमानतुलादिना अधिकनयनं। ब्रह्मचारिणो यतेर्वा सुवर्णादिग्रहणं। क्षत्रियादेः प्रतिग्रहादि। प्रतिश्रुत्यादानं। दत्तस्याच्छेदनं चेति तथा स्तेयिनो हि प्रमिताः पूर्व्वधनिना-मुपकाराय जायते। तस्मात् स्तेयं न कुर्य्यात्। उपकाराय जायन्ते पशुदासादिजन्म लभन्ते"।

यमः,—

"सुवर्णमेकं गामेकां भूमेरप्यर्द्धमङ्गुलम्।
हरन् नरकमाप्नोति यावदाभूतसंप्लवम्॥
हिरण्यपशुयानानि स्त्रियो वासांसि यो हरेत्।
स पर्य्यायेण यायेत नरकानेकविंशतिं"॥

विष्णुः,—

"यद्यत्परेभ्य स्ववशात्पुरुषस्तु निरंकुशः।
तेन तेनापि हीनः स्यात् यत्र यत्राभिजायते॥
तस्मात्सर्व्वप्रयत्नेन धनहिंसां विवर्जयेत्।
यस्तु लब्धं पुनर्दद्यात् देवद्रव्यं यतस्ततः॥
गुरुद्रव्यं द्विजद्रव्यं सोऽश्वमेधफलं लभेत्।
अपहृत्य परस्यार्थं यस्तु दानं प्रयच्छति॥

(१) मूल्येन। (२) पुनरादाय।

स दाता नरकं याति यस्यार्थस्तस्य तत्फलम्।
परस्वपरितुष्टा ये जीविता तुरगाश्च ये" ॥
तेषां रजः पतेद्यत्र तदमेध्यतरं भवेत्।

बृहस्पतिः,—

"स्वदत्तां परदत्तां वा यो हरेत वसुन्धराम्।
षष्टिवर्षसहस्राणि विष्ठायां जायते क्रिमिः ॥
तडागानां सहस्रेण अश्वमेधशतेन च।
गवां कोटिप्रदानेन भूमिहर्त्ता न शुद्ध्यति ॥
अन्यायेन हृता भूमिरन्यायेन च हारिता ॥
हरतो[१] हारयन्तश्च दहत्यासप्तमं कुलं।
ब्रह्मस्वं प्रणयाद्भुक्तं दहत्यासप्तमं कुलं ॥
विक्रमेण च भुञ्जन्ते शतपूर्व्वान् दशावरान्।
ब्रह्मस्वे न मतिं कुर्य्यात् प्राणैः कण्ठगतैरपि ॥
अग्निदग्धा निरोहन्ति ब्रह्मदग्धो न रोहति।
न विषं विषमित्याहुः ब्रह्मस्वं विषमुच्यते ॥
विषमेकाकिनं हन्ति ब्रह्मस्वं पुत्रपौत्रिकं।
लोहचूर्णाश्मचूर्णं च विषं च जरयेन्नरः।
ब्रह्मस्वं त्रिषु लोकेषु कः पुमान् जरयिष्यति" ॥

ब्रह्मपुराणे,—

"सामान्यां दक्षिणां लब्ध्वा गृह्णात्येको विमोहितः।
नास्तिक्यभावनिरतः स वै प्रेतोऽभिजायते" ॥

(१) हारयितुश्चैव।

अथास्तेयापवादः,—

आपस्तम्बः,— "यथा कथा च परपरिग्रहमभिमन्यते स्तेनो भवतीति । कौत्सहारीतौ, तथा, काण्वपुष्करसादी । सापदा[1] परिग्रहेष्विति वार्षायणिः । [2]ग्राम्यपशूपघातेन स्वामिनः प्रतिषेधयति । अव्यवहारो विरुद्धो भवति । सर्वत्रानुमतिपूर्वं ग्रामीषणकादीनां बीजकोषः । उषः यवादिकालका । युग्यानां वहानां घासः । एवंविधं वस्तु [3]परादत्तं गृह्णन् न निषेधन्ति स्वामिनः । अव्यहारः अधिकग्रहणं । विरुद्धो निषिद्धः" ।

यमः,—

"अस्तेयमग्नये काष्ठमस्तेयं च गवे तृणम् ।
कन्याहरणमस्तेयं यो हरत्यनलंकृताम् ॥
पुष्पे शाकोदके काष्ठे तथा मूलफले तृणे ।
अदत्तदान[4]मस्तेषामस्तेयं च यमोऽब्रवीत् ॥
तृणं काष्ठं फलं पुष्पं प्रकाशं वै हरेद्विजः ।
गोब्राह्मणार्थे गृह्णन् वै न स पापेन लिप्यते" ॥

मनुर्यमः,—

"पथिकः क्षीणवृत्तिस्तु द्वाविद्वू देवमूलकौ ।
आददानः परक्षेत्रात् न दोषं मनुरब्रवीत्" ॥

(१) सत्यं-पवादा । (२) ग्राम्योपयुग्यघातेन ।
(३) परैर्दत्तं गृह्णन्तं । (४) अदात्तदानानीत्येषां ।

बृहस्पतिकात्यायनौ,—

"त्रपुषोर्वारुकं द्वे तु पञ्चाम्रं पञ्च दाडिमम्।
खर्जूरवदरादीनां षष्टिं गृह्णन् न दोषभाक्" ॥

उर्वारुकं कर्कटी।

नारदः,—

"शालिव्रीहिप्रसूनानां मुष्टिग्राह्यो विधीयते।
यवगोधूमयोर्वापि यदि वा माषमुद्गयोः ॥
(१)शाकपरिमाणे सुमनसां चाननन्दने।

पाणिद्वयेन यावद्ग्रहणं तावच्छाका ग्राह्याः। अर्चायामपि न निह्नवे आच्छादने यावन्ति पुष्पाण्यपेक्ष्यन्ते(२) तावत् पुष्पं परस्मादाहर्त्तव्यमित्यर्थः।

(३)शौच हारीतः,—

शौचं वाह्यमान्तरं च। कुलशौचं, अर्थशौचं, शारीरं च। सूतकाद्यशौचराहित्यं। अर्थशौचममेध्यलेपचण्डालादिस्पर्शादि-शुद्धिः। आभ्यन्तर शौचं पञ्चविधं। तद्यथा।

मानसं चाक्षुषं घ्राणं गव्यं खाद्यं चेति। तत्र मानसम्।

य पुण्यानुध्यानदोषविरहः। चाक्षुषाशौचं चाण्डालादि-स्पर्शनकाले जपहोमजलादिनिषेधात्, तन्निमित्ताशौचापगम-रूपतत्तत्कर्मणि।

(१) हारीतः। पाण्योःशाकपरिमाणे सुमनसां चार्चायामपि न निह्नवे।
(२) यावत्पुष्पापेक्षा—।
(३) अथ शौचं।

तथा,—

सूतिगन्धे नित्यानध्यायस्मरणात्तत्कर्मणि तदशौचविरहः, तस्मात्तस्याशौचं ध्वनिरिति सामकीर्त्तनावेदनान्तराध्ययनं शौचरूपत्वात् तदशुद्धिः[१]। एवं सूतकादौ भोजनराहित्यं स्वाद्यशौचमिति। एतेषां[२] पंच आतुराशौचविरहरूपत्वात् नियमे अन्तर्भावः। बाह्याशौचस्य यमे अन्तर्भावः। इत्युक्तं प्राक्।

अथ ब्रह्मचर्य्यं।

हारीतः,—

ब्रह्मचर्य्यं नाम दिव्यमानुषाणां तथा चित्रकाष्ठपात्रस्मृण्मयादीनामपि [३]आर्थमसंकल्पनमनभिप्रेक्षणमसंकीर्त्तनमन[४]भिगमनसन्दर्शनमसंगमस्त्रीणां। तत् चतुर्विधं, कृष्णं रक्तं शुक्लं विमलमिति। परदारवर्जनं नित्यं, नित्यं स्वदारसेवनं कृष्णं। पर्ववर्जननियमं रक्तं। ऋतुकालाभिगमनं शुक्लं। ऊर्द्धरेतस्त्वं विमलं एवं ह्याह।

"कृष्णेनेमं जयेल्लोकं मध्यं रक्तेन वै जयेत्।
शुक्लेन तु जयेत्स्वर्ग्गं[५] विमले मोक्षमाप्नुयात्"॥

दिव्या तु विश्वान्याः[६] पुराणस्मृताः। पोतं प्रतिमायोग्यं रजतादि तस्यास्तेन घटिताः। अर्था [७]अर्थनमिच्छाविरहः। असंकल्पनं करिष्यामीति [८]अभिलाषाभावः। अनभिप्रेक्षणं आभि-

(१) तस्मात् तस्मात् सुषिध्वनिरिति सामकीर्त्तनादेव वेदान्तराध्ययनाशौचरूपत्वात् तदसुद्धिरिह वाक्यशुद्धिः।
(२) एतेषां च। (३) अप्रार्थन—।
(४) मनभिभाषणा—। (५) स्वर्गं। (६) ऊर्द्धस्यादयाः।
(७) अप्रार्थनमि—। (८) अभिसन्धानभावः।

मुख्येनावलोकनं। असन्दर्शनं सकलावयवानवलोकनं। असमागमः। असन्निधानं। पर्वणि अमावास्यादौ नियमे व्रतादौ वर्जनं। अत्र च स्मरणादिकमष्टाङ्गमैथुनं वर्ज्यमित्यर्थः। तथाच लक्ष्मीधरः,— "ब्रह्मचर्य्यमत्र [1]प्रसिद्धमैथुनवर्जनमिति"। शुक्लविमलयोस्तु नियमान्तर्भावे उपस्थग्रहपदेन वक्ष्यते। अथा-कल्पिता-दम्भराहित्यं।

मनुः,—

"न धर्मस्यापदेशेन पापं कृत्वा व्रतं चरेत्।
व्रतेन पापं प्रच्छाद्य कुर्वन् स्त्रीशूद्रदम्भनम्॥
प्रेत्येह चेदृशा विप्रा विगर्ह्यन्ते द्विजातिभिः।
[2]अलिङ्गलिङ्गदे देवे यो वृत्तिमुपजीवति॥
सलिङ्गानां [3]हरत्येनस्तीर्य्यक्योनौ च जायते"।

तथा,—

"धर्मध्वजी सदा लुब्धश्छाद्मिको लोकदम्भकः।
वैडालव्रतिको ज्ञेयो हिंस्रः सर्व्वाभिसन्धिकः॥
अधोदृष्टिर्नैष्कृतिकः स्वार्थसाधनतत्परः।
शठो मिथ्या विनीतश्च वकवृत्तिरुदाहृतः"॥

अथ दया, महाभारते,—

"[4]दया भूतेष्वलोलुप्त्वमार्जवं ह्रीरचापलं।
भवन्ति सम्पदं दैवीमभिजातस्य भारत"॥

(१) प्रतिषिद्ध। (२) अलिङ्गलिङ्गवेशेन ये चान्यमुपजीवति
(३) हरत्येनं। (४) दयाभूतेष्व।

यमः,—

"दयया धर्मदानाभ्यां तपसा ब्रह्मचर्य्यया।
शमयित्वेन्द्रियग्रामं ब्रह्मलोके महीयते"॥

तथा,—

"विभागशालिता यस्य क्षमायुक्तो दयालुकः।
गृहस्थस्तु समाख्यातो न गृहेण गृहाश्रमी"॥

हारीतः,—

दमो दयादानं धृतव्रतत्वं चेति ब्राह्मणस्य। सर्वभूतानुकंपनं दया। क्षमा।

देवलः,—

"यूकामशकदंशादीन् खादतश्चात्मनस्तनुं।
पुत्रवत्परिरक्षन्ति ते नराः स्वर्गगामिनः"॥

हारीतः,—

"क्रोधनिन्दानन्तरं क्रोधो हि तमोरूपं तस्य क्षमा नियमनं व्याख्यातेति। विवादं न समाचरेदित्युक्त्वा मनुः,—

"एतैर्जितस्तु जयति सर्वान् लोकान् इमान् गृही"।

हारीतो यमश्च,—

"आक्रुष्टस्ताडितः क्षिप्तः क्षमते [१]योऽनुलिम्पति।
स तस्य दुष्कृतं दत्त्वा सुकृतं सर्वमश्नुते"॥

(१) योऽनुकुप्यति।

ध्यानं मनुः,—

"ब्राह्मे मुहूर्त्ते बुध्येत धर्मार्थावपि चिन्तयेत्।

कायक्लेशांश्च तन्मूलान् वेदतत्त्वार्थमेव च"॥

वेदतत्त्वार्थः। परमात्मा।

विष्णुपुराणे,—

"प्रायश्चित्तान्यनेकानि तपःकर्मात्मकानि च।

यानि तेषामशेषाणां कृष्णानुस्मरणं परं॥

कृते पापेऽनुतापो वै यस्य पुंसः प्रजायते।

प्रायश्चित्तं तदस्येकं हरिसंस्मरणं परं॥

हरिसंस्मरणक्षीणसमस्तक्लेशसंचयः।

मुक्तिं प्रयाति स्वर्गाप्तिस्तस्य विघ्नोऽनुमीयते॥

तस्मादहर्निशं विष्णुं संस्मरन् पुरुषो मुने!।

न याति नरकं सद्यः [1]संक्षीणाखिलपातकः॥

[2]आयासः स्मरणे कोऽस्य स्मृतो यच्छति शोभनं।

पापक्षयश्च भवति स्मरतां तमहर्निशं"॥

तथा,-

"स्मृतेः सकलकल्याणभाजनं यत्र जायते।

पुरुषस्तमजं नित्यं व्रजामि शरणं हरिं॥

[3]तदस्मत्प्रीयते विष्णुः स्मर्य्यतां बन्धमुक्तिदः"।

(१) प्रक्षीणाशेषकल्मषः। (२) आयमः।

(३) तदस्मत्प्रीतये।

तथा प्रह्लादवाक्यं गीतायां,—

"ये तु सर्वाणि कर्माणि मयि संन्यस्य मत्पराः।
अनन्येनैव योगेन मां ध्यायन्त उपासते॥
तेषामहं समुद्धर्त्ता मृत्युसंसारसागरात्।
भवामि न चिरात्पार्थ! मय्यावेशितचेतसां॥
मय्येव मन आधत्स्व मयि बुद्धिं निवेशय।
निवसिष्यसि मय्येव अत ऊर्द्ध्वं न संशयः"॥

विष्णुरहस्ये, प्रह्लादं प्रति शुक्रवाक्य।

"जन्मभिर्बहुभिर्वत्स! नरास्तद्गतचेतसः।
भवन्ति वै भागवतास्ते विष्णुं प्रविशन्ति च॥
अनेकजन्मसंसाररचिते पापसंचये।
नाक्षीणे जायते पुंसां गोविन्दाभिमुखी मतिः"॥

इति विस्तरभयान्न लिख्यते। निराकारं ब्रह्मध्यानं विस्तरेण वक्ष्यामः। माधुर्य्यं प्रियवादित्वादि। वाचिके वक्ष्यते। यमः,— "यमेन यत्नमातिष्ठेत् वशश्चेत् इन्द्रियाणामप्रकीर्णता। दान्तस्यायं लोकः। [1]विशेषतस्तु तत्तदिन्द्रियसंयमे वक्ष्यते"। इति [2]माधुर्य्यं। अथ नियमेषु अक्रोधः सक्रोधवर्जन-संकल्पः। क्षमा तु क्रोध-विरोधी मनोवृत्तिविशेषः। ततो भिन्ना क्षमा यममध्ये गणिता। हारीतः,— "मानसी तु क्रोधातीतपरितापात् पीड्यमानस्य काय-वैवर्ण्यवैरूप्यव्याधयः संभवन्ति। अहंकारेर्ष्यासूयादेवपरोपघाता-

(१) तत्र वाह्येन्द्रियसंयमरूपं यमः। (२) यमाः।

द्रीनि क्रोधरूपाणि। यत्क्रोधनो जपति, यज्जुहोति यद्वानपति, यद्ददाति वैरोचनो हरते तस्य सर्व्वं। वैरोचनो बलिः"। पुनर्हारीतः,— [1]क्रोधाग्निनाद्भूतं स्वेषामप्यवक्रमतो न गमनीयो ऽविश्वसनीयस्य भवति। कार्य्याकार्य्यवाच्यावाच्यानि न तर्कयति। हितवादिनो गुरूनप्यतिक्रामत्याविष्टः। प्रेतलोकानात्मानं गमयति तत्र घोरां नरकयातनामनुभूय क्रूरक्रव्यादतीर्य्यग्योनिषु जायते। [2]क्रमशो मनुष्यतां प्राप्य सर्वजनविद्वेषितां प्राप्नोति। आर्जवं हारीतः,— निकृतिनियमो जैह्मनियमश्चार्जवं। छद्ममाया-[3]कुलयुक्ता निकृतिः। काठिन्यशाठ्यवैषम्य[4]दोषसद्भावयुतं जैह्म्यं। छद्मं छन्नं, मायाकौटिल्यं व्याजः। अर्थान्तरोपन्यासः। एतेषां [5]निकृतिरूपाणां नियमो वर्जनं आर्जवं, एवं काठिन्यं निष्ठुरता। दयाविरोधिपदार्थः। शाठ्यं अयत्नता। वैषम्यं निगूढपरद्रोहप्रतिसन्धानम्[6]।

"जैह्म्यं पंचविधं। तस्य निवृत्तिरार्जवम्"।

पुनर्हारीतः,—

"सर्वभूतात्मभूतत्वादार्जवं ब्रह्मणः पदम्।

अजिह्मामशठां शुद्धां वर्त्तं ब्राह्मणजीविकाम्"॥

[7]नियमोपकल्पता। हारीतः,— [8]स्वनियमो दम्भनियमश्चेद-कल्पता। [9]स्वनियमो दर्पवर्जनम्। दम्भनियमो दम्भवर्जनम्।

(१) क्रोधाविर्भूतःजिह्मा। (२) तत्र सर्वासां भयो भवति।
(३) व्याजयुक्ता निष्कृतिः। (४) दौष्ठ्य। (५) निष्कृति।
(६) दौष्ठ्यं परसुखासहिष्णुत्वं। (७) नियमेष्वकल्पता।
(८) स्मय। (९) स्मय।

ज्ञानदानतपऐश्वर्य्यविशेषाश्रयं वर्जयेत्। श्रयावपन्नास्तेजसोपपन्ना भवन्ति। श्रयावपन्नाः श्रयहीनाः। मनुः,—"तपःचरति [१]विस्मयात्"। गीतायां,—

"ईश्वरोऽहमहं भोगी सिद्धोऽहं बलवान् सुखी।
आढ्योऽभिजनवानस्मि कोऽन्योस्ति सदृशो मया॥
यक्ष्ये दास्यामि मोदिष्य इत्यज्ञानविमोहिताः।
प्रसक्ताः कामभोगेषु पतन्ति नरकेऽशुचौ"॥

हारीतः,—

विद्यामविद्वत्तां ख्यापयति। अदत्तादानं। अयाज्ययाजनं [२]आतपास्तपः। अनाश्रयत्वं लिप्सते। एवं वृत्तानां दुष्कृतं भवति, एवं दम्भरूपं तद्वर्जनम् दम्भवर्जनं। अकल्पता नियम इत्यर्थः। सन्तोषः।

मनुः,—

"सन्तोषं परमास्थाय सुखार्थी संयतो भवेत्"।

निषिद्धकर्मणा सुखं नेच्छेत्। अनिषिद्धेनाल्पेनापि साधनेन मनो रमयेदित्यर्थः। एतदेव हारीतेन विस्तरेणोक्तं। "निषिद्धस्थान-निषिद्धद्रव्य-विक्रयायाज्ययाजनासत्परिग्रहेण, शूद्रश्रवणे वेदपाठेन, मूल्यग्रहणाध्यापनवेदप्रश्नपूर्व्वं प्रतिग्रहादिना सुखं नेच्छेत्। अनिषिद्धेन साधनेन सन्तुष्टः भवेदिति"।

सन्तोषः परमो धर्म इत्युक्तं। गुरुशुश्रूषा वेदाध्ययनप्रस्तावे निरूपिता। नियमेषु स्नानं नित्यं नैमित्तिकं काम्यं च।

(१) स्मयात्। (२) अतपस्वीतपो।

"नदीषु देवखातेषु" इत्यादि मनूक्तं नित्यं नैमित्तिकं संक्रान्तिग्रहोपरागादौ। तीर्थप्राप्त्यादौ चेत् माध्याह्निकप्रकरणे वक्ष्यते। अथ मौनं।

यमः,—

"सुभाषितसहस्राणि सुभाषितशतानि च।
सर्वाणि व्याहृतस्यैव कलां नार्हन्ति षोडशीम्॥
दुष्टवाक्यं न वक्तव्यं ब्राह्मणानां कथंचन।
तूष्णीमासीत निद्रायां न ब्रूयात् किंचिदुत्तरम्"॥

शातातपः,—

स्नातस्य वारिणस्तेजो जुह्वतोऽग्निः समाहरेत्।
भुञ्जानस्यागमत्वायुस्तस्मान्न व्याहरेत्त्रिषु।

[१]अथ स्नातकव्रतानि। पूर्व्वे यामा इत्युपक्रम्य सन्ध्ययोश्च वहिर्ग्रामस्यासनं वाग्दत्तस्य।

अङ्गिराः,—

"सन्ध्ययोरुभयोर्जप्ये भोजने दन्तधावने।
पितृकार्य्ये दैवते च तथा मूत्रपुरीषयोः॥
गुरूणां सन्निधौ दाने [२]यागे चैव विशेषतः।
एषु मौनं समातिष्ठन् स्वर्गमाप्नोति मानवः"॥

एषु मौननियमः स्वर्गफलाय। व्यस्तेषु समस्तेषु च।

"मनः प्रसादसौम्यत्वं मौनमात्मविनिग्रहः"। इति गीतायां।

(१) अथ स्नातकव्रतानि। पूर्व्वेण ग्रामा इत्युपक्रम्य सन्ध्ययोश्च वहिर्ग्रामादासनं वाग्यतस्य। (२) योगे।

तथा,—

"उभे सन्ध्ये च यो विप्रो मौनमास्ते समाहितः ।
दिव्यं वर्षसहस्रं स ब्रह्मलोके महीयते" ॥

अथोपवासः,— एकादश्युपवासो नित्यः ।

कूर्मपुराणे,—

[१]एकादशी नित्यमिति एकादशी सदोपोष्येति च ।

तथा,—

"एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि ।
वनस्थयतिधर्मोऽयं शुक्लामेव सदा गृही" ॥

तथा,—

"शयनीबोधनीमध्ये या कृष्णैकादशी भवेत् ।
सैवोपोष्या गृहस्थेन नान्या कृष्णा कदाचन" ॥

अत्र कृष्णानिषेधो व्रतविषयः ।

"यानि कानि च पापानि ब्रह्महत्यादिकानि च ।
अन्नमाश्रित्य तिष्ठन्ति संप्राप्ते हरिवासरे ॥
न भोक्तव्यं न भोक्तव्यं संप्राप्ते हरिवासरे ।
भोजनस्य निषिद्धत्वात् कृष्णायामपि न कार्य्यं ॥
इति भोजननिषिद्धत्वात् कृष्णायामपि न कार्य्यं" ।

कात्यायनः,—

"एकादशीषु कृष्णासु रविसंक्रमणे तथा ।
चन्द्रसूर्य्योपरागे च न कुर्य्यात्पुपवासं गृही" ॥

(१) उपोष्यैकादशीनित्यं ।

कौर्मे,—

"संक्रान्त्यां कृष्णपक्षे च रवि[१]शुक्रदिने तथा"।

संक्रान्त्यादिविषये जैमिनिः,—

"तन्निमित्तोपवासस्य निषेधोऽयमुदाहृतः।
[२]नानुसंगच्छते ग्राह्यो यतो नित्यमुपोषणं"॥

तेन शुक्लैकादश्यां संक्रान्तिरविवारादौ नैकादशी निषेधः किन्तु संक्रान्तिनिमित्तकोपवासस्य गृहस्थं प्रति निषेधः।

कात्यायनः,—

"उपवासो यदा नित्यः श्राद्धं नैमित्तिकं भवेत्।
उपवासं प्रकुर्वीत आघ्राय पितृसेवितम्"॥

वराहे,—

"सूतकेऽपि नरः स्नात्वा प्रणम्य मनसा हरिं।
एकादश्यां न भुञ्जीत व्रतमेतत् न लुप्यते।
मृतकेऽपि न भुञ्जीत नारीदृष्टे रजस्यपि"॥

अशक्तस्य मार्कण्डेयः,—

"एकभक्तेन नक्तेन तथैवायाचितेन च।
उपवासेन दानेन न निर्दादशीको भवेत्"॥

प्रकारान्तरमाह, स्कान्दे,—

"असामर्थ्ये शरीरस्य व्रते च समुपस्थिते।
कारयेद्-धर्मपत्नीं वा पुत्रं वा विनयान्वितं।
भ्रातरं पितरं शिष्यं ब्राह्मणं दक्षिणादिभिः"॥

---

(१) शुक्र। (२) नानुषङ्गतो।

अन्यार्थमुपवासे कृते कर्त्तुरपि फलमाह,—

"कर्त्ता दशगुणं पुण्यं प्राप्नुयात् नात्र संशयः"

तत्रैकादश्यां द्वैधे निर्णयः।

"यत्रोदये कलाकाष्ठा मुहूर्त्तमपि दृश्यते।
तत्र सैकादश्युपोष्या न तु पूर्व्वा कथंचन"॥

दिनद्वयेऽप्युदयसम्बन्धे द्वादशीवृद्धौ सर्वेषां उत्तरैव।

द्वादशीक्षये—

"संपूर्णैकादशी यत्र प्रभाते पुनरेव सा।
द्वादशी च त्रयोदश्यां नास्ति चेत्तत्कथं भवेत्।
उत्तरां तु यतिः कुर्य्यात् पूर्व्वामुपवसेद्गृही"॥

इति व्यवस्था। "निष्कामस्तूत्तरां वसेत्" इति वाक्यान्तरात् विधवाया अपि द्वितीयायामुपवासः। यदा तूदये दशमी क्षीणा च एकादशी परदिने द्वादशी तदा दशमीविद्धायामेकादश्यामुपवासः।

एकादश्युपवासस्य नित्यत्वात् दशमीविद्धव्यतिरिक्तायाया-भावात् दशमीविद्धनिषेधवाक्याना[१]मपरदिने एकादशीसद्भाव-परत्वात्। उक्तं च[२] विष्णुधर्मे,—

"एकादशी दशाविद्धा सकलाद्वादशी परे।
उपोष्या[३] द्वादशी विद्धा इत्येवमब्रवीत्"॥ इति॥

---

(१) परदिने। (२) विष्णुधर्मोत्तरे।
(३) दशमी।

एवं च,—

"कलार्द्धेनापि विद्धा स्याद् दशम्यैकादशी यदि।

तावदेकादशीं त्यक्ता द्वादशीं समुपोषयेत्" ॥ इति

तत्काम्यद्वादशीव्रतनिमित्तेन दशमीविद्धनिषेधपरम्।

न तु एकादशीव्रतनिषेधपरं।

(१)काम्यं यस्तं द्वादशीव्रतं।

"द्वादश्यामुपवासं तु ये वै कुर्वन्ति मानवाः।

वत्स! मामेव ते यान्ति मम व्रतपरायणाः" ॥

अन्यथा दशाविद्धोपवासविधायक वाक्यानामनवकाशप्रसङ्गात्।

"एकादशी दशाविद्धा परतोऽपि न(२) विद्यते।

गृहिभिर्यतिभिश्चैव सैवोपोष्या सदा तिथिः" ॥

यदा तु दशाविद्धा पूर्व्वदिने परदिने चोदय-एकादशी द्वादशी चीणा तदापि दशमीविद्धायां गृहीणामुपवासः। उत्तरदिने यतीनां इति कालादर्शादिव्यवस्था।

अन्येतु यद्यपि।

"एकादशी द्वादशी च रात्रिशेषे त्रयोदशी।

व्यहस्पृक् तदहोरात्रं नो पोष्यं तत्सुतार्थिभिः" ॥

इति यद्यपि गृहस्थस्य निषिद्धं। तथापि,—

"दशमीशेषसंयुक्ता गान्धार्य्या समुपोषिता।

तस्याः पुत्रशतं नष्टं तस्मात्तां परिवर्जयेत्" ॥

(१) काम्यं चास्ति। (२) वर्द्धते।

दशाविद्धाया निषेधात् एकादशीक्षयवदिह विशिष्टादशमी-विद्ध-परवचनाभावात् ।

"उपवासनिषेधे तु भक्ष्यं किञ्चित्प्रकल्पयेत्" ॥

इत्यस्याशक्तविषयत्वे मानाभावात् ।

"एकादशीदशाविद्धा द्वादशी च क्षयं गता ।

दानं वाप्येकभक्तं वा तदा कुर्य्याद्यथाचितमिति" ॥

वाक्याच्च,—

एकादश्या-उदयसत्त्वेऽपि द्वादशीक्षये गृहस्थस्य उपवास-निषेधवाक्यानां नक्तादिरूपे नैकादशीव्रतविधिपरत्वमिति ।

अथ (१)व्रतकर्म,—

दशम्यां प्रातर्नित्यकृत्यानन्तरं—

"दशमीदिनमारभ्य करिष्येऽहं व्रतं तव ।

त्रिदिनं देवदेवस्य निर्विघ्नं कुरु केशव"! ॥

इति प्रार्थनं,—

मध्याह्ने सविशेषं विष्णोः पूजनं तदहरेकवारं हविष्य-भोजनम् ।

मात्स्ये,—

"कांस्यं मांसं सुरां क्षौद्रं तैलं वितथभाषणम् ।

व्यायामं च व्यवायं च दिवास्वप्नं च मैथुनं ॥

तिलपिष्टं मसूरं दशम्यादिषु वर्जयेत् ।

(१) व्रतधर्म्माः ।

घृतमत्यम्बुपानं च पुनर्भोजनमेव च।
चणकं कोरदूषांश्च पराश्नं शाकमेव च" ॥

सायं दन्तधावनं, रात्रौ नियमेन विष्णुं स्मृत्वा शयनं। प्रात-र्नित्यकृत्यानन्तरं स्वस्तिवाचनं संकल्पः। भगवन्-सूर्य्यभगवत्यः सोमादयो देवता भगवत्प्रीतये एकादशीव्रतमहं कुर्वीयेति। [1]अष्टाक्षरमन्त्रजपेन संकल्पपात्रगतजलपानं। आचमनं। प्रार्थना,—

"एकादश्यां निराहारो भूत्वा चैवापरेऽहनि।
भोक्ष्येऽहं पुण्डरीकाक्ष! शरणं मे भवाच्युत! ॥

ततो वाह्याभ्यन्तरशुद्धिः।

"शारीरमन्तःकरणोपघातं वाचश्च विष्णुर्भगवानशेषम्।
शमं [2]नयत्वाशु ममेहशर्म्म पापादनन्तो हृदि सन्निविष्टः" ॥

"अन्तःशुद्धिं वहिःशुद्धिं शुद्धोऽनन्तर्मम योऽच्युतः।
स करोतु त्वमस्ते तस्मिन् शरीरे चास्मि सर्व्वदा ॥
[3]वाह्योपघातामनयोर्येषां च भगवानजः।
शमं [4]नयत्वमेवात्मा विष्णुस्तेतमि संस्थितः" ॥

इति देवस्योपरि नानापुष्पैर्मण्डपकरणम्। मध्याह्ने स्नानं पंचोपचारेण पूजा। पायसप्रधानं नैवेद्यं। व्याहृतिभिरष्टोत्तर-शतमिति घृतहोमः।

---

(१) अष्टाक्षरमंत्रेण त्रिर्जप्तेन।
(२) नयत्वाशु।
(३) वाह्योपघातामनयोर्वीर्षां।
(४) नयत्वमेयात्मा।

भविष्ये,—

"क्षमासत्यं दया दानं शौचमिन्द्रियनिग्रहः।
देवपूजाग्निहोमश्च सन्तोषास्तेय[१]भाजनम्" ॥

[२]सर्वव्रतेष्वयं कर्म। विष्णुधर्मोत्तरे,—

"तज्जाप्ययजनध्यानं तत्कथाश्रवणादिकं।
तदर्चनं च तन्नामकीर्त्तनश्रवणादयः।
उपवासकृतामेते गुणाः प्रोक्ता मनीषिभिः" ॥

वर्जनीयानि,—

"पाषण्डिभिरसंस्पर्शमसंभाषणमेव च।
रागाभ्यङ्गं शिरोभ्यङ्गं ताम्बूलं च विवर्जयेत् ॥
वहिर्ग्रामान्त्यजान् सूतिं पतितं च रजस्वलां।
न स्पृशेत् नाभिभाषेत नेक्षेत व्रतवासरे ॥
दन्तानां धावनं हिंसामनृतं स्तेयमैथुने।
असकृत् जलपानं च दिवास्वापं विवर्जयेत् ॥
गन्धालंकारमाल्यानि वर्ज्यान्यञ्जनमेव च।
नृत्यालोकनगन्धादिस्वादनं परिकीर्त्तितम् ॥
अन्नस्य वर्जयेन्नित्यं [३]ग्रामनस्याभिकांक्षिणाम्" ॥

प्रमादादेषां करणे प्रायश्चित्तम्।

पाषण्डपतितादि स्पर्शे स्नात्वा सूर्य्यावलोकनम्। सम्भाषणे विष्णुस्मरणमाचमनं च। अवलोकने सूर्य्येक्षणं सम्भाषणे पारणे

---

(१) भावनं।
(२) सर्वव्रतेष्वयं धर्मः।
(३) ग्रासानामभि।

तुलसीदलामलकीदलप्राशनं वा । तेषु प्राथमिकयोर्मध्यमोक्तप्रायश्चित्तानन्तरं व्रतानुकूलेन नामत्रयाष्टशतजपः ।

"मिथ्यावादे दिवास्वापे बहुशोऽम्बुनिषेवणे ।
अष्टाक्षरं व्रती जप्त्वा व्रतमष्टोत्तरं शुचिः" ॥

ताम्बूलचर्वणे मांसस्य भक्षणे व्रतलोपो भवेत् कुर्य्यात् कृष्णावह्निविवर्जनमिति पैठीनसिवचनात् । "भिद्यते तु ब्रह्मचर्य्यं स्वदारेषु न संगमादित्येकादशीव्यतिरिक्तविषयं" । केवलं ।

"रेतःसेकात्मकं भोगम्व्रतेऽन्यच्च तपः स्मृतः" ।

इतिवचनाद्रेतःसेके व्रतभङ्गः ।

"स्मरणं प्रेक्षणं केलिः स्पर्शनं गुह्यभाषणम् ।
संकल्पोऽध्यवसायश्चाकार्य्यनिर्वृत्तिरेव च" ॥

इति सर्व्वेषां मैथुनत्वात्स्मरणादौ नामत्रयजपः अष्टाक्षरजपो वा न व्रतभङ्गः । दन्तधावने गायत्रीजपद्वयवारपूर्व्विकाभिमन्त्रित जलपानम् । अन्यवर्जनीय सेवनेऽपि नामत्रयजपोऽष्टाक्षरजपो वा उक्तप्रायश्चित्तानन्तरं वाह्यान्तरशुद्धिः ।

विष्णुधर्म्मोत्तरे,—

"शारीरमन्तःकरणोपघातं वाचश्च विष्णुर्भगवानशेषः ।
शमं नयत्याशु ममैव शर्म पापादनन्तो हृदि सन्निविष्टः ॥
अन्तःशुद्धिं बहिःशुद्धिं शुद्धोऽनामम योऽच्युतः ।
सकरोत्वमले तस्मिन् शरीरे चास्मि सर्वदा ॥
वाह्योपघातानखिलो बीहांश्च भगवानजः ।
शमं नयत्वमेयात्मा विष्णुश्चेतसि संस्थितः ॥

एतत् संभाष्य अन्यं पाषण्डादीनुपोषितैः ।
नमः (१)शचीपते इत्युक्ता सूर्य्यं पश्येत वीक्षितैः ॥
रात्रौ तु च विशेषं विष्णुपूजा । जागरस्वरूपं च ।
स्कन्दपुराणे,—
"गीतं वाद्यं च नृत्यं च पुराणपठनं तथा ।
धूपं दीपं च नैवेद्यं पुष्पगन्धानुलेपनम् ॥
फलमन्नं च श्रद्धा च शौचमिन्द्रियनिग्रहः ।
सत्यान्वितं विनिद्रं च मुदायुक्तं क्रियान्वितम् ॥
साश्चर्य्यं चैव सोल्लासं पापालस्य-विवर्जनम् ।
प्रदक्षिणाभिसंयुक्तं नमस्कारपुरःसरम् ॥
नीराजनसमायुक्तमनिर्विण्णेन चेतसा ।
यामे यामे (२)महाराज ! कुर्य्यादारात्रिकं हरेः ॥
षड्विंशगुणसंयुक्तमेकादश्यां तु जागरम्" ।
तथा,—
"रात्रौ जागरणं कृत्वा समुपोष्य हरेर्दिने ॥
दश वै पितृके पक्षे मातृके दशपूर्व्वतः ।
(३)सभूर्य्यां दशपक्षे तु पुरुषानुद्धरेन्नरः ॥
इति जागरणं (४)संयोगपृथक्न्यायेनाङ्गं फलार्थं च ।
"प्राणायामविशाये तु ये कुर्व्वन्तीह जागरम् ।
यामे यामे फलं प्रोक्तं कोटिपञ्चाशदब्दकम्" ॥

---

(१) शुचिपदेत्युक्ता । (२) महाभाग ।
(३) भार्य्यायां । (४) संयोगपृथक्त्वेनाङ्गं ।

जागरणं[1] विष्णवायतने कार्य्यं, तदभावे शिवायतने, शिवायतनाभावे सूर्य्यायतने, सर्वाभावेप्याकाशे विष्णुपदं दृष्ट्वा, तदभावे गृहे विष्णुप्रतिमासन्निधौ, तस्याप्यभावेऽश्वत्थमूले, तदभावे धात्रीमूले तुलसीवने वा। तीर्थे वा, नदीतीरे वा। सर्वाभावे वैष्णवसन्निधौ। प्रातर्द्वादश्यां नित्यकर्मानन्तरं षोड़शोपचारेण विष्णोः पूजा। यथाशक्ति वैष्णवसद्ब्राह्मणभोजनम्। पारणं मन्त्रेण—

"अज्ञानतिमिरान्धस्य व्रतेनानेन केशव!।
प्रसीद सुमुखो नाथ! ज्ञानदृष्टिप्रदो भव॥
कृष्ण! कृष्ण! दयालुस्त्वमगतीनां गतिर्भव।
संसारार्णवमग्नानां प्रसीद मधुसूदन!"॥

इत्युपवासं समर्प्य पारणम्।

"नैवेद्यं तुलसीमिश्रं पापकोटिविनाशनम्"॥

पारणमिति तेन सह पारणम्। दशम्युक्तमत्रापि वर्जनं।

"दिवानिद्रां च तैलं च पुनर्भुक्तं च वर्जयेत्"।

द्वादश्यल्पत्वे[2] मध्याह्निकापकर्षः।

"यदा भवेदतीवाल्पा द्वादशीपारणादिने।
उषाकाले द्वयं कुर्य्यात् प्रातर्मध्याह्निकं तदा"॥

---

(१) जागरणं च। (२) तथा।

## अथ जन्माष्टमीव्रतं।

तच्च नित्यं काम्यं च। अकरणे प्रत्यवायश्रवणान्नित्यम्।

भविष्योत्तरे,—

"श्रावणे बहुले पक्षे कृष्णजन्माष्टमीव्रतम्।
न करोति नरो यस्तु भवति ब्रह्मराक्षसः"॥

तथा,—

"वर्षे वर्षे भागवतो मद्भक्तो धर्मनन्दन!"।

इति वीप्साश्रवणाच्च।

"पुत्रसन्तानमारोग्यं धनधान्यर्द्धिमद्गृहम्।
शालीक्षुयवसंपूर्णं मण्डलं सुमनोहरम्॥
तस्मिन्राष्ट्रे प्रभुर्भुङ्क्ते दीर्घायुर्मनसेप्सितान्।
परचक्रभयं नास्ति तस्मिन्राष्ट्रेऽपि पाण्डव!॥
पर्जन्यः कामवर्षी स्यादीतिभ्यो न भयं भवेत्"।

तथा,—

[१]"गुणानवाप्य समुपैति पदं स विष्णो"रिति फलश्रवणात् काम्यं च। सैव जन्माष्टमी रोहिणीयोगगुणसंयोगेन जयन्तीसंज्ञां लभते, न संज्ञायाः कर्मभेदः। एकान्तिकोत्पत्तिवाक्यगतत्वनिर्णया-भावेन भेदवीजाभावात्। दाक्षयणादिवत् गुणसंज्ञो[२]पबन्धन इति नीत्या भेदेनोपपत्तौ भेदस्यापूर्व्वभेदापादकस्याकल्पनात्।

(१) पुत्रानवाप्य।
(२) गुणात्मकोपबन्धन-इति।

भेदेन पूर्व्वदिने अष्टमीनिशीथव्याप्तावपि,—

"उदये चाष्टमी किंचित् नवमी सकला यदि।
सा भवेद् बुधसंयुक्ता प्राजापत्यर्चसंयुता"॥

"अपि वर्षशतेनापि लभ्यते वा न वा विभोः"। इति स्कन्दपुराणे।

तथा,—

"मुहूर्त्तमप्यहोरात्रे यस्मिन् युक्तं हि लभ्यते।
अष्टम्यां रोहिणीऋचं तां पुण्यां समुपावसेत्"॥

इत्युक्तरीत्या उत्तरदिने जयन्तीव्रतकरणे पूर्व्वदिने जन्माष्टमीव्रतं पृथक् कर्त्तव्यं स्यात्। न चेष्टापत्तिः। समाचारविरोधात्। द्वयोर्नित्यत्वे त्यागे मानाभावात्। भेदपचे चोत्तरदिने जन्माष्टमीव्रतस्य कालाभावात्। तस्मात्,

"प्रेतयोनिगतानां च प्रेतत्वं नाशितं नरैः"।
"यैः कृता श्रावणे मासि अष्टमी रोहिणीयुता।
किं पुनर्बुधवारेण सोमवारे विशेषतः"॥

इति पद्मपुराणात् ब्रह्मपुराणे च केवलाष्टम्यां फलकथनात्।

"मासि भाद्रपदे कृष्णपचेऽष्टम्यां कलौ युगे।
अष्टाविंशतिमे जातः कृष्णोऽसौ देवकीसुतः"॥

तस्मात् स तत्र संपूज्य इति रोहिणीयोगबुधवारादियोगयोर्गुणयोरेव फलसंबन्धः। यथा सूर्य्यग्रहणस्य सूर्य्यवारे चूडामणिसंज्ञकत्वेऽपि तद्विहितकर्मणो गुणादेव फलं। तेन जन्माष्टमीव्रतमेव केवलाष्टम्यां क्रियमाणं यावत्-फलं रोहिणीयोगे तदधिकफलं।

बुधवारे, सोमवारे, ततोऽप्यधिकतरफलं इत्यध्यवसेयं। तत्र,

"अर्द्धरात्रादधश्चोर्द्ध कलयापि यदा भवेदि"त्यादित्यपुराणात्।

"मुहूर्त्ते विजयो नाम यत्र जातो जनार्दनः"।

इति वचनाच्च पूर्व्वापरदण्डद्वयोपेतमर्द्धरात्रमत्र मुख्यः कर्मकालः। तत्र यत्र[१] सम्वत्सरे रोहिणीयोगो नास्ति तत्र शुद्धाष्टम्यामसन्देहः। विद्धा चतुर्द्धा। पुर्वेद्युरेव निशीथव्यापिनी, उत्तरेद्यु[२]रेव निशीथव्यापिनी, उभयत्र निशीथव्यापिनी च। प्रथमायां पूर्व्वदिने व्रतम्। द्वितीयायां द्वितीयदिने। तृतीयचतुर्थयोरुत्तरदिने एव व्रतं, संकल्पकालमारभ्य सर्वकर्म्मकालस्याष्टमीसम्बन्धात्। रोहिणीसहिताष्टम्यां विशेषः, अष्टमी षष्टीदण्डमिता तत्र संपूर्णरोहिणीयोगः, अथवा अहोरात्रमध्ये यत् किंचित् मुहूर्त्तं योगः। त्रिधा शुद्धाष्टमी तत्र न सन्देहः। रोहिणीयुक्ता[३]ष्टम्यन्तराभावात्। एवं सप्तमीविद्धाष्टमी त्रिधा भवति। रोहिणीयोगत्रैविध्येन तत्राप्युत्तरदिने रोहिणीयोगाभावे पूर्व्वैवोपोष्या।

"मुहूर्त्तमप्यहोरात्रे यस्मिन् युक्तं हि [४]लभ्यते।

अष्टम्यां रोहिणीऋक्षं तां पुण्यां समुपावसेत्"॥ इति विष्णुरहस्यवचनात् शुद्धाष्टमी[५]दिनद्वयेऽपि वर्द्धते चेत् तदा, शुद्धाधिका, सा त्रिधा, पूर्व्वेद्युरेव रोहिणीयुक्ता, परेद्युरेव रोहिणी-

---

(१) यस्मिन्।　(२) परेद्युरेव।
(३) अष्टम्युत्तराभावात्।　(४) लभ्यते।
(५) द्वितीयदिनेऽपि।

युक्ता, उभयत्र रोहिणीयुक्ता चेति। प्रथमे पूर्व्वेद्युः, द्वितीये परेद्युः, तृतीयेऽपि पूर्व्वेद्युरेव, उत्तरदिनार्द्धरात्रे अष्टम्यभावात्। तिथेर्मुख्यत्वात्, "उदये चाष्टमी किंचिदि"ति स्कान्दवाक्येन द्वितीयदिने कर्त्तव्या स्यादिति चेत् न तस्य पूर्व्वदिने रोहिणी-योगाभावपरत्वेऽप्युपपत्तेः। निशीथादर्वाक् सप्तम्या युता परेद्युरपि विद्यमाना विद्धाधिका। अत्रापि पक्षत्रयं। पूर्व्वेद्युरेव रोहिणीयुता, परेद्युरेव तथा, उभयत्र तथेति च। प्रथमे पूर्व्वविद्धायाएकवचनात् [१]पूर्व्वविद्धैव, परेद्युरेव रोहिणीयोगे परत्रोपवासः। "मुहूर्त्त-मप्यहोरात्र" इत्यादिवाक्यात् उभयत्र रोहिणीयुक्ता [२]विद्धा चतुर्द्धा भिद्यते। पूर्व्वेद्युरेव निशीथे तिथिनक्षत्रयोगवती। परेद्युरेव निशीथे तिथिनक्षत्रयोगवती। उभयत्र तद्योगवती। उभयत्र तद्योगरहिता च। प्रथमायां पूर्व्वैवोपोष्या। "सप्तमी-सहिताष्टम्यां निशीथे रोहिणी यदि। तत्रोपवासं कुर्व्वीत" इति वह्निपुराणात्। अवशिष्टपक्षत्रये परत्रैवोपवासः। दिनद्वये निशीथयोगवत्यां संकल्पावधिसर्व्वकर्मकाले रोहिण्यष्टमीयोगस्य विद्यमानत्वात्।

"मासत्रापि न कर्त्तव्या सप्तमी संयुताष्टमी"। इति ब्रह्म-वैवर्त्तवचनात्। परेद्युरेव निशीथयोगवत्यां परत्रैवोपवासः। दिनद्वये निशीथयोगराहित्यं त्रिधा भवति। पूर्व्वेद्युरेव निशीथा-दूर्द्धं तिथिनक्षत्रद्वयं प्रवृत्तं परदिने निशीथादर्वाक् समाप्तं इत्येकः प्रकारः। तत्र परत्रैवोपवासः। निशीथयोगाभावेऽपि संकल्पकाल-

(१) पूर्व्वैव। (२) विद्धाधिक्या।

मारभ्य योगस्य सत्त्वात्। पूर्वदिने रोहिणी महती परेद्युः स्वल्पा। अष्टमी निशीथादूर्द्ध्वं प्रवृत्ता पूर्व्वदिने स्वल्पा परेद्युर्महती। दिनद्वये च निशीथे योगोऽस्ति एवं द्वितीयः प्रकारः, तत्रापि परत्रैवोपवासः।

"सप्तमीसहिताष्टम्यां भूत्वा ऋक्षं द्विजोत्तम!।
प्राजापत्यं द्वितीयेऽह्नि मुहूर्त्तार्द्धं भवेद्यदि॥

सा भवेद् बुधसंयुक्ता प्राजापत्यर्क्षसंयुतेति स्कान्दवचनात्"। यदा पूर्वदिने अष्टमी भूयसी परेद्युः स्वल्पा। रोहिणी तु निशीथादूर्द्ध्वं प्रवृत्तत्वात् पूर्वदिने स्वल्पा। परदिने भूयसी तदापि परत्रैवोपवासः।

"पूर्व्वदिनेऽष्टमी या च उदये नवमी दिने।
मुहूर्त्तमपि संयुक्ता संपूर्णा चाष्टमी भवेत्"॥

इति पद्मपुराणे।

"उदये चाष्टमी किंचित् नवमी सकला यदि।
सा भवेत् बुधसंयुक्ता प्राजापत्यर्क्षसंयुता"॥

इति स्कान्दवचनात्। बुधवारयोगनिमित्त एव अष्टम्या-अल्पत्वेऽपि परविद्धास्वीकारःप्रतिभातीति चेत्, अस्य[१] यथाप्राप्त-जन्माष्टम्यनुवादेन बुधवासरयोगप्राशस्त्यकथनपरत्वात्। उदये किंचिदित्यस्यानुवाद्यविशेषणत्वेनाविवक्षितत्वात्। तथाच प्रेत-योनिगतानामित्यादिवाक्यसमानार्थत्वमेव। अतएवास्य बुधवार-योगपरत्वात्। शुद्धाधिकायां पूर्व्वदिने अर्द्धरात्रेऽष्टमीयोगसत्त्वेन

(१) यस्य।

पूर्व्वदिने प्राप्ते न बाधकत्वं अन्यपरत्वात्। विद्धाधिकायां पूर्व्वदिनेऽर्द्धरात्रे अष्टमीयोगाभावेन "पूर्वविद्धाष्टमी या तु"ति स्कान्दवचनेनोत्तरदिनस्यार्द्धरात्रयोगा[१]भावेऽपि ग्राह्यत्वमिति विशेषः। तेन माधवाचार्य्यानुसारेण उक्तेषु जयन्तीभेदेषु वारयोगेन प्राशस्त्यं, न तु वारयोगानुसारेण व्यवस्था[२]।

अथ पारणं। स्कन्दपुराणे,—

"तिथिनक्षत्रनियमे तिथीभान्ते च पारणं"।

ब्रह्मवैवर्त्ते च,—

"सर्व्वेष्वेवोपवासेषु दिवा पारणमिष्यते।
अन्यथा पुण्यहानिः स्याद्दृतेधारणपारणादिति"।

एवं च सति विद्धभेदेषु दिवा तिथ्यन्तो भान्तो वा, तदान्यतरान्ते पारणम्।

यदाह नारदीये,—

"तिथिनक्षत्रसंयोगे उपवासो यदा भवेत्।
पारणं तु न कर्त्तव्यं यावन्नैकस्य संक्षयः"॥

यदा त्वन्यतरान्तोऽपि दिवा न लभ्यते; पूर्व्वदिनेऽर्द्धरात्रमारभ्य प्रवृत्तयोस्तिथ्यृक्षयोरुत्तरदिने रात्रिप्रहरव्यापित्वात्तदा रात्रावपि पारणं प्रतिप्रसववचनात्।

"तिथ्यृक्षयोर्यदा च्छेदो नक्षत्रान्तमथापि वा।
अर्द्धरात्रेऽपि वा कुर्य्यात् पारणं त्वपरेऽहनीति"॥

---

(१) योगभावेऽपि। (२) व्यवस्थेति।

रात्रावपीत्यपि शब्दार्थः। एवं गारुड़पुराणे,—

"जयन्त्यां पूर्व्वविद्धायां उपवासं समाचरेत्।

[१]व्रतान्ते चोत्सवान्ते [२]च व्रती कुर्य्यात्-तु पारण"मिति॥

एतद्ग्रन्थस्य, प्रातरेव पूजापूर्व्वकं व्रतं समाप्य व्रताङ्गोत्सवान्ते प्रातः पारणं कुर्य्यादित्यर्थः।

अत्र च ब्रह्मपुराणे,—"तस्मात् सतत संपूज्या यशोदा देवकी तथा"। इत्येतावत् [३]मन्त्रोक्तावपि [४]पूजाप्रकारानुक्तेः साकांक्षत्वेन स्मृतिशास्त्रविकल्पः स्यादाकांक्षापूरणे सतीतिन्यायेन भविष्योत्तरोक्तो विधिरवगन्तव्यः। ब्रह्मपुराणे च,—

"अरुणोदयवेलायां रक्तवस्त्रावृताः स्त्रियः।

नयन्ति प्रतिमां ह्येतां नानाविभव[५]संभवाम्"॥

"नदीकूलं शुभं रम्य"मिति। प्रतिमानयनादिकम् स्त्रीकर्त्तृकं व्रताङ्गं न तु [६]तदंशेन स्त्रीमात्रस्याधिकारः। तथाहि चातुर्मास्येऽष्टौ-कुमार्य्यश्च चिः परियन्तीति कुमारीणामग्निपरिगमनमष्टाङ्गमिति।

नैतावता चातुर्मास्येष्टौ कुमारीणामेव कर्त्तृत्वं। भविष्योत्तरे,—

"ततः स्नात्वा तु मध्याह्ने देवक्याः सूतिकागृहम्"।

कुर्य्यादित्युक्त्वा,—

"रम्यामेवंविधां कृत्वा देवकीनवसूतिकाम्।

---

(१) तिथ्यन्ते। (२) वा।
(३) मान्त्रोक्तावपि। (४) पूजाप्रकाराद्युक्तेः
(५) संपदा। (६) वेषे।

तां प्रार्च्य पूजयेद्-भक्त्या," इति पूजाकथनेऽपि न पूजायाम् मध्याह्नसम्बन्धः, स्मृत्यन्तरानुसारेण पूजाया रात्रिकालत्वात् ।

तथा,—

"ध्यात्वावतारं पूर्व्वोक्तं मन्त्रेणानेन पूजयेत्" ।

इति पठित्वा गायद्भिः किंनराद्यैरित्यादिवाक्यं लिखित्वा ततः किंमन्त्रोऽयं ध्याने पूजायां वा, तत्र पूजायां स्वनामचतुर्थ्यन्तेन तत्रैव मन्त्रान्तरवक्ष्यमाणत्वात् । ध्यानमात्रेयमिति माधवमान-मोल्लासादिभिः प्रायो लक्ष्यते । तत् तु न युक्तम् । ध्यात्वावतारं पूर्व्वोक्तं मन्त्रेणेत्यसङ्गतेः, न हि मन्त्रस्यास्य पूर्वावतारध्यानसाध-नत्वं तल्लिङ्गाभावात् ।

पूर्व्वोक्तमवतारं ध्यात्वा मन्त्रेणानेन ध्यात्वेत्येवमनुषङ्गे मानाभावात् स्वनामचतुर्थ्यन्तैरित्यस्य देवतान्तरे सावकाशत्वात् स्त्रीशूद्रा-मन्त्रवर्जिता इत्यत्र मन्त्रपदं प्रणवपरमिति केचित् । विधन्तर-मपि इच्छतीत्यस्यायमर्थः । "अर्द्धरात्रे वसोर्द्धारा"मित्यादि वक्ष्यमाणार्द्धरात्रकालीनकृष्णजन्मकर्म्ममात्र [1]मुख्यविधिः । "तस्या-मभ्यर्च्चनं शौरेरि"त्युक्त्वा पूजापि जन्मादिकरणमेव । तदपेक्षया चेदं चन्द्रार्घदानादिस्थण्डिले पूजापर्य्यन्तं विध्यन्तरं केचिदिति वचनात्र वैकल्पिकं । यद्यपि चन्द्रोदयः कदाचिदर्द्धरात्रादूर्द्धमपि तथाप्युत्सर्गत-स्त्वं रोहिणीचन्द्रस्य मिंहार्केऽर्द्धरात्रात्पूर्व्वं रोहिण्युदयत्वात्[2] । चन्द्रोदयस्यार्द्धरात्रात् पूर्वकालीनत्वेनायं क्रमः । अर्द्धरात्रादूर्द्ध

(१) मुख्यो विधिः । (२) रोहिण्युदयात् ।

चन्द्रोदये[१]ऽर्घमात्रस्योत्कर्षः न कृष्णपूजादेः। "पूर्व्वेद्युरमावास्यायां वेदिं करोतीति वेदिकरणापकर्षेऽपि तत्पूर्वपदार्थानपकर्षवत्"। मल्लुग्रकमदशायां उत्कर्षस्य तन्मात्रगामित्वात् तेन पूर्व्वचन्द्रोदये चन्द्रार्घं दत्त्वा कृष्णपूजां कृत्वा स्थण्डिले देवादिपूजनं कृत्वार्द्धरात्रे कृष्णजन्मकरणम्। पश्चात् चन्द्रोदये तु कृष्णपूजां स्थण्डिलपूजादिकं च समाप्यार्द्धरात्रे जन्म कारयित्वा चन्द्रोदये चन्द्रार्घ इति विवेकः। अथ प्रयोगः। "दैवपित्र्ये श्वोभूते औपवस्त्रमश्नातीति" हारीतः। औपवस्त्राक्तमाषमांसवक्तमर्पिष्टमिति कल्पतरुव्याख्यानात् दर्श पौर्णमासाभ्यामन्यत्रापि श्वोभूते। दैवपित्र्ये वा कर्त्तव्यं हविष्य-भोजन[२] सायं दन्तधावनं, नियमेन रात्रिक्षेपणं, प्रातर्नित्यकृत्या-नन्तरं स्वस्तिवाचनं।

संकल्पः। ताम्रपात्रं जलपूर्णं गृहीत्वा उदङ्मुखः। भगवान् सूर्य्य! भगवत्यः सोमादयो देवतादग्धनकलत्रमृतनिष्कान्तिगर्भ-पतनव्याधिपरनक्रेति वैधव्यदौर्भाग्यभयाभावे पूर्व्वकालैकस्थित-सुतमत्तानारोग्यधनधान्यसदगृहसकलयापि राज्यपर्जन्यकाम-वर्षित्वग्रामीकृयवपूर्णक्षेत्रसकलसम्पदभिभवननिवासाधिकरणक-प्रचुरभोगभोगोत्तरकालिक भगवद्च्युततपःप्राप्तिकामो भगवत्प्रीति-कामो इत्येव वा जन्माष्टमीव्रतमहं कुर्वीय। जयन्तीवर्ष-प्रेतयोनिगतपूर्वपुरुषोद्धरणपूर्व्वकं पूर्व्वोक्तफलं, बुधवारादियोग कुलकोटिमुक्तिकाम इति चाधिकं। ततः प्रार्थना।

---

(१) चन्द्रार्घमात्रस्य।　　(२) इति पूर्व्वदिने हविष्यभोजनं।

"अद्य कृष्णाष्टमी देव! नभश्चन्द्रे सरोहिणी ।
अर्चयित्वोपवासेन भोक्ष्येऽहमपरेऽहनि ॥
एनोविमोचकामोऽस्मि यद्गोविन्देति जन्मजं ।
तन्मे मुंचतु मां [१]त्राहि पतितं शोकसागरे" ॥

मध्याह्ने नद्यादौ स्नात्वा देवकीसूतिकागृहकरणं पद्मराग-तालपत्रीवस्त्रबन्धनरज्ज्वासपत्रमालागारुड़मणिघण्टामङ्गलमाङ्गल्य-कलशदूर्वाचतुष्कखट्वालालाक्षखड्गभस्मकागदधिमन्थकाष्ठयूपाकार-काष्ठजलवह्निमूषलवह्निसर्षपषष्ठीदेवीपूजार्थगन्धपुष्पमाल्यनैवेद्य धूपदीपगो[२]गोपीप्रतिमायुक्तं कार्य्यं । तन्मध्ये देवक्यादिप्रतिमा-स्थापनं । प्रतिमा च यथासम्भवं सुवर्णरजतताम्रपित्तलमृण्मय-काष्ठमणिदर्पण[३]कालिखितान्यतमा । आमासात् फलपर्य्यन्तं ।

देवकीलक्षणं ।

"प्रतप्तकाञ्चनाभासा पर्य्यङ्केऽर्द्धसुप्तिका" ॥

प्रसवयुक्ता प्रस्नुतस्तनी देवकीक्रोड़े शङ्खचक्रगदाशार्ङ्गहस्त वनमालाविभूषितबालकृष्णप्रतिमास्थापनं । देवकीचरणसंवाहिका श्रीप्रतिमा यशोदाप्रसूतवरकन्यकासहिता स्थाप्या । खड्गचर्मधरा वसुदेवप्रतिमा । श्वेतनीलवसना-हलमुषलहस्ता बलदेवप्रतिमा । यगुड़हस्ता नन्दप्रतिमा । दण्डकमण्डलुहस्ता गर्गप्रतिमा । तथा सरोहिणीका चन्द्रप्रतिमा । निद्राविमोहितर्पिजमलिखनं । अरिष्टधेनुककेशिकालीयनागानां लिखनं । नृत्यदप्सरोगन्धर्व

---

(१) पाहि ।　　(२) गोपाल— ।

(३) वह्निकान्वितान्यतमा ।

सिद्धविद्याधरकिन्नरलिखनं च । ततः सायंसंध्यानन्तरं पूजारम्भः । पूजासामग्रीं संपूर्णां संपाद्य नमो देव्यै श्रियै[१] इति मन्त्रेण पंचोपचारेण श्रीपूजा । अतःपरं षोडशोपचारेण दशोपचारेण वा । अदितिरूपेण देवकीं ध्यात्वा,

"गायद्भिः किन्नराद्यैः सततपरिवृता वेणुवीणानिनादै,
र्भृङ्गारादर्शकुम्भप्रवरवरकरैः सेव्यमाना सुरौघैः ।
पर्य्यङ्के स्वास्तृते या मुदिततरमनाः पुत्रिणा सम्यगास्ते,
देवी सा देवमाता जयति सुवदना देवकी कान्तरूपा" ॥

देवक्यै नम इति मन्त्रेण षोडशोपचारेण पंचोपचारेण वा पूजा । कुष्माण्डनारिकेलखर्जूरदाडिमबीजपूरपूगलकुचायपनस-कदलीफलानां यथासम्भवं देवकीनैवेद्ये ग्रहणं । ततो यथोक्तं कश्यपं ध्यात्वा वसुदेवाय इति मन्त्रेण वसुदेवपूजनं । शेषं नागरूपं ध्यात्वा ॐ बलदेवाय नम इति मन्त्रेण बलदेवपूजनं । दक्षरूपेण नन्दपूजा । ॐ यशोदायै नमः इति अदितिरूपेण यशोदापूजनं । गर्गाय नम इति गर्गपूजनं ब्रह्मरूपेण ।

अथ वैकल्पिकः विध्यन्तरविधिः । अर्द्धरात्रात् पूर्व्वं चन्द्रोदये प्रथमं चन्द्रार्घः । तदनन्तरं वक्ष्यमाणनामभिः प्रथमं हरिस्मरणं ।

तथा,—

"अनघं वामनं शौरिं वैकुण्ठं पुरुषोत्तमम् ।
वासुदेवं हृषीकेशं माधवं मधुसूदनम् ॥

---

(१) श्रियै— ।

दामोदरं पद्मनाभं केशवं गरुड़ध्वजम् ।
गोविन्दमच्युतं कृष्णमनन्तमपराजितम् ॥
अधोक्षजं जगद्बीजं सृष्टिस्थित्यन्तकारिणम् ।
अनादिनिधनं विष्णुं त्रिलोकेशं त्रिविक्रमम् ॥
नारायणं चतुर्बाहुं शंखचक्रगदाधरम् ।
पीताम्बरधरं नित्यं वनमालाविभूषितम् ॥
श्रीवत्साङ्कं जगत्सेतुं श्रीधरं श्रीपतिं हरिं" ॥ इति ध्यानम्
"क्षीरोदार्णवसम्भूत! अत्रिनेत्रसमुद्भव! ।
गृहाणार्घं शशांक! त्वं रोहिण्या सहितो मम" ॥
एषोऽर्घः सरोहिणीकचन्द्राय नम इत्यर्थः ॥
ततः स्थण्डिले बालकृष्णप्रतिमास्थापनं। सरोहिणीकचन्द्रस्थापनं। देवकीयशोदानन्दनवसुदेवानां च स्थापनं। ततो महा-विभवोपचारैः श्रीकृष्णपूजा। योगेश्वराय योगसम्भवाय योगपतये गोविन्दाय नमो नमः। स्नानमन्त्रः। यज्ञेश्वराय यज्ञसम्भवाय यज्ञपतये गोविन्दाय नमो नमः[१]। इति पाद्यार्घाचमनीयमधु-पर्काचमनीयवस्त्राचमनीयगन्धपुष्पधूपदीपमन्त्रः। विश्वेश्वराय विश्वसम्भवाय विश्वपतये गोविन्दाय नमो नमः इति नैवेद्यमन्त्रः। धर्माय धर्मेश्वराय धर्मपतये गोविन्दाय नमो नमः इति शयनमन्त्रः। ततः सरोहिणीकाय चन्द्राय नमो नमः इति पूजनं, एवं देवकी-यशोदावसुदेवनन्दवलदेवानां च पुनः पूजनं। इति विष्णुन्तर विधिः। अर्द्धरात्रे प्रदीपाच्छादनं[२]। नःशब्दतासंपादनं।

(१) इति पूजनं। (२) दीपप्रच्छादनं।

जलमध्ये कृष्णप्रतिमास्थापनं। एजति दशमास्यो गर्भो जरायुणा सह। यथायं वायुरेजति। यथा समुद्र एजत्येवायं दशमास्योऽस्त्र जरायुणा सह इति जलाद्गर्भस्थानीयात् कृष्णप्रतिमाबहिःकरणं। देवक्या उदरात् कृष्णो जात इति ध्यात्वा।

"स्तुतोऽसि देव! देवेश! शंखचक्रगदाधर!।

दिव्यरूपमिदं देव! प्रसादेनोपसंहर"। इति प्रार्थनं,

ततः स्थित्वा शंखवादित्र[१]जयशब्दनादपुरःसरमालोक्याद्योतनं। 'वसोःपवित्रमसि शतधारं वसोःपवित्रमसि सहस्रधारं"। इति मन्त्रेण भित्तौ गुड़सर्पिर्भ्यां वसोर्द्धारारेखापंचकरणं"। वामदेवाय नमो ज्येष्ठाय नमः श्रेष्ठाय नमः कालाय नमः कलविकरणाय नमः बलविकरणाय नमः बलप्रमथनाय नमः सर्वभूतदमनाय नमो-मनोन्मथनाय नमः इति सुवर्णक्षुरेण नाड़ीच्छेदनचिन्तनं। षष्ठीं पंचोपचारेण संपूज्य प्रार्थनं।

"गौर्य्याः [२]स्कन्दो यथा स्कन्दः शिशुः संरक्षितस्त्वया।

तथा ममाप्ययं बालो रक्ष्यतां षष्ठिके नमः"॥

ततः कृष्ण इति नामकरणं। "तच्चक्षुर्देवेति मन्त्रेण बहिर्नीत्वा चन्द्रदर्शनं"। "अन्नात् परिस्रुतो रसं ब्रह्मणा व्यपिबत्-क्षत्रं पयः सोमं प्रजापतिः। ऋतेन सत्यमिन्द्रियं विपानं च शुक्रमन्धस इन्द्रस्येन्द्रियमिदं पयोऽमृतं मधु"। इत्यन्नप्राशनम्। शिवो नामासि स्वधितिस्तेऽपि जानमस्तेऽस्तु मामहिंसीरिति

---

(१) जयशब्दं कृत्वा आलोकद्योतनं। (२) पुत्रो।

चूड़ाकर्म। "भद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः। स्थिरैरङ्गैस्तुष्टुवांसस्तनूभिर्व्यशेम देवहितं [१]यदायु"-रिति कर्णवेधः। उपनयनं चिन्तयित्वा वस्त्रं परिधाप्य "यज्ञोपवीतं परम"मिति मन्त्रेण यज्ञोपवीतदानं। समाचारादेतावत् संस्कारं कृत्वा [२]बाह्योपचारनानाद्रव्यप्रधानमहोपचारेण पूर्वमन्त्रैरेव कृष्ण-पूजनं। पश्चाच्चन्द्रोदयस्तथा यथोक्तं हरिं ध्यात्वा चन्द्रार्घः। दत्तं चेत् [३]पुनर्न कार्य्यं, व्याहृतिभिस्तिलहोमः। नृत्यगीतवाद्यपुराण-श्रवणादिभिरात्रिशेषनयनं। पक्षे अरुणोदये तयो-रक्तवस्त्रं महा-शोभया देवक्यादिप्रतिमां नीत्वा नदीकूले संस्थाप्य स्नापयित्वा पुनर्गृहमानयेयुः। प्रभाते स्नात्वा दुर्गापूजामहोपचारेण श्रीकृष्ण-देवक्यादीन् पूजयित्वा व्रताङ्गदानानि। हिरण्यं, रजतं, गोत्रयं, वस्त्रत्रयं, कुसुमानि, कर्पूरचन्दनादिकं, यद् यदिष्टतमं।

एतज्जन्माष्टमीव्रताङ्गत्वेन [४]हिरण्यं ददामि। कृष्णो मे प्रीयतां एवं सर्वं दत्त्वा।

"यं देवं देवकी देवी वसुदेवादजीजनत्।
भौमस्य ब्रह्मणो [५]गुप्त्यै तस्मै ब्रह्मात्मने नमः॥
[६]सुजन्मवासुदेवाय गोब्राह्मणहिताय च।
शान्तिरस्तु शिवं चास्तु इत्युक्त्वा तान् विसर्जयेत्"॥

(१) यदायुग।
(२) बाह्योपचार।
(३) पुनः कार्य्यं।
(४) हिरण्यदानानि।
(५) गोप्त्यै।
(६) सुजन्मने वासुदेवाय।

देवस्यादिदेवाः स्वस्थानं गच्छत इति । पचे स्त्रीभ्यो मध्वाज्य-रचुविकारयुक्तं यवान्नदानं । ब्राह्मणभोजनं ततः पारणं । व्रत-सामान्यधर्म्मेण हविष्यभोजनं द्वादशीपारणधर्म्मेण ।

इति जन्माष्टमीव्रतम् ।

---

## अथ शिवरात्रिव्रतम् ।

तदपि नित्यं काम्यं च । अकरणे प्रत्यवायः स्मर्य्यते । स्कान्दे शिवरात्रिमधिकृत्य—

"न पूजयति भक्तेशं रुद्रं त्रिभुवनेश्वरं ।
चतुर्जन्मसहस्रेषु भ्रमते नात्रसंशयः" ॥

तथा । वर्षे वर्षे इति वीप्सा । तत्रैव । तथा नित्यं नित्य-शब्दादपि नित्यत्वे ।

"माघकृष्णचतुर्द्दश्यां यः शिवं संश्रितव्रतः ।
मुमुक्षुः पूजयेन्नित्यं स लभेद्दीप्सितं फलम्" ॥

इति स्कान्दवचनात् ।

काम्यरूपतेशानसंहितायां,—

"एवमेतद्व्रतं कुर्य्यात् प्रतिसंवत्सरं व्रती ।
द्वादशाब्दिकमेतत्स्याच्चतुर्विंशाब्दिकं तथा ॥
सर्वान् कामानवाप्नोति प्रेत्य चेह च मानवः ।
शिवरात्रिव्रतं नाम सर्वपापप्रणाशनम् ।
आचण्डालमनुष्याणां भुक्तिमुक्तिप्रदायक"मिति ॥

द्वादशाब्दिकाद्यन्तियुक्तं च चतुर्विंशाब्दिकाद्यन्तियुक्तं वा। काम्यं फलसाधनं नरमात्राधिकारिकं। अत्र चोपवासः, पूजा, जागरणं चेति त्रयं प्रधानं।

"उपवासप्रभावेन तथा चैवाच जागरात्।
शिवरात्रेस्तथा शम्भोर्लिङ्गस्यापि प्रपूजया।
अक्षयान् लभते कामान् शिवसायुज्यमाप्नुयात्"॥ इति स्कन्दपुराणात्।

एवं च, "अथवा शिवरात्रं तु पूजाजागरणैर्नयेत्" इति वचनमशक्तस्य तावन्मात्रेण प्रत्यवायपरिहार इत्येवं परं।

अथ कालनिर्णयः। तत्र प्रदोषव्याप्तिरर्द्धरात्रव्याप्तिश्च द्वयं ग्राह्यं। स्मृत्यन्तरे,—

"प्रदोषव्यापिनी ग्राह्या शिवरात्रिचतुर्दशी"।

ईशानसंहितायां,—

"माघकृष्णचतुर्दश्यां महादेवो महानिशि।
शिवलिङ्गतयोद्भूतः कोटिसूर्य्यसमप्रभः"॥
तत्कालव्यापिनी ग्राह्या शिवरात्रिव्रते तिथिः"॥

एवं च सति द्वैधे पूर्व्वद्युरेव प्रदोषनिशीथोभयव्याप्तौ पूर्व्वद्युरेव व्रतं। स्कान्दे,—

"त्रयोदशी यदा देवि! दिनभुक्तिप्रमाणतः।
(१)जागारे शिवरात्रिः स्यात् निशिपूर्णा चतुर्दशी"॥

(१) जागरे।

सा शिवरात्रिस्तस्यामेव व्रतमित्यर्थः। परेद्युरेव प्रदोषनिशीथो-भयव्याप्तौ तत्रैव व्रतं । कामिके,—

"निशिद्वये चतुर्द्दश्यां पूर्वा पापा परा शुभा" ।

[१]पूर्वदिननिशीथमारभ्य चतुर्दशी परदिननिशीथपर्य्यन्तं चेत् व्याप्नोति तदा परत्र व्रतमित्यर्थः। पूर्वेद्युर्निशीथव्याप्तिः, परेद्युः प्रदोषव्याप्तिश्चेत् पूर्वत्र व्रतं ।

"अर्द्धरात्रात्-पुरस्ताच्चेत् जयायोगोऽवगम्यते ।

पूर्व्वविद्धैव कर्त्तव्या शिवरात्रिः शिवप्रियैः ॥

जयन्तौ शिवरात्रिश्च कार्य्ये भद्रा जयान्विते" ॥ इत्यादि वचनात् पुर्व्वेद्युः प्रदोषव्याप्तिर्नास्ति निशीथव्याप्तिरपि नास्ति उत्तरत्र प्रदोषमात्रव्याप्तिश्चेत्[२] तदा सैव ग्राह्या ।

"माघे सिते भूतदिनं कदाचित्,

उपैति योगं यदि पंचदश्या ।

जयाप्रयुक्तां न तु जातु कुर्य्या-

च्छिवस्य रात्रिं प्रियकृच्छिवस्य" ॥ इति वचनात् ।

पूर्वेद्युः प्रदोषादूर्द्धं प्रवृत्ता परेद्युः क्षयवशात् प्रदोषादर्वागेव समाप्ता चेत्, परेद्युर्व्याप्तिद्वयाभावात् पूर्व्वेद्युर्निशीथव्याप्तेस्सद्भावात् जयायोगाच्च पुर्व्वैवोपोष्या ।

विष्णुधर्म्मे कलाधिक्ये,—

"त्रयोदशी कलाप्येका मध्ये चैव चतुर्द्दशी ।

(१) पूर्वदिननिशामारभ्य चतुर्दशी परदिननिशापर्य्यन्तं— ।
(२) प्रदोषमात्रव्याप्तित्वे सैव ग्राह्या ।

अन्ते चैव शिनीवाली चिस्पृग्यां शिवमर्च्चयेत्" ॥

तथा वारविशेषे फलाधिक्यं,—

"माघकृष्णचतुर्द्दश्यां रविवारो यदा भवेत्।

भौमो वाथ भवेद्देवि! कर्त्तव्यं व्रतमुत्तमम्॥

शिवयोगस्य योगो वै यद्भवेदुत्तमोत्तमम्"।

यत्र च पूर्व्वविद्धायामुपवासे परेद्युस्तिथिमध्ये[१] वा पारणं, तिथ्यन्ते वा। "तिथिनक्षत्रनियमे तिथिभान्ते च पारणा"मिति सुमन्तुवचनात् तिथ्यन्ते पारणं प्राप्तं। यत्तु देवलवचनं,—

"उपवासेषु सर्वेषु पूर्वाह्णे पारणं भवेदि"ति—

"तिथ्यन्ते चैव भान्ते च पारणं यत्र चोद्यते।

यामत्रयोर्द्ध्ववर्त्तिन्यां प्रातरेव हि पारणम्" ॥

इति वचनात्।

यामत्रयोर्द्ध्वव्याप्तितिथ्यन्तपरं। तेनात्रापि—

"तिथीनामेव सर्व्वासामुपवासव्रतादिषु।

तिथ्यन्ते पारणं कुर्य्यात् [२]दिवा शिवचतुर्द्दशीम्" ॥

इति चतुर्द्दशीमध्येऽपि पारणं। तथापि [३]यामत्रयोर्द्ध्वं चतुर्द्दश्यन्ते मति द्रष्टव्यं। एतदेव स्कन्दपुराणे।

"उपोषणं चतुर्दश्यां चतुर्द्दश्यां तु पारणं।

कृतैः सुकृतलक्षैस्तु लभ्यते वाथवा न वा ॥

(१) मध्ये। (२) विना।
(३) यामत्रयादूर्द्ध्वं।

ब्रह्मा स्वयं चतुर्वक्त्रः पंचवक्त्रस्तथाप्यहं।
शिवकृषे शिवकृषे फलं तस्य ब्रह्मा वक्तुं न पार्वती"॥

यामत्रयात् पूर्वं तु तिथ्यन्ते तिथ्यन्त एवमिति माधवाचार्य्य-व्यवस्था। वस्तुतोऽत्र तिथ्यन्ते पारणं कुर्य्यात् विना शिवचतुर्दशी-मिति तिथ्यन्तपारणविधौ शिवरात्रिपर्य्युदासात्। यामत्रयात् पूर्वमपि तिथ्यन्ते चतुर्दश्यामेव पारणं। उपोषणं चतुर्दश्यां तु पारणमिति वचनस्य [१]गुणसम्बन्धपरस्य निरवकाशत्वेन बलवत्त्वाच्च। तिथ्यन्तपारणवचनस्य व्रतान्तरे सावकाशत्वात् नित्यत्वात् काम्या-दुर्बलत्वात् च। केवलं श्राद्धाधिकारिणा दर्शश्राद्धस्य नित्यस्या-करणे गुणफलकामना न कर्त्तव्या। तस्य यामत्रयोर्द्धं तत्पूर्व्वं वा तिथ्यन्ते दर्शे श्राद्धं कृत्वा पारणकरणमेव शास्त्रार्थ इति।

अथ शिवरात्रिव्रतानुष्ठानक्रमः। पूर्वविद्धापचे द्वादश्या उत्तर विद्धापचे त्रयोदश्यामहनि हविष्यमेकवारं कृत्वा सन्ध्याकाले नियम-स्वीकारः।

"रात्रिं प्रपद्ये जननीं सर्वभूतनिवासिनीम्।
भद्रां भगवतीं कृष्णां विश्वस्य जगतो निशाम्॥
संवेशिनीं प्रपद्येऽहं ग्रहनक्षत्रमालिनीम।
[२]प्रपद्येऽहं शिवां रात्रिं भद्रे पारमशीमहि"॥

ततो व्रतदिने प्रत्यूषे नद्यादि जलाशये स्नानं। स्नानकाले जलप्रार्थना—

(१) फल। (२) प्रपन्नो।

"आपस्त्वमसि देवेश ज्योतिषां [१]गतिरेव च।
पापं नाशय देवेश! वाङ्मनःकर्मभिः कृतम्॥
त्वमापोज्योतिः सर्वेषां दैत्यदानवरक्षसाम्।
सान्निध्यं सर्वतीर्थानां स्नानकाले भवेन्मम॥
स्नातोऽहं सर्वतीर्थेषु गर्त्तप्रस्रवणेषु च।
नदीषु देवखातेषु स्नानमेतेषु मे भवेत्॥
नियतं च करिष्यामि देवदेव! तवाज्ञया"।

गृहमागत्य लिङ्गसमीपं गत्वा लिङ्गपूजा। स्वस्तिवाच्य संकल्पः। भगवन्-सूर्य्य-भगवत्यः सोमादयो देवताः श्रीपुत्र राज्यादिप्राप्तिपूर्वकशिवपुरप्राप्तिकामो द्वादशवर्षपर्य्यन्तं प्रतिफाल्गुन-कृष्णचतुर्द्दश्यां शिवरात्रिव्रतमहं करिष्ये इति। प्रथमवर्षे संकल्पः द्वादशवर्षान्ते दक्षिणादि। अन्यथा प्रतिवर्षं संकल्पः। शिव-प्रीतिकामः सर्वपापक्षयपूर्व्वकसर्वयज्ञफलप्राप्तिकामो वा शिवरात्रि-व्रतमहं करिष्ये इति। प्रार्थना।

"प्रातर्देवचतुर्द्दश्यां जागरिष्याम्यहं निशि।
पूजां दानं जपं होमं करिष्याम्यात्मशक्तितः॥
चतुर्द्दश्यां निराहारो भूत्वा शैवापरेऽहनि।
भोक्ष्येऽहं वै विरूपाक्ष! शरणं मे भवाव्यय!"॥

तत्र ब्रह्मचर्य्यं। अस्तमिते सन्ध्यानन्तरं स्नानं लिङ्गायतनगमनं।

"हर! शंकर! सर्वेश! व्रतानां फलदायक!।
शिवरात्रि व्रतं चैव करोमि त्वत् प्रसादतः"॥

(१) पति।

ततो द्वारपालपूजा। गणेशपूजा। दिगीशपूजा। शिवसमीपं गत्वा निर्माल्यमपकृष्य तोयेन स्नपनं। पञ्चामृतेन स्नपनं शैवपंचाक्षरमन्त्रेण पूजा। सूक्ष्मवस्त्रनानाविधगन्धपुष्पधूपदीपशर्कराक्षीरदध्यक्षखण्डलड्डुकमण्डकनानाविधफलमूलप्रधाननैवेद्यैः पुष्पफलकुशबिल्वपत्रचतुःसमदूर्वाक्षराचतपूतमर्घं संस्कृत्य ग्रहणं। ततो ऽर्घार्थं प्रार्थना—

"पुरा कृतं तु यत्कर्म इहलोके तु यत्कृतं।
करिष्यामि च यत्किंचित् घोरं कर्म सुदारुणं॥
हर! संहर तत्पापं कालकूटविषं यथा।
त्रिपुरं च यथा कालं दग्धं कामस्त्वया हतः॥
तथा मे दुष्कृतं सर्वं शंभो! नेत्राग्निना दह।
जितोऽहं भवदोषेण काललोभग्रहेण च"॥

"[1]त्वभक्तिरचना मेऽस्तु शिव! जन्मनि जन्मनि॥
इहलोके परां भक्तिं परलोके परं पदं।
देहि मे देवदेवेश! त्रैलोक्यैस्यात्मदेवतां"॥

एवं संप्रार्थ्य वक्ष्यमाणमन्त्रेणार्घदानं।

"नमः शिवाय शान्ताय सर्वपापहराय च।
शिवरात्रौ ददाम्यर्घं भक्त्या[2]त्वयात्मसह प्रभो!"॥

ॐ नमः शिवाय अर्घं स्वाहा। मूलमन्त्रशतजपः।
ततः कुण्डे अग्निमुपसमाधाय तिलतण्डुलव्रीहिभिश्चरुं कृत्वा

(१) त्वदभक्तिरचला। (२) तुभ्यमहं विभो।

आज्यभागान्ते शिवपंचाचरमन्त्रेण चतोरष्टशतहोमः। तत-स्तिलैरष्टशतहोम इत्यपि कश्चित्। शिवध्यानस्तुति-शिवरात्रि-माहात्म्यश्रवण-ध्रुवतारादर्शन-पुराणपठन गीतनृत्यवाद्यानि। इति प्रथमप्रहरकृत्यम्।

द्वितीयप्रहरे स्नात्वा द्वारपालादिपूजापूर्व्वकं लिङ्गं निर्माल्य मपकृष्य तोयेन स्नपनानन्तरं पंचामृतस्नानपूर्व्वकं पूर्ववत् पूजा। पूर्व्ववदर्घं संस्कृत्य "पुराकृतं च यत् कर्मेत्यादि त्रैलोक्येस्वात्म-योग्यता"मित्यन्तवाक्येन प्रार्थनम्।

"नमः शिवाय शान्ताय भुक्तिमुक्तिप्रदाय च।
शिवरात्रौ ददाम्यर्घं सर्वाभिमतसाधनम्"॥

ॐ नमः शिवाय अर्घं स्वाहा। एवमर्घं दत्त्वा मूलमन्त्रेण शतजपः। पूर्व्ववत् चरुहोमस्तिलहोमश्च। शिवध्यान शिवमाहात्म्य-श्रवण-ध्रुवतारादर्शन-पुराणपठन-नृत्यगीतवाद्यानि। इति द्वितीय प्रहरे।

एवं तृतीयप्रहरे स्नात्वा द्वारपालादिपूजा निर्माल्यवहिष्करण-पंचामृतस्नानपूजां कृत्वा अर्घं संस्कृत्य "पुराकृतं च यत्कर्म" इत्यादिमन्त्रेण प्रार्थ्य।

"ज्ञानादज्ञानतो वापि मया दत्तं च शंकर!।
गृहाणार्घं महादेव! शिवरात्रौ प्रसीद मे"॥

ॐ नमः शिवायार्घं स्वाहेत्यर्घं दत्त्वा ततो मूलमन्त्रजपः। चरुहोमस्तिलहोमश्च। शिवध्यान-शिवरात्रिमाहात्म्यश्रवण-ध्रुव-तारादर्शन पुराणपठन-नृत्यगीतवाद्यानि।

एवं चतुर्थप्रहरे स्नानं । द्वारपालपूजा निर्माल्यपरिष्कारः पंचामृतस्नानपूजां कृत्वा अर्घं संकल्प्य "पुराकृतं च यत्कर्म" इत्यादिमन्त्रेण संप्रार्थ्य ।

"शिव! शंकर! सर्वज्ञ! पशुपते! प्रभो! हर! ।
महादेवार्थमुमाकान्त! शिवरात्रौ प्रसीद मे" ॥

ॐ नमः शिवायार्घं स्वाहेति दत्त्वा मूलमन्त्रजपं कृत्वा पूर्ववत् चरुहोमं तिलहोमं च कृत्वा भूरादिप्राजापत्यान्ता नवाहुतयः । पूर्णाहुतिं हुत्वा संस्रवप्राशनं मार्जनं च कृत्वा ब्रह्मणे दक्षिणां दद्यात् ।

ततः शिवध्यान-शिवरात्रिमाहात्म्यश्रवण-ध्रुवताराद्दर्शन-पुराण-श्रवण-नृत्यगीतवाद्यादिभिरात्रिशेषनयनं । ततः स्नानाचमर्ष्य देहादिशक्तिवशेनाथ मन्त्रस्नानादिकं चरेदिति वचनात् मन्त्र-स्नानमशक्तः प्रतियामं कुर्य्यात् । तथा "होमकर्मण्यशक्तानां जपस्तु द्विगुणो मत" इतिवचनात् होमाशक्तस्य द्विगुणं पंचाक्षर जपः । इति रात्रिकृत्यं । ततः प्रातःस्नानानन्तरं निर्माल्यमपहृत्य लिङ्गपूजा । व्रतोपदेशगुरोश्च सूक्ष्मवस्त्रादिभिः पूजा । गुरवे जलकुम्भदानं । दक्षिणात्वेन सुवर्णदानं च । मूलमन्त्रं जप्त्वा [1]देवक्षमापनं । तद्यथा,

"अविघ्नेन व्रतं देव! त्वत्प्रसादात् समर्पितम् ।
क्षमस्व मे जगन्नाथ! त्रैलोक्याधिपते! हर! ॥
व्रतोपवासयागाद्यैः सुकृतं यन्मयाकृतम् ।

(१) देवस्य क्षमायापनं ।

त्वत्करस्थं महादेव! ममास्तु फलसाधनम्॥
आमादग्निरिहैवास्तु त्वत्प्रसादात् [१]महाप्रभो!"।

इति देवस्य दक्षिणहस्ते फलपुष्पं दत्त्वा व्रतं समर्पयेत्। एवमस्त्विति गुरुर्ब्रूयात्। ततो यतीन्, शिवबुद्ध्या संपूज्य प्रार्थनम्।

"त्वत्प्रसादात् [२]महादेव! व्रतमद्यसमर्पितम्।
प्रसन्नो भव मे श्रीमन् मद्गृहं प्रतिगम्यताम्॥
त्वदालोकनमात्रेण पवित्रोऽस्मि न संशयः। इति।

गृहं यतीन् नीत्वा सत्कृत्य वस्त्रकौपीनकमोपानहादिदानं मन्त्रेण।

"देवाधिदेवदेवेश! लोकानुग्रहकारक!।
यन्मया श्रद्धया दत्तं प्रीयतां तेन मे प्रभो"॥

इति दत्त्वा भोजयेत्। अन्यानपि ब्राह्मणान् भोजयित्वा अच्छिद्रावधारणं कृत्वा पारणं कुर्य्यात्। चतुर्दशीपारणे, पैशून्य कृतघ्नतामित्रद्रोहपारदार्य्याभक्ष्यभक्षणादिजन्यपापक्षयो गुणफलं। तत्कामनया कर्त्तव्यं। अमावास्यायां तु प्रातरेव व्रतसमाप्तिं यथोक्तरूपेण कृत्वा श्राद्धानन्तरं पारणं कुर्य्यादिति इति शिवरात्रिप्रयोगः।

इज्या अग्निहोत्रादिका पंचयज्ञादिरूपा तथा श्राद्धस्यापि तत् संग्रहः। तदुक्तं मनुना,—

"पितृसेवाष्टका[३]मूषे [४]नित्यमन्नफलासु च।

(१) मया। (२) मया।
(३) सूचे। (४) नित्यमन्वष्टकासु च।

च शब्दात् स्मृत्यन्तरोक्त-नित्यकर्त्तव्य-श्राद्धानामप्युपसंग्रहः । तथाच विष्णुः, अमावास्यास्तिस्रो अष्टकातिस्रोऽन्वष्टका माघी-प्रौष्ठपद्यूर्द्धं कृष्णत्रयोदशी व्रीहियवपाकौ चेति । माघीपौर्ण-मासी युगादिः । प्रौष्ठपद्यूर्द्धं युगादिः । तत्प्रायपाठात् । व्रीहि-यवपाकपदेन युगादिद्वयमुक्तं । कार्त्तिकशुक्लानवमी । वैशाख-शुक्लातृतीया च । तेन युगादिश्राद्धमिति नित्यं । मन्वन्तरान्व-वान्नश्राद्धं च । तथा ग्रहणश्राद्धं स्मृत्यन्तरात् ।

तथाच मनुः—

"सावित्रीं शान्तिहोमांश्च कुर्य्यात् पर्वसु नित्यशः ।
शान्तिकामस्तु जुहुयात् सावित्रीमष्टतः शुचिः" ॥

इति शंखवचनात्,

शान्तिश्च ऐहिकानिष्टहेतुदुरितनिवृत्तिः । तेनानिष्टहेतुसूचकोत्-पातरोगादिदर्शने तन्निमित्तमेव गायत्र्या होमः । अथ स्वाध्यायः मनुः—

"वेदमेव जपेन्नित्यं यथाकालमतन्द्रितः ।
तं ह्यस्याहुः परं धर्ममुपधर्मोऽन्य उच्यते ॥
वेदाभ्यासेन सततं शौचेन तपसैव च ।
अद्रोहेणैव भूतानां जातिं स्मरति पौर्विकीं" ॥

दाननियमस्वरूपं पूर्व्वं प्रपञ्चितं । शौचं मानसरूपं पूर्व्वमेवोक्तं । वाह्यं च यमे अन्तर्गतं । उपस्थनिग्रहः ।

हारीतः—

"वाचोवेगं मनोवेगं क्रोधवेगं तूदरोपस्थवेगं ।

एतान् वेगान् पारयेद् यस्तु विप्रस्तं वै ब्रूयुर्ब्राह्मणमिष्टं मुनिं वा" ॥

तथा, पौंस्त्वात् साध्वसं हरेतः। तस्य वीजं तदमृतावुत्सर्गे दोषः। ऋतावुत्सर्गं ब्रह्मचर्यं व्याख्यातं। तदेवादिप्रवृत्तत्वात् जगतः प्रथमं। यज्ञनियमार्थं द्वितीयं। तपःसिद्ध्यर्थं तृतीयं। मोक्षसिद्ध्यर्थं चतुर्थं। पुंसो बलवत्त्वेन रेतःसंपादने तत्पुरुषस्य वीजं ब्रह्मचर्यं व्याख्यातं। स्फारकविमलशुक्लरूपेण। तत्पर्व्वापर्वसाधारणं जगतः सर्वस्य भवति। देव तिर्य्यक् पर्य्यन्तं स्वभावप्रवृत्तत्वात्, द्वितीयं पर्वण्युपवसथे वर्जनं। यज्ञसिद्धौ तृतीयं ऋतावेव गमनं पुत्रोत्पादनेन ऋणापाकरणद्वारा स्वर्गार्थं। चतुर्थमूर्द्ध्वरेतस्त्वं। तत्र पूर्व्वयोर्धर्मेऽन्तर्भावः। उत्तरयोर्नियम इत्यर्थः। आहारलाघवानां च नियमः। आपस्तम्बः। उदरात्सर्वकामेन्द्रियदोषाः संभवन्ति। येषूपसृष्टो विविधा आपद उपैति। तस्मात् शुचिर्यथावत् परिमिताहारः स्यात्। आहारशुद्धौ सत्त्वशुद्धिरित्याचार्य्याः इति नियमाः। एवं यमनियमानुक्त्वा तत्र करणे फलं अकरणे च दोषं हारीतः। "यमेषु नियमेषु च प्रमत्तः तिष्ठन् याति लोकान् परिभ्रष्टान्। भ्रष्टस्तेभ्यो विविधां याति योनिं यास्वत्यन्तं सज्जते यातनासु। तस्माद् [१]धीरः शुश्रूवान्न्यायवृत्तौ यस्मिन् यशो न व्यथते न धर्मः। धर्मो लोकः सहायो जनानां [२]योऽस्मात् घोरात् त्रायते मृत्युदुर्गात्" इति स्नातकव्रतेषु यमनियमाः। इह साम्मतपःप्रसङ्गेन यमनियमा उक्ताः। अथान्ये मनोदोषनिषद्धालापोरूपा उच्यन्ते।

(१) वीरः। (२) य एतान्।

हारीतः । परोपतापःपराभिद्रोहः क्रोधो मोहो लोभोऽहंकारश्चेति मानसः ।

देवलः,—अथातः पापदोषान् मनोवाक्कर्मजान् व्याख्यास्यामः । मोहो रागद्वेषमानलोभमदशोकममताहंकारभयहर्षमोघचिन्ताश्चेति द्वादश मानसाः ।

तेषां स्वरूपनिरूपणं निरोधापायश्च तेनैवोक्तः । शास्त्रार्थस्य ज्ञानम् । शास्त्रार्थे संशयः । अधर्मे धर्मबुद्धिरिति मोहलक्षणं, तस्य शास्त्रार्थज्ञानं निवर्त्तकं । तदुपायः शास्त्रावेक्षणं ।

मनुः,—

"बुद्धिवृद्धिकराण्याशु धान्यानि च हितानि च ।
नित्यं शास्त्राण्यवेक्षेत निगमांश्चैव वैदिकान् ॥
यथा यथाहि पुरुषः शास्त्रं समधिगच्छति ।
तथा तथा विजानाति विज्ञानं चास्य रोचते" ॥

विषयसन्निकर्षे विषयदोषाज्ञानं [१]विकल्पाभिमानमुख्येभ्यः । विषयेषु रागः ।

"ज्ञानाद्वेषादसामर्थ्यात् क्लेशादन्यत् प्रसङ्गतः,
नियोगात् कालतः शोकात् धर्माच्च विनिवर्त्तते ॥
रोषोऽमर्षः तथासूयाद्रोहोमिथ्याभितर्कितं
[२]दुःखात् किं चेति तत्त्वज्ञैर्द्वेषः षोढा निगद्यते" ॥

परानिष्टचिकीर्षा । उपारोपः [३]परभावकर्त्तारमालोक्य द्वेषोऽमर्षः । परगुणेष्वात्मगुणाधिक्येऽनभिहर्षिरसूया । सुहृदा-

(१) संकल्प । (२) दुःखार्त्त । (३) परीभाव ।

मर्षनापेक्षा द्रोहः । निर्दोषेषु [१]साधुजनहानिकरबुद्धिर्मिथ्याभितर्कितम् । ईर्ष्यालोभमूलं पापकर्मचिन्तनं दुःखाहं । अस्य द्वेषस्य निवृत्तिः [२]कालात्ययाद्धर्मात् प्रीतेश्च निवर्त्तते । ईर्ष्यस्योपद्रवाः । अतत्त्वग्रहणं तापो । वेपथुर्ज्ञानसंप्लवः । खेदो शिरोरोगः । पारुष्यं मात्स्य्य द्वेषदोषजाः । सर्वेभ्यो आत्मन उत्कृष्टज्ञानं मानम् । तच्च विवेकेन निवर्त्तते । तथा तृष्णा लोभः ।

"दुःखादित्वाद्दूरंतत्वादनित्यत्वादतृप्तितः ।
पश्चाद्दोषबहुत्वाच्च न कश्चित् श्रेयसी तृषा" ॥

तस्य सन्तोषो निवर्त्तकः । यदुक्तं—

"या दुस्त्यजादुर्मतिभिर्या न जीर्यति जीर्यतः ।
योऽसौ प्राणान्तिको रोगस्तां तृष्णां त्यजतः सुखं ॥
सन्तोषमूलं हि सुखं दुःखमूलं विपर्य्ययः ।
कुलविद्यावित्तादिभिरन्यं वा धनं मदः" ॥

तद्विशेषा [३]अविमर्षावलेपदम्भदर्पगर्वाः । तेषां परोत्कर्षदर्शनं विधाय अनिष्टसंयोगेष्टवियोगाभ्यां दुःखं शोकः । तस्य भावनामनित्यत्वदर्शनं वर्जनोपायः ।

तथा,—

"नैवं हि शोचन्सततस्तामसो वापि केवलं ।
शोकदुःखमवाप्नोति समासेनैव राजसः" ॥

पुत्रदारधनादिषु स्वाम्यबुद्धिर्ममत्वम् । तेषामनित्यत्वचिन्तनं तद्वर्जनोपायः । अहमित्यभिमानेन क्रियासु प्रवर्त्तनमहंकारः ।

---

(१) साधुजनहानिकर्त्तृत्वबुद्धिः । (२) ज्ञानात् । (३) हर्षा ।

तस्यात्मनो निर्लेपस्य शुद्धस्याकर्तृत्वबुद्धिवर्जनोपायः। तथा आत्म-बाधकं दृष्ट्वा श्रुत्वा वा मनसि यो विकारस्तद् भयं। तस्य भवितव्यं भवत्येव तस्य का चिन्तेति विचारो बाधकः आत्मनः संपदं परस्य विपदं दृष्ट्वा च आनन्दः स हर्ष उच्यते। तस्य संपद् विपदो [१]विनाशित्वम्। सर्वगामित्वबाधकम्।

तथा,—

"भोगैश्वर्य्यमदादीनि यो लुब्धः संस्मरेत् सदा।
स मोघचित्त आत्मानं हन्ति बुद्धिं च कर्म च"॥

तस्य भवितव्यं भवत्येव, किं चिन्तयेति विमर्षो बाधकः।

देवलः,—

"एते मनोभवा दोषा द्वादश शिवहेतवः।
मोहादयो समाख्याता देवासुरनृमोहनाः"॥

विष्णुः,—

त्रिविधं नरकस्येदं द्वारनाशनमात्मनः।
कामः क्रोधस्तथा लोभस्तस्मादेतत् त्रयं त्यजेत्॥

गीतायां,—

"एतैर्विमुक्तः कौन्तेय! तमोद्वारैस्त्रिभिर्नरः।
आचरत्यात्मनः श्रेयस्ततो याति परां गतिम्"॥

बौधायनः,—"दैन्यं शाठ्यं जैह्म्यं च वर्जयेत्"। इति मानसं तपः। समाप्तानि मानसानि स्नातकव्रतानि।

अथ शरीराणि। नियमः।

(१) आशुनाशित्वं।

बृहस्पतिः,—

"निवास(१)मोचो वर्णानामाचारः समुदाहृतः।

गुणदोषसमुत्पत्तिर्लोके संस्पर्शजा स्मृता॥

भूरिमाल्यः कुशो धान्यं ग्रश्याभ्भसि(२) च नैगमे।

(३)निष्कण्टके धार्मिके च वसेत् स्थाने निरामये"॥

ग्रस्यं घासः। नैगमो, वाणिजकः। कण्टकोऽत्र गौरवादिः। धार्मिके धर्मबहुले। निरामये (४)देशस्वभावजडिमरोगशून्ये।

आपस्तम्बः। यत्राधनं प्रशमणं, तत्र वासो धर्म्याब्राह्मणस्य। प्रशमणं पवित्रीकरणं, जलगोमयकुशादि।

बौधायनः,—प्रभूतयव मोदक कुशमाल्योपनिष्क्रमणाशा(५)द्दस-मनाकुलं। अनलस सुखसमृद्धजलाधिकृतं। अदस्युप्रतिवेश-ग्राममावसितं यतेत धार्मिकः। उपनिष्क्रमणं निर्गमनमार्गः। अदस्युप्रतिवेशितं असन्निहितचौरं। तथा भस्मकण्ठितशरीरः तत्परिपूर्णनेत्रवदनस्तु नगर एवमनियतात्मा सिद्धिं न अवाप्नोतीति।

रथाश्वगजधान्यानां गवां चैव रजःशुभम्।

अप्रशस्तं समुज्झित्वाश्वाजाविगरवामसाम्॥

नगरे पुरे। तल्लक्षणं—

मार्कण्डेयपुराणे,—

"सोच्छ्रयमुच्चप्राकारं सर्वतः परिखावृतम्।

योजनार्द्धार्द्धविष्कम्भमष्टभागायतं पुरम्॥

(१) सुखो। (२) द्विज। (३) निर्गुणके।
(४) वर्षा। (५) ग्राक।

एवंविधे वस्तव्यमित्यर्थः ।

मार्कण्डेयपुराणे,—

"जितामित्रो नृपो यत्र बलवान् धर्मतत्परः" तत्र नित्यं वसेदित्यर्थः ।

"यस्मिन् कृषीवलो राष्ट्रे प्रायशो नातिलोभिनः ।
यत्रौषधान्यशेषाणि वसेत्तत्र विचक्षणः" ॥

महाभारते,—

"यत्र कामयमानानामसंकोचेन पृच्छतां ।
प्रब्रूयाद्ब्राह्मणो धर्मं वसेत्तं देशमात्मवान् ॥
शिष्योपाध्यायिकावृत्तिर्यत्रस्यात्सुसमाहिता ।
यथावत् शास्त्रसंपन्ना कस्तं देशं परित्यजेत्" ॥

तथा,—

"श्रोत्रियास्त्वग्र्यभोक्तारो धर्मनित्यास्तपोधनाः ।
याजनाध्यापने युक्ता यत्र विप्रस्तमाविशेत् ॥"

यमः,—

"एककूपोदके ग्रामे ब्राह्मणो वृषलीपतिः ।
अब्देन शूद्रो भवति कृष्णबन्धुसुपाश्रितः" ॥

कृष्णबन्धुं शूद्रम् ।

बौधायनः,—

"उदपानोदके ग्रामे ब्राह्मणो वृषलीपतिः ।
उषित्वा द्वादशसमाः शूद्रं धर्मम्नृच्छति" ॥

आपस्तम्बः,— "शूद्रान् शूद्रचरितांश्च देशान् विवर्जयेत" । सभां समाजं च । सभां चेद्गच्छेत्प्रदक्षिणीकृत्योपेयात् । नगरप्रवेश-

नानि वर्जयेत् । क्षुद्राः प्रचाररहिताः, क्षुद्राचरिता निषादादिभि-रभ्युषिताः, नगरं प्रविश्यते यैः प्रदेशैस्तत्र न वसेत् ।

मनुः,—

"न शूद्रराज्ये निवसेन्नाधार्मिकजनावृते ।

न पाषण्डजनाक्रान्ते नोपसृष्टेऽन्त्यजैर्नृभिः" ॥

विष्णुः,— न मात्सरिके वैद्यहीने नोपसृष्टनगरके न चिरं पर्वते न पतिताभिशस्तलोकनिन्दिताचारैः संवसेत् ।

व्यासः,—

"तत्र तत्र न वस्तव्यं यत्र नास्ति चतुष्टयं ।

ऋणप्रदाता वैद्यश्च श्रोत्रियः सजला नदी ॥

तत्र तत्र न वस्तव्यं यत्रैतत्त्रितयं सदा ।

जिगीषुः कृतवैरश्च जनश्च सततोत्सवः ॥

मार्कण्डेयपुराणे,—

"कर्मणा [1]येन पापेन वर्त्तन्ते जीवितेप्सवः ।

व्यवधावेद्बुतस्थाने सपर्य्या[2]तारणादि च" ॥

मनुः,—

"सरस्वतीदृषद्वत्योर्देवनद्योर्यदन्तरं ।

तं देवनिर्मितं देशं ब्रह्मावर्त्तं प्रचक्षते ॥

कुरुक्षेत्रं च मत्स्याश्च पञ्चालाः शूरसेनकाः ।

एष ब्रह्मर्षिदेशो वै ब्रह्मावर्त्तादनन्तरः" ॥

(१) यत्र जातेन । (२) सपर्व्या ।

तथा,—

"हिमवद्विन्ध्ययोर्मध्ये यः प्राग्विन[1]शनादपि ।
प्रत्यगेव प्रयागाच्च मध्यदेशः प्रकीर्त्तितः ॥
आसमुद्राच्च वै पूर्वादासमुद्राच्च पश्चिमात् ।
तयोरेवान्तरं गिर्य्योरार्य्यावर्त्तं प्रचक्षते" ॥

भविष्ये,—

"ब्रह्मावर्त्तपरो देशो ब्रह्मर्षिदेशस्त्वनन्तरं ।
मध्यदेशस्ततो नूनमार्य्यावर्त्तस्त्व[2]नन्तरं" ॥

ततोऽपि न्यून इत्यर्थः ।

"कृष्णसारस्तु चरति मृगो यत्र स्वभावतः ।
स ज्ञेयो यज्ञियो देशो म्लेच्छदेशस्ततः परः" ॥

विष्णुः,—

"चातुर्वर्ण्यव्यवस्थानं यस्मिन् देशे न दृश्यते ।
स म्लेच्छदेशो विज्ञेय आर्य्यावर्त्तस्ततः परः" ॥

इदं चापरिगणित-देशवर्जित-देशव्यतिरिक्ताविहिताप्रतिषिद्धादेशविषयं । न म्लेच्छदेशविषयं विरोधात् । नापि ब्रह्मावर्त्तादिविषयं वैयर्थ्यात् ।

भविष्यपुराणे,

"कृष्णसारैर्यवैर्दर्भैश्चातुर्वर्ण्याश्रमैस्तथा ।
समृद्धो धर्मदेशस्तमाश्रयेरन् विपश्चितः" ॥

पितामहः,—

"भास्करायतनाभ्यासे सूर्य्यक्षेत्रं समंततः" ।

(१) शिवलग्नादपि । (२) प्रचक्षते ।

विष्णुः,—

"क्रोशार्द्धं कल्पयेद्राजन् तदर्द्धार्द्धमथापि वा।

मनुजैः स्थापिते सूर्य्ये चेत्र[१]मानमिदं स्मृतं" ॥

तस्मादावसथ्यान् कुर्य्यात्सूर्य्यालयसमीपतः।

तथा,—

"क्रोशमानं परं चेत्रं शिवलिङ्गसमीपतः।

मनुजैः स्थापिते लिङ्गे चेत्रमानमिदं स्मृतं ॥

स्वायम्भुवे सहस्रं स्यादार्षे चैव तदर्द्धकं,

तस्मादावसथ्यान् कुर्य्यात् शिवालयसमीपतः।

शूद्राण्येऽपि निवसेच्च [२]देवौ तु शाङ्करौ ॥

कुरुचेत्रनिवासेन वाराणस्यां च मानवः।

अहिंसकः स्नानरतः पापं हित्वा दिवं व्रजेत् ॥

न गङ्गाया विना वासः सर्व्वचेत्र चयादृते।

काश्यां हि मरणं श्रेष्ठं विना चेत्रं प्रजापतेः ॥

गङ्गाद्वारे प्रयागे च गङ्गासागरसङ्गमे।

निवासो न विना पुण्यैर्नराणामिह जायते" ॥

व्यासः,—

"मुख्यं हि सरयूतीरं पुष्करं नैमिषं तथा"।

मत्स्यपुराणे,—

"ज्ञात्वा कलियुगं घोरं हाहाभूतमचेतनं।

अविमुक्तं न मुञ्चन्ति कृतार्था[३]स्ते न संशयः" ॥

(१) पाल।  (२) मध्ये।  (३) स्ते नरा भुवि

एवं कलावविमुक्तवासस्य विहितत्वात् ।

हरिवंशे,—

"अन्तर्द्धानं कलौ याति तत्पुरं शूलशासिनः" । इतिवचनं गृहसमुदायान्तर्द्धानपरं ।

तथा च पुनर्वदति पुरि तु वसते पुनरिति । एवं च न क्षेत्रस्य कलावन्तर्द्धानं ।

देवलः,—

"अरण्यं देवतास्थानं तीर्थान्यायतनानि च ।
तस्मात्तदमृतालोका [१]लोकान् यान्ति दिवौकसां" ॥

ब्रह्मपुराणे ।

"तपस्तप्त्वान्यतीर्थेषु वर्षायुत[२]शतं नरः ।
यदाप्नोति तदाप्नोति मासेन पुरुषोत्तमे ॥
वार्षिकांश्चतुरो मासान् यस्तिष्ठेत् पुरुषोत्तमे ।
विहाय सर्वपापानि विष्णुलोकं स गच्छति ॥
हरेः सन्निहिते स्थाने उत्तमे पुरुषोत्तमे ।
संवत्सरमुषित्वा तु मासमात्रमथापि वा ॥
प्रयाति परमं स्थानं यत्र योगेश्वरो हरिः" ।

विष्णुपुराणे,—

"ततः स भगवान् कण्वः चीर्णे तपसि सत्तमाः ।
पुरुषोत्तमाख्यं मैत्रेय विष्णोरायतनं ययौ ॥

(१) तेन । (२) वर्षाणामयुतं ।

तत्रैकाग्रमतिर्भूत्वा चकाराराधनं हरेः।
ब्रह्मपारमयं कुर्वन् स्तोत्रं परमपावनं" ॥

नरसिंहपुराणे,—

ततः,—

"पुरुषोत्तमाख्यं स गत्वा देवदेवं महामतिः।
तत्र स्नात्वा यथा योगं मार्कण्डेयो महातपाः ॥
तपस्तेपे निराहारो [1]द्रष्टुं नारायणं हरिं।
बहुवर्ष [2]शतं तत्र शृण्वन् ब्रह्मसनातनं ॥
पुरुषोत्तमं समभ्यर्च्य गन्धपुष्पादिभिः क्रमात्।
तुष्टाव वाग्भिरिष्टाभिर्विष्णुं तत्रोर्द्धबाहुकः" ॥

महाभारते,—

"एतेऽत्र लिङ्गाः कौन्तेय यत्र वैतरणीनदी।
यत्रायजत धर्मोऽपि देवान् शरणमेत्य वै ॥
ऋषिभिः समुपायुक्तं यज्ञीयं परिशोभितं।
उत्तरं तीरमेतद्धि सततं द्विजशोभितं ॥
शुभेन देवयानेन यथा स्वर्गमुपेयुषः।
तत्र देवर्षयोऽन्येऽपि पुरा क्रतुभिरेजिरे ॥
तत्रैव रुद्रो राजेन्द्रः पशुमादत्तवान्मखे।
अदात्पशुं न चेन्द्राय भागोऽयमिति चाब्रवीत् ॥
हृते पशौ तदा देवास्तमूचुर्भरतर्षभ!।
मापरस्वमभिद्रोग्धो माधर्मान्[3]कलान् वृथा ॥

(१) स्तवन्नारायणं हरिं। (२) शतां।
(३) माधर्मान् सकलान्यगाः।

ततः कल्याणरूपाभिर्वाग्भिस्तेरुद्रमस्तुवन्।
दृष्ट्वा चैनं तर्पयित्वा समयं चक्रिरे तदा॥
ततः स पशुमुत्सृज्य देवयानेन [१]यज्ञवान्।
तत्रानुवंश्या रुद्रस्य तान्निबोध युधिष्ठिर!॥
अयातयामं सर्वेभ्यो भागेभ्यो भागमुत्तमं।
देवाः संकल्पयामासुर्भयाद्रुद्रस्य शाश्वतं" ॥

तथा,—

"एतत्स्वायम्भुवो राजन्! वनं रम्यं प्रकाशते॥
यत्रायजत कौन्तेय विश्वकर्मा प्रतापवान्॥
तस्मिन् यज्ञे हि भूर्दत्ता कश्यपाय महात्मने।
स पर्वतवनोद्देशाद्दक्षिणा वै स्वयम्भुवा॥
अवासीदत्तत्र कौन्तेय दत्तमात्रामही तदा।
उवाच चापि कुपिता लोकेश्वरमिदं प्रभुं॥
न मां मर्त्याय भगवन् कस्मैचिद्दातुमर्हसि।
प्रदानं योग[२]मेतत्ते यास्याम्येषा रसातलं॥
विषीदन्तीं तु तां दृष्ट्वा काश्यपो भगवान् ऋषिः।
प्रसादयांबभूवाथ ततो भूमिं विशांपते॥
ततः प्रसन्ना पृथिवी तपसा तस्य भूपतेः।
पुनरुन्मज्य सलिलाद्वेद[३]रूपा स्थिताबुभौ॥

(१) जग्मिवान्।
(२) प्रदानं मेवमेतत्ते यास्याम्येषा रसातलं।
(३) देवीरूपा।

सैषा प्रकाशते राजन्! वेदी[१]संस्थानलक्षणा।
आरुह्यास्तमहाराज! वीर्य्यवान् वै भविष्यति॥
सैषा सागरमासाद्य वेदी राजन् प्रकाशते।
एतामारुह्य भद्रं ते त्वमेकस्तरसागरं"॥

अहं च ते स्वस्त्ययनं प्रयोक्ष्ये यथात्वमेता[२]मधराजसेन। स्पृष्टाहि मर्त्त्येन ततः समुद्रमेषा वेदी प्रविशत्या[३]जमीढ़ अग्निर्मित्रायोनिरपां देव्यो विष्णोरेतत्त्वमसृतस्य नाभिः। एतद्ब्रुवन् पाण्डवः सत्यवाक्यं ततो वेदीं[४] त्वं तरसाधि[५]रोह। अथ उत्तरं तीरमित्युपक्रम्य सैषा सागरमासाद्य देवी राजन् प्रकाशत इत्युप[६]संहृत्य वैतरणीप्रभृति समुद्रपर्य्यन्तं पुरुषोत्तमक्षेत्रमुक्तं भवति। यद्यपि पुरुषोत्तम क्षेत्रशब्देन कीर्त्तनं पुरुषोत्तमाख्य-कृष्णमूर्त्तिदर्शनं च नोपनिवद्धं तथापि क्षेत्रस्वरूपं क्षेत्रमेतावदेवेति मत्स्यपुराणे काश्यां केशवदर्शनं यथा नोक्तं तथेह प्रत्येकं। एवं चास्य देवस्य कलिं मध्यगतत्वेऽपि क्षेत्रत्वेन प्राशस्त्याभिवासयोग्यं। निषिद्धदेशाः।

आदित्यपुराणे,—

"अङ्गवङ्गकलिङ्गांश्च सौराष्ट्रगुर्ज्जरांस्तथा।
आभीरं कोङ्कणं चैव द्रविड़ं दक्षिणापथं।
अवन्तीं मागधं चैव देशान्येतानि वर्जयेत्"।

---

(१) देवी। (२) मधीत राजन्। (३) त्याजमीढ। (४) देवी। (५) तिरोह। (६) इत्युपसंहाराच।

चन्द्रिकायां—

"सिन्धुसौवीरसौराष्ट्रान् तथा पर्य्य[१]न्तवासिनः।

अङ्गवङ्गकलिङ्गांश्च गत्वा संस्कारमर्हति"॥

स्कन्दपुराणे,—

"अङ्गवङ्गकलिङ्गोड्रान् [२]पार्वतीयान् मगांस्तथा।

सिन्धुसौराष्ट्रसौवीरान् पारदानाश्मालवान्॥

निवासाय द्विजो नित्यमनापदि [३]विवर्जयेत्।

एतान्यपि यदि गच्छेत् संश्रयेत् वृत्तिकर्षितः"॥

विष्णुः,—

"म्लेच्छ[४]विषये श्राद्धं न कुर्वीत"।

आदित्यपुराणे,—

"अधर्मदेशमध्ये तु कृत्वा क्रतुशतान्यपि।

न पश्यन्ति द्विजाः स्वर्गं जातु श्रेयो महात्मनाः"॥

एतच्च अनापदि काम्यकर्मविषयं।

हारीतः,— नारङ्गागन्धावासज आवद्ध्नीयात्। अन्यच्च काञ्चन-कमलकुवलयेभ्यः।

आपस्तम्बः,—

नित्यं शुचिः सुगन्धिः स्यात् शुक्लाम्बरधरः पुमान्।

गौतमः,— नशुस्मश्रुर्नाकस्मात्। अकस्मात् आत्मीयनिमित्तं विना दीर्घश्मश्रुर्न स्यात्।

---

(१) प्रत्यन्त। (२) पार्व्वतीं गमां स्तथा।
(३) विपर्य्ययेत्। (४) देशे।

आपदि तु काम्यकर्मापि तात्कालिकरोगादिशान्तिफलकं तथापि कर्त्तव्यमेव सुतरां नित्यं। एवं अनापदि नित्यकर्म अथापि कर्त्तव्यमेव, जातु नेय इति फलस्यैव निरा[1]-करणात्।

अथ भोगः आपस्तम्बः,—"संग्रहीता मनुष्यान् भोक्ता च धर्मा-विरुद्धान् भोगान्, एवमुभौ लोकावभिजयते। मनुष्यसंग्रहः स्वसुखाय।

संवर्त्तः,—

"ऋतुकालाभिगामी स्यात् प्राप्नोति परमं[2] पदं"।

विष्णुः,— लक्ष्मीवाक्यं। वसामीत्यनु[3]वृत्तौ।

"आचारसंविन्यथ शास्त्रनिष्ठे विनीतवेशेन तथा सुवेशे।
सुभ्रुच्छदन्ते ऋतु[4]वर्जिते च मृगाग्रनेनातिथिपूजनेन॥
स्वदारनिष्ठे नियते स्वधर्मे सत्योत्कटे गत्यप्रनाविमुक्ते।
सदा सुशुक्ले च सुगन्धिगात्रे नित्यानुलिप्ते च विभूषिते च"॥

वसिष्ठः,—

"न बहिर्मालां धारयेदन्यत्र रुक्ममयाः" बहिर्दृष्टात्

हारीतः,—

"गुरुणाऽनुज्ञातोऽलंकारान् गृह्णीयात्। यथार्थं तान् विभृयात्"। यथार्थं यथाप्रयोजनं।

(१) नित्यकरणात्। (२) परमां गतिं।
(३) लोमा. पुस्ती। (४) ऋतवर्जित।

विष्णुपुराणे,—

"सदानुपहते वस्त्रे प्रशस्ताश्च तथौषधीः।
गारुड़ानि च रत्नानि बिभृयात् प्रयतो नरः॥
सुस्निग्धामलकेशश्च सुगन्धिश्चारुवेशधृक्।
सिताः सुमनसो हृद्या बिभृयाच्च नरः सदा"॥

महाभारते,—

"अन्यदेव भवेद्वासः शयनीये सदैव हि।
अन्यद्रथ्यासु देवानामर्चायामन्यदेव हि"॥

न सुवर्णमनग्र्यं धारयेत्। अनामिकाधारणे कुण्डलधारणे सामान्येन प्राप्तस्य स्नातकव्रतलेन पर्य्युदासः।

कालिकापुराणे,—

"कायक्लेशेनैव हेला तु यत् पापं कुरुते नरः।
आचरेत्तदघं तस्य वज्रलेपो भविष्यति॥
अनामिकायां तद्धार्य्यं दक्षिणस्य करस्य च"।

दक्षिणानामिकाधिकरणं सुवर्णधारणं पुरुषार्थं विधीयते। तस्यैव वाक्यान्तरेण कर्माङ्गता विधीयते। जपहोमेत्यादिना। एवं च दक्षिणानामिकाङ्गस्येन हेला निषिद्धानुष्ठाने पापं गुरुत्वादित्यर्थः।

मनुः,—

"बहिर्माल्यं न धारयेत्, गृहाद्बहिः, नात्मना[१]चाहरेत् स्रजं"।

---

(१) पहरेत्।

यमः,—

"नैकवस्त्रेण भोक्तव्यं न नग्नः स्नानमाच[1]रेत् ।

स्वप्तव्यं नैव नग्नेन उच्छिष्टश्चो न संविशेत्" ॥

मनुः,—

"न जीर्णमलवासाः स्यात् भवे च विभवे सति ।

नीचकेशनखश्मश्रुर्दान्तः शुक्लाम्बरः शुचिः" ॥

तथा—

"नोत्सङ्गे भक्षयेद्भक्ष्यान्न जातु स्यात् कुतूहली ।

न नृत्येनापि गायेत न वादित्राणि वादयेत् ॥

न च स्फोटेन च क्ष्वेडेनाचे: क्रीड़ेत्कदाचन ।"

स्फोटमङ्गुलीनां । क्ष्वेड़नं सिंहनादः ।

यत्तु—

"वीणावादनतत्त्वज्ञः श्रुतिशास्त्रविशारदः ।

तालज्ञश्चाप्रयासेन प्राप्नोति परमं पद"मिति याज्ञवल्क्य-वचनं । तच्चित्तैकाग्रताकामनया क्रियमाणपरं । तस्य विहितत्वादस्य नैतद्विषयत्वं ।

एवं,—

"गीतज्ञो यदि गीतेन नाप्नोति परमं पदं ।

रुद्रस्यानुचरोभूत्वा तेनैव सहमोदत" इति रुद्रप्रीतये क्रियमाणपरं, तस्यापि निषेधः ।

विष्णुः । "न सर्पशास्त्रैः क्रीड़ेत" ।

---

(१) मर्हति ।

वशिष्ठः,—

"नाङ्गनखवादनं कुर्य्यात् ।

न पादेन पाणिना वा जलमभिहन्यात् । नेष्टकाभिः फलानि निपातयेत् न फलैः फलानि ।

न पाणिपादचपलो न नेत्रचपलो भवेत् । न वाचा चपल- इति शिष्टस्य गोचरे" । स्नानविधिनिषेधकास्तु प्रातःस्नान प्रकरणे दर्शिताः ।

अथ संकरवर्जितं । वृहस्पतिः,—

"विप्रजातिं समासाद्य संकरं परिवर्ज्जयेत् ।
मानुष्यं दुर्लभं लोके ब्राह्मण्यमधिकं ततः ॥
एकशय्यासनं पङ्क्तिर्भाण्डपक्वान्नमिश्रणं ।
याजनाध्यापने योनिस्तथा च सहभोजनं ॥
नवधा सङ्करः प्रोक्तो न कर्त्तव्योऽधमैः सह ।
उत्तमैरुत्तमैः सार्द्धं कर्त्तव्यं तु समेन वा ॥

योनिर्योनिसम्बन्धः सहभोजनमेकपात्रभोजनम् ।

यमस्मृतावधिकं हीनयोनिगमनं । दुष्टैः सह क्रूया[१] इति व्यवहारः । तद्द्रव्यपरिभोग[२]स्तदासनशयनोपभोगः तद्गात्रस्पर्शनम् । तत्संलापः । तद्गृहभोजनम् ।

तथा,— गौर्य्यादियोगस्तु पापसंक्रमहेतुः ।

हारीतः,—

"हन्यादशुद्धः शुद्धं तु शोधयेत् । तयोर्यदत्र भूयिष्ठं शुद्धिः

(१) क्रियादि । (२) ग्रह ।

शुद्धतः स्मृतेः। योऽत्यन्ततपस्वी तत्संसर्गेण पापिनः पापक्षयो-भवति,तथा विश्वामित्रस्य त्रिशङ्कुयाजने, यस्त्वत्यन्तं पापिसम्पर्केण सामान्यतः साधोः पापसंक्रमो भवति, तथा स्नानशय्यासनान्यपि परिहार्य्याणि एके मन्यन्ते स्नानुपपत्तौ एवं स्मात्तः॥

"आसनं शयनं स्नानमन्तर्द्धाय समाचरेत्"।

स्नानुपपत्तौ स्नासनाद्यसम्भवे। शुद्धिं वस्त्रादिकमासनादि-व्यन्तर्द्धाय परिग्रहः कार्य्य इत्यर्थः।

मनुः,—

"उपानहौ च वासश्च धृतमन्यैर्न धारयेत्।

उपवीतमलंकारं स्रजं करकमेव च"॥

अत्र ब्रह्मसूत्रमन्योपभुक्तं सर्व्वथैव न धार्य्यं। वासःप्रभृतीनां निर्णेजा(१)मलामिति गौतमस्मृतेः प्रक्षाल्य धारणं।

विष्णुस्मृतौ,—

परोपभुक्तमाल्यवर्जनं। याज्ञवल्क्यीये,— परकूपोद्यानस्नानानां वर्जनमधिकं। पङ्क्तिभोजने विशेषः।

"अग्निना भस्मना चैव सलिलेन विशेषतः।

द्वारेण स्तम्भमार्गेण षड्भिः पङ्क्तिर्विभज्यते॥

देवादि निर्म्माल्यहतं शरीरं यस्य वेश्म च।

न तेन सङ्करं कुर्य्याद्भोजनपरिच्छदैः"॥

निर्म्माल्यहतं पूजादिविरहात्।

---

(१) प्रक्षालिति।

विष्णुपुराणे,—

"द्विषोचुपतितोन्मत्तवञ्चविराजिकीटकैः ।
बन्धकीबन्धकीभर्त्तृचुद्रान्वितकथैः सह ॥
तथातिव्ययशीलैश्च परिवादपरैः शठैः ।
बुधो मैत्रीं विकुर्वीत नैकः पन्थानमाव्रजेत्" ॥

मार्कण्डेयपुराणे,—

"न सर्वशंकिभिर्नित्यं न तु दैवपरैर्नरैः" ।

मैत्रीं कुर्य्यादित्यनुषङ्गः ।

मनुः,—

"पाषण्डिनोविकर्मस्थान् वैड़ालव्रतिकान् शठान् ।
हैतुकान् वकवृत्तिंश्च वाङ्मात्रेणापि नार्च्चयेत्" ॥

मनुः,—

"न शूद्राय मतिं दद्यान्नोच्छिष्टं न हविष्कृतं ।
न चास्योपदिशेद्धर्मं न चास्य व्रतमादिशेत्" ॥

उच्छिष्टं भोजनपात्रशिष्टं, हविः पुरोडाशादि, देवनैवेद्यश्राद्ध-दत्तानि । तत्रापि हविःशब्दप्रयोगात् । उच्छिष्टनिषेधो नाश्रित-शूद्रविषयः ।

"उच्छिष्टमन्नं दातव्यं जीर्णानि वसनानि वा" ।

इति केचित् ।

मनुना आश्रितशूद्रे दानविधानात्, शङ्खलिखितौ,—"कृसरं पायसापूपमांसदधिमधुघृतं कृष्णाजिनानि शूद्रेभ्यो न दद्यात्" । क्वचिदन्यत्र प्रकृताविति । प्रकृतमुत्सवः । उत्सवादिषु विवाहादिषु

देवमित्यर्थः। विष्णुस्मृतौ,—तिलदानमपि निषिद्धं। कुलनाशनादि।
मनुर्बौधायनश्चतुर्थे।

"कुविवाहैः क्रियालोपैर्न वेदाध्ययनेन च।
कुलान्य[१]कुलतां यान्ति ब्राह्मणातिक्रमेण च।
शिल्पेन व्यवहारेण शूद्रापत्यैश्च केवलैः॥
गोभिरश्वैश्च यानैश्च कृषीराजोपसेवया।
अयाज्ययाजनैश्चैव नास्तिक्येन च कर्मणा॥
कुलान्यकुलतां यान्ति यान्ति हीनानि मन्त्रतः।
मन्त्रतस्तु समृद्धानि कुलान्यल्पधनान्यपि॥
कुलसंख्यां च गच्छन्ति कर्षन्ति च महद्यशः"।

शिल्पं चित्रादिजीविकालेन, व्यवहारेण ऋणादानादिना, यानैः शकटादिभिः। यमशातातपव्यासाः,—

देवद्रव्यविनाशेन ब्रह्मणातिक्रमेण च।
कुलान्यकुलतां यान्ति गवां[२]चातिक्रमेण च॥ देवद्रव्यं देवोद्देशेन यद्द्रव्यं।

अथ त्याज्यात्याज्याः।

विष्णुर्मनुश्च,—

"एनस्विभिरनिर्णिक्तैर्नार्थं किञ्चित्समाचरेत्।
कृतनिर्णेजनांश्चैतान् जुगुप्सेत्तु कदाचन"॥

एनस्विनः महापातकिनः।

(१) कुलान्याशु विनश्यन्ति।
(२) ब्राह्मणातिक्रमेण च।

वशिष्ठः,—

"पतितः पिता परित्याज्यो माता पुत्रं प्रति न पतति"

बौधायनः,—

"न पतितैः सव्यवहारो विद्यते, पतितामपि मातरं बिभृयादनुभाषमाणः"।

गौतमः,—

"त्यजेत् पितरं सद्यः शूद्रयाजकं, शूद्राध्यापकं, शूद्रार्थयाजकं, वेदविप्लावकं भ्रूणहनं, यश्चान्त्यावसायिभिः सह संवसेदन्त्यावसायिनायाञ्च।" शूद्रार्थयाजकं शूद्रधनेन यज्ञकर्त्तारं, वेदविप्लावकं अनध्याये वेदाध्यापकं। यत्तु शङ्खलिखितौ,—"अत्याज्याः, माता पिता सपिण्डा गुणवन्तः सर्व एवात्याज्याः, गुणवन्तो विद्यावन्तः। श्रौतस्मार्त्तानुष्ठानरतश्च"।

देवलः,—

"पितरं भ्रातरं पुत्रं पुत्रिकां भगिनीं स्नुषां।
न त्यजेद्दत्त[१]भोगार्थं दारानपि कदाचन॥
मातृत्यागो हि शास्त्रेषु नोपदिष्टः कदाचन।
पतिता चाभिशस्ता च न माता त्यागमर्हति॥
कुलवृद्धा वयोवृद्धा ज्ञानवृद्धाश्च मानवाः।
शीलवृद्धाश्च संपूज्या यथा स्वगुणगौरवात्"॥

तदेतेषां मातृपितृव्यतिरिक्तानां पञ्चमहापातकित्वेऽपि न त्याज्यत्वमित्येवं परं। मातुस्तु महापातकित्वेऽपि अत्याज्यत्वम्।

(१) हूयन्तोभाभ्यां।

हारीतेन,— तु आचार्य्यर्त्विक्पितॄणामत्याज्यत्वमुक्ता,—

"अशुद्धौ च परित्यागः पातकेऽयाज्ययाजने।

उपाध्याये च याज्ये च न पितृत्याग उच्यते"॥

पातके महापातकव्यतिरिक्ते, अयाज्ययाजने च उपाध्यायर्त्विग्याज्यानां त्यागोऽपि न पितुः, महापातकेषु पितरमपीत्यर्थः, एतच्च पतितत्यागविधिं विनापि पातित्ये सर्व्वव्यवहारवर्जनं। पापसंसर्गस्यैव दोषावहत्वात्। न तु त्यक्तसंसर्गत्वेन दोषनिमित्तत्वं। त्यागविधिस्तत्र ज्ञातीनां पुरुषार्थः। तदतिक्रममेतेषामेव दुरितं; न तु त्यागविध्यभावेन पातकिनो व्यवहार्य्यत्वं। यत्तु वशिष्ठेन त्यागविध्यन्तरं "अत ऊर्द्धं तेन सधर्मयेयुः, तद्धर्मिणो वा स्युः, सधर्मयति" इति, तत्सूतका(१)तुरविषयं, त्यागे कृते तु सूतकमृतकयोः सूतकमृतकं न कर्त्तव्यं, करणे तत्साम्यापत्तेः, रिक्थ पिण्डोदकानि व्यवर्त्तन्त इति शङ्खलिखितवचनात् आद्यदायभागादिकमपि त्यागे सति न भवति। न पतितमात्रे वचनाभावात्. एवं चाशौचव्यतिरिक्तव्यवहारः त्यागं विनापि पतितैः सह न कर्त्तव्यः। पतिताभिशस्तादृष्टात्मकुलक्षयकरस्य तस्य पुरो बान्धवानां राज्ञश्च समक्षं दोषानभिख्यायाः, पुनः पुनरवस्थां लभस्वेति स यदेवमपि अनवस्थितमतिः स्यात्तत्तो भिन्नपात्रमादाय पूर्वमपापमपसव्यं कृत्वा वामपादेन दक्षिणां दिशं न्युब्जयेत्। पात्रमपसव्यं कृत्वापविद्धादिकं कृत्वा शौचमुपासीरन्। अपापादिक्षस्य रिक्थपिण्डोदकानि निव-

(१) तत्सूतकाशौचाद्यादिविषयं।

र्त्तते, अवश्यं समभक्षेति प्रायश्चित्तं कुर्वीत। सभार्यां पुनः पुनर्वक्तव्यं। यदि प्रायश्चित्तं न करोति तदोक्तविधिना त्यागः कार्य्यः, मनुवचनाच्चिन्दितेऽहनि सायाह्ने सर्वे ज्ञातयः कुर्य्युः। वशिष्ठस्मृतेः संमार्ज्जनाद्यसंस्कृतस्थानस्थघटेन दासी दासीसवर्णपुत्रान्यतमद्वारा जलानयनं, जलानेता जल अमपसव्यो वामपादेन दक्षिणाभिमुखो घटमन्युजमधोमुखं कुर्य्यात्। अमुकशर्म्मणे पतितायेदं जलमुपतिष्ठतामिति गैरिकरिक्तेषु कूपेषु, ज्ञातयः प्रकीर्णकेशा अपसव्यास्तमन्वालभेरन्। ततः स्नात्वाथास्य मनुवचनादहोरात्रं अशौचमासीरन्। गौतमवचनाच्च सर्वाणि प्रेतकार्य्याणि जीवत एव अस्य कुर्य्युः पुत्रादयः। पूरकपिण्डषोडशश्राद्धादिकं।

मनुः—

"एवं तस्य विधिं कुर्य्याद्योऽपि सुपतितास्वपि।
वस्त्रान्नयानदेयं तु वसेत् पुण्यगृहान्तिके"॥

त्यागे कृते यदि प्रायश्चित्तं करोति तदा पयः पानीयं घृतं वरणं मधूपलभ्य नद्यां पुण्यजलायां स्नायात्। ब्राह्मणा ब्रूयुश्चरितं त्वयेति। चरितमिति प्रतिवचनं। वशिष्ठवचनाद्धिरण्मयं मृण्मयं वा कुम्भं नदीजलपूर्णं तस्मै च दद्युः।

"तदापः प्रतिगृह्णाति; शान्ता द्यौः; शान्ता पृथिवी; शान्तं शिवमन्तरीक्षं यो रोचनस्तमिह गृह्णामीति" यजुर्भिः। पावमानीभिरितरसम्बन्धिभिश्च कुशाण्डिभिर्होमः। ततस्तेनोदकेनैवमापोहिष्ठेति तिसृभिरभिषिञ्चेयुः। ततः सर्वेषां ज्ञातीनां तेनैव सह नद्यां स्नानं। जलकुम्भापवर्जनं। गोभ्यो घासदानं। गोभिर्घासे

भवितै ततो गृहं प्रविश्य जातकर्मादि तस्य कर्त्तव्यम्। गां हिरण्यं ब्राह्मणेभ्यो दद्यात्। आचार्य्याय चैवं। ततोऽन्नेन सह सर्वं भयं च पुनरुद्धारविधिस्त्यागविध्यभावेन भवति। प्रायश्चित्तमात्र व्यवहाराः। व्यवहार्य्यत्वात्।

मनुः,—

"बालघ्नांश्च कृतघ्नांश्च विशुद्धानपि धर्मतः।
शरणागतहन्तॄंश्च न तैः सम्भूय सम्विशेत्"॥

एतैः सह कृते च प्रायश्चित्ते व्यवहारो वर्ज्यः। उदकपानपदं व्यवहारमात्रोपलक्षकम्। स्मृत्यन्तरात् स्त्रीघ्नानपि इति शारीराणि स्नातकव्रतानि। अथ वाचिकं तच्च वाच्यावाच्यभेदेन द्विविधं। तत्र वाच्यं सर्वश्रेष्ठं विष्णोर्नाम।

विष्णुपुराणे,—

"यन्नामकीर्त्तनं पुंसां विलायनमनुत्तमं।
मैत्रेयाशेषपापानां धातूनामिव पावकः"॥

गीतायां,—

"सततं कीर्त्तयन्तो मां यतन्तश्च दृढव्रताः।

महाभारते,—

"एष मे सर्वधर्माणां धर्मोऽधिकतमो मतः।
यद्भक्त्या पुण्डरीकाक्षं स्तवैरर्च्चेन्नरः सदा"॥

विष्णुधर्मे,—

"चक्रायुधस्य नामानि सदा सर्वत्र कीर्त्तयेत्।
नाशौचं कीर्त्तने तस्य स पवित्रकरो यतः॥

अज्ञानादथवा ज्ञानादुत्तमश्लोकनाम यत् ।
संकीर्त्तितमघं पुंसो दहत्येधो यथानलः" ॥

विष्णुधर्मोत्तरे,—

"आर्त्ता विषण्णा विषयाभिभूताः,
घोरेषु च व्याधिषु पच्यमानाः
संकीर्त्य नारायणशब्दमात्रं
विमुक्तदुःखाः सुखिनो भवन्ति"।

विष्णुरहस्ये,—

"मायाविलम्बमहच्छिद्रं स मोहः स च विभ्रमः
यन्मुहूर्त्तं क्षणं वापि वासुदेवं न कीर्त्तयेत्" ॥

महाभारते,—

"प्राणप्रयाणपाथेयं संसारव्याधिभेषजं ।
दुःखशोका(१)पविद्राणं हरिरित्यक्षरद्वयं" ॥

रामायणे,

"न तत्र दानवाः सन्ति न पिशाचा न राक्षसाः ।
यत्र देवो गृहे विष्णुः कीर्त्त्यते हि सदा सता" ॥

विष्णुधर्मोत्तरे,—

"नामसंकीर्त्तनं नित्यं क्षुतिप्रस्खलितादिषु ।
यः करोति महाभाग! तस्य तुष्यति केशवः" ॥

(१) परित्राणं ।

पुनर्विष्णुपुराणे,—

"अवशेनापि यन्नाम्नि कीर्त्तिते सर्वपातकैः।

पुमान् विमुच्यते सद्यः सिंहत्रस्तैर्मृगैर्यथा" ॥

तथा अर्थविशेषे नामविशेषमुक्त्वा

"सर्वार्थशक्तियुक्तस्य वासुदेवस्य चक्रिणः।

यथाभिरोचते नाम तत्सर्वार्थेषु कीर्त्तयेत्" ॥

महाभारते,—

"एष मे सर्वधर्माणां धर्मोऽधिकतमो मतः।

यद्भक्त्या पुण्डरीकाक्षं स्तवैरर्च्चेन्नरः सदा" ॥

एवं सहस्रनामगजेन्द्रमोक्षणादिकीर्त्तनमपि तत्तत्फलार्थं।

तथा मनुः,—

"वेदाभ्यासरतं क्षान्तं पञ्चयज्ञक्रियारतं।

न स्पृशन्तीह पापानि महापातकजान्यपि" ॥

तथा,—

"परिनिष्ठितकार्यस्तु स्वाध्यायेनैव हि द्विजः"।

तत्र ब्रह्मभागः साक्षाद्विष्णुपरः। कर्मभागोऽपि यज्ञरूपविष्णु-नामकीर्त्तनपरः। इत्यादिसर्वस्मृतिपुराणेषु कोटिशो वाक्यानि विस्तरभयान्न लिख्यन्ते।

तथा भविष्यपुराणे,—

"महादेव! महादेव! महादेवेति चैव हि।

पठेदेतन्नियमवान् शृणुयाद्वापि यः सदा" ॥

यद्दृभेदमाचाह,—

"मृत्युञ्जयाय रुद्राय नीलकण्ठाय शम्भवे।
इतीरयन्ति ये नित्यं न हि तान् बाधते कलिः॥
कीर्त्तयन्ति च ये रुद्रं सकृदप्यत्र मानवाः।
सर्वपापैः प्रमुच्यन्ते सप्तजन्मकृतैरपि॥
अश्वमेधसहस्रस्य सहस्रगुणितस्य च।
फलं प्राप्नोति यो भक्त्या महादेवेति कीर्त्तयेत्॥
प्रसङ्गात् कौतुकाल्लोभाद्भयादज्ञानतोऽपि वा।
हरहरेत्युच्चरन्मर्त्यः सर्वपापैः प्रमुच्यते॥
त्रिपुरहर! हराऽऽदिदेव! शम्भो!
त्रिनयन! शंकर! रुद्र! शूलपाणे!।
भव! शरणमितीरयन्ति ये वै,
भवजलधौ न विशन्ति ते मनुष्याः"॥

एवमन्यान्यपि शिवकीर्त्तनपराणि वाक्यानि विस्तरभयान्न लिख्यन्ते।

शाम्बपुराणे—

"विकर्त्तनो विवस्वांश्च मार्त्तण्डो भास्करो रविः।
लोकप्रकाशकः श्रीमान् लोकचक्षुर्ग्रहेश्वरः॥
लोकसाक्षी त्रिलोकेशः कर्त्ता हर्त्ता तमिस्रहा।
तपनस्तापनश्चैव शुचिः सप्ताश्ववाहनः॥
गभस्तिहस्तो ब्रह्मा च सर्वदेवनमस्कृतः।
यच्च तेन महाबाहो! द्वे सन्ध्येऽस्तमनोदये॥
स्तौति मां प्रणतो भूत्वा सर्वपापैः प्रमुच्यते"।

भविष्यपुराणे,—

"उपवासी रविं यस्तु भक्त्या ध्यायति मानवः ।
तन्नामजापी तत्कर्मरतस्तद्गतमानसः ॥
निष्कामं पूजयेद्देवं परं ब्रह्माधिगच्छति" ।

विष्णुपुराणे—

"ये त्वामार्य्येऽतिदुर्गेति वेदगर्भेऽम्बिकेति च ।
भद्रेति भद्रकालीति क्षेमाक्षेमंकरीति च ॥
प्रातश्चैवापराह्णे च कीर्त्तयि(१)ष्यन्ति मानवाः ।
तेषां हि प्रार्थितं सर्वं त्वत्प्रसादाद्भविष्यति" ॥

मार्कण्डेयपुराणे,—

सावर्णिः सूर्य्यतनय इत्यारभ्य सावर्णिर्भविता मनुरित्यन्तं देवीमाहात्म्य प्रकृत्य—

"मधुकैटभनाशं च महिषासुरसूदनं ।
कीर्त्तयिष्यन्ति ये तद्वद्वधं शुम्भनिशुम्भयोः ॥
न तेषां दुष्कृतं किञ्चिद्दुष्कृतोत्था न चापदः ।
भविष्यन्ति न दारिद्र्यं न चैवेष्टवियोजनं" ॥ इत्यादि ।

विष्णुपुराणे—

"गङ्गा गङ्गेति यो ब्रूयाद्योजनानां शतैरपि ।
स्थितोऽन्यत्रापि तं हन्ति पापं जन्मत्रयार्जितं" ॥

गङ्गामधिकृत्य—

या पावयति भूतानि कीर्त्तिता च दिने दिने ।

(१) स्तोष्यन्त्या नाममूर्त्तयः ।

महाभारते,—

"कुरुक्षेत्रं गमिष्यामि कुरुक्षेत्रे वसाम्यहं।
य एवं सततं ब्रूयात्सोऽपि पापात् प्रमुच्यते"॥

तथा—

"अहं काशीं गमिष्यामि तत्रैव निवसाम्यहं।
इति ब्रुवाणः सततं काशीवासफलं लभेत्"॥

स्कन्दपुराणे नन्दिनं प्रतीश्वरवाक्यं।

"अनामयस्तेतनो वा नाम कीर्त्तयता तव।
सोऽश्वमेधफलं चैव लप्स्यते नात्र संशयः"॥

मत्स्यपुराणे,—

"कार्त्तवीर्य्यार्जुनो नाम राजा बाहुसहस्रधृक्।
योऽस्य कीर्त्तयते नाम कल्यमुत्थाय मानवः॥
न तस्य वित्तनाशः स्यादिष्टं च लभते ध्रुवं"।

विष्णुधर्मे,—

"नमोऽस्तु ते कार्त्तवीर्य्येत्यभिध्यायति चैव यः।
तिलप्रस्थप्रदानस्य नरः पुण्यमवाप्स्यति"॥

स्कन्दपुराणे,—

"सोमन्दिनीति यः प्रोक्ता कर्त्तारं प्रतिपद्यते।
न तस्य द्विपिशार्दूलभयं कुर्वन्ति कुत्रचित्"॥

तथा—

"कर्कोटकस्य नागस्य दमयन्त्या नलस्य च।
ऋतुपर्णस्य राजर्षेः कीर्त्तनं कलिनाशनं"॥

अथ सत्यवचनं।

मनुयमौ,—

"सत्यं ब्रूयात् प्रियं ब्रूयान्न ब्रूयात् सत्यमप्रियं।
प्रियं च नानृतं ब्रूयादेष धर्मः सनातनः" ॥

एतेन प्रियं सत्यं च मिलितं द्वयं वक्तव्यमित्युक्तं भवति।

हारीतः—

अनृतमधिकृत्य, चतुर्विधं भवति, पणितानृतं, प्रत्ययानृतं, सुकृतानृतं, साधारणमिति, विक्रेतुरसद्गुणकीर्त्तनं, क्रेतुर्गुणापह्नवः, दोषकीर्त्तनं च पणितानृतं, एतच्च कितववृत्तिरूपं निषिद्धं। प्रत्ययानृतं त्रिविधं, उपादाने परस्मै दापने चाभिमिथ्यावचनं। तद्धि प्रलम्भानृतं।

साक्षिणः कूटसाक्षिके लब्धाख्या मिथ्यावादित्वे साक्षित्वापलापे यदनृतं। यो द्वयोरर्थिप्रत्यर्थिनोर्जयपराजयनिर्णयकर्त्ता मैत्रात्-द्वेषाल्लोभाद्वा पक्षपातेन मिथ्या वदति तद्व्यवहारानृतं, एवं त्रिविधं, प्रत्ययानृतं, एतस्मिंश्चतुर्विधप्रत्ययानृते द्रव्यविशेषे पापविशेषः।

यमः,—

"पञ्च पश्वनृते हन्ति दश हन्ति गवानृते।
शतमश्वानृते हन्ति सहस्रं पुरुषानृते ॥
हन्ति तानसंख्यातान् हिरण्यार्थेऽनृतं वदन्।
सर्वं भूम्यनृतं हन्ति मास्म भूम्यनृतं वदेत् ॥
अप्सु भूमिवदित्याहुः स्त्रीणां भोगे च मैथुने।
पश्वद्वत् क्षौद्रघृतयोर्यच्चापि तासु सम्भवं ॥

गोवधस्तेषु सर्वेषु शयनेष्वासनेषु च ।
अश्ववत् सर्वपापेषु खरोष्ट्राश्वतरीषु च" ॥

अयमर्थः, [1]पश्वलोभेनानृतं वदन्, पञ्चसंख्यकान् स्वबन्धून्निहन्ति नरके पातयति, गोऽर्थे ऽनृते दश, एवमन्येषु ।

पुनर्हारीतः,—

"[2]विस्रब्धं त्रियुगं हन्ति पञ्च मिथ्यावसायतः ।
चपात् सप्तगुणं हन्ति त्वनृतं व्यवहारतः" ॥

विस्रम्भसंज्ञके [3]ऋणानृते [4]त्रियुग्म जन्मत्रयं [5]नरके पातयति । मिथ्यावसायतः साक्षादनृते पञ्चगुणं पञ्चजन्मपर्य्यन्तं नरकपातः । व्यवहारो जयपराजयानृते सप्तजन्मनरकपात इत्यर्थः ।

पुनर्हारीतः,—

दानानृतमिज्यानृतं तपोऽनृतमिति त्रिविधं सुकृतानृतं । दत्वा द्रव्यमदत्तमिति मिथ्यावचनं दानानृतं । यो यक्ष्यतीत्युक्त्वा न यजते महान्तं । क्रतुं कर्त्तुमुद्यतः स्वल्पं करोति तदिज्यानृतं । तत्र त्रेधा भवति प्रायश्चित्तं । यस्तु उपक्रम्यायथार्थं तप्यति तत्तपोऽनृतं ।

तत्र चान्द्रायणं ।

"तत्र दानानृते देयद्रव्यविशेषेण दोषः ।

(१) पशुलाभे ।
(२) विस्रम्भात् त्रियुगं ।
(३) ऋणग्रहणान्ते ।
(४) त्रियुगं ।
(५) नरकपातः ।

अश्वानृते जन्म हन्ति द्वे तु वासोऽनृते तथा ।
चीणिरत्नानृते हन्ति चतुरं काञ्चनानृते ॥
पञ्च पश्वनृते हन्ति दश हन्ति गवानृते ।
शतमश्वानृते हन्ति सहस्रं पुरुषानृते ॥
एतत्तु द्विगुणं हन्ति कृत्वा भूम्यनृतं नरः ।
ततस्तु द्विगुणं भूयो[१] भुवं दत्वा छिनत्ति यः" ॥

हारीतः,—

साधारणं नाम गोब्राह्मणहितं, आपत्कल्पः, स्वैराभिधानं इति त्रिविधं, तच्च त्रिविधमपि न दोषाय ।

एवं श्वाह स एव,—

"न नर्मयुक्तं वचनं हिनस्ति न स्वैरवाक्यं च न मैथुनार्थं ।
प्राणात्यये सर्वधनापहारे पञ्चानृतान्याहुरपातकानि" ॥

देवलः,—

"[२]विवाहे ब्रह्म-हामार्थं प्राणिनां जीविताय वा ।
आत्मनः प्राणहेतोर्वा न स्याद्देवानृतं वदन्" ॥

विहारे मैथुने ब्रह्महामार्थं, ब्रह्मार्थं ब्राह्मणनिमित्तं, हामार्थं गोस्त्र्यां ।

गौतमः,—

"सप्त पुरुषान् दहति मनसापि गुरोरनृतं वदन्नल्पतेऽन्येष्वर्थेषु,"
अनृतं द्विविधं, असत्यं विसम्वादश्च । दृष्टश्रुतकृतानामन्यथावचनमसत्यं । प्रागल्भ्यापगतानां असंप्रवर्त्तनं विसम्वादः, इति ।

(१) अभयं । (२) विहारे ।

तथा,—

"परप्राणोपघातार्थं परद्रव्यापहारतः ।
विशिष्टोऽनृतवादस्तु न वृथाकथनादिषु" ॥

अत्र विशेषमाह मनुः,—

"[१]वर्णानां हि वधो यत्र तत्र साक्ष्यनृतं वदेत्" ।

यत्र साक्षिणः [२]सत्यवदनेन द्विजानां वधः शंक्यते । तत्र साक्षी मिथ्या ब्रूयात् । इदं च न्यायमूलं, [३]सत्यवदनस्य मरणानुकूलव्यापाररूपत्वेन हिंसात्वात्, तस्यां च [४]दोषभूयस्त्वात्, साक्ष्यनृते दोषाल्पत्वादेव कर्त्तव्यं । [५]न साक्ष्यवदनस्य विधेयत्वेन निषेधाविषयत्वं, मिथ्या हि निषिध्यते सत्यं त्वर्थप्राप्त्यर्थं न विधेयम् ।

सत्य[६]वदनस्य प्रियरूपस्य च स्नातकव्रतत्वेन विधेयत्वं नाप्रियस्य, तेन ब्राह्मणादिवधानुकूलसाक्षिसत्यवाक्यस्य निषिद्धत्वात्, न [७]सत्यानृतवदनस्य निषिद्धत्वेऽपि दोषान[८]ल्पत्वात् कर्त्तव्यत्वं, तथा च प्रायश्चित्तं सारस्वतीष्टिः स्मर्य्यते, एवं साक्षिव्यतिरेकेणापि वर्णवधानुकूलसत्यवचनं निषिद्धं । "पञ्चानृतान्याहुरपातकानीति" वचनं, तत्र प्रतिप्रसवादेव निषेधाभावात् पातकाभावः, तथा च, तत्र प्रायश्चित्तं स्मर्य्यते, स्वल्पमिति, उत्कर्षार्थवचोऽनृतं महापातकसमत्वेन गणनादित्यतिगर्हितं वर्जनीयं ।

(१) वर्णिनां । (२) सत्यकथने ।
(३) सत्यमूलस्य । (४) दोषभयत्वात् ।
(५) नयसाक्ष्यसत्यवचनस्य । (६) सत्यवचनस्य ।
(७) तत्र । (८) दोषाल्पत्वात् ।

मनुः,—

"भद्रं भद्रमिति ब्रूयाद्भद्रमित्येव वा वदेत्"।

प्रथमभद्रपदं अभद्रवस्तुपरं, अभद्रं वस्तु भद्रमित्येवं ब्रूयात् नत्वभद्रमिति, पुण्यं प्रशस्तमिति ब्रूयात् इत्यापस्तम्बवचना-द्भद्रपदं पुण्यप्रशस्तादिपदोपलक्षणं, भद्रमित्येवेत्यनेन पश्चान्तरं पुण्यप्रशस्तादिपदं न वाच्यं भद्रमित्येव वाच्यमित्यन्वयः, आपस्तम्बः,— "अधेनुं धेनुं भद्रमित्येव ब्रूयात्"। धेनुभव्याशब्दो धेनुभविष्यत्यर्थे, धेनुभवायामुपगमः। पारस्करः, "गर्भिणीं विजयेति ब्रूयात्, सकुल-मिति न कुलं, कपालमिति कपालं, मणिधेनुरितीन्द्रधेनुः"।

महाभारते,—

"पुष्पाणां शोभनं पुष्पं वृक्षाणामुद्भुता हविः।
बहुकारं च वासानां वाह्ये वाह्यां तथा गवां॥
सम्पन्नं भोजनं ब्रूयात् पानीये तर्पणं तथा।
सुशृतं पायसे ब्रूयादवाच्यं कृशरे तथा॥
श्मश्रुकर्मणि संप्राप्ते क्षुते स्नाते तु भोजने।
व्याधितानां च सर्वेषामायुष्यमभिनन्दितं"॥

पण्यद्रव्ये शोभनं पण्यमिति वाच्यं।

बहुवारं बहुशब्दं गवां मध्ये वाच्यं दातुमिति ब्रूयात्। भोजने-भोज्येऽन्नादौ पानीये पेयद्रव्ये दुग्धादौ। आयुष्यमभिनन्दितं ब्रूयादित्यर्थः।

यमः,—

"जीवेति क्षुवतो ब्रूयाज्जीवेत्युक्तः महेति च"।

क्षुवतः क्षुतं कुर्वतो जीवेति वक्तव्यं। क्षुत्कर्त्ता च तथा सहेति वदेत्। इति वाक्यानि। गच्छन् यदि सभां पश्यति तदा सभां पश्यन्निमं मन्त्रं पठित्वा सभामभ्येति, "सभा चिरमिनामा त्वं ऋषिर्नामासि तस्यै तेनः"। सभाप्रवेशे मन्त्रः। सभावभाष-मिति शेभे प्रजापते दुहितरौ सचेतसौषोनविषादुपसास तिष्ठेत् सचेतनो भवति संसवो वाजन इति. प्रविश्य।

जपः,— अभिभूहेमागमविराट् प्रतिवासाः कविपादुपसास तिष्ठेत् सचेतनो भवति, संसवो जनः। सपर्वं सभापतिं वुद्धिं मन्येते, दाम्यक्रोधशान्त्यै अभिमन्त्रणं, जात एषारभ्यातनुर्मन्त्रेः क्रोधस्य नाशिनौः।

"तां देवौं ब्रह्मचारिणो विनयन्तु सुमेधसः।
द्यौरहं पृथिवी चाहं तौ ते क्रोधं नयामसि"॥

गर्भसम्पत्त्यां सह सहसा वा पाठसहयज्ञः।

यदि मन्येत सभापतिर्मम द्रोह करिष्यतीति तमभिमन्त्रयेत्। गते नामोवास्या आदते हृदयमादधते यत्र निहिता वाधकतां ततस्ततश्चादटे यदहं ब्रवीमि तत् समिधरौ। एतदेव सभापति वशीकरणमन्त्रः। सर्वदा गमनकाले मार्गाभिमन्त्रणं।

नमो रुद्राय पथि[१]सदे स्वस्तिमांसं पारय, एवं नमो रुद्राय चतुष्पथसदे स्वस्तिमांम पारयेति चतुष्पथा[२]भिमन्त्रणं, नमो रुद्राय(प्सु)सदे स्वस्तिमांसं पारय, नौकारोहणे मन्त्रः। सुनावमारु-

(१) पदे (२) चतुष्पदाभिमन्त्रणं।

रेयमिति उत्तरेण मन्त्रः। सूचामा त्वं[1] काननं प्रवेष्टुं काननाभिमन्त्रणं, नमो रुद्राय वनसदे स्वस्तिमांस पारयेति, पर्वतारोहणे मन्त्रः। नमो रुद्राय गिरिसदे स्वस्तिमांस पारयेति। श्मशानाक्रमणे मन्त्रः। नमो रुद्राय [2] श्मशानसदे स्वस्तिमांस पारय, गोष्ठप्रवेशे, नमो रुद्राय सक्तृपिण्डसदे स्वस्तिमांस पारय, वस्त्रवात[3] वाताहतोवस्त्रमभिमन्त्रयते. शिवा वामिन वस्त्रोऽसि नमस्तेऽस्तु मा मा हिंसीः, गर्जितमेघमभिमन्त्रयते, शिवा नो वर्षाः सन्तु शिवा नः सन्तु विद्युतः, शिवा नस्त्वामन्तु यास्त्वं [4]हनसि वृत्रहन्, शब्दं कुर्वाणां शृगालीमभिमन्त्रयते. शिवा नो नामासि स्वधितिस्तेतिज्ञानः नमस्तेऽस्तु मा मा हिंसीः। शब्दायमानं पक्षिणमभिमन्त्रयते।

"हिरण्यवर्ण! शकुने देवानां प्रहित शिव!।
यमदूत! नमस्तेऽस्तु किलाकार्करिकोऽब्रवीत्" ॥

लक्षण्यस्य [5] वृक्षस्याभिमन्त्रणं। मा त्वाशनिर्मापरशुर्मादण्डो राजप्रेषितः।

"अङ्कुरास्ते प्ररोहन्तु निवाते त्वाभिवर्षतु।
अग्निष्टिस्सन्न मा हिंसीत् स्वस्ति तेऽस्तु वनस्पते" ॥

स्वस्ति मेऽस्तु वनस्पते" स यदि किंचिद्[6]नवाहि लभते तत् प्रतिग्रहे मन्त्रः। द्यौस्त्वाददातु पृथिवी ददातु प्रतिगृह्णा

(१) सूत्रामाणं। (२) पितृसदे।
(३) वस्त्रप्रान्तवाताहतो (४) हनसि।
(५) देवस्य। (६) द्रोभूनिमादिन न लभते।

मौति। ओदनप्रतिग्रहे एतन्मन्त्र[१]पाठानन्तरं वक्ष्यमाणमन्त्राभ्यां प्राशनं, ब्रह्म प्राश्नात्विति प्रथमं, ब्रह्मत्वाप्राश्नात्विति द्वितीयं, अन्न-प्रतिग्रहे प्रतिग्रहानन्तरं प्राशनं, ब्रह्म प्राश्नात्विति प्रथमं, ब्रह्म त्वाप्राश्नात्विति द्वितीयं, ब्रह्म त्वापि बत्विति तृतीयं। इतिवाच्यं,

अथावाच्यानि, मनुः—

"अवाच्यो दीक्षितो नाम्ना यवीयानपि यो भवेत्"।

एतच्चाग्निषोमीयपर्यन्तं तदुक्तं कात्यायनः, नामग्रहण-भोजने स्नातः कुर्वीतेति।

"शुष्कं वैरं विवादं च न कुर्य्यात्केनचित् सह"।

वशिष्ठः,— "[२]न मित्रभाषणमिच्छेत"।

मनुः,—

"ऋत्विक्पुरोहिताचार्य्यैः मातुलातिथिसंश्रितैः।
वृद्धबालातुरैर्वैद्यैर्ज्ञातिसम्बन्धिबान्धवैः॥
मातापितृभ्यां नारीभिर्भ्रात्रा पुत्रेण भार्य्यया।
दुहित्रा वा सवर्गेण विवादं न समाचरेत्॥
तस्मादेतैरधिक्षिप्तः स हेता संज्वरः सदा"।

देवीपुराणे,—

"न कुर्य्याज्जनसंवादं न वैरैर्न च वत्सलैः।
नृपबन्धुगुरुमानभिषक्ज्योतिःपुरोहितैः।
त्रिरोधेन महद्दुःखं प्रीत्या सुखमवाप्नुयात्"॥

---

(१) प्राशना।   (२) म्लेच्छभाषयां शिक्षेत

वर्ज्यान्याह्, नृपश्च, ज्योतिः [१]ज्योतिष्कः, विष्णुपुराणे,— नारभेत कलिं प्राज्ञः, प्राग्दोषानुबन्धी, देवलः, परुषवचनं, अपवादः, पैशून्यं, अनृतं, वृथालापः, निष्ठुरं, इति वाक्प्रधाष्टं, कुलविद्या-चारदोषकथनात्मकं तत्कालक्रोधसन्तापजनकं वचः परुषं, परुष-वचनानामेव परोक्षे भाषणमपवादः, गुरुनृपतिबन्धुभृत्यादि कार्य्य-नाशार्थं गुप्त[२] पैशुन्यं, अनृतं प्रसिद्धं। देशराज्यपराश्रितग्राम-क्रीडादिविषयं निष्प्रयोजनभाषणं, वृथालापः, गुह्याचार[४]-मैथुनसम्बन्धकीर्त्तनं, अमेध्यनामग्रहणं, अमाङ्गल्यशब्दोच्चारणं निष्ठुरं।

विष्णुः,— "न कस्यचिन्मर्मणि स्पृशेत्"।

गोप्यशब्दकीर्त्तनं मर्मशब्दः।

हारीतः,—

"न वेदगुरुब्राह्मणगोपरिवादं कुर्य्यात्"।

आपस्तम्बः,—

"गोदक्षिणानां कुमार्य्याः परिवादांश्च वर्जयेत्"

गोरदक्षिणार्थेऽपि, दक्षिणानां वस्त्रहिरण्यादीनां आप इत्य-धिकृत्य।

वायुपुराणे,— "नचैताः परिचक्षीत।

न परिवदेत् तथा नचायुः परिवदेत्"॥

(१) ज्योतिर्विकः। (२) जनपादं तु।
(३) गुप्तदोषकथनं। (४) गुह्याङ्गमैथुन

तथा,—

तावत्कालं दीक्षितो [१]भुवस्तनं परिवदेत्। तथा।

योगं परिवदेद्यस्तु ध्यानिनं मोक्षकामिनं।

"स गच्छेन्नरकं घोरं श्रोतारश्च न संशयः"।

महाभारते,—

"सदा नारायणं देवं सर्वपापहरं [२]शुभं।

निन्द्यमानो नरः शीघ्रं नरकं प्रतिपद्यते"॥

वराहपुराणे,—

"विष्णुरुद्रान्तरं ब्रूया, लक्ष्मीगौर्य्यान्तरं तथा।

मर्त्यानां नास्तिकानां च काव्यं शास्त्रं विगर्हितं"॥

अन्तरं भेदं, काव्यं कविकल्पितं न प्रमाणं।

यमपैठीनसी,—

"न निन्द्या ब्राह्मणा गावः काञ्चनं सलिलं स्त्रियः।

पृथिवी च षडेतानि यो निन्दति स निन्दितः"॥

यमः,—

"यस्तु निन्द्यात् परं जीवन् प्रशंसत्यात्मनो गुणान्।

स वै वार्द्धुषिको नाम ब्रह्मवादिषु गर्हितं"॥

वराहपुराणे,— अधिकं, पूर्वभुक्तस्त्रीनिन्दनं च निषिद्धं।

गौतमः,— न म्लेच्छाशुच्यधार्म्मिकैः सह संभाषेत, संभाष्य [३]पुण्यकृतो मनसा ध्यायेत्, ब्राह्मणेन सह संभाषेत।

(१) रुद्र। (२) प्रभुं।
(३) गुणकृतो

पैठीनसिः— "मत्तोन्मत्तप्रमत्तैः सह न संभाषेत, परस्त्रियं रहसि न संभाषेत" ।

शांख्यायनगृह्ये,— "सूतकुदकीभ्यां न संवदेत्" ।

मनुः,—

"नापृष्टं कस्यचिद्ब्रूयान्नचान्यायेन पृच्छतः" ।

देवलः,—

"न नदीषु नदीं ब्रूयात् पर्वतेन च पर्वतं ।
नान्यं प्रशंसेत्तत्रस्थस्तीर्थेष्वायतनेषु च" ॥

मनुः,—

"पाषण्डिनो विकर्मस्थान् वैडालव्रतिकान् शठान् ।
हैतुकान् वकवृत्तींश्च वाङ्मात्रेणापि नार्च्चयेत्" ॥

आपस्तम्बः,—

"न सौम्ये सपत्न इति ब्रूयात्," पुनरापस्तम्बः,— "'वर्जयेद्गुरोः स्तुतिं समक्षं, सुस्नातमिति च, आत्मप्रशंसां विवर्जयेदित्यर्थः" ।

मनुः,— "न विगृह्य कथां (१)कुर्य्यात्" । विगृह्य आक्षिप्य । पुनरापस्तम्बः,— वाक्येन वाक्यप्रतिघातमाचार्य्यस्य वर्जयेत् । विद्यया विद्यानां प्रतिघातं वर्ज्जयेत्" ।

शांख्यायनगृह्ये,— "न समेत्याक्रोशनोपिशुनोकुलं कुले चेतिहेतिहः स्यात् :" आक्रोशनो आक्रोशनवार्त्ता कुलं कुलः, तृषाटवाद् टहगमनशीलः । इति हेतिहः पुराणकिकथनपरश्च न स्यात् ।

(१) ब्रूयात्

महाभारते,—

"महात्मनां हि गुह्यानि न वक्तव्यानि कर्हिचित्।
लंकारं नामधेयं च ज्येष्ठानां परिवर्जयेत्॥
अधराणां समानानां उभयेषां न दुष्यति"।

देवलः,—

"चक्षुष्मानिति कुब्जाचं चाण्डालं ब्राह्मणेति च।
जुगुप्सा निन्दनं द्वेषात् पद्यचितं विधिष्यते॥
वृषलं वृषलेत्युक्त्वा पतितं पतितेति च।
सत्येनापि सदोषः स्यान्मिथ्या द्विगुण[१]वान् भवेत्"॥

यमः,—

"प्रत्यक्षं वा परोक्षं वा पतितं यदि पश्यति।
प्रत्यादिष्टो न कर्त्तव्यो रक्षेदात्मानमात्मना॥
यानि मिथ्याभिशस्तानां गच्छन्त्यश्रूणि रोदनात्।
पतिपुत्रान् पशून् हन्ति तेषां मिथ्याभिशंसिनां"॥

ब्रह्माण्डे,—

"मास्मै देहीति चैवं यः प्रब्रवीति दुरात्मवान्।
अपि जातिशतं गत्वा न विमुच्येत किल्बिषात्"॥

शङ्खलिखितौ, "देवेन्द्रधनुश्चन्द्रसूर्य्यपरिवेशोल्काः परस्मै न कथयेत्, नात्मनः प्रतिकूलं महाजनविरोधं कुर्य्यात्। गोष्ठीभिः संवध्येत, महाजना वेदार्थज्ञास्तैर्विरोधः, गोष्ठी वृथाकथाः"।

(१) भाग

पैठीनसिः,—

"सुहृन्मरणमार्त्तिं वा न स्वयं श्रावयेत्परान्"।

यमः,—

"तिथिं पक्षस्य न ब्रूयात् नक्षत्राणि न निर्दिशेत्"।

अत्र द्वितीया, अत्र श्रवणेत्येवं न काम[१]येत्। शङ्खलिखितौ,—नगच्छेदागारे चरन्तीं गां धयन्तीं[२] न चक्षीतान्यस्मै, न वाद्यानवाद्य[३]तामिति ब्रूयात्, अवाद्यं[४] मदि।

हारीते विशेषः,—

"परस्वत्वावतीर्णां नाचक्षीत, पिबन्तं च परवत्सं"।

तथा, आपस्तम्बः,—

"वर्जयेद्दैवताभिधानं चाप्रयतः वर्जयेच्च सुवर्णेषु सूचनं।

परिभोगं यथोक्तेषु मत्सरः पुत्रशिष्ययोः"

सूचनं पैशून्य, परिभोगं पराभवं कृत्वा धनग्रहणं।

वशिष्ठः,—

न म्लेच्छभाषां शिक्षेत, अष्टादशनरकहेतुकर्माधिकारे।

हारीतः,—

"पादव्यमनृतं वादश्रुतिविक्रयश्चेति वागन्तानि"।

एवं विस्पष्टम[५]धीयात्, न शूद्रजनसन्निधावध्ययनं अनध्यायाध्ययनं च मनूक्तं वर्ज्यं, इत्यवाच्यानि, समाप्तं वाचिकं पातकप्रतं॥

(१) श्रापयेत्। (२) पायन्तीं।
(३) न वाह्ययाने वाह्यतामिति ब्रूयात्। (४) अवाह्यं नगादि
(५) मभिधेयात्।

अथ पाणिजं, नरसिंहपुराणे,—

"नरसिंहगृहे नित्यं यः सम्मार्ज्जनमाचरेत्।
सर्वपापविनिर्मुक्तो विष्णुलोके महीयते"॥

वराहपुराणे,—

"यावत्कानि प्रहाराणि भूमिसंमार्ज्जने ददुः।
तावद्वर्षसहस्राणि विष्णुलोके महीयते"॥ इत्यादि।

तथोपलेपने,—

तत्रैव,—

"गोमयं गृह्य वै भूमिं मम वेश्मोपलेपयेत्।
यावन्ति तु पदान्यत्र समन्तादुपलेपनात्॥
तावद्वर्षसहस्राणि सद्भक्तो जायते तथा।
यदि द्वादशवर्षाणि लिप्यते मम वेश्मनि॥
जायते विष्णु(१)जे वंशे धनधान्यसमाकुले"। इत्यादि।

तथा,

"स्थानोपलेपने कार्य्ये सलिलं यो ददाति मे।
यावन्ति जलविन्दूनि लिप्यमानस्य सुन्दरि!।
तावद्वर्षसहस्राणि विष्णुलोके महीयते"॥

विष्णु(२)पुराणे,—

"अभ्युक्षणं च यः कुर्य्यात् पानीयेन सुरालये।
स शान्तपापो भवति— नात्र कार्य्या विचारणा"॥

(१) विपुले वंशे। (२) विष्णुधर्म्मोत्तरे।

स्कन्दपुराणे,—

"अगम्यागमने पापमभक्ष्यस्य च भक्षणे।
सर्वं तत्क्षयमाप्नोति मण्डयित्वा हरेर्गृहं" ॥

तथा,—

"मा(१)र्ज्जणं वर्त्तिकोपेतं स्वस्तिकैश्च विभूषितं।
देवदेवस्य कुरुते(२) जयते भुवनत्रयं" ॥

नरसिंहपुराणे,—

"निर्माल्यमप(३)हृत्याथ तोयेन स्नाप्य केशवं।
नरसिंहाकृतिं राजन् सर्वपापैः प्रमुच्यते" ॥

तथा,—

"यवगोधूमजैश्चूर्णैरुद्वर्त्त्योष्णेन वारिणा।
प्रक्षाल्य देवदेवेशं वारुणं लोकमश्नुते" ॥

भविष्यपुराणे,—

"यावन्तः पांशुकणिका मार्जन्ते भास्करालये।
दिनानि दिवि तावन्ति तिष्ठत्यमलमना नरः" ॥

तथा,—

"शिवमाल्यापनयनं पूजान्ते तत्र मार्जयेत्।
एकैकं तत्र तुल्यं स्याच्चान्द्रायणफलेन तु" ॥

एवमन्येषामपि देवानां स्नानमार्जनादीनि तत्तच्छास्त्रोक्तानि।

(१) प्राङ्गणं वर्णकोपेतं (२) क्रीडते भुवनत्रये।
(३) मपनीय।

मनुः,—

"धारयेद्वैणवीं यष्टिं सोदकं च कमण्डलुं" ।

तथा,—

सुवर्णरजतमुद्रिकाधारणं पूर्वमुक्तं, दर्भवटुकधारणं च ।

मनुः,—

"न कुर्वीत वृथाचेष्टां नवार्यञ्जलिना पिबेत्" ।

तथा,—

"न मृल्लोष्टं च मृद्नीयान्न च्छिन्द्यात् करजैस्तृणं" ।

तथा स्वयं नोपानहौ हरेत् हस्तेनेति शेषः ॥

तथा,— न पाणिस्थं भुञ्जीत ।

तथा,—

"न संहताभ्यां पाणिभ्यां कण्डूयेदात्मनः शिरः ।
न स्पृशेच्चैतदुच्छिष्टो न च स्नायाद्विनाततः ॥
केशग्रहान् प्रहारांश्च शिरस्येतान् विवर्जयेत् ।
न राज्ञः प्रतिगृह्णीयादराजन्यप्रसूतितः ॥
न स्पृशेत् पाणिनोच्छिष्टो-विप्रगोब्राह्मणानलान् ।
स्पृशेत तान् शुचिर्नित्यमद्भिः प्राणानुपस्पृशेत् ॥
गात्राणि चैव सर्वाणि नाभिं पाणितलेन तु" ।

कण्डूयेदात्मनः शिरः ।

"अनातुरः स्वानिखानि न स्पृशेदनिमित्ततः ।
रोमाणि च रहस्यानि सर्वाण्येव विवर्जयेत्" ॥

न पाणिपादचपलः

देवीपुराणे,—

"नेत्राञ्जनं निषेवेत्तु दन्तधावनपूर्वकं"।

विष्णुपुराणे,—

"न कुर्य्यात् वस्त्रसंघर्षं न गृह्णीयाच्च नासिकां"।

महाभारते नष्टाधिकारे,—

"ब्राह्मणैः कारयिष्यन्ति वृषलाद्दन्तधावनं"।

नाङ्गनखवादनं कुर्यात्, न पाणिना जलमभिहन्यात्, नेष्टकाभिः फलानि पातयेत्, न फलैः फलानि, तथा छेदन भेदन लेखन विमर्दन विदलनास्फोटनादिनाकस्मात् कुर्यात्। अवस्फोटनं हस्ताद्युत्क्षिप्य विस्फोटनं॥

आपस्तम्बः,— "पृष्ठतस्त्वात्मनः पाणिं न संश्लेषयेत्। गोब्राह्मणस्पर्शनवर्जानुवृत्तौ स एवाह— "हस्तेन[१] ग्रहणात्"।

वृद्धशातातपः,—

"उद्धृत्य वामहस्तेन यत्तोयं पिबति द्विजः।
सुरापानेन तत्तुल्यं मनुराह प्रजापतिः"॥

वशिष्ठः,— "अग्निमापश्च न च युगपद्धारयेत्,। नानाग्नं[२] सन्निवापं वर्जयेत्," सन्निवापः संसर्गः, अयं[३] लौकिकाग्नि विषयः, वैदिकाग्नौ तु संसर्गविशेषात् प्रायश्चित्त विशेषः।

पैठीनसिः,—

"प्राणिनो हिंसितव्याश्च क्लिष्टपातं तु वर्जयेत् क्लिष्टपातं वक्रक्रमपूर्वकं।

(१) हस्तेन वाकारणात्। (२) नानाग्निनां। (३) च।

"नावपुरे हया[१]प्रस्नं गोकुलस्त्रीकुमारके ।
पुण्यस्नानोदकस्थाने मा[२]त्रावाहयेन तु ॥
भिजनिधि[३]प्राप्तौ तथैव पुनरर्पयेत् । परस्परे पशून् वोत्थान-
दर्भचणोवाच योजयेत् ॥

"नरवाधां न कुर्वीत जलवातायनादिभिः ।
सायं प्रातर्गृहद्वारं भिक्षार्थं नावघट्टयेत्" ॥

जलायनं प्रणाली, वातायनं गवाक्षं, भिक्षार्थं भिक्षावृत्त्यर्थं,
तथाचमिद्धमग्निं हस्ताभ्यां न स्पृशेत् ।

उशनाः,—

"न वस्त्रेण वीजयेत्, यं कंचिदपि" ।

महाभारते,—

"देवमाल्यापनयनं द्विजोच्छिष्टापमार्जनं
आकल्पपरिचर्या च गात्रसंवाहनानि च ।
अत्रैकैकं नृपश्रेष्ठ! यो गतो व्यतिरिच्यते" ॥

तथा,—

"कपिलायां च दत्तायां यत्फलं ज्येष्ठपुष्करे ।
तत्फलं भरतश्रेष्ठ! विप्राणां पादधावने ॥
द्विजपादोदकक्लिन्ना यावत्तिष्ठति मेदिनी ।
तावत् पुष्करपर्णेन पिबन्ति पितरो जलं" ॥

इति "पाक्षिजानि स्नातकव्रतानि" ॥

---

(१) हयाघ्रास्त्रं गोगुत । (२) सौमानं वाहयेन्नतु ।
(३) निक्षेपो ।

अथ पादक्रमः।

नरसिंहपुराणे,—

"प्रदक्षिणेन चैकेन देवदेवस्य मन्दिरे।

पृथ्वीप्रदक्षिणफलं प्राप्य पश्चाद्धरिं व्रजेत्"॥

वराहपुराणे,—

"यस्तु प्रदक्षिणं कुर्य्यात् साष्टाङ्गं च प्रणामकं।

दशाश्वमेधस्य फलं प्राप्नुयान्नात्र संशयः"॥

भविष्यपुराणे,—

"कृत्वा प्रदक्षिणं भक्त्या शिवस्यायतने नरः।

अश्वमेधसहस्रस्य सुदृष्टस्य फलं लभेत्"॥

सूर्य्यमधिकृत्य तत्रैव,—

"कृत्वा प्रदक्षिणं यस्तु नमस्कारं प्रयोजयेत्।

राजसूयाश्वमेधाभ्यां स परं लभते फलं॥

त्रिःप्रदक्षिणं कृत्वा यो नमस्कुरुते रविं।

भूमौ गतेन शिरसा स याति परमां गतिं"॥

एवमन्यदेवानां प्रदक्षिणं।

स्कन्दपुराणे,—

"प्रदक्षिणं यः कुरुते पठन्नाम सहस्रकं।

तुलसीपार्श्वतो नित्यं यज्ञायुतफलं लभेत्"॥

तथाऽश्वत्थप्रदक्षिणं सर्व्वपापक्षयार्थं। तत्र मन्त्रः,—

"अग्निगर्भ! शमीगर्भ! यज्ञगर्भ! सनातन!।

हिरण्यगर्भ! श्रीगर्भ! वेदगर्भ! नमोऽस्तु ते॥

"नोर्द्धं तिर्यग्विदूरं वा निरीक्ष्य पर्यटेद्बुधः।
युगमात्रं [१]महीपृष्ठं नरो गच्छेद्वि[२]लोमयन्" ॥

रथारोहणप्रसङ्गे, सारथिना युक्तो रथ इत्युक्ते[३]सर्वमित्यनेन रथसमीपागमनं। [४]रथान्तरं साम[५]सीति [६]दक्षिणचक्रालम्भः, बृहद्सीत्युत्तरस्य वामदेव्यामसीति ईषादण्डायं, रथोपवेशनस्थानाभिमन्त्रणं, चक्राऽन्यक्षा[७]वरतो रथं स्प्रातुं स्पातमग्निमद्भिः सम्नत्सरं तं, दूरेहेतिरिन्द्रियावाध्वतस्तिस्रो[८]अग्नयः पयः पारयन्तु नमो माणिचलाय, उपविश्य दक्षिणं धूर्यं प्रतोदेन प्रेरयति, देवालयं दृष्ट्वा दूरादवरोहणं, विप्रनिकटेऽवरोहणं, गवां मध्येऽवरोहणं, [९]मुहूर्त्तमात्रस्य जपः, इह रतिरिह मध्यमा मास्त्विह रति. रथभङ्गशङ्कायां जपः, अयं वामश्विना रथो मा दुर्गमाप्नुत्वोमिषत्, तदाभयं न भवति, वनादन्यत्र गमने रथं ध्वजं स्पृष्ट्वा[९] जपः। रथादवरुह्य यवसोदके दीयतामिति भृत्यान् प्रतिप्रैष्यः। हस्त्यारोहणप्रसङ्गे [१०]हस्ती यशसमसि हस्ती वर्चसमसि इन्द्रस्य त्वा वज्रेणाभितिष्ठामि स्वस्ति मासं पारय। अश्वारोहणे मन्त्रः, अश्वयशसमसि: अश्ववर्चसमसि। इन्द्रस्य त्वा वज्रेणाभितिष्ठामि स्वस्तिमासं पारय. निषेधातिक्रमेणाशक्त्या गर्दभारोहणे त्वाष्ट्रोऽसि विष्णुदेवत्यः स्वस्ति-

(१) महीन्तृष्ठं। (२) विलोकयन्।
(३) सविह। (४) रथन्तरं।
(५) मामीति। (६) रथ।
(७) वभितो। (८) पित्राद्यभिमुखे च दूरात्।
(९) स्पृष्ट्वा मन्त्रजपः। (१०) हस्तिपममममसि।

मासं पारय, एवम[1]श्वा श्वोष्ट्रारोहणे मन्त्रः। शूद्रोऽपि शूद्र-जन्मा आग्नेयो वै हिरण्यरेताः, उत्तरेण स्वस्ति मासं पारय, मार्गाभि-मन्त्रणं, नमो रुद्राय पथि[2]षदे स्वस्ति मासं पारय, चतुष्पथ-दर्शनेऽभिमन्त्रणं, नमो रुद्राय चतुष्पथसदे स्वस्ति मासं पारय।

"न दुष्टं यानमारोहेत् कुलच्छायां न संश्रये।
अनेकशून्यामटवीं गच्छेन्नैव शून्यगृहे वसेत्" ॥

मनुः,—

"नाविनीतैर्व्रजेद्धुर्य्यैर्न चक्षुव्याधिपीडितैः।
न भिन्नशृङ्गाक्षिखुरैर्नवालधिविरूपितैः॥
विनीतैस्तु व्रजेद्धुर्य्यैराशुगैर्लक्षणान्वितैः।
[3]न रूपवर्णोपसंपन्नैः प्रतोदे[4]नातुदन्भृशं" ॥

"अविनीतैर्दुष्टैः वालधिविरूपितैश्छिन्ना[5]ङ्गुलैः"।

तथा, "गवां याने च पृष्ठेन सर्वथैव विगर्हितं" एतेन रथ-शकटादिषु गोयानं[6] न निषिद्धं, स्कन्धस्य निषेधात्। अतएव विष्णुः, "गोभिर्नादान्तैः" अदान्तैरशिक्षितैरिति।

स्कन्दपुराणे,—

"प्रदक्षिणं यः कुरुते पठन्नथ सहस्रकं"।

मनुवाक्ये निषेधादशिक्षितानां निषेधः।

(१) एवमश्वाश्वौ। (२) पथिसदे।
(३) वर्णरूपो। (४) नार्त्तदन्।
(५) पुच्छैः। (६) निषिद्धं।

रात्रौ वर्षासु नाध्वगो गच्छेद्धारीतवचनात्।

दिवासु च पक्ष[१]सु नरोत्करग्रामावसथदिवागमने दोषः, तथा, "नातिकल्यं नातिसायं नातिमध्यं दिने स्थिते"।

विष्णुः—

"नैको ध्वानं प्रपद्येत नाधार्मिकैः सार्द्धं न वृषलैर्न द्विषद्भिः।

नासंनिहितपानीयं नातिदूरं न संततं"।

असंनिहितपानीयमिति क्रियाविशेषणं। संततं, निरन्तरं प्रतिदिनमित्यर्थः।

मनुः,— "नाज्ञातेन समं गच्छेत्"।

हारीतः,—

पूर्ववृत्तिवृत्त्यर्थं "नासूर्य्यमध्वानं गच्छेत्, न नियमवेलायां, नानुदको अयज्ञोपवीतः, पूर्ववृत्तिस्तु वृत्तिमाप्तास्वसूर्यं रात्रौ न गच्छेत्। वृत्तिक्षीणस्तु गच्छेदित्यर्थ", नियमवेला नित्यकर्मकालः।

बौधायनः,—

"विना कमण्डलुं नाध्वानं व्रजेत्, न सीमन्तं गृहाद्बहिः। पदमपि गच्छेदिषुमात्रमित्येके, विना कमण्डलुमिति सर्वत्र सम्बन्धः। कमण्डलुग्रहणमुदकोपलक्षणं इषुमात्रादिषु प्रक्षेपमिति देशादधिकः पदमित्यर्थः।

तथा, "न स्त्रिया सह व्रजेत्"।

(१) दिवा च पक्षसु नत्तोत्करग्रामावनसिदिवागमने न दोषः।

देवीपुराणे,—

"नाशक्तायो मलेद्राभौ नोत्पथे न चतुष्पथे"।

यावलः, "बाहुभ्यां न नदीं तरेत्, न महावृक्षमारोहेत्"।

आपस्तम्बः,—

"गर्भभयानारोहणरोहणावरोहणानि वर्जयेत्।

न विनाशं प्रायचिकीं जले मज्जनक्रियां"।

विष्णुः,—

न "प्रवर्षति धावेत्, न नदीं तरेत् देवताभ्यः पितृभ्यश्चोदकमप्रदाय नदीतरणप्रसक्ते तर्पणं कृत्वैव नदीं तरेदित्यर्थः। न चैतन्नदीतर्पणनिमित्तं तर्पणं, तथा सत्येकस्मिन् दिने बहुनदीतरणे बहुतर्पणं स्यात्। किं तु नित्यतर्पणस्यैव निमित्तस्य न कालनियमः। तेन प्रथमनदीतरणकाले कृततर्पणो न नद्यन्तरे कुर्यादित्यर्थः। यद्वा, यदि नदीतरणे तर्पयेदिति तर्पणस्य निमित्तत्वं श्रूयेत, तदा प्रकरणान्तरे प्रयोजनान्यत्वमिति निमित्तमुद्दिश्य विधानात् कर्मभेदः स्यात्, इह च गमनप्रकरणे न नियमोऽविज्ञाय इति तत्तर्पणात् पूर्वं नदीतरणं निषिध्यते, तेन नियमकालेन तर्पणवेलायामित्यनेन नदीतरणप्रसक्तो नाप्नोति तर्पणकालात् पूर्वमिवावगन्तव्यं वचनसामर्थ्यवत, तथा न भिन्नयानेन तरेत्। नौकया भिन्नया।

मनुः,—

"अचक्षुर्विषयं दुर्गं न प्रपद्येत कर्हिचित।

अदृष्टपूर्वमरण्यं न गच्छेद्दुष्टसत्त्वादिशङ्कया"॥

वशिष्ठः,—

"नाग्निं ब्राह्मणं चान्तरेण व्यपेयात्,"

नाग्न्योर्ब्राह्मणयोः, अनुज्ञाप्य वा व्यपेयात्"।

पैठीनसिः,—

"न गोब्राह्मणान्तरे व्यपेयात्"।

यमस्मृतौ,।

"अग्निहत्याधानयोरन्तरा गतिनिषेधः"।

शङ्खलिखितौ,— "दम्पत्योः"।

बौधायनः,—

"पुरद्वारेन्द्रकीलपरिघावन्तरेण नातीयात्।

प्रेङ्खयोरन्तरेण न गच्छेत्, इन्द्रकीलं कीलयष्टिः, परिघमर्गलं, प्रेङ्खा हान्दोलिका।

मनुः,— "न लंघयेद्वत्सतन्त्रीं," वत्सरज्जुः, य संगच्छेन्न-गच्छतः,

"नमस्कर्त्तुं व्रजेत् कामं दिदृक्षुर्यज्ञकर्म वा।

कुलात्-कुलरहस्यार्थे मन्त्रे वानिमित्ततः"॥

कुलात्कुलं, गृहाद्गृहं, रहस्यं गोप्यं, अनिमित्ततः प्रयोजनं विना, अद्वारेण नोपेयात् ग्रामं वा वेश्म वावृतं आवृतमन्यदपि वेश्मारामावद्वारेण न गच्छेत्।

आपस्तम्बः,— न कुसृत्या ग्रामं प्रविशेत्, नमो रुद्राय वास्तोष्पतय इति मान्त्रं जपेत्, अन्यां वा रौद्रीं, कुसृत्या कुमार्गेण"।

शङ्खलिखितौ,— "न वधबन्धनसमयं गच्छेत्, न दावं, न चपौरणां प्रभवः, न महात्मनां, वधबन्धनसमयं, वधबन्धनार्थं मिलितजनसमुदायं, दावो वनाग्निः। चपौरणामुपरिस्थानं कलहाय ग्रामादिकमिति माधवस्वामी। शङ्खलिखितौ,— "न बहि-रूपातपानीयैः पयः पिबेत्"।

मार्कण्डेयपुराणे,—

"एकस्यार्थं प्रयोक्ता ये निःस्वमर्थादिक नरं।

अदत्वा स्वादमश्नन्ति न दृष्टे मेघभोजनाः"॥

विष्णुपुराणे,—

"ततः प्रभृति वै भ्राता भ्रातुरन्वेषणं गतः।

प्रयातो नतति तथा तं न कार्य्यं विजानता"॥

देवलः,—

"आर्वायैर्भोजने चापि न त्यजेत् सहयायिनः।

देवानृषीनृषींश्चैव अनुसप्तपदं व्रजेत्"॥

गौतमः,—

"न प्रावृत्य शिरोऽह्नि पर्य्यटेत्, अप्रावृत्य रात्रौ";

देवलः,— "अग्रउद्धयानवाहनं वहिर्निष्क्रमणं च न कुर्वीत, तथा प्रदीपं— ग्रहमामकमभियायात् त्वरान्वितः"

वशिष्ठः,—

स्थविरकालान्तरस्त्रीचक्रगणः पन्थाः समाचा स परस्मै देयः, सर्वैरेव वध्या उह्यमानायाः, चक्रान् शकटादि, उह्य-मानाया विवाहकाले"।

मार्कण्डेयपुराणे,—

"मूकान्धवधिराणां च मत्तोन्मत्तकस्य च।
पुंश्चल्याः कृतवैरस्य बालस्य पतितस्य च"॥

शङ्खलिखितौ,— "पापरोगीगर्भिणीस्नातकप्रव्रजित-विद्यावित् गुणवृद्धेभ्यः पन्था देयः"। देवलः,— "पन्था देयो गवे राज्ञे द्वंद्वाय"। आपस्तम्बः,— वर्णानां चेतरैः पन्था देयः, याज्ञवल्क्यः,— पन्था देय इत्यनुवृत्तौ नृपस्तेषामाद्यः स्नातकस्तु महीपते"। अत्र गमनसमये शुभाशुभशकुनानि,—

मत्स्यपुराणे,—

"श्वेताः सुमनसः श्रेष्ठाः पूर्णकुम्भस्तथैव च।
जलजानि च पुष्पाणि मांसमत्स्यास्तथैव[1] च॥
गावस्तुरङ्गमा नागा बालवत्स्य[2] एकपशुस्त्वजः।
त्रिदशाः सुहृदो विप्रा ज्वलितोज्ज्वलनस्तथा॥
गणिका च महाराज! दूर्वा चार्द्रं च गोमयं।
रुक्मं रूप्यं तथा वस्त्रं सर्वरत्नानि चाप्यथ॥
औषधानि च सर्वज्ञ। यवाः सिद्धार्थकास्तथा।
नृवाह्य[3]मानं च भद्रपीठं तथैव च॥
शङ्खं चक्रं पताकांश्च मुद्रमायुधमेव च।
राजलिङ्गानि सर्वाणि शवं रुदितवर्जितं॥

(१) पार्थिवः। (२) वन्य-एकपशुस्तथा।
(३) न्वर्द्धमानं यानं च।

घृतं मधु पयश्चैव फलानि विविधानि च।
स्वस्तिकं वर्द्धमानं च नन्द्यावर्त्तं स कौस्तुभं॥
नद्यश्च तत्र विन्यस्ता मङ्गलान्यपराणि च।
अक्षताः श्वेतमुख्याश्च तथा दर्पण एव च॥
अञ्जनं रोचना चैव भृङ्गारो माक्षिकं तथा।
वादित्राणां सुखशब्दो गम्भीरश्च मनोहरः॥
गान्धारः षड्जऋषभौ ये च शस्तास्तथा स्वराः।
मेघः[1] शस्ता घनाः स्निग्धा गजबृंहितनिस्वनः॥
मानुलोमतड़ित् शस्ता शक्रचापस्तथैव च।
अनुलोमा ग्रहाः शस्ता दिक्पतिस्तु विशेषतः॥
आस्तिक्यं श्रद्दधानत्वं तथा पूज्याभिपूजनं"।

तथा,—

"श्रानोत्सुकत्वं मनसः प्रहर्षः शुभस्य लाभो विजयस्य वादः।
माङ्गल्यलब्धश्रवणं च राजन् ज्ञेयानि नित्यं विजयप्रदानि"॥

नृवाह्यमानं यानं पुरुषयुक्तदोलादि, भद्रपीठस्वस्तिक-कौस्तुभाः सुवर्णादिघटितसन्निवेशाः। लोमाः[2] दिक्पतिर्यथा पूर्वस्यां रविः।

स्मृतिः,—

"यः स्मृत्वा तुलसीं गच्छेत् कार्य्यसिद्धिस्तु तस्य वै।

(१) मेघाः
(२) अनुलोमाः एहस्थाः

तथा,—

"प्रयाणे चारुगरुडारूढं पारिजातहरं हरिं।
सत्यया सहितं वन्दे सर्वकामार्थसिद्धये" ॥

अपशकुनानि, विष्णुः,— "मत्तोन्मत्तव्यङ्गान् दृष्ट्वा निवर्त्तेत, वान्तविरक्तमुण्डजटिलवामनांश्च काषायप्रव्रजित[१] मलिनांश्च। तैल-गुड़शुष्कगोमयेन्धनतृणपलालभस्माङ्गारकवन्धांश्च, लवणक्लीवासव-नपुंसककार्पासरज्जुकेशांश्च। क्लीवो निरेतस्कः, आसवः मद्यानकं। नपुंसकस्त्रीपुंसलक्षणरहितः।

मत्स्यपुराणे,—

"औषधानि च युक्तानि धान्यं कृष्णं च या[२]दव!।
इन्धनं च तथाङ्गारं अगुडस्य तथा शुभः ॥
अभ्यक्तं मलिनं मुण्डं[३] तथा नग्नं च मानवं।
मुक्तकेशं ज्वरार्त्तं च काषायाम्बरधारिणं ॥
वसा: पङ्कस्तथा चर्म केशं वपनमेव च।
तथैवोद्धृतसाराणि पिन्याकादीनि यानि च ॥
चाण्डालश्वपचादीनां वधबन्धनपालकाः।
कुञ्जकः पापकर्माणो गर्भिणी स्त्री तथैव च ॥
तुषभस्मकपालास्थिभिन्नभाण्डानि यानि च।
रक्तानि चैव भाण्डानि मृतं साक्रन्दमेव च ॥

---

(१) काषायप्रवर्त्तितमलिनांश्च।
(२) पावकं। (३) कुण्डं।

एवमादीनि चान्यानि न शस्तान्यभिदर्शने ।
न शस्तो वाद्यशब्दश्च भिन्नत्वेन च जर्जरः ॥
एहीति पुरतः शब्दः शस्यते नैव पृष्ठतः ।
गच्छे[१]त्यपश्चाद्धर्मज्ञः पुरस्तात्तद्विगर्हितं ॥
क यासि तिष्ठ मा गच्छ किं ते तत्र गतस्य तु ।
एते शब्दा[२]गता निष्ठास्ते विपत्तिकरा अपि ॥
ध्वजादिषु तथा स्थानं[३] क्रव्यादानां विगर्हितं ।
स्खलनं वाहनं चैव वास्तुभङ्गस्तथैव च ॥
शस्त्रध्वजानां शस्त्राणां पतनं च तथाशुभं ।
वायुः सशर्करो रु[४]क्षः सर्वदिग्भ्यः समुत्थितः ॥
प्रतिलोमस्तथा नीचो विज्ञेयो भयकृद्द्विजः ।
अनुकूलो मृदुस्पर्शः सुखस्पर्शः सुखावहः ॥
रुचारुचस्वरासण्डाः क्रव्यादाश्च विगर्हिताः ।
अप्रशस्तस्तथा ज्ञेयः परिवेशप्रदक्षिणे ॥
दृष्टे निमित्ते प्रथमं माङ्गल्यादिविनाशनं ।
शङ्करं पूजयेद्विद्वान् तथैव मधुसूदनं ॥
द्वितीये तु तथा दृष्टे प्रतापं प्रतिगृह्य ह”।

कृष्णधान्यं तिलमाषादिः क्रव्यादा ग्टध्राः, अत्र च देवतादि-
गमनस्य स्नातकव्रतत्वेन नित्यत्वेऽपि, अशकुनिदर्शनेऽगमनेऽप्यदोषः।

(१) गच्छेति। (२) तथा निष्ठा।
(३) स्थानं। (४) रूक्षः।

शकुनदर्शनत्वगमने दोषः. उभयदर्शनेऽपि गमनमेवा[१]विशकुन-भूयस्त्वे गमने न दोष इति तात्पर्यं ।

अथ तीर्थगमनं, महाभारते,—

"अग्निष्टोमादिभिर्यज्ञैरिष्ट्वाविपुलदक्षिणैः ।
न तत् फलमवाप्नोति तीर्थाभिगमनेन यत्" ॥

तथा,—

"तान्युपोष्य चिरात्राणि तीर्थान्यनभिगम्य च ।
अदत्त्वा काञ्चनं गां च दरिद्रो नाम जायते ॥
यथा शरीरस्योद्देशाः केचिन्मेध्यतमाः स्मृताः ।
तथा पृथिव्या उद्देशाः केचित् पुण्यतमाः स्मृताः ॥
प्रभावादद्भुता भूमेः सलिलस्य च तेजसा ।
परिग्रहान्मुनीनां च तीर्थानां पुण्यता स्मृता" ॥

अत्र तीर्थानां पुण्यप्रदत्वेन श्रवणा[२]च्छिद्रस्य च चेतस्य क्रिया-विशेषप्रवेशमन्तरेण फलजनकत्व-उपदेशवैयर्थ्यात् क्रियाविशेषा-पेक्षाया 'तद्गमन-तन्निवासतत्स्नानतद्दानश्राद्धतपस्यादीनां क्रियाणां फलसाधकत्वं[३]। तथाचाविशेषाद्गमनमपि फलार्थं, न चान्यानर्थक्या-दिति न्यायेनाश्वमेधाश्नानस्येव गमनस्य निवासस्नानादिकमङ्गित्वेन तत्र फलश्रुतिरर्थवादः; तौ[४]र्थोत्पन्नस्य विनापि तीर्थस्नानादि-सम्भवे गमनस्य क्रतुश्नानवत्कर्माङ्ग[५]त्वासिद्धेः ।

(१) विशकुन भूयस्त्वे । (२) श्रवणाभाव ।
(३) फलसाधनत्वं । (४) अर्थोत्पन्नस्य गमनं विनापि ।
(५) कर्म्माङ्गत्वात् सिद्धेः ।

तथा च शङ्खः, -

"तीर्थं प्राप्यानुषङ्गेन स्नानं तीर्थे समाचरे[1]त्।

स्नानजं फलमाप्नोति तीर्थयात्राश्रितं न तु" ॥

इति तीर्थयात्राफलं पृथक् दर्शयति। न च तीर्थयात्राश्रितं तीर्थयात्रापूर्वकं स्नानादिफलमित्येवं परमिति वाच्यं। तीर्थगमनस्य स्नानाद्यङ्गत्वे मानाभावात्,[2] अनैकान्तिकत्वे लिङ्गाभावस्य स्फुटत्वात्, तथा च तावत् फलश्रवणस्य वैयर्थ्यापत्तेः, अत एव लक्ष्मीधरेण स्नानफलं गमनफलं च पृथक् दर्शितं।

महाभारते तीर्थयात्राप्रसङ्गे,—

"यस्य हस्तौ च पादौ च मनश्चैव सुसंयतं।

विद्या तपश्च कीर्त्तिश्च स तीर्थफलमश्नुते" ॥

हस्तसंयमो अदत्तदानादिनिवृत्तिः, पादसंयमो म्लेच्छदेश-गमनादिनिवृत्तिः, मनोविशुद्धिः कुसंकल्पनिवृत्तिः, विद्या तीर्थ-विधिज्ञानं, तपः उपवासादि, कीर्त्तिः, सच्चरितत्वेन प्रसिद्धिः। तेनाभिशस्तस्य तीर्थफलानधिकारः, अभिशस्त अदोषनिवृत्तिः स्यादेव।

"प्रतिग्रहादुपावृत्तिः, सन्तुष्टो येन केनचित्।

अहंकारनिवृत्तस्य स तीर्थफलमश्नुते ॥

अकल्पको निरालम्बो लघ्वाहारो जितेन्द्रियः।

विमुक्तः सर्वसङ्गैर्यः स तीर्थफलमश्नुते ॥

(१) स्नानं समाचरन्।  (२) अत्याद्यभावात्।

अकोपनश्च राजेन्द्र! सत्यवादी दृढव्रतः।
आत्मोपमश्च भूतेषु स तीर्थफलमश्नुते" ॥

एतच्च तीर्थयात्रामुपक्रम्य महाभारते ऽभिधानात् तीर्थयात्राङ्गं।

शङ्खः,—

"यस्य हस्तौ च पादौ च मनश्चैव सुसंयतं।
विद्या तपश्च कीर्त्तिश्च स तीर्थफलमश्नुते ॥"

इदं तीर्थस्नानाद्यङ्गं यात्राश्रवणाभावेऽपि तीर्थफलप्रतिबन्ध-वचनात्।

वायुपुराणे,—

"तीर्थान्यनुसरन्धीरः श्रद्दधानो जितेन्द्रियः।
कृतपापो विशुध्येत किं पुनः शुद्धकर्मकृत् ॥
तीर्थयोनिं[१] न गच्छेच्च कुदेशे नैव जायते।
स्वर्गे भवति वै विप्रो मोक्षोपायं च विन्दति ॥
अश्रद्दधानः पापात्मा नास्तिको च्छिन्नसंशयः।
हेतुनिष्ठश्च पञ्चैते न तीर्थफलभागिनः ॥
कामं क्रोधं च लोभं च यो जित्वा तीर्थमाविशेत्
तेन किंचिन्न वा प्राप्तं तीर्थाभिगमनाद्भवेदिति" ॥

ब्रह्मपुराणे,—

"या या काचित्तीर्थयात्रा मुनीन्द्रैः
कृता प्रयुक्ताप्यनुमोदिता वा।
तां ब्रह्मचारी विधिवत् करोति
सुसंयतो गुरुणा चानुयुक्तः ॥

(१) तीर्थंयोनिं।

सर्वस्वनाशे त्वथवा नृपस्तु च ब्राह्मणानयत एव कृत्वा ।
यज्ञाधिकारेऽप्यथवा निवृत्ते विप्रस्तु तीर्थानि परिभ्रमेत ॥
तीर्थे फलं यज्ञफलं तु यस्मात् प्रोक्तं मुनीन्द्रैरमरप्रभावैः ।
यद्यस्ति यज्ञेऽप्यधिकारिताऽतः तस्य वरं गृहं गृहधर्मास्तु सर्वे ॥
एवं गृहस्थाश्रमसंस्थितस्य तीर्थे गतिः पूर्वतरैर्निषिद्धा ।
सर्वाणि तीर्थान्यपि चाग्निहोत्रतुल्यानि ने[१]वेति वयं वदामः ॥"

अत्र च नैव सर्वाणि तीर्थान्यपि चाग्निहोत्रतुल्यानीति वचना-त्तीर्थफलं तीर्थयात्राफलं च श्रौताग्निमतो निषिद्धमिति प्रतिभाति, तन्नैव ।

"सहाग्निमान् सपत्नीको गच्छेत्तीर्थानि यत्नतः ।
सर्वपापविनिर्मुक्तो यथेष्टं गतिमाप्नुयात्" ॥

इति वचनेन साग्नेरपि तीर्थयात्राफलकल्पनात् ।

किंतु,— "प्रधानं वैदिकं कर्म गुणभूतमथेतरत् ।
गुणनि[२]ष्ठोऽतिप्रमाणं बाधयन् यात्यधोगतिं" ॥

इति साचारादेदोक्तकर्मविरोधस्मृत्युक्तकर्मवर्जनस्य स्नातकव्रतत्वेन गणनात् । दर्शाग्निहोत्रादिकर्मलोपनिमित्तभूतं त्रेताग्निमतस्तस्य तीर्थगमनं निषिध्यते ।

तथा चाहुः,—

"अर्थार्थी प्रवसेद्विद्वान् धर्मार्थी न कदाचन" ।

इति धर्मार्थप्रवासस्य निषेधं स्मरन्ति, तीर्थस्नानादिफलमपि यज्ञादिविरोधि निषिध्यते । अत्राग्निहोत्रसमयेऽग्निहोत्र-

(१) दैवेति । (२) गुणनिष्ठो ।

होममकृत्वा तीर्थस्नानादि[1]कार्य्यमित्याशयः, एवं तत् श्रौत विरोधिरूपेण तीर्थगमनस्नानादेर्निषिद्धत्वात् यात्रानिषेधातिक्रमेण तीर्थस्नानादिकरणे यात्रानिषेधातिक्रमदोषः स्वल्पः। तीर्थ-स्नानादिफलं च भूयः संपद्यत इति [2]तेषां विकल्पनमसत्कल्पन मेव, [3]यथा यात्रावत् स्नानादेरपि श्रौतयज्ञ[4]विरोधिरूपेण निषेधः। न च विहितस्य निषेधासम्भवः, विहितेऽपि कर्मणि कर्त्तृविशेषस्य निषेधात्। यथा विहिते सान्नाय्येनासोमयाजी सन्नयेदित्यत्र [5]सोमयाजीकर्त्तृकनिषेधः। एवमिह तीर्थस्नानादौ यज्ञाधिकारिकर्त्तुर्निषेधः।

तदुक्तं भट्टैः,—

त्रिधैव [6]ज्ञायते कर्त्ता विशेषेण प्रतिक्रियां।
योग्यत्वाप्रतिषिद्धत्वविशेषोपपदान्वयैः॥

न च तीर्थगतिर्निषिद्धेत्युपक्रमात्, यात्राया एव निषेधः। यज्ञाविरोधिमासियात्रानिषेधाभावेन यज्ञविरोधितीर्थगमनत्वेन निषिध्यत्वप्रतीत्या यात्रात्वेन विशिष्य विशेषणे वाक्यभेदात्। स्नानाद्युद्दिश्य यात्राया एवं च [7]तीर्थस्नानादेरपि यज्ञविरोधोऽस्त्येव, तथा च, तीर्थे फलं यज्ञफलं। सर्वाणि तीर्थान्यपि चाग्निहोत्र तुल्यानि [8]नैवेति तीर्थाश्रितकर्ममात्रपरामर्शो दृश्यते।

(१) न कार्य्यं। (२) केषांचित् कल्पनमेव।
(३) यतो। (४) विधि।
(५) असोमयागकर्त्तृनिषेधः। (६) ज्ञायते।
(७) तीर्थयात्रायां च। (८) चैव।

न च परिकल्प्यर्लिङ्गं तथेत्येवं, प्रवासविधाने यज्ञानुष्ठान-विरोधाभावः । अभ्युपस्थानाद्यावेचणागहीनावश्यकत्वात्, न च स्नानादिप्रधानं । प्रमेयबलेन वलीयः, निषेधनाम्यविषयत्वा-दाचमनादौ निषेधाभावेन वैषम्यात् । न च श्रुतिविरोधे स्मृत्यर्थ-बाधकस्य न्यायसिद्धत्वेनास्य विधेयत्वं, न्यायप्राप्तस्यापि स्नातकव्रत-मध्यपाठेन विधानोपपत्तेः, तस्मात् तीर्थस्नानादिफलमुद्दिश्य श्रौताग्निमतः प्रवासे तीर्थयात्राफलं (१) तीर्थस्नानादिफलं न च भवत्यधिकाराभावात् । ब्राह्मणस्य वैश्यस्तोमवत् ।

यदा तु,—

"निक्षिप्याग्निं स्वदारेषु परिकल्प्यर्लिङ्गं तथा ।
प्रवासे कार्य्यवान् विप्रो तथैव न चिरं क्वचित्" ॥

इति छन्दोगपरिशिष्टात्, आपत्सु प्रोषितोऽग्निवेलायां वाग्यतः प्रतिदिनमग्नीन् मनसा ध्यात्वा मन्त्रेणाहुतं ज्ञात्वा प्रतये-दित्यादि हारीतवचनात् ।

"चुत्कौलीहतवर्गस्य परिभूतस्य शत्रुभिः ।
मासद्वयं प्रवासोऽस्तु (२) शरणेनाहिताग्निवत्" ॥

इति प्रामाणिकलिखनाच प्रवास आपत्काले क्रियते तदा दैवात्तीर्थप्राप्तौ तीर्थस्नानादिफलं स्यादेव, प्रवासस्य तीर्थस्नानाद्यर्थत्वेन यज्ञविरोधाभावात्, यज्ञविरोधि (३) देवतीर्थस्नानादावधिकारो

(१) तीर्थयात्रा । (२) पञ्चतो ।
(३) न्यव ।

(१)वैकल्यते, यथा तीर्थ एवोत्पन्नस्य तीर्थवासपरस्य चाहिताग्नेरपि तीर्थस्नानादिफलं यज्ञविरोधाभावादेव।

तथा, मत्स्यपुराणे,— (२)काश्यामधिकृत्य,—

"तत्र चेष्टं हुतं दत्तं तपस्तप्तं कृतं च यत्।
सर्वमक्षयमेवास्मिन्न (३)विमुक्ते न संशयः"॥ इति।

चेत्रे यज्ञादिकर्म दर्शयति, इदं चेताग्निमत्परं, केवलं स्मार्त्ताग्नेस्तु तीर्थयात्रा तत्पूर्वकं स्नानादिकं (४)दाननिषिद्धं, धर्मार्थप्रवासोऽपि तस्यास्त्येव यज्ञाधिकारवत एव तीर्थयात्रादिनिषेधो न च केवलस्मार्त्ताग्नेर्यज्ञाधिकारोऽस्ति, यज्ञपदस्य चेताग्निसाध्ययज्ञपरत्वात्, अन्यथा पञ्चयज्ञाधिकारस्यार्थ(५) यज्ञादिसाधारणेनाव्यापकत्वापत्तेः। अतएव समाचारोऽप्येवं। सदाचारस्मृत्योर्विध्यर्थनिर्णायकत्वेन प्रामाण्यमिति (७)शाङ्करभाष्यप्रदीपे प्रपञ्चितमस्माभिः, अत्र भारते तीर्थयात्रापदेनोपक्रम्य क्षेत्रपुण्यायतनयात्रायामपि कथनात्तीर्थपदं स्मृष्टिन्यायेन पुण्यस्थानोपलक्षणं। तेन पुरुषोत्तमगयाकुरुक्षेत्रादावपि तीर्थयात्राविधिर्ज्ञातव्यः।

ब्रह्मपुराणे,—

"यो यः कश्चित्तीर्थयात्रां तु गच्छेत्, सुसंयतः स च पूर्वं स्वगृहे।
कृतोपवासः शुचिरप्रमत्तः, संपूजयेद्भक्तिनम्रो गणेशं"॥

(१) वैकल्यस्मृतेः। (२) काशी।
(३) वियुक्ते। (४) वा निषिद्धं।
(५) पंचाग्न्यादि। (६) व्यावर्त्तक।
(७) शावर।

देवान् पितॄन् ब्राह्मणांश्चैव साधून्,
धीमान् पितॄन् वित्तशक्त्या प्रयत्नात् ।
प्रत्यागतश्चाथ पुनस्तथास्तु :
देवान् पितॄन् ब्राह्मणान् पूजयेत्तु " ॥

अत्र [१]उक्तफलकामनया तीर्थयात्रां संकल्प्य स्वगृहे कृतोपवासो गणेशं पूजयेत्, ततोऽभीष्टदेवं पूजयित्वा श्राद्धं ब्राह्मणानां पूजनं, पितॄन् वित्तशक्त्येत्यनेन धनवता बहुव्ययेन श्राद्धं कार्य्यमित्युक्तं, प्रत्यागत्य पुनर्देवब्राह्मणं श्राद्धं च, एतावत्तीर्थयात्राङ्गं नित्यं, यस्य तु प्रत्यागमनं नास्ति ततः प्रभृति तीर्थ एव वासः, तस्य प्रत्यागतदेवपूजाद्यभावः ।

यत्तु,—

" विधाय कर्पटीवेशं कृत्वा ग्रामं प्रदक्षिणं ।
ततः प्रतिदिनं गच्छेत् प्रतिग्रहविवर्जितः " ॥

इत्यादि[२]गयाश्राद्धाङ्गं, नान्यत्र तत्प्रसङ्गः, प्रयागाद्यतिरिक्ततीर्थगमने याननिषेधदर्शनात्तीर्थान्तरे यानेन गमनेऽप्यविरोध इति लक्ष्मीधरः ।

" [३]गयायां भास्करक्षेत्रे मातापित्रोर्मृतेऽहनि ।
मुण्डनं चोपवासश्च सर्वतीर्थेष्वयं विधिः ॥
वर्जयित्वा कुरुक्षेत्रं विशालां विरजं तथेति " ।

तत्र उपवासः, मुण्डनं शिखावर्जनकेशवपनात्मकं कर्त्तृसंस्काररूपं । तीर्थस्नानदानश्राद्धादिरूपकर्म्माङ्गं, यत्तु देवलवचनं.

(१) क्रतु । (२) तद्गयायात्राङ्गं । (३) गङ्गायां ।

"तीर्थान्यनुगम्य तदर्थमनभिगम्य व्रतोपवासनियमयुक्तस्त्र्यहमवगाह्य मासक्षीराज्ञमुषित्वा सर्वपापैर्विमुच्यते । स्वस्तिमांश्च भवति तत्तीर्थयात्राप्रकरणामाम्नायपृथगेव फलार्थं ।

यत्तु महाभारते,—

"अनुपोष्य त्रिरात्राणि तीर्थान्यनभिगम्य च ।

अदत्वा कांचनं गां च दरिद्रो नाम जायते" ॥

तदपि त्रिरात्रोपवासतीर्थाभिगमनकाञ्चनगोदानादीनि दारिद्र्याभावफलानीति ज्ञापयति । तीर्थश्राद्धे विशेषः ;—

देवीपुराणे,—

"अकालेऽप्यथवा काले तीर्थे श्राद्धं तथा नरैः ।

प्राप्तैरेव सदा कार्य्यं कर्त्तव्यं पितृतर्पणं ॥

पिण्डदानं च तत् शस्तं पितृणामपि दुर्लभं" ।

तथा,—

तीर्थेषु ब्राह्मणं नैव परीचेत कथंचन ।

सक्तुभिः पिण्डदानं च [१]यावकैः पायसेन वा ॥

कर्त्तव्यमृषिभिर्दृष्टं पिण्याकेन गुडेन च ।

श्राद्धं तत्र प्रकुर्वीत अर्घावाहनवर्जितं ॥

श्वध्वांचगृध्रकाकानां नैव दृष्टिहतं च यत्" ।

एवं तत्तद्दानानां तीर्थविशेषात् फलविशेषः । तपःपूजायज्ञादीनां च तीर्थ एव कृतानां फलविशेषः. तर्पणं च पृथक्

---

(१) संयावैः ।

तीर्थप्राप्तिनिमित्तकं, तन्मेण स्नानाङ्गतर्पणासिद्धेश्च तीर्थप्राप्तिदिने स्नानाङ्गकस्यापि [1]तन्त्रस्नानादिपूर्वकं तीर्थप्राप्तिनिमित्तकं तर्पणमावश्यकं।

एवं तस्मिन् दिनेऽनेकतीर्थप्राप्तौ श्राद्धं [2]तर्पणाङ्गं वर्त्तते।

पैठीनसिः,–

"षोड़शांशं स लभते यः परार्थेन गच्छति।
अर्द्धं तीर्थफलं तस्य यः प्रसङ्गेन गच्छति॥
प्रतिकृतिं कुशमयीं तीर्थवारिणि मज्जयेत्।
मज्जयेत्तु यमुद्दिश्य अष्टभागं [3]लभेत्तु सः"॥

तत्र मन्त्रः।

"कुशोऽसि [4]संप्रवृत्तोऽसि ब्रह्मणा निर्मितः पुरा।
त्वयि स्नाते स च स्नायाद्यस्यार्थे ग्रन्थिबन्धन"॥

इतिशिष्टाः।

शङ्खः,–

"नृणां पापकृतां तीर्थे पापस्य शमनं भवेत्।
यथोक्तफलदं तीर्थं भवेत् शुद्धात्मनां पुनः"॥

अथ पादचापल्यं।

मनुः, – "न पाणिपादचपलः," चापल्य वृथा चेष्टा।

देवलः,– "वह्निं नातिव्रजेत्पदा," गौतमः,– "न पदा स आसनमाकर्षेत्"।

(१) मन्त्र। (२) तर्पणं च।
(३) लभेत सः। (४) संपवित्रोऽसि

शङ्खलिखितौ,— "न पदा भूमिमभिहन्यात्," आपस्तम्बः,— "पदा [1]पादसंचालनमधिष्ठानं च वर्जयेत्, [2]प्रेंखोलनं पादयोः जानुनि [3]"गत्यध्वानं जंघायाः" । [4]प्रेंखोलनमितस्ततश्चालनं, शङ्खलिखितौ,— "न पादं पादेन चालयेत्, न दर्भैः परिमृज्यात्," विष्णुः,— "न पादौ प्रतापयेत्, न कांस्यभाजने पादौ धावयेत्" ।

आपस्तम्बः—

"अग्निमापोब्राह्मणं गां देवताद्वारं प्रतिवातं ।
शक्तिविषयेणाभिमारयेत् पादाविति शेषः" ॥

याज्ञवल्क्यः,—

"गोब्राह्मणानलान्नानि नोच्छिष्टो न पदा स्पृशेत् ।
नाग्निं गां ब्राह्मणांश्चैव पादेनाधितिष्ठेत्" ॥

आपस्तम्बः,

"देवतानां राज्ञश्च ब्राह्मणस्य पादस्पर्शनं वर्ज्जयेत्" ।

आपस्तम्बः,—

"व्यतिक्रामेत्तु [5]अवतीं ज्वलन्तं ज्वलनं तथा,
चन्द्रप्रवाहं न लंघयेदित्यर्थः" ।

तथा,—

"नामेध्यं प्रक्षिपेदग्नौ न च पादौ प्रतापयेत् ।
अधस्तान्नोपदध्याच्च न चैनं पादतः कुर्य्यात्" ॥

(१) पदस्य चालनं । (२) प्रेंखोननं ।
(३) गत्याधीनं । (४) प्रंखोननं । (५) स्रवन्तीं ।

अग्निना प्रयत आसीत्, इषुमात्रादित्येके । न चैन-मुपधमेत् । खट्वायां नोपदध्यात्, इषुमात्रदेशादग्न्युचितोऽग्निसमीपं गच्छेदित्यर्थः ।

पैठीनसिः,— "नापुष्पितं वृक्षमारोहेत्" ।

विष्णुपुराणे,—

"प्रदीप्तं वेश्म न विशन्नारोहेत् शिखरं तरोः" ।

याज्ञवल्क्यः,—

"गोब्राह्मणानलान्नानि नोच्छिष्टोऽपि पदा स्पृशेत्" ।

विष्णुपुराणे,—

उपतिष्ठन्नवव्यालांश्चिरं तिष्ठन्नरोऽस्थितः[1] ।
अतीव जागरस्वापौ तद्वत् [2]मोतामिक्ते बुधः ॥
न सेवेत तथा शय्यां व्यायामं च नरेश्वरः ।
दंष्ट्रिणः शृङ्गिणश्चैव प्राज्ञो दूरेण वर्ज्जयेत् ॥
अवश्यायं च राजेन्द्र! पुरो वातातपौ तथा" ।

देवलः,— "घर्षयेन्नपदं पदा, अग्नौ न प्रक्षिपेदग्निं नाग्निं प्रशमयेत्तथा अस्थानाक्रमणानधिष्ठयानि" ।

मनुः,—

"देवतानां गुरो राज्ञः स्नातकाचार्य्ययोस्तथा ।
नाक्रमेत् कामतश्छायां बभ्रुणो दीक्षितस्य च" ॥

बभ्रुः कपिलः ।

(१) न चोत्थितः (२) स्थानासने

तथा,--

"मध्यंदिनेऽर्द्धरात्रे च श्राद्धं भुक्त्वा च सामिषं।
सन्ध्ययोरुभयोश्चैव न सेवेत चतुष्पथं॥
उद्वर्त्तनमपस्नानं विण्मूत्रे रक्तमेव च।
श्लेष्मनिष्ठुतवातानि नाधितिष्ठेत कामतः॥
वैरिणं नोपसेवेत सहायं चैव वैरिणं।
अधार्मिकं तस्करं च परस्यैव च योषितं"॥

उद्वर्त्तनं कृतमलापकर्षणपिष्टादि, अपस्नानं स्नानोपयुक्तजलं, निष्ठुतमुद्गीर्णं ताम्बूलादि, यमस्मृतौ,-- प्राज्ञः सति कपिलगवां छायां नाक्रमणायेत्यधिकं, प्राज्ञः प्रशस्तबुद्धिः, चचियादिरपि.

याज्ञवल्कीये[१], ऋत्विक् परस्त्रीछायां नाक्रमेदित्युक्तं।

यमः,--

"खकीयां नाक्रमेत् छायां क्लीवेन पतितेन च।
चाण्डालेन द्विषद्भिश्च नित्यं रोगान्वितेन च"॥

शङ्खलिखितौ, "नोद्धत कुहकैः सहैकतस्तिष्ठेत्," उद्धतोऽविनीतः, कुहको वशीकरणादिपरः, विष्णुः,-- "चतुष्पथमधितिष्ठेन्न च रात्रौ वृचमूलं, न शून्यालयं, शूलावन्धनागारं." हारीतः, आवपनापमार्जना च, स्नाने तु स भस्मास्थिकपालकेशसंचयान्नाधितिष्ठेत्, आवपनं द्रव्यस्थानयोग्यं गोष्ठादि, अपमार्जनं मार्जनानन्तरं तत्साधनकुशादि, कपालं खर्परः,

(१) याज्ञवल्क्यः,--।

शङ्खलिखितौ,— नारेः[१] पदमधितिष्ठेत्, न केशकपालभस्मास्थि-तुषसंस्कारकूटेषु तिष्ठेत्, संस्कारो मार्जित[२] धूल्यादिसमूहः. मनुः,— नाधितिष्ठेत् कार्पासास्थिकार्पासबीजं, नाधितिष्ठेदित्यनुवृत्तौ।

मार्कण्डेयपुराणे,— जीर्णानि[३] रज्जुवस्त्रादिकानि च।

विष्णुपुराणे,—

"चतुष्पथचैत्यतरुश्मशानोपवनानि च।

दुष्टस्त्रीसन्निकर्षश्च वर्ज्यानि चैणि सर्वदा"॥

तथा,

"स्नानार्द्रां धरणीं चैव दूरतः परिवर्जयेत्।

श्लेष्मविण्मूत्ररक्तानि सर्वदैव न लंघयेत्"॥

देवीपुराणे,

"शून्यागारे न तिष्ठेत न च पर्वतमस्तके।

न श्मशानेषु देवानां प्रासादेषु कदाचन"॥

प्रासादेऽपि मनुष्यान्तरशून्ये।

तथा,—

"न चैव गोः प्रसूताया विश्वसेत् स्त्रीजनस्य च

न मुखेन धमेदग्निं न च खड्गं विलंघयेत्॥

तथा चैवायुधान् सर्वान् न चोपस्करमार्जनी

न प्रमत्तजनाकीर्णे न च स्त्रीबालसंवृते॥

गृहे वासागमं कुर्यादिन्द्रियाक्रीड़नं च न"।

(१) नाडेः (२) तृणधूल्यादिसमूहः। (३) जीर्णानि।

मार्कण्डेयपुराणे,—

"नोत्कृष्टशय्या[१]शयनो न निकृष्टस्य चारोहेत् ।
नोद्यानादौ विकालेषु प्राज्ञस्तिष्ठेत्कदाचन" ॥

इत्यनाक्रमणीयानधिष्ठेयानि, समाप्तानि पादजानि स्नातकव्रतानि, पायुजानि पुरीषोत्सर्गे व्याख्यातानि, अथोपस्थजानि, तत्र-ऋणापाकरणे प्रजोत्पादनं । बौधायनः, प्रजाकामस्योपदेशाः[२], प्रजननिमित्ता समाख्येत्यश्विनावूचतुः ।

"आयुषा तपसा युक्तः स्वाध्यायेज्यापरायणः ।
प्रजामुत्पादयेद्युक्तः स्वे स्वे वर्णे जितेन्द्रियः" ॥

प्रजननं प्रजोत्पादनं, तन्निमित्ता समाख्या कुलख्यातिः आयुषा आयुष्येण दीर्घसन्ध्योपासनविप्रा[३]शब्दादि— वर्जनादिकर्मणां, तपसा नियमेन पुत्रकामव्रतादिना, अनन्तव्रत-कृष्णाष्टमीव्रत-दूर्वाष्टमीव्रतादिना, स्वाध्यायः पुत्रकामस्य महारुद्रजपादिरूपः, सौभरि मन्त्रसन्तानगोपालमन्त्राभ्यासादिर्वा, इज्या द्वादशाहादिचिराचादि प्रजाकामयागाः, चातुर्मास्यं वैश्वदेवपूर्व[४]रूपं प्रतिकाममाग्नेयं च, एतच्च पुत्रोत्पादनविलम्बो[५] युक्तः, यत्नवान् तेन वैद्यशास्त्रोक्त औषधादियोगोऽपि, हरिवंशश्रवणादिश्च, पुनर्बौधायनः,— विज्ञायते-जायमानो ब्राह्मणस्त्रीभिऋणवान् जायते, ब्रह्मचर्य्येण ऋषिभ्यो यज्ञेन-देवेभ्यः प्रजया पितृभ्य एवमृणसंयोगं वेदो दर्शयति, तथा स पुत्रमुत्पाद्य तारयति ।

(१) सनयोर्न— । (२) उपदेशः । (३) विप्रापवाद— ।
(४) पर्व्व— । (५) विलम्बे युक्तः ।

"सप्तावरान् सप्तपूर्वान् षड़न्यानात्मसप्तमान्"।

विष्णुवशिष्ठौ,—

"ऋणमस्मिन् सन्नयति अमृतत्वं च गच्छति।
पिता पुत्रस्य जातस्य पश्येच्चेज्जीवतो मुखं"॥

पुत्रस्य जातस्य ऋणापाकरणयोग्यस्य इति भर्तृयज्ञः, ऋणं संनयति संक्रामयति. शङ्खलिखितपैठीनसयः,—

"यत्र क्वचन जातेन पिता पुत्रेण निन्दति।
तेन चानृणतां याति पितॄणां पिण्डदेन वै"॥

यत्र क्वचन वीजिक्षेत्रिणोरन्योन्यसमयपूर्वकं पारक्षेत्रेणेति लक्ष्मीधरः।

बृहस्पतिः,—

"पुंनाम्नो नरकाद्यस्मात्पितरं त्रायते सुतः।
मुख[1]संदर्शनेनापि तदुत्पत्तौ यतेत सः"॥

एतत्पुत्रोत्पत्तिमात्रफलं, हारीतः,—

"यस्य पुत्रः शुचिर्दक्षः पूर्वे वयसि धार्मिकः।
नियन्ता चात्मदोषाणां सन्तारयति पूर्वजान्"॥

शङ्खलिखितौ,—

"अग्निहोत्रं त्रयोवेदा यज्ञाश्च बहुदक्षिणाः।
ज्येष्ठपुत्रप्रसूतस्य कलां नार्हन्ति षोड़शीं॥
पुत्रपौत्रप्रतिष्ठस्य बहुपत्यस्य जीवतः।
अस्कन्दन् दैवयज्ञस्य हस्तप्राप्तं त्रिपिष्टपं॥"

(१) मुखसंस्पर्शनेनापि।

ज्येष्ठपुत्रप्रसूतस्य प्रथमं पुत्रजन्मतः, पिण्डोदकक्रियाहेतोः।
मनुशङ्खलिखितविष्णुवशिष्ठहारीताः,—

"पुत्रेण लोकान् जयति पौत्रेणानन्त्यमश्नुते ।
अथ पुत्रस्य पौत्रेण ब्रध्नस्याप्नोति विष्टपं" ॥

शङ्खलिखितौ,—

"सन्तानवर्द्धनं पुत्रमुद्युक्तं पुत्रकर्मणि[१] ।
देवब्राह्मणसंपन्नः देवब्राह्मणपूजकः" ॥

वशिष्ठः,—

"पुत्रिणो लोकानपुत्रस्य लोकोऽस्ति श्रूयते ।
अप्रज[२]महितः सन् शीला राचसाः" ॥

"अपुत्रेण सुतः कार्य्यो यादृक् तादृक् प्रयत्नतः ।
पिण्डोदकक्रियाहेतोर्नामसंकीर्त्तनस्य च" ॥

यादृक्तादृक् मुख्यः। पुत्रिकापुत्रादिः, शतपथश्रुतिः,—
"अथ त्रयो वा लोका मनुष्यलोकः पितृलोको देवलोक इति"।
"पुत्रेणैव जयो नान्येन न कर्मणा कर्मणा पितृलोको ।
विद्यया देवलोकः, तथा अयं वा आत्मा ।
सर्वेषां लोकानां लोकः, यज्जुहोति, यद्यजते स तेन देवानां
लोकोऽथ यदन प्रब्रूते तेन ऋषीणामथ यत्पितृभ्यो निमृणाति
यत्प्रजामिच्छते तेन पितृणामपि"। मनुः, तस्मात् पुत्रमनुशिष्टं-

(१) देवब्राह्मणसम्पन्नमभिनन्दन्ति पूर्वजाः।
सन्तानवर्द्धनः पुत्रः प्रजोत्पादनविहितः ॥

(२) अप्रजाः अपुत्रिणः सन् शीला राक्षसाः।

लोकमाहुः, तस्मादेनमनुशासति, लोक्यं देवलोकादिप्रापकं, तदेवाह, स यद्यनेन किंचिद[1]क्ष्णया कृतं भवति तस्मादेनं सर्व-स्मात् पुत्रो मुञ्चति तस्मात् पुत्रो नाम, यदारब्धदीर्घव्रतापूर्त्त-प्रासादादि, तदक्ष्णया असंपूर्णं कृतं यजमानः [2]प्रमितः, तत्-समापनेन पुत्र एनं यजमानं मुञ्चति, प्रारब्धासमापनव्रताद्रक्षति, एतच्चाग्निसाध्यकर्मव्यतिरिक्तपरं, अग्निना स्वार्थपरत्वादिति मन्तव्यं, यद्यप्येतत् संप्रति कर्मशेषभूतं तथा पितृलोकं प्राप्य भावेनास्यार्थस्य सत्यं हि मनुष्याः प्रथमसाक्षलौत्यादिकविधिकल्पनः; पित्रादि कृतं पुत्रेण समापनीयमिति कल्प्यते।

बृहस्पतिः,--

"यथा जलं कुप्लवेन तरन्मज्जति मानवः।
तद्व पिता कुपुत्रैस्तु तमस्यन्धे निमज्जति"॥

एतावदेकपुत्रोत्पादनं नित्यं, बहुपुत्रोत्पादनमपि स्वस्य सद्गति-कामनायां द्रष्टव्यं।

तदुक्तं,

"एष्टव्या बहवः पुत्राः शीलवन्तो गुणान्विताः।
तेषां वै समवेतानां यद्येकोऽपि गयां व्रजेत्।
यजेत्तदाश्वमेधेन नीलं वा वृषमुत्सृजेत्"॥

तस्मात् पञ्चसमानुशासन[3]मवश्यकर्त्तव्यमित्यर्थः, ब्रह्मचर्यं च

(१) किञ्चिदक्ष्णया —। (२) प्रमितः।
(३) पञ्चस्यानुशासनं अवश्यं कार्य्यमित्यर्थः।

व्याख्यातं, यमेषु, एवं पुष्पोत्सर्गदेशकालदिङ्नियमादयोऽप्युप-सृत्य स्नातकव्रतेऽवगन्तव्याः।

अथ घ्राणजानि, तत्र श्रीकृष्णोपभुक्तगन्धमाल्यादिघ्राणं सर्व-पापक्षयार्थं तदुक्तं,—

"विष्णुनाघ्रातं जिघ्रत तेन शस्तं प्रशंसति च"।

स्कन्दपुराणे,— "निर्माल्यशेषं व्रतदानतुल्यं"।

विष्णुपुराणे,—

"न संवृतमुखोजिघ्रेत्[१] श्वासकासैश्च वर्जयेत्।
नोच्चैर्हसेत् सशब्दं च न शूचेत् पवनं बुधः।
न हि कुर्य्यात् शवं जिघ्रन् शवगन्धो हि सोमजः"॥

तथा,—

"शेषसिंहाणिकोत्सर्गो नान्यकाले प्रशस्यते।
बलिमङ्गल्यजप्यादौ न होमेन महाजने"॥

महाजने जनसमूहमध्ये।

भविष्यपुराणे,—

"गवामस्थि न लंघेत मृद्धो गन्धं च वर्जयेत्।
यावदाघ्राति तं गन्धं तावत् पुण्येन युज्यते"॥

मेहनाधिकारे हारीतः,— घ्राणास्ये समावेष्टयित्वा, अमेध्यगन्ध-घ्राणशङ्कया।

शातातपः,—

"अनृतं मद्यगन्धश्च दिवामैथुनमेव च।
पुनाति वृषलान्नं च सन्ध्या वहिर्[२]पासिता"॥

---

(१) ज्म्भेत्। (२) वहिःसन्ध्याप्युपासिता।

अश्वीवाक्यं, धृतपुष्पं न जिघ्रति योषितं।
(१)सोऽयमनुसरमो रोचते नरः।

आपस्तम्बः,—
"औषधीवनस्पतीनाच्छिद्य नोपजिघ्रेत्"।

तथा,— "जातिभ्रंशकारे घ्रातिरघ्रेयमद्ययोः"॥

(२)अथाशनानि, शिष्टाः,—
"जन्मजन्मान्तराभ्यस्तं पापराशिं विनाशयेत्।
कृष्णोपभुक्तशेषान्नप्राशनं भक्तिचेतसा॥
चान्द्रायणं-सहस्रं च मासोपोषणमेव च।
कृष्णशेषाशनं प्राप्य कलां नार्हन्ति षोड़शीं"॥

तथा,—
"विष्णुनाशितमश्नन्ति तेन पीतं पिबन्ति च।
पादोदकसमायुक्तं तुलसीदलमिश्रितं॥
भक्त्या भुक्तं हरेर्भुक्त्वा हत्याकोटिविनाशनं"।

स्कन्दपुराणे, "नैवेद्यशेषं क्रतुकोटितुल्यं, विष्णुपुराणे, गङ्गा-मधिकृत्य।
"स्नाताभिलषिता दृष्टा स्पृष्टा पीतावगाहिता।
या पावयति भूतानि कीर्त्तिता च दिने दिने"॥

तथा —
"चान्द्रायण-सहस्रैस्तु यः कुर्य्यात् कायशोधनं।
पिबेद्यश्चापि गङ्गाम्भः समौ स्यातां न वासमौ"॥

(१) स च मे रोचते हरः। (२) अथ शासनिकानि।

तथा,—

"भिक्षान्नं श्रोत्रियान्नं च हुतशेषं च यद्धविः ।
आनखाग्रा[१]द्धरेत् पापं" ।

तथा,—

"सर्वपापविशुद्ध्यर्थं वैष्णवस्य च मन्दिरे ।
[२]अश्नीयाद् वैष्णवान्नं तदभावे जलं पिबेत्" ॥

"स्नातकव्रताधिकारे मनुः,— "नान्नमद्यादेकवासाः" ।

"नाश्नीयाद्भार्यया सार्द्धं, न भुञ्जीतोद्धतक्लेशं ।
नाश्नीयात् [३]सर्ववेलायां, नातिसौहित्यमाचरेत् ॥
नातिप्रगे नातिसायं, न सायं प्रातराशितः ।
नोत्सङ्गे भक्षयेद् भक्षान्, न वार्य्यञ्जलिना पिबेत् ॥
भिन्नभाण्डे न भुञ्जीत, न भावप्रतिदूषिते ।
शयनस्थो न भुञ्जीत, न पाणिस्थं न चासने ॥
सर्वं च तिलसम्बद्धं नाद्यादस्तमिते रवौ ।
आर्द्रपादस्तु भुञ्जीत नार्द्रपादस्तु संविशेत् ॥
न श्रोत्रियतते यज्ञे ग्रामयाजिहुते तथा ।
स्त्रिया क्लीवेन च हुते भुञ्जीत ब्राह्मणः क्वचित्" ॥

अग्निषोमीयादूर्द्ध्वमपि ।

तथा,—

"[४]मत्तक्रुद्धातुराणां च न भुञ्जीत कदाचन ।

(१) दहेत् । (२) नाश्नीयाद
(३) सन्धिवेलायां (४) मत्तक्रुद्धातुराणां न ।

केशकीटावपन्नं च पदा स्पृष्टं च कामतः॥
भ्रूणघ्नावेक्षितं चैव संस्पृष्टं चाप्युदक्यया।
पतत्रिणावलीढं च शुना संस्पृष्टमेव च॥
गवा चान्नमवघ्रातं घुष्टान्नं च विशेषतः।
गणान्नं गणिकान्नं च विदुषा च जुगुप्सितं॥
स्तेनगायनयोश्चान्नं तक्ष्णोर्वार्द्धुषिकस्य च।
दीक्षितस्य कदर्य्यस्य बद्धस्य निगडस्य च॥
अभिशस्तस्य षण्ढस्य पुंश्चल्या दाम्भिकस्य च।
शुक्तं पर्य्युषितं चैव शूद्रस्योच्छिष्टमेव च॥
चिकित्सकस्य मृगयोः क्रूरस्योच्छिष्टभोजिनः।
उग्रान्नं सूतिकान्नं च पर्य्याचान्तमनिर्दशं॥
अनर्च्चितं वृथा मांसमवीरायाश्च योषितः।
द्विषदन्नं नगर्य्यन्नं(१) "मवधूतमवक्षुतं" ॥

पर्य्याचान्तमाचमनस्थानस्थं, अवधूतं मार्जनविकटस्थं अवक्षुतं क्षुतमभिहितं।

पिशुनानृतिनोश्चान्नं क्रतुविक्रयिणस्तथा।
शैलूषतुन्नवायान्नं कृतघ्नस्यान्नमेव च॥
कर्मारस्य निषादस्य रङ्गावतरकस्य च।
सुवर्णकर्त्तुर्वैणस्य शस्त्रविक्रयिणस्तथा॥
श्ववतां शौण्डिकानां च चैलनिर्णेजकस्य च।
रञ्जकस्य नृशंसस्य यस्य चोपपतिर्गृहे॥

(१) पतितान्न।

नृत्यन्ति ये चोपपतिं स्त्रीजितानां च सर्वशः ।
अनिर्दशं च प्रेतान्नमतुष्टिकरमेव च ॥
राजान्नं तेज आदत्ते शूद्रान्नं ब्रह्मवर्चसं ।
कारुकान्नं प्रजां हन्ति यशश्चर्मावकर्त्तिनः ॥
भुक्त्वातोऽन्यतमस्यान्नममत्याचपणं त्र्यहं ।
मत्या [१]जग्ध्वा चरेत् कृच्छ्रं रेतोविण्मूत्रमेव च" ॥

तथावलोक्यानवलोकनीयानि, तत्र देवतान्यधिगच्छेत् [२]पदेन देवतादर्शनस्पर्शनप्रदक्षिणतङ्गृहमार्जनादीनामप्युपलक्षणादधिगमनस्य दृष्टे सत्यदृष्ट[३]कल्पमवकाशाच्च भगवद्दर्शनादि लिख्यते । तत्र-सामान्यतस्तावत् ॥

"ये त्रिकालं प्रपश्यन्ति मुखं कृष्णस्य नित्यशः ।
न तेषां पुनरावृत्तिर्विष्णुलोकात् कथंचन ॥
अर्चितं केशवं दृष्ट्वा सर्वपापैः प्रमुच्यते ।
पूजितं पूज्यमानं च यः पश्येद्भक्तितो हरिं ॥
श्रद्धया मोदयेद्यस्तु सोऽपि योगफलं लभेत् ।
ये पश्यन्ति नरा विष्णुं हेमभूषणभूषितं ॥
सहलक्ष्म्या कलौ विप्र [४]पुनात्यासप्तमं कुलं ।
ये पश्यन्ति सहलक्ष्म्या पद्मपत्रोपरिस्थितं ॥
भक्त्या पद्मालयाकान्तं तेषां न दुर्लभं पदं ।
त्रिवक्त्रं पुण्डरीकाक्षं सविलासं सविभ्रमं ॥

(१) भुक्त्वा ।　　(२) चेत्यनेन ।
(३) कल्पनानवकाशाच्च ।　　(४) पुनन्त्या ।

दृष्ट्वा विमुच्यते पापैर्जन्मकोटिषु [१]संचितैः" ।

तथा,—

"देवार्चादर्शनादेव प्रणमेन्मधुसूदनं ॥

स्नानापेक्षा न कर्त्तव्या दृष्ट्वार्चां द्विजसत्तमः ।

देवतार्चादृष्टिपूतः शूचिर्यस्मात् कीर्त्तितः" ॥

अनेनार्चादर्शनाव्यवहितकालीनदण्डप्रणामविधिप्ररोचनार्थेनापि स्वार्थ[२]प्रसिद्ध्यर्थं सर्व्वं हि मनुष्याः प्रथममङ्गलीत्यादौ विधि-कल्पनवत्, प्रतिमादृष्टिगोचराणामशौचापवादो विधीयते, तेना-शौचशङ्कया प्रणामविलम्बो न कर्त्तव्य इत्युक्तं भवति, स्पृष्टा-मेध्यादिदर्शने तु तत्परिहारः कर्त्तव्य एव, लेपस्यापगममन्तरेण शुद्ध्यभावात् न च स्पृष्टलेपाशौचत्वापवादः, यावदर्थितानुवादा-सम्भवस्तावद्गोचरविधिकल्पनेनोपपत्तौ नानाविधिवाधाकल्पनात् ।

शङ्किताशौचापवादमात्रेणोपपत्तेश्च नातिस्पृष्टाशौचापवाद-कल्पनमर्हन्ति, अत्र पुरुषोत्तमक्षेत्रे वसता देवतागमन[३] कर्त्तव्यं, तद्दर्शनादिविधिरुच्यते ।

ब्रह्माण्डपुराणे,—

"पुरुषाख्यं महत् दृष्ट्वा मत्त्वा स्नात्वा महोदधौ ।

ब्रह्मविद्यां सकृज्ज्ञात्वा न भूयः पुरुषो भवेत् ॥

अत्र पुरुषाख्यं पुरुषोत्तमक्षेत्रं इति केचित ।

(१) सुसंचितैः ।

(२) स्वार्थप्रसिद्धभावादर्शमिद्धाय ।

(३) छायावलदेवाद्यायतनगमनं ।

वामनपुराणे, प्रह्लादतीर्थयात्रायां,—

"स्नात्वा विरजसे तीर्थे दत्त्वा पिण्डं पितृंस्तथा ।
दर्शनार्थं ययौ श्रीमान् पूजितं पुरुषोत्तमं ॥
तं दृष्ट्वा पुण्डरीकाक्षमक्षरं परमं शुचिः ।
उपोष्य षड्दिनान्येव माहेन्द्रं दक्षिणं ययौ" ॥

तथा, विष्णुपुराणे,—

"ब्रह्माक्षरमजं नित्यं यथासौ पुरुषोत्तमः" ।

इति कृष्णमूर्त्तेरेवाभिधानं ।

ब्रह्मपुराणे,—

"दृष्ट्वा [१]च तं वैनतेयं यः पश्येत् पुरुषोत्तमं ।
दशानामश्वमेधानां फलं प्राप्य हरिं व्रजेत्" ॥

वटदर्शनं,—

"ॐ नमो व्यक्तरूपाय महाप्रलयपरिणते ।
महद्रसोपविष्टाय न्यग्रोधाय नमो नमः ॥
अमरस्त्वं सदा [२]कल्प ! विष्णोरायतनं वट ! ।
न्यग्रोध ! हर मे पापं कल्पवृक्ष ! नमो ऽस्तु ते ॥
भक्त्या प्रदक्षिणं कृत्वा नत्वा [३]कल्पवटं नरः ।
सहसा मुच्यते पापैर्जीर्णत्वचमिवोरगः ॥
छायां तस्य समाक्रम्य कल्पवृक्षस्य भो द्विजाः ।
ब्रह्महत्यां नरो जह्यात् पापेष्वन्येषु का कथा" ॥

(१) वटं । (२) वृक्ष ! । (३) कल्पद्रुमं ।

तथा,—

"वैनतेयं नमस्कृत्य कृष्णस्य पुरतः स्थितं।
सर्वपापविनिर्मुक्तो विष्णुलोकं स गच्छति"॥

तथा,—

"प्रविश्यायतनं विष्णोः कृत्वा तत्र प्रदक्षिणं।
संकर्षणं स्वमन्त्रेण भक्त्या पुष्पैः प्रपूजयेत्॥

स्वमन्त्रः शिवपञ्चाक्षरमन्त्रः।

नमस्ते हलधृक्! राम! नमस्ते [1]लाङ्गलायुध!।
नमस्ते रेवतीकान्त! नमस्ते भक्तवत्सल!॥
नमस्ते बलिनां श्रेष्ठ! नमस्ते धरणीधर!।
प्रलम्बारे! नमस्तेऽस्तु त्राहि मां कृष्णपूर्वज!॥

इति स्तुतिः, प्रणामश्च, लभेदभिमतं फलं।
द्वादशाक्षरमन्त्रेण कृष्णं संपूजयेत्ततः"।

पूजनानन्तरं स्तुतिः,—

"जय कृष्ण! जगन्नाथ! जय सर्वाघनाशन!।
जय चाणूरकेशिघ्न! जय कंसनिसूदन!॥
जय पद्मपलाशाक्ष! जय चक्रगदाधर!।
जय [2]नीलाम्बरश्याम! जय सर्वसुखप्रद!॥
जय लोकपते! नाथ! जय वाञ्छाफलप्रद!।
जय देव! जगत्पूज्य! जय संसारनाशन!॥
संसारसागरे घोरे निःसारे दुःखफेनिले।

(१) मुषलायुधः। (२) नीलाम्बुदश्याम।

क्रोधग्राहाकुले रौद्रे विषयोदकसंप्लवे ॥
नानारोगोर्म्मिसलिले मोहावर्त्ते सुदुस्तरे ।
निमग्नोऽहं सुरश्रेष्ठ! त्राहि मां पुरुषोत्तम! ॥
एवं कृत्वाञ्जलिं बद्धा दण्डवत् प्रणिपत्य च ।
अश्वमेध-सहस्रस्य फलमाप्नोत्यनुत्तमं ॥
दृष्ट्वा कृष्णं प्रणम्याथ मोक्षमाप्नोत्यनुत्तमं ।
ततः संपूज्य मन्त्रेण सुभद्रां भक्तवत्सलां ॥
देवीसूक्तेन विधिवत् प्रणिपत्य कृताञ्जलिः ।
नमस्ते सुभगे! देवि! नमस्ते सुखसौख्यदे! ॥
त्राहि मां पद्मपत्राक्षि! कात्यायनि! नमोऽस्तु ते ।
नमः प्रकृतिरूपिण्यै त्रैलोक्योत्पत्तिकारिणि! ॥
विष्णुमाये! नमस्तुभ्यं चिच्छक्तिरूपधारिणि! ।
योगनिद्रासि विष्णोस्त्वं मोहयन्ती जगत्त्रयं ॥
मोहनार्थाय जगतः स्थापिता विष्णुना स्वयं ।
एवं संप्रार्थ्य भद्रां च विष्णुलोकं स गच्छति" ॥

अत्र,—

न स्प्रष्टव्यः कदाचित्तु [१]नियुक्तादन्यमानुषैः ।
"स्पृशन् पापमवाप्नोति दरिद्रो दुःखितो भवेत्" ॥

इति वचनात् संकर्षणादीनां स्पर्शन निषिद्धं ।

"निःक्रम्य देवतागारात् प्रणम्यायतनं व्रजेत् ।
इन्द्रनीलमयो विष्णुर्यत्रास्ते वालुकावृतः ॥

(१) नियोगा.

अनन्तशयनेऽपि तं [१]नत्वा नरो विष्णुपुरं व्रजेत्।
तस्य दक्षिणतः कोणे नरसिंहाकृतिर्हरिः॥
तं दृष्ट्वा नृहरिं देवं पूजयित्वा प्रणम्य च।
मुच्यते पातकैर्मर्त्यः समस्तैर्नात्र संशयः।
न स्पृष्टव्यः स चान्येन स्पृष्टो हन्ति नराधमं॥
तस्मात् सर्वप्रयत्नेन नियमस्थः सदा स्पृशेत्"।

तथा,-

"अनन्ताख्यं वासुदेवं दृष्ट्वा भक्त्या प्रणम्य च।
सर्वपापविनिर्मुक्तो नरो याति परं पदं॥

तथा,-

श्वेतगङ्गां नरः स्नात्वा दृष्ट्वा च श्वेतमाधवं।
मत्स्याख्यं माधवं चैव श्वेतद्वीपं [२]च गच्छति"॥

गयायां गदाधरदर्शनं।

वराहपुराणे,—

"[३]कामतः प्रोच्यते दैत्य! तव पुण्यमिह प्रभो!।
येन शार्ङ्गी गदापाणिर्दृष्टो नारायणः स्वयं॥
यतो गदाधरः साक्षादस्मिन् [४]पूर्वं व्यवस्थितः"।

मत्स्यपुराणे,—

"कृतशौचं महातीर्थं सर्वपापनिसूदनं।
यत्रास्ते नरसिंहस्तु स्वयमेव जनार्दनः"॥

---

(१) दृष्ट्वा। (२) स।
(३) किमतः। (४) तीर्थे।

नरसिंहपुराणे,—

केषु [१]द्रष्टव्योऽसीति ब्रह्मप्रश्ने विष्णुवाक्यं,—

"[२]काकामुखे च वाराहं, द्वारकायां च गोपतिं ।
गङ्गाद्वारे पयोधरं गोविन्दं नागमाह्वये ॥
वृन्दावने तु गोपालं मथुरायां स्वयंभुवं ।
केदारे माधवं विद्याद्वाराणस्यां च केशवं ॥
नरसिंहं महावने पुरुषोत्तमं दशवने ।
प्रयागे योगमूर्त्तिं च कावेर्य्यां नागशायिनं" ॥

इत्यादीन्युक्ता,—

"सर्वत्र परमात्मानं यः पश्यति स मुच्यते" ।
आत्मानं सर्वगत दृष्ट्वा यथा मुक्तो भवति तथा,
एतेषु स्थानेषु मन्मूर्त्तिं दृष्ट्वा मुक्तो भवतीति विष्णुवाक्यं ।

लिङ्गपुराणे, काशीमधिकृत्य,—

"देवेश्वरस्योत्तरतः स्वयं तिष्ठति केशवः ।
क्षेत्रस्य कारणं चास्य क्षेत्रज्ञ इति चोच्यते ॥
तेन दृष्टेन सुश्रोणि! दृष्टं सर्वं चराचरं ।

वामनपुराणे, प्रयागमधिकृत्य,—

"दृष्ट्वा वटेश्वरं रुद्रं माधवं योगशायिनं" ।

तथा,—

"गङ्गायां गोपतिं द्रष्टुं स जगाम महासुरः" ॥

(१) तिष्ठथ्योऽसौ ।   (२) कोकमुखे ।

विरजक्षेत्रमधिकृत्य, ब्रह्मपुराणे,—

"आस्ते स्वयंभुस्तत्रैव क्रोड़रूपी हरिः स्वयं।

[१]तस्मात् प्रणम्य तं भक्त्या नरो विष्णुपुरं व्रजेत्॥

अथ शिवदर्शनं, विद्याकरपद्धतौ, ईश्वरवाक्यं,—

"भ्रमित्वा दूरमध्वानं यो मां पश्यति शूलिनं।

स मे देवि! प्रियो नित्यं शरजन्मा यथा [२]सुतः॥

सुदूरमपि गच्छेत्तु यत्र देवो महेश्वरः।

दृष्ट्वा लिङ्गं महेशस्य सर्वपापैः प्रमुच्यते॥

सप्तजन्मकृतैर्दुष्टैर्मनोवाक्कायकर्मभिः।

पूजितं वा महेशानं पूज्यमानमथापि वा॥

दृष्ट्वा प्रयाति वै मर्त्यो ब्रह्मलोकं न संशयः"।

तथा,—

"यः प्रातर्देवदेवेश शिवलिङ्गस्वरूपिणं।

पश्येत् स याति सर्वस्मादधिकां गतिमेव च॥

मध्याह्ने च महादेवं दृष्ट्वा [३]विष्णुपुरे व्रजेत्।

सायाह्ने सर्वयज्ञानां फलं प्राप्य विमुच्यते॥

प्रदोषे शङ्करं दृष्ट्वा सर्वपापैः प्रमुच्यते"।

तथा,—

"प्रातः संदर्शनं शम्भोर्नैशमेव व्यपोहति।

आजन्मनस्तु मध्याह्ने सप्तजन्मकृतं निशि॥

(१) दृष्ट्वा। (२) सुतः। (३) यज्ञफलं लभेत्।

अर्द्धमासकृतं पापं दृष्ट्वा पर्वणि संत्यजेत्"।

ब्रह्मपुराणे, एकाम्रमधिकृत्य—

"ततः शम्भोर्गृहं गच्छेत् वाग्यतः संयतेन्द्रियः।
प्रविश्य पूजयेत् सर्वान् क्रमशस्तत्र देवतान्॥
गणेश्वरं प्रथमतो देवीं स्कन्दं वृषं तथा।
गणं चण्डं कल्पवृक्षं सावित्रीं देवमेव च॥
तान् त्रिःप्रदक्षिणं कृत्वा उपचारैर्यथाक्रमं।
कृत्तिवासं ततः पश्येत् कृत्वा तं त्रिःप्रदक्षिणं॥
आगमोक्तेन मन्त्रेण वेदोक्तेन च शङ्करं।
अदीक्षितस्तु नाम्ना च मूलमन्त्रेण चार्चयेत्॥
सर्वपापहरं देवं गन्धपुष्पाम्बरादिभिः।
एवं संपूज्य विधिवत् सर्वपापविवर्जितः॥
कुलैकविंशमुद्धृत्य शिवलोकं स गच्छति।
भुक्त्वा तत्र सुखं विप्रा यावदाभूतसंप्लवं॥
पुण्यक्षयादिहायातो जायते योगिनां कुले।
योगं पाशुपतं प्राप्य ततो मोक्षमवाप्नुयात्॥
तस्मिन् क्षेत्रवरे लिङ्गं भास्करेश्वरसंज्ञितं।
ये पश्यन्ति च तं देवं शिवलोकं व्रजन्ति ते॥
मुक्तेश्वरं च सिद्धेशं स्वर्णजालेश्वरं तथा।
रामेश्वरं च विख्यातं सूक्ष्मं (१)चाम्रातकेश्वरं॥

---

(१) ताम्रकेश्वरं।

ब्रह्मेश्वरं च सेवेशं केदारेश्वरसंस्थितं।
चक्रेश्वरं च विश्वेशं तथा च कपिलेश्वरं॥
ये च पञ्चस्विह नराः स्नात्वा विन्दुसरोऽस्मि।
सर्वपापविनिर्मुक्ताः शिवलोकं व्रजन्ति ते॥
पुण्यक्षयादिहायातो योगिनां प्रवरे कुले।
योगे शम्भोर्वरं प्राप्य ततो मोक्षं व्रजन्ति ते"॥

काशीलिङ्गानां दर्शनं, मत्स्यपुराणे,—

"प्राप्य विश्वेश्वरं देवं न स भूयोऽभिजायते"।

तथा,—

"जात्यन्तरसहस्रेषु विमुक्तो म्रियते तु यः।
भक्तो विश्वेश्वरं देवं न स भूयोऽभिजायते"॥

स्कन्दपुराणे,—

"गोप्रक्षेश्वरमागत्य दृष्ट्वाभ्यर्च्य च मानवः।
न दुर्गतिमवाप्नोति किल्बिषैश्च विमुच्यते॥

तत्रैव,—

"संगमे देवनद्योश्च यः स्नात्वा मनुजः शुचिः।
अर्चयेत् सङ्गमेशानं तस्य जन्मभयं कुतः"॥

देवनद्योर्वरणागङ्गयोः।

तथा,—

"आराध्य कपिलेशं तु त्रैलोक्यपालनक्षमं।
भवन्ति पुरुषा देव मम नित्यं च वर्णगः"॥

तथा, कपिलेश्वरश्रीकण्ठेश्वरजावालेश्वरगर्गेश्वरानधिकृत्य,—

"अङ्गाराश्मिणं पुण्यं यत्फलं परिपच्यते ।
तत्फलं सकलं प्रोक्तं पञ्चायतनदर्शनात्" ॥

तथा,—

"वालुकेश्वरनामानं तं दृष्ट्वा च न शोचति" ।

तथा,—

"कृत्तिवासेश्वरो देवो द्रष्टव्यश्च पुनः पुनः ।
यदीक्षत्तारकं ज्ञानं शाश्वतं चामृतप्रदं ॥
दर्शनादेव देवस्य ब्रह्महा विप्रमुच्यते" ।

स्कन्दपुराणे,—

"केदारं मध्यमं स्थानं स्थानं चैव महालयं ।
मम पुण्यानि भूर्लोके [1]ततः श्रेष्ठतमं त्विदं ॥
अविमुक्तेश्वरं नाम मम दृष्ट्वा तु मानवः
सद्यः पापविनिर्मुक्तः पशुपाशैर्विमुच्यते ॥
शैलेशं सङ्गमेशं च स्वर्लीनं मध्यमेश्वरं ।
हिरण्यगर्भमीशानं गोप्रेक्ष्यं वृषभध्वजं ॥
तपःशान्तं शिवं चैव ज्येष्ठस्थाननिवासिनं ।
शुक्रेश्वरं च विख्यातं व्याघ्रेशं जम्बुकेश्वरं ॥
दृष्ट्वा न जायते मर्त्यः संसारे दुःखसागरे" ।

ब्रह्माण्डपुराणे, पुरुषोत्तममधिकृत्य,

"मार्कण्डेयह्रदेऽप्येव स्नात्वा दृष्ट्वा च शङ्करं ।
दशानामश्वमेधानां फलं प्राप्नोति मानवः" ॥

(१) तेभ्यः ।

दर्शने मन्त्रः,—

"संसारसागरे मग्नं पापग्रस्तमचेतनं।

त्राहि मां भगनेत्रघ्न! त्रिपुरारे! नमोऽस्तु ते"॥

वामनपुराणे, गयामधिकृत्य,(१)—

"दृष्ट्वा वटेश्वरं रुद्रं माधवं योगशायिनं"।

सूर्य्यदर्शनं।. भविष्यपुराणे,—

"मेरुमन्दरमात्रोऽपि राशिः पापस्य कर्मणः।

आसाद्य भास्करं मर्त्यः तस्मान्नश्यति तत्क्षणात्"॥

आसाद्य दृष्ट्वेत्यर्थः। तथा,

"यः कुर्य्याद्दर्शनं मासमेकाहारो जितेन्द्रियः।

स यत्फलमवाप्नोति न तत्सर्वैर्महामखैः"॥

ब्रह्मपुराणे,—

"पृथिव्यास्तत्र कोणे वै कोणार्कः संप्रतिष्ठितः।

यं दृष्ट्वा भास्करं मर्त्यः सर्वपापैः प्रमुच्यते"॥

काशीमधिकृत्य लिङ्गपुराणे, कामेश्वरमुक्त्वा—

"तस्यैव दक्षिणे भागे लोलार्को नाम वै रविः।

तस्य दर्शनमात्रेण सूर्य्यलोकमवाप्नुयात्"॥

दुर्गादर्शनं,—

"सर्वावस्थां गतो वापि युक्तो वा सर्वपातकैः।

दुर्गां दृष्ट्वा नरः सोऽपि प्रयाति परमां गतिं"॥

---

(१) प्रयागमधिकृत्य।

ब्रह्मपुराणे,—

"विरजे विरजा माता ब्रह्मणा या [1]प्रतिष्ठिता।
यस्याः संदर्शनान्मर्त्यः पुनात्यासप्तमं कुलं" ॥

लिङ्गपुराणे, काशीमधिकृत्य,—

"दक्षिणे रक्षते दुर्गा उत्तरे नैर्ऋते मृता।
अङ्गारीशा पश्चिमे च वायव्ये भद्रकालिका ॥
उत्तरे भावचण्डी[2] च महामुण्डा च सोमतः।
ऊर्द्धकेशा समायुक्ता शाङ्करी पूर्वतः स्मृता ॥
ऊर्द्धकेशी तथाग्नेय्यां चित्रघण्टा च मध्यतः।
एतास्तु चण्डिका देवी योऽत्र द्रक्ष्यति मानवः ॥
तस्य तुष्टाः स्तुताः सर्वाः सर्वं रक्षन्ति सर्वदा"।

तथा,—

"आद्या[3]ऽपि परा प्रोक्ता संवर्त्ता ललिता तथा।
द्रष्टव्या चैव सा देवी सर्वकामफलप्रदा ॥
तत्र गौरी सदा देवी पूजितव्या च भक्तितः"।

आदिमत्पुरुषोत्तमेन्द्रद्युम्नादिकृतप्रतिमात्वेन पुण्यहेतुत्वं कथं वेदेन वाध्यत[4] इत्याशङ्कया च स्थानविशेषोपलक्षितप्रतिमात्वेनैव पुण्यहेतुत्वं। स्थापकेन्द्रद्युम्नादिकीर्त्तनं प्रसङ्गार्थमेव[5]। तेन तत्स्थाने येन केनापि कृतप्रतिमादर्शनादि पुण्यजनकमिति केचित्। स्यादेवं

---

(१) संप्रतिष्ठिता। (२) भीमचण्डी च।
(३) अन्याचापि। (४) बोध्यत— इत्याशङ्कायां—।
(५) प्रशंसार्थमेव।

यदि स्थानविशेषविशिष्टप्रतिमात्वेन पुण्यहेतुत्वे प्रमाणं स्यात्। स्थानविशेषानुल्लेखेनाधुनिकपुरुषकृतानां प्रतिमादीनां पुण्यहेतुत्व-दर्शनात्।

तथा च भविष्यपुराणे,—

"भास्करायतनाभ्यासे सूर्य्यदेवं समन्ततः।
देहिनां तत्र पश्यत्वं सूर्य्यमायुष्यकारणं॥
मनुजैः स्थापिते सूर्य्ये देवमानमिदं स्मृतं"। इति।

तथा,—

"क्रोशमात्रं परं क्षेत्रं शिवस्य परमात्मनः।
मनुजैः स्थापिते लिङ्गे क्षेत्रमानमिदं स्मृतं॥
स्वायम्भुवे सहस्रं स्यादार्षे चैव तदर्द्धकं"। इति।

तेन पुण्यविशेषवत्पुरुषप्रतिष्ठितत्वेनैव प्रतिमानां पुण्यहेतुत्वं। न चैव सर्व्वासामेकरूपफलत्वप्रसङ्गः। स्थापकस्य पुण्यविशेषेण स्थापितत्वपुण्यहेतुत्वसंभवात्। एवं च नित्यानित्यसंयोगविरोधोऽपि। तपोविशेषवत्पुरुषस्य सर्व्वदा विद्यमानत्वात्। स्वर्गमोक्षप्रदत्वादि-विशेषस्य प्रतिमानां स्थापकतपोविशेषादेव। यो हि यत्फलप्रद प्रतिमाकामनया यादृशं तपः करोति, तस्य तत्प्रतिमा तत्फलप्रदा, भवतीत्येवं वेदेन बोध्यत इति स्मृतिप्रामाण्यं कल्प्यते।

तथा च स्मरन्ति,—

"स्थापकस्य तपोयोगात्पूजायाश्च विशेषतः।
अभिरूप्यात्तु बिम्बस्य देवः सान्निध्यमिच्छति"॥

बिम्बं प्रतिमा, इच्छतुस्तस्य च वेदेऽपि श्रुतत्वेन प्रवाह-

नित्यत्वसम्भवेऽपि तपोविशेषोपलक्षणेनैव तत्कृतप्रतिमानां पुण्यहेतुत्वं [१]तत्प्रतिमानाशे तथा। प्रतिमान्तरे तथाफलप्रदत्वे मानाभावः।

केवलं ब्रह्मपुराणे,—

"ये केचित्कारयिष्यन्ति प्रासादं प्रतिमामथ ।

तथापि तेऽक्षया कीर्त्तिर्भविष्यति न संशयः" ॥

इन्द्रद्युम्नं प्रति वरदानस्मृतेः। "प्रासादप्रतिमाभङ्गे न त्यजामि कदाचन" इति वचनाच्च पुरुषोत्तमक्षेत्रे तत्स्थाने प्रतिमान्तरस्य वचनविशेषादेव पुण्यहेतुत्वं। अन्यत्र क्षेत्र ईदृशं वचनं लिङ्गं वापि नास्ति ऋषिकृतप्रतिमालिङ्गादिनाशे तत्स्थाने प्रतिमान्तरं लिङ्गान्तरं वा तथा न फलजनकं। किं त्वाधुनिकपुरुषकृत-प्रतिमान्तरतुल्यमेवेति मन्तव्यं। क्षेत्रविशेषाणां तु नित्यत्वादेव न कश्चित्तत्र विचारः। गङ्गायाश्च गङ्गात्वेनैव पुण्यहेतुत्वं। भगीरथानयनात्तु देशविशेषसम्बन्धः। न चैतावता नित्यानित्य-संयोगः। तथापि तपोविशेषवत् पुरुषप्रवृत्तितुल्यमुपलक्षणं।

तदुक्तं महाभारते,—

"परिग्रहान्मुनीनां च तीर्थानां पुण्यता स्मृता"। इति।

तथा गवां निवासेन भूमेः पवित्रत्वं। गोष्ठस्य जपादिविशेष-त्वेन विधानात्। तदुक्तं वार्त्तिके,—

यथा च, "यां यां भुवं नरः कांचिदध्यवसति पुण्यकृत्।

तत्प्रकृतिविशेषत्वात्सोच्यते धर्मकारणं[२]" ॥ इति।

---

(१) तत्प्रतिमांशे। (२) कर्मकारणं।

तथा च,—

"चक्रं दृष्ट्वा हरेर्दूरात्प्रासादोपरि संस्थितं ।
सहसा मुच्यते पापैर्जन्मकोटिसमुद्भवैः" ॥

विष्णुपुराणे गङ्गामधिकृत्य,—

"स्मृताभिलषिता दृष्टा स्पृष्टा पीतावगाहिता ।
या पावयति भूतानि कीर्त्तिता च दिने दिने" ॥

तथा,—

ब्राह्मणगोऽङ्गनाग्निहिरण्यघृतादितीर्थनृपाणां दर्शनं नारदोक्त-मायुर्वृद्धिकरं। ब्रह्मपुराणोक्तं घृते प्रतिबिम्बदर्शने चिरजीवित्वफलं। श्यामलेयोयमस्य द्वितीये,—

"यतीनां दर्शनं चैव स्पर्शनं भाषणं तथा ।
कुर्वाणः पूजिते[1] नित्यं तस्मात्पश्येत्तु नित्यशः ॥
अग्निचित्कपिला सत्री राजा भिक्षुर्महोदधिः ।
दृष्टमात्रात् पुनन्त्येते तस्मात्पश्येच्च नित्यशः" ॥

अग्निचित् कृताग्निचयनः। कपिला गौः। सत्री कृतबहुयज-मानकयागः ।

वराहपुराणे,—

"वामनं ब्राह्मणं दृष्ट्वा वराहं च जलोत्थितं ।
नमस्कृत्यैव यो भक्त्या स पापेभ्यः प्रमुच्यते ॥
यज्वा महाप्रदः सत्री शतायुर्धार्मिकः शुचिः ।
ज्ञाननिष्ठा तपःसिद्धा दृष्ट्वा पापाद्विमुच्यते" ॥

---

(१) पूयते ।

शुचिस्तीर्थादिपूतः। शताायुः शूद्रादिरपि। ज्ञाननिष्ठोऽध्यात्मरतः। विद्याकरपद्धतौ,—

"दृष्ट्वा तु कपिलां दूरात् नमस्कारेण योऽर्चयेत्।
दूरादेव प्रणश्यन्ति सर्वपापानि तस्य तु"॥

कपिलायां मन्त्रः,—

"विदितासि वशिष्ठेन विश्वामित्रेण धीमता।
कपिले! हर मे पापं यन्मया दुष्कृतं कृतं॥
कपिले! त्वं हि देवानां वन्दनीयासि रोहिणी।
तीर्थवेदमया यस्मादतः शान्तिं प्रयच्छ मे"॥

स्कन्दपुराणे,—

"कपिलायास्तु गोस्तु स्यादनग्नेर्ब्राह्मणस्य तु।
स याति नरकं घोरं नरकं च तमोमयं"॥

भविष्यपुराणे,—

"गामालभ्य नमस्कृत्य कृत्वा चैव प्रदक्षिणं।
प्रदक्षिणीकृता तेन सप्तद्वीपा वसुन्धरा"॥

पद्मपुराणे,—

"सदा गावः प्रणम्यास्तु मन्त्रेणानेन पार्थिव!।
नमो गोभ्यः श्रीमतीभ्यः सौरभेयीभ्य एव च।
(१)नमो ब्रह्मसुताभ्यस्तु पवित्रेभ्यो नमो नमः"॥

विष्णुः,—

"गोमूत्रं गोमयं सर्पिः क्षीरं दधि च रोचना।
षडङ्गमेतदेवं स्यात्पवित्रं सर्वदा गवां"॥

---

(१) ब्रह्ममन्त्रप्रसूताभ्यः।

तथा,—"गवां कण्डूयनं चैव [१]सर्वापत्सु निसूदनं।
गवां ग्रासप्रदानेन स्वर्गलोके महीयते" ॥

"गवां हि तीर्थे वसतीह गङ्गा पुष्टिस्तथासां रजसि प्रसिद्धा
लक्ष्मीः [२]पुरीषे प्रणतौ च धर्म्मस्तासां प्रणामं सततं च कुर्य्यात्।
तृणोदकाद्येषु वनेषु मत्ताः [३]क्रीड़न्ति गावः सवृषाः सवत्साः
क्षीरं [४]प्रयच्छन्ति सुखं [५]स्वपन्ति शीतातपव्याधिभयैर्विमुक्ताः"॥

"इमं मन्त्रं विशुद्धात्मा जपेन्नित्यं समाहितः।
गच्छन् तिष्ठन् स्वपन् जिघ्रन् भुञ्जन् क्रीड़न् समुत्सृजन् ॥
महाभयेषु सर्वेषु समेषु विषमेषु च।
प्रयाणकाले च तथा श्रोतव्यमभयप्रदं" ॥

तथा,—

"एवं विधौ महामन्त्रः पठितस्तु सुरासुरैः।
श्रुतोऽनुमोदितो ध्यातः कीर्त्तितश्च पुनः पुनः ॥
सदा[६] व्युत्पादनाद्गावः पञ्च पुण्याः समुत्थिताः।
नन्दा सुनन्दा सुरभिः सुशीला सुमनास्तथा ॥
रत्नान्यनेकान्यादाय कौस्तुभप्रभृतीनि च।
प्रदक्षिणीकृतास्ताश्च सर्वैर्देवासुरैः क्रमात् ॥
संस्तुताः पूजिताः सम्यक् दृष्टा स्पृष्टाश्च वन्दिताः।
कस्यचित्त्वथ कालस्य दिव्यास्ताः कामधेनवः ॥

(१) सर्वापद्विनिसूदनं। (२) करीषे।
(३) क्रीड़न्तु। (४) प्रयच्छन्तु।
(५) स्वपन्तु। (६) तदाद्याः पवनाद्गावः।

ब्रह्मणेनार्चितास्ताश्च वव्रिरे वरमुत्तमं ।
दक्षप्रजापतेर्जन्म मारीचं कश्यपं प्रति ॥
शिवलोके च गमनं न भूयो जन्म कुत्रचित् ।
वने वासस्तृणं तोयं भोजनं निःपरिग्रहं ॥
दृढेन मृदुना बन्धः पाशेनाङ्गणवेश्मनि ।
धामप्रासादिकं भूरि निशि दीपश्च भास्वरः ॥
इतिहासपुराणानां श्रवणं सोपवीतिनं ।
ब्रह्मसृष्टिर्यथाशक्त्या परिचर्य्या यथाक्रमं ॥
ताडनाक्रोशखेदानि स्वप्नेऽपि न कदाचन ।
स्नानमूत्रपुरीषेण नोद्वेगः क्रियते क्वचित् ॥
शीतधर्मौघस्य गोवाहः शुष्कैः चौरादिभिस्तथा ।
ग्रीष्मे वृक्षाकुले वेश्म शीततोये विकर्दमे ॥
वर्षासु चाथ शिशिरे सुखोष्णे वातवर्जिते ।
गोकुले रुद्रमुख्याश्च प्रतिष्ठाप्या गणाः सदा ॥
जापकैः सर्वमन्त्रांस्तु जप्तव्याश्च [1] समृद्धये ।
उच्छिष्टमूत्रविट्श्लेष्ममलं जह्याच्च तत्र च ॥
रजस्वला न प्रवेश्या नान्यजातिर्न पुंश्चली ।
न ताः परिभवेत्तोये कौकिलेषु विशेषतः ॥
न बाधयेद्वत्सतन्त्रीं न क्रीडेत् गोष्ठसन्निधौ ।
न गन्तव्यं गवां मध्ये सोपानत्कैः सपादुकैः ॥
छत्त्राम्बरथयानैश्च सवितानैः कदाचन ।

(१) स्वात्मशुद्धये ।

दक्षिणोत्तरगैः प्राणैर्गन्तव्यं च पदातिभिः ॥
गावस्तृषातुराः पाल्याः श्रद्धया पितृमातृवत्।
गिरिप्रपातात् सिंहर्चशीतातपभयात्तथा ॥
महाकोलाहले घोरे दुर्दिने दोषविप्लवे।
गवां तृणानि देयानि शीतलं[१] च जलं तथा" ॥

एवं गवां वरदानार्थवादकस्य विधिना एवं कर्त्तव्यं।

"गावः सम्वत्सरं रक्ष्याः श्रद्धया च समाहिताः।
ब्राह्मणैः क्षत्रियै वैश्यैः शूद्रैः सर्वाघशान्तये" ॥

हारीतः,—

"द्वौ मासौ [२]पातयेद्वत्सं तृतीये त्रिस्तनं हरेत्।
चतुर्थे त्रिस्तनं चैव यथान्यायं यथाकुल[३]" ॥

ब्रह्मपुराणे,—

"आषाढ्यामश्वयुज्यां च चैत्र्यां पौष्यां च सर्वदा।
न गृह्णीयाद्गवां क्षीरं सर्वं वत्साय निक्षिपेत् ॥
न षण्डं वाहयेद्धेनुं न गां भारेण पीड़येत्।
युगाद्येषु युगान्तेषु षड़शीतिमुखेषु च ॥
दक्षिणोत्तरतः सूर्ये तथा विषुवतोर्द्वयोः।
संक्रान्तिषु च सर्वासु ग्रहणे चन्द्रसूर्ययोः ॥
पञ्चदश्यां चतुर्दश्यां द्वादश्यामष्टमीषु च।
उपचारो गवां कार्य्यो मासि मासि यथाक्रमं" ॥

---

(१) शीतमन्नस्तथा जलं। (२) पालयेत्।
(३) यथाबलं।

## अथ गवाह्निकम्।

ब्रह्मपुराणे,—

"लवणस्य च चत्वारि पलान्यष्टौ घृतस्य च।
परकीयस्य दुग्धस्य तथा देयानि षोड़श॥
द्वात्रिंशत् शीतलस्यापि जलस्य च पलानि च।
आदौ विचार्य्य पयसः परिमाणं बलं रुचिं॥
आकस्मिकं प्रदातव्यं पुण्यार्थं तु गवाह्निकं।
प्रभाते लवणं पत्रं दीयते च ततो जलं॥
ततस्तृणानि भुञ्ज्यन्ते शोषणं मांसवर्जितं।
निशि दीपः समन्तज्ञो[१] द्विव्याः पौराणिकास्तथा॥
एवं कृते रत्नपूर्णां महीं दत्त्वा फलं लभेत्।
गोप्रदानाच्च यत्पुण्यं गवां संरक्षणात् लभेत्"॥

आदित्यपुराणे,—

"योऽग्रभक्तं किंचिदप्राश्य दद्याद्-
गोभ्यो नित्यं गोव्रती-सत्यवादी।
शान्तो दान्तो गोसहस्रस्य पुण्य,
संवत्सरेण प्राप्नुयाद्धर्मशीलः"॥

देवीपुराणे,—

"गवां स्वामी गवां गोष्ठे यस्तु धूपं न कारयेत्।
मक्षिकालीननरके मक्षिकाभिः स भक्ष्यते॥

---

(१) सतन्त्रीकाः।

मृतवत्सां तु गां यस्तु दमित्वा पिवते नरः।
(१)गर्भितास्ये चिरं तिष्ठेत्क्षुधार्त्तो वै नराधमः" ॥

गर्भितास्ये नरके।

महाभारते,—

"गोकुलस्य तृषार्त्तस्य (२)जलार्थं (३)प्रतिधावतः।
उत्पादयति यो विघ्नं तमाहुर्ब्रह्मघातकं ॥
कृत्वा गवार्थं शरणं शीतवातसहं महत्।
आसप्तमं तारयति कुलं भरतसत्तम!" ॥

शरणं गृहं। ब्रह्मपुराणे,—

"सदोषा गोगृहे जाता परिपाल्या (४)स्वयं तथा।
अनाथानां गवां दत्त्वा कार्य्यस्तु शिशिरे महः ॥
पुण्यार्थं यत्र दीयन्ते तृणतोयेन्धनानि च"।

तत्र मनुः,—

"सौरभयि! जगन्मातः! देवानाममृतप्रदे!।
गृहाण वरदे ग्रासमीप्सितार्थं च देहि मे" ॥

इति गोदर्शनप्रसङ्गेन गोपरिचर्य्या लिखिता।

अथाश्वत्थदर्शनं। विद्याकरपद्धतौ,

"दुरितानि प्रणश्यन्ति नृणामश्वत्थसेविनां।
दृष्टः स्पृष्टस्तथा ध्यातः कीर्त्तितः स हि (५)तारयेत्" ॥

अश्वत्थं दृष्ट्वा प्रार्थना।

---

(१) ताड़िनास्ये। (२) जलान्त। (३) वसुधाधिपः।
(४) सदा स्वयं। (५) पावयेत्।

"अश्वत्थ! यस्मात् त्वयि वृक्षराज!;
नारायणस्तिष्ठति सर्वकालं।
तस्मात् शुचिस्त्वं सततं तरूणां,
धन्योऽसि [१]दुःस्वप्नविनाशनोऽसि॥
क्षीरदस्त्वं फलदस्त्वं येन श्रीस्त्वां निषेवते।
तेन सत्येन वृक्षेन्द्र! मामपि श्रीर्निषेव्यतां॥
यस्तु प्रदक्षिणं कुर्य्याद् भक्त्याश्वत्थं दिने दिने।
तं सर्वदुरितान्याशु त्यजन्ति वपुरर्चितं॥
दुःप्रतिग्रहदुर्भोज्यदुःसङ्गदुरधीतकैः।
मुच्यतेऽहरहर्दोषैरश्वत्थद्रुमसेवनात्"॥

ततः प्रदक्षिणमन्त्रः,—
"अग्निगर्भ! शमीगर्भ! यज्ञगर्भ! सनातन!।
हिरण्यगर्भ! श्रीगर्भ! वेदगर्भ! नमोऽस्तु ते॥
चक्षुःस्पन्दं भुजस्पन्दं दुःस्वप्नं दुर्विचिन्तितं।
शत्रूणां च समुत्थानमश्वत्थ! शमयस्व मे॥
एकादशोऽसि रुद्राणां वसूनामपि चाष्टमः।
नारायणोऽसि देवानां वृक्षराजोऽसि पिप्पल!॥
त्वां दृष्ट्वा नश्यते पापं स्पृष्ट्वा लक्ष्मीर्विवर्द्धते।
प्रदक्षिणाद्भवेदायुः सदाश्वत्थ! नमोऽस्तु ते"॥

तथा,—
"मन्दवारे द्विजो मौनी प्रातरुत्थाय भक्तिमान्।

---

(१) चारिष्ट।

पुण्यतीर्थे शुचिः स्नात्वा प्राप्य मङ्गल्यं हरिद्रुमं ॥
पौरुषेण विधानेन संपूज्य प्रणवेन वा।
कृतसर्वोपचारोऽथ प्रतहन्तः समाहितः ॥
जपन् प्रदक्षिणं [१]कुर्य्यात् प्रणवं संस्मरन् हरिं।
आलिङ्ग्य प्राङ्मुखः पश्चाद्ध्यायंस्तेजोमयं हरिं ॥
अश्वत्थरूपिणं विष्णुमिमं मन्त्रमुदीरयेत्।
त्वं धाम सर्वधाम्नां च [२]बोधात्मा [३]बोधरुच्यते ॥
यथाश्लिष्टो [४]मया भक्त्या वृक्षश्रेष्ठ! जगत्पितः!।
आराम्ते अग्निरत्नास्तु आरात् परशुरस्तु ते ॥
निवाते त्वाभिवर्षन्तु स्वस्ति तेऽस्तु वनस्पते!"।

इत्यालिङ्गनमन्त्रः।

तथा,— "आराम्त इति चैवैनं प्रणमेद्दण्डवन्नतः।

प्रणामे आराम्त इति स्वस्ति मेऽस्तु वनस्पत;—इत्यतो मन्त्रः।

एकस्मिन् शनिवारे कृतस्य फलमाह,—

"प्रायश्चित्तमिदं शुद्धं पातकेषु महत्स्वपि।
धन्यं पुत्रार्थमायुष्यं महारोगैकभेषजं ॥
किं चान्यत्सर्वभावेन कृतमेतद्धरिप्रियं"।

प्रतिशनिवारं वर्षपर्य्यन्तकरणे फलमाह,—

"यस्तु संवत्सरं कुर्य्यादेवं शनिदिने शुचिः।
तस्योपदिशति स्वप्ने मं समागं हरिः स्वयं" ॥

---

(१) कृत्वा। (२) बोधात्मो।
(३) बोधि। (४) यदा।

बिल्ववृक्षदर्शनं,—

"दर्शनात् बिल्ववृक्षस्य वन्दनात् स्पर्शनादपि ।
अहोरात्रकृतं पापं नश्यत्येव हि नारद ! ॥
बिल्ववृक्षं समाश्रित्य त्रिरात्रोपोषितः शुचिः ।
हरिनाम जप(१)न्नित्यं ब्रह्महत्यां व्यपोहति ॥
ये तु पापा दुराचाराः श्रीतरोश्छेदकारिणः ।
तेऽपि याद्यापि नरके पच्यन्ते ब्रह्मणो दिनं ॥
मृतास्ते जीवमानाश्च ब्रह्मघ्नाः कीर्त्तिता भुवि ।
तस्मिन् देशे भयं नित्यं यत्र श्रीवृक्षच्छेदकः" ॥

तथा तुलसीदर्शने,—

"दृष्टा स्पृष्टा तथा ध्याता कीर्त्तिता नमिता स्तुता ।
रोपिता चिन्तिता नित्यं पूजिता तुलसी गृहे ॥
नवधा तुलसीभक्तिं ये कुर्वन्ति दिने दिने ।
युगकोटिसहस्राणि ते वसन्ति हरेः पुरे ॥
दर्शनात् स्पर्शनात्सेकाद्रोपणात् पालनान्नृणां ।
तुलसी हरते पापं वाङ्मनः(२)कायसंचितं ॥
स्नाने दाने तथा ध्याने प्राशने केशवार्चने ।
तुलसी (३)हरते पापं कीर्त्तने रोपणे कलौ ॥
यः (४)स्पृष्ट्वा तुलसीं गच्छेत् कार्य्यसिद्धिस्तु तस्य वै" ॥

---

(१) लक्षं । (२) कर्मचिन्तितं ।
(३) दहते । (४) स्मृत्वा ।

तथा,—

"केशवायतने यस्तु कारयेत्तुलसीवनं।
लभते चाक्षयं स्थानं पितृभिः सह वैष्णवः॥
तावद्वर्षसहस्राणि यावद्वीजदलानि तु।
वसन्ति वैष्णवे लोके तुलसीरोपका नराः॥
शिवालये फलं [1]तत्तु तुलसीरोपणे [2]भवेत्"॥

तुलसीस्तुतिः ;—

"महाप्रसादजननी सर्वसौभाग्यवर्द्धिनी।
आधिव्याधिं हरे[3]नृणां तुलसी त्वं नमोऽस्तु ते॥
नमिता त्वं पुरा विप्रैरर्चिता त्वं सुरासुरैः।
तुलसी हर [4]मे पापं [5]पूर्वजन्मशतार्जितं॥
[6]जयं देहि यशो देहि कीर्त्तिमायुर्यथासुखं।
बलं पुष्टिं तथा धर्मं तुलसी त्व नमोऽस्तु ते॥
अनन्यमनसा नित्यं तुलसीं स्तौति यो जनः।
देवपितृमनुष्याणां प्रियो भवति सर्वदा॥
श्रियः श्रिया वहे नित्यं नित्यं श्रीधरसत्कृते।
भक्त्या दत्तं मया तुभ्यमर्घ्यं गृह्ण नमोऽस्तु ते॥
तुलसीकानने यस्तु मुहूर्त्तमपि विश्रमेत्।
जन्मकोटिकृतात्पापान्मुच्यते नात्र संशयः॥
प्रदक्षिणं यः कुरुते पठन्नामसहस्रकं।

(१) तद्वत्। (२) लभेत। (३) नित्यं।
(४) ते। (५) सर्वं। (६) श्रियं।

तुलसीपत्रमादाय मद्भक्तो यत्र [१]तिष्ठति ॥
अहं तत्रैव गच्छामि गौरिव सुतवत्सला ।
शरीरे यस्य विप्रर्षे! तुलसीदलविन्दवः ॥
नश्यन्ति तस्य पापानि महापातकजानि च ।
[२]तन्मूलमृत्तिकालेपं कृत्वा स्नात्वा दिने दिने ॥
दशाश्वमेधावभृथस्नानजं लभते फलं ।
मन्दिरे यस्य राजेन्द्र! तुलसीमूलमृत्तिका ॥
न संचरन्ति [३]दूतास्तु यमस्याज्ञा[४]भिधायिनः" ।

यमदूतवाक्यं,—

"दर्शनमाशु कृष्णाहे त[५]द्दोषोऽयं द्विजो मतः ।
न स्पृशेत्तुलसीं यावद्द[६]शाहं च ततः परं" ॥

तथा,—

"तुलसीदलवातोत्थरजसा शुद्धदेहिनः ।
किं करिष्यत्यसंत्रुष्टो यमो दण्डधरोऽपि सन्" ॥

अत्र गुरूणां गृहं गत्वा तद्दर्शनादिकं कार्य्यं, गुरुणैव हि पर्वसु, पर्वसु गच्छेदित्यर्थः, अन्यथानियम इति, प्रत्यहं गुरुदर्शनस्य स्नातकव्रतत्वेन नित्यत्वेऽपि पर्वस्वगमनं दोषातिशयमित्यर्थः ।

यमः,—

"देवकार्य्यं ततः कृत्वा गुरुमङ्गलवीक्षणमिति" ।

---

(१) गच्छति । (२) तुलसी ।
(३) भूता । (४) अभिधानतः ।
(५) तद्दयोग्योऽयं । (६) दशाहाद्धि ।

गुरवश्च शंखलिखितौ, अथ मान्याः,—

पिता माता पितृभार्य्या ज्येष्ठभ्राता ज्येष्ठभगिनी, ज्येष्ठपाश्च पितुः सखा, पितुराचार्य्यपितृव्यमातुलश्वश्रूश्वशुरवृद्धाः।

वशिष्ठः,—

गुर्वधिकारे, उपाध्यायपत्नी दीक्षितः प्रव्रजितोराजावृद्धो-ज्ञानवृद्धस्तपोवृद्धश्चेति।

मनुः,—मातापितरावुक्त्वा।

"तयोर्नित्यं प्रियं कुर्य्यादाचार्य्यस्य च सर्वदा।

तेषु च त्रिषु तुष्टेषु तपः सर्वं समाप्यते"॥

भविष्यपुराणे,—

"उपाध्यायाद्दशाचार्य्यः आचार्य्याणां शतं पिता।

सहस्रं तु पितुर्माता गौरवेणातिरिच्यते"॥

"हत्वोपाध्यायमादौ तु ये पूज्याः कथितास्तव।

महागुरुर्महावाहो! सर्वेषामधिकः स्मृतः"॥

महागुरुश्च,—

"यस्त्वेतानि पुराणानि समस्तानीह जानते।

भारतं च महावाहो स सर्वज्ञो मतो नृणां॥

तस्माच्च पूज्यो राजेन्द्र! वर्णैर्विप्रादिभिस्तथा"।

मनुः,—

"अग्न्याधेयं पाकयज्ञानग्निष्टोमादिकान् मखान्।

यः करोति वृतो यस्य स तस्यर्त्विगिहोच्यते॥

विप्राणां ज्ञानतो ज्यैष्ठ्यं क्षत्रियाणां च वीर्य्यतः"।

यमः,—

"यो वै युवाप्यधीयानस्तं देवा स्थविरं विदुः ।

एवं च गुरूणामेवमादीनां गृहं गत्वा अभिवादनादीनि पूर्वोक्तक्रमेण कर्त्तव्यानि. गुरुवीक्षणं तदभिवादनं प्रत्युत्थानं प्रत्युद्गमः।

विष्णुः,—नादित्यमुद्यन्तमीक्षेत नास्तं यान्तं नोपरक्तं, नभसि तिरोहितं नादर्शजलाद्युपगतं, न मध्याह्ने, उपरक्तो राहुग्रस्तः ।

हारीतः,— "नोदयास्तमये चन्द्रार्कौ" ।

देवलः,—

"सूर्य्याचन्द्रमसौ चोभौ नक्षत्राणि च सर्वशः ।

नोवीक्षेताशुचिर्नित्यं ग्रहानन्यांश्च मानवः" ॥

हारीतस्मृतौ देवलस्मृतौ,— "दर्शनमप्यशुचेर्निषिद्धं", "पतितान् चाण्डालोच्छिष्टाश्चावलोकयेत्" ।

(१)"अन्यदृष्टिगतैरेतैः संभाषेण नृणां वरं" ।

नृणां वरं ब्राह्मणं ।

मार्कण्डेयपुराणे,—

"देवताषिद्विशास्त्रधर्म(२)मत्यादिनिन्दकैः ।

कृत्वा तु स्पर्शमालापं शुद्ध्येतार्कविलोकनात् ॥

अवलोक्य तथोदक्यामन्त्यजं पतितं शवं ।

विधर्मसूतिकाषण्ढविवस्त्रान्त्यावसायिनः ॥

मृतनिर्यातकांश्चैव परदाररताश्च ये" ।

अर्कं पश्येदित्यर्थः ॥

---

(१) अनुवृत्तैरेतैः सम्भाषेत । (२) सत्यानिन्दितैः ।

स्कन्दपुराणे,—

"कृतघ्नं मानवं दृष्ट्वा नरकेष्वपि कुत्सितं।

शुद्ध्यर्थं देवि! द्रष्टव्याः सोमानलदिवाकराः"॥

सोमादीनां यथासम्भवं विकल्पः।

विष्णुपुराणे,—

"सम्वत्सरं क्रियाहानिर्यस्य विप्रस्य जायते।

तस्यावलोकनात् सूर्य्यो निरीक्ष्यः साधुभिः [१]सदा"॥

हारीतः,—

"अवगुण्ठित उच्छिष्टो, अमेध्यातुरयोनोर्द्ध्वज्योतींषि वीक्षेत न देववनस्पतीन्, प्रत्येकं निषेधः, अवगुण्ठितशिराः। नेक्षेत, उच्छिष्टहस्तो नेक्षेत अमेध्यातुरोऽमेध्यमध्यवर्त्ती। स्वयं शुद्धोऽपि, ऊर्द्ध्वज्योतिर्ग्रहणाद्भूमिगतवज्ज्ञानपादिदर्शने न दोषः"।

शंखलिखितौ,—

"न स्त्रियं विवसनां। न पुरुषमन्यतः स्वाभाव्यात्"।

स्वाभाव्यं वाल्यात्मत्वं, सांख्यायनगृह्ये,—"नग्नां परस्त्रियं न वीक्षेत, अन्यच्च मैथुनात्, अनाप्तमकार्य्यकारिणं, अनाप्तं शत्रुं, अकार्य्यकारिणं पातकिनं, नेक्षेतेत्यनुषङ्गः"।

विष्णुः,—

"न क्रुद्धस्य गुरोर्मुखं, न तैलोदकयोः स्वां छायां न मलवदादर्शं, [२]न किंच मेहमानं, न चपलं, न भग्नकूबरं, न विषमस्थो वृषादियुद्धं, नोन्मत्त मत्तं।

(१) सह। (२) नाकचन।

मनुः,—

[1]"न स्नायाच्चापयेया मार्त्तुं नेनामौचेत चाश्नतीं।
नाञ्जयन्तीं स्वके नेत्रे न चाभ्यक्तामनावृतां॥
युवतीं जृम्भमाणां वा न चासीनां यथासुखं।
न पश्येत् प्रसवन्तीं च तेजस्कामो [2]जितेन्द्रियः"॥

विष्णुः,— "न कूपमवलोकयेत्"।

याज्ञवल्क्यः,— "न च संसृष्टमैथुनां"। स्त्रियमीक्षेतेत्यर्थः।

मनुः,—

"न विण्मूत्रमुदीक्षेत, न पश्येदात्मनः शकृत्।

[3]अनात्मग्रहणमुद्दिश्य विशेषणत्वादविवक्षितं।

अथ स्पृश्यास्पृश्यानि। नीलाद्रिनाथव्यतिरिक्तविष्णु-मूर्त्तिस्पर्शनं सर्वपापहरं।

तथा,—

"लिङ्गस्य दर्शनं पुण्यं दर्शनात् स्पर्शनं [4]वरं"।

तत्र पठति,—

"अङ्गुष्ठमुच्छ्रितं कृत्वा मुष्टिं बद्धा तु दक्षिणे।
पिण्डिकायां न्यसेल्लिङ्गमङ्गुष्ठेन स्पृशेत्ततः॥
उमामहेशमन्त्राभ्यां स्पर्शनं मोक्षकाङ्क्षिणां।
शिवोमामन्त्रयोगेन स्पर्शनं भूतिमिच्छतां"॥

(१) नाश्नीया। (२) द्विजोत्तमः।
(३) अनात्म। (४) परं।

तथा,—

"गामालभ्य नमस्कृत्य कृत्वा चैव प्रदक्षिणं।

प्रदक्षिणीकृता तेन सप्तद्वीपा वसुन्धरा" ॥

विष्णुपुराणे,—

"स्मृताभिलषिता दृष्टा स्पृष्टा पीतावगाहिता"।

महाभारतमत्स्यपुराणयोः,—

"स्मरणाद्वै प्रयागस्य नामसंकीर्त्तनादपि।

मृत्तिकालम्भनाद्वापि नरः पापात् प्रमुच्यते" ॥

स्कन्दपुराणे,—

"रोपणात्पालनात्सेकात् स्पर्शनाद्दर्शनान्नृणां।

तुलसी [१]दहते पापं वाङ्मनःकायसंचितं" ॥

प्रातर्मङ्गला[२]लम्भं।

वामनपुराणे,—

"दूर्वां दधिसर्पिरथोदकुम्भं धेनुं सवत्सां वृषभं सुवर्णं।

मृद्गोमयस्वस्तिकमक्षतानि लाजामधुब्राह्मणकन्यकाश्च ॥

श्वेतानि पुष्पाणि तथा शमीं च हुताशनं चन्दनमर्कबिम्बं।

अश्वत्थवृक्षं च समालभेत ततश्च कुर्य्यान्निजजातिधर्मं" ॥

तथा,—

"अश्वत्थं तीर्थराजं च सेवते न तु संस्पृशेत्।

अश्वत्थं पक्षवारेण तीर्थराजं च पर्वणि" ॥

(१) हरते। (२) लम्भने।

मनुः,—

[१]"न चाश्नीयाद्भार्य्यया सार्द्धं नैनामीक्षेत चाश्नतीं।

नाश्नयन्तीं स्वके नेत्रे न चाभ्यक्तामनावृतां॥

युवतीं जृम्भमाणां वा न चासीनां यथासुखं।

न पश्येत् प्रसवन्तीं च तेजस्कामो [२]जितेन्द्रियः"॥

विष्णुः,— "न कूपमवलोकयेत्"।

याज्ञवल्क्यः,— "न च संसृष्टमैथुनां"। स्त्रियमीक्षेतेत्यर्थः।

मनुः,—

"न विण्मूत्रमुदीक्षेत, न पश्येदात्मनः शकृत्।

[३]अत्रात्मग्रहणमुद्दिश्य विशेषणत्वादविवक्षितं।

अथ स्पृश्यास्पृश्यानि स्पृश्यास्पृश्यानि। नीलाद्रिनाथव्यतिरिक्तविष्णु-मूर्त्तिस्पर्शनं सर्वपापहरं।

तथा,—

"लिङ्गस्य दर्शनं पुण्यं दर्शनात् स्पर्शनं [४]वरं"।

तत्र पठति,—

"अङ्गुष्ठमुच्छ्रितं कृत्वा मुष्टिं बद्ध्वा तु दक्षिणे।

पिण्डिकायां न्यसेल्लिङ्गमङ्गुष्ठेन स्पृशेत्ततः॥

उमामहेशमन्त्राभ्यां स्पर्शनं मोक्षकाङ्क्षिणां।

शिवोमामन्त्रयोगेन स्पर्शनं भूतिमिच्छतां"॥

(१) नाश्नीया। (२) द्विजोत्तमः।
(३) अनात्म। (४) परं।

तथा,—

"गामालभ्य नमस्कृत्य कृत्वा चैव प्रदक्षिणं।
प्रदक्षिणीकृता तेन सप्तद्वीपा वसुन्धरा"॥

विष्णुपुराणे,—

"स्मृताभिलषिता दृष्टा स्पृष्टा पीतावगाहिता"।

महाभारतमत्स्यपुराणयोः,—

"स्मरणाद्वै प्रयागस्य नामसंकीर्त्तनादपि।
मृत्तिकालम्भनाद्वापि नरः पापात् प्रमुच्यते"॥

स्कन्दपुराणे,—

"रोपणात्पालनात्सेकात् स्पर्शनाद्दर्शनान्नृणां।
तुलसी [१]दहते पापं वाङ्मनःकायसंचितं"॥

प्रातर्मङ्गला[२]लम्भं।

वामनपुराणे,—

"दूर्वां दधिसर्पिरथोदकुम्भं धेनुं सवत्सां वृषभं सुवर्णं।
मृद्गोमयस्वस्तिकमक्षतानि लाजामधुब्राह्मणकन्यकाश्च॥
श्वेतानि पुष्पाणि तथा शमीं च हुताशनं चन्दनमर्कबिम्बं।
अश्वत्थवृक्षं च समालभेत ततश्च कुर्यान्निजजातिधर्मं"॥

तथा,—

"अश्वत्थं तीर्थराजं च सेवते न तु संस्पृशेत्।
अश्वत्थं पङ्गुवारेण तीर्थराजं च पर्वणि"॥

(१) हरते। (२) लम्भने

अत्राश्वत्थवृक्षस्पर्शनं यत्प्रातर्मङ्गलत्वेन विहितं तदतिरिक्तं निषिद्धं । मन्दवारे चाश्वत्थस्पर्शनं फलार्थं विधीयते । समुद्रस्य स्पर्शनमपि विहितेतरं निषिध्यते । पर्वणि च तृतीयभागे स्पर्शनविधिः ।

तत्र

"सिन्धोः सेतोः सरस्वत्याः सङ्गमात् पुरुषोत्तमात् ।
विना पर्व सरिन्नाथं स्पृशेदन्यत्र न क्वचित्" ॥

तेन पुरुषोत्तमादिव्यतिरिक्तस्थले पर्वव्यतिरेकेण समुद्रस्पर्शनं निषिद्धं । स्नानाङ्गत्वेन समुद्रस्य विधानात् स्नानकालीनस्पर्शनत्वं न निषिध्यते न च स्पर्शननिषेधपरः । अविहितस्पर्शननिषेधपरत्वोपपत्तेः । अन्यथा हि स्नाननिषेधः स्यात् ।

"स्पर्शनादिव्यवृक्षस्य दर्शनाद्वन्दनादपि ।
अहोरात्रकृतं पापं नश्यत्येव न संशयः" ॥

अस्पृश्यानि । चाण्डालस्पर्शनविण्मूत्रादीनि स्नानाचमनप्रकरणे व्याख्यातानि ।

मनुः—

"अनातुरः स्वानि खानि संस्पृशेदनिमित्ततः ।
रोमाणि च रहस्यानि सर्वाण्येतानि वर्जयेत्" ॥

याज्ञवल्क्यः,

"गोब्राह्मणानलान्नानि [(१)]नोच्छिष्टो न पदा स्पृशेत्" ।
उच्छिष्टः केनाप्यङ्गेन स्पृशेत् । पदा च शुद्धो न स्पृशेत् ।

(१) नोच्छिष्टो न पदा स्पृशेत् ।

महाभारते,— असुरविषये लक्ष्मीवाक्यं।

"अपवृत्तं यथोच्छिष्टन्[१]उच्छिष्टस्य स्पृशन् घृतं"।

तेन दानवेषु नाहं वसामीति सम्बन्धः। उच्छिष्ट इत्यनुवृत्तौ सम्बन्धः।

"न स्पृशेच्च तथाशिरः"।

देवलः,—

"शिरोभ्यङ्गा[२]विशेषेण तैलेनाङ्गं विलेपयेत्"। नेतिसम्बन्धः।

महाभारते,—

"शिरःस्नातस्तु तैलेनाङ्गं किञ्चिदपि स्पृशेत्"। एतच्च स्नानाङ्गत्वेनोक्तं। पुनः स्नातकव्रतमध्ये गणनं प्रायश्चित्तविशेषार्थं। इति लघूनि स्नातकव्रतानि। अथ श्रोतव्यानि। श्रव्याश्रव्यभेदेन द्विविधानि। तत्र भगवन्नामश्रवणं सर्वत्र प्रसिद्धं। सामान्यतो विशेषतश्च। महाभारतीयविष्णुनामसहस्रं य इदं शृणुयान्नित्य-मित्यादिरूपेण विहितं तत्फलार्थं।

अथ भगवद्गीतामधिकृत्य महाभारते,—

"श्रद्धावाननसूयश्च शृणुयादपि यो नरः

सोऽपि मुक्तः शुभान् लोकान् प्राप्नुयात् पुण्यकर्मणां"॥

एवं,—

"श्रद्धयापि कुरुश्रेष्ठ! श्रुतेन कथितेन च।

गजेन्द्रमोक्षणं नेदं दीर्घमायुरवाप्नुयात्"॥

(१) उच्छिष्टवा। (२) अवशिष्टेन।

इति विष्णुधर्मे,—

एवं तत्र स्तोत्रश्रवणं। शिवनामग्रहणं शिवस्तोत्रश्रवणं। सूर्य्यनामश्रवणं। दुर्गानामग्रहणं। मार्कण्डेयपुराणीयदेवीमाहात्म्यश्रवणं।

"श्रोष्यन्ति चैव यो भक्त्या मम माहात्म्यमुत्तमं"।

इत्यभिधानात्फलार्थं गणेशस्तोत्रनामश्रवणं च।

अथाश्रव्याणि,—

मार्कण्डेयपुराणे,—

"वेददेवद्विजातीनां साधुसत्यमहात्मनां।
गुरोः पतिव्रतानां च तथार्थं च[१] तपस्विनीं॥
परिवादं न कुर्वीत परिहासेऽपि पुत्रक!।
कुर्वतामविनीतानां न श्रोतव्यं कथंचन"॥

देवलः,—

"गृहे पररहस्यानि नैवोपशृणुयान्नरः"।

यमः,—

"नैव ब्रूयान्नशृणुयाद्दुष्टवाक्यं कथंचन"।

दुष्टवाक्यं, परदोषाभिधायिवाक्यं॥

तथा,—

"ब्राह्मणानां परीवादो [२]निन्दा वापि प्रवर्त्तते।
कर्णौ तत्र पिधातव्यौ गन्तव्यं वा ततोऽन्यतः"॥

(१) तथा यश्च तपस्विनां। (२) निन्दार्थाभि।

वायुपुराणे,—

"योगं परिवदेद्यस्तु ध्यानिनं मोक्षकाङ्क्षिणं।
स गच्छेन्नरकं घोरं श्रोतारश्च न संशयः"॥

वाक्छलसम्पथेषु वराहपुराणे,—

"श्रुत्वा परस्य वाक्यानि यद्भवेन्मर्म्मभेदना।
तेन पापेन लिप्येऽहं यद्यहं नागमेत्पुनः"॥

इति [1]अव्याज्याणि। समाप्तानि श्रोचव्रतानि।

इति श्रीमन्महामहोपाध्यायाग्निचिद्वाजपेयिनरसिंहविरचिते
नित्याचारप्रदीपे तृतीयभागकं समाप्तम्।

---

(१) श्रोनव्याश्रोनव्यानि।

# अथ चतुर्थभागकृत्यम् ।

अत्र च ब्रह्मचारिणो "ऽभ्यङ्गमञ्जनं चाक्ष्णो"रिति मनुना चाभ्यङ्गनिषेधादुत्तरेषां चैतद्विरोधाच्च गृहस्थस्यापि ब्रह्मचारिधर्मातिदेशादभ्यङ्गनिषेधः प्रतिभाति ।

तन्नु नास्ति,

"नित्यं नैमित्तिकं काम्यं क्रियाङ्गं मलकर्षणम्" ।

इति [१]चाङ्ग मलापकर्षणस्नानाभ्यनुज्ञानात् । मलापकर्षणं नाम स्नानमभ्यङ्गपूर्वकमिति व्याख्यानात् ।

दक्षस्मृतौ च,—

"नित्यं नैमित्तिकं काम्यं त्रिविधं स्नानमुच्यते ।
तेषां मध्ये तु यन्नित्यं तत्पुनर्भिद्यते त्रिधा ॥
मलापकर्षणं वाह्यो मन्त्रवत्तु जले स्मृतं ।
सन्ध्यास्नानमुभाभ्यां तु स्नानदेशाः प्रकीर्त्तिताः" ॥

इति नित्यस्नानमध्ये मलापकर्षणस्नानस्य गणनादस्य निरवकाशत्वेन गृहस्थैकधर्मत्वात्तद्विरुद्धब्रह्मचारिधर्मस्याभ्यङ्गनिषेधस्यानतिदेशः । किं च अष्टम्यादौ तैलाभ्यङ्गनिषेधस्य तद्विहिते तदितरताभ्यनुज्ञापरत्वे पर्य्युदासत्वेन लक्षणाप्रसङ्गादष्टम्यादावेव दोषापत्तेस्तत्प्रायश्चित्तविरोधान्नरकपातस्मृतिविरोधाच्च यद्यपि नान्यतिथिष्वनुज्ञापरत्वं । तथापि सर्वदा निषेधत्वे तिथिविशेषनिषेधवैयर्थ्यप्रसङ्ग एवान्यथानुपपत्त्या तिथ्यन्तरेऽनुज्ञां सूचयति । न च दोषातिशयार्थत्वेन विशेषनिषेधः सार्थकः ।

(१) प्रांखेन ।

दोषातिशयकल्पनापेक्षया (१)तर्हि तत्रानुज्ञाकल्पनस्य पूर्वोक्त-
युक्तिसाहित्येन लघुत्वादिति गृहस्थस्य नाभ्यङ्गनिषेधः ।

तत्र विष्णुपुराणे,—

"चतुर्दश्यष्टमी चैव अमावास्या च पूर्णिमा ।
पर्वाण्येतानि राजेन्द्र! (२)रविसंक्रमणे न च" ॥
"तैलस्त्रीमांसभोगी च सर्वेष्वेतेषु पर्वसु ।
विण्मूत्रभोजनं नाम नरकं प्रतिपद्यते" ॥

अत्र तैलपदस्य तिलप्रभवस्नेहे मुख्यता । सर्षपादौ च । कात्यायनः । तैलप्रत्ययानुशासनस्य महाभाष्यकृता च गौण-प्रयोगेण प्रत्याख्यानात्सर्षपैरण्डस्नेहे मुख्यतैलभावान्यतैलनिषेधे तन्निषेधः । यत्तु पठन्ति,

"पक्वतैलं गन्धतैलं सार्षपं पुष्पवासित" ।
अन्यार्हस्थाप्यदुष्टं स्यात् द्रव्यान्तरयुतं तथा ॥

तथा,— सार्षपस्य प्रतिप्रसवोऽनुवाद एव । पक्वतैलाभ्यनुज्ञायां दृष्टान्तार्थः । एवं निवाहस्ताश्रवर्ज्येषु तैलमित्यपि वामनपुराणीयं तिलप्रभवस्नेहविषयं । यत्तु वृद्धशातातपवचनं,—

"आसप्तमकुलं हन्ति तैलग्रहणमष्टमी" ।

तदष्टम्यां तिलस्नेहस्य दोषातिशयार्थं ।

चतुर्दश्यां तु "आसप्तमं कुलं हन्ति शिरोऽभ्यङ्गे चतुर्दशी"ति वचनात् शिरोऽभ्यङ्गे घृतसर्षपादेरपि निषेधः । न गात्राभ्यङ्गे । वामनपुराणे— "नन्दासु नाभ्यङ्गमुपचरेत्" । अत्र सर्वस्नेहनिषेधः ।

(१) तद्दिनगता ।  (२) रविसंक्रान्तिरेव च ।

पक्वतैलादेरष्टकावभ्यनुज्ञा। नन्दा प्रतिपत्षष्ठ्येकादश्यः। एवं च षष्ठीषु तैलमिति तैलपदं स्नेहमात्रपरं। दोषातिशयार्थं वा तैलस्य पुनर्निषेधः।

तथा,– सप्तम्यां तैलसंस्पर्शादिषु भार्य्या विनश्यतीति तत्र व्याख्येयं। तत्र तैलभक्षणमपि निषिद्धं।

तथा,–यत्र तैलोपभोगनिषेधस्तत्र भक्षणस्यापि निषेधः।

तथा,–

"मोहात्प्रतिपदं षष्ठीं कुहूरिक्तां तिथिं तथा।
तैलेनाभ्यञ्जयेद्यस्तु चतुर्भिः परिहीयते"॥

चतुर्भिः, आयुःप्रज्ञायशोबलैः। तेन चतुर्थीनवम्योरपि तैलनिषेधः।

शिष्टाः,–

"पितृश्राद्धे प्रगे स्नाने द्वादश्येकादशीषु च।
सुरापानसमं तैलं तस्मात्तैलं विवर्जयेत्"॥

गारुड़े,–

"उपोषितस्य व्रतिनः कृत्तकेशस्य नापितैः।
तावच्छ्रीस्तिष्ठति प्रीता यावत्तैलं न संस्पृशेत्"॥

तथा,–

"[१]हृत्तापकीर्त्तिर्मरणं सुताश्च वित्तस्य नाशो निधनत्वमायुः।
सूर्य्यादिसौरान्तदिनेश्वराणां तैलोपभोगे क्रमशः फलानि"॥

रविकुजगुरुशुक्रवारेष्वपि निषेधः।

---

(१) हृता ता।

सदाचारस्तु स्त्रीणामेव वारवर्जनविचारो न पुंसामिति ।

यत्तु चिन्तामणौ,—

"पञ्चमी दशमी चैव पूर्णिमा च त्रयोदशी ।

एकादशी द्वितीया च द्वयोरपि च पक्षयोः ॥

अभ्यङ्गस्नानपानाद्यै[1]र्योऽत्र तैलं न संस्पृशेत् ।

चतुर्णां तस्य वृद्धिः स्याद्धनापत्यबलायुषां" ॥

अत्र पूर्णिमायामपि धनादिकामस्य [2]विधिनिषेधाभावः । निषेधस्तु निष्कामस्य । तत्र चित्रादिनक्षत्रयोगेऽपि विहितत्वादेव न दोषः । पर्वणि हविःशेषमांसभक्षणवत् ।

तथा च शिष्टाः पठन्ति,—

"दशम्यां तैलमस्पृष्ट्वा यः स्नायादविचक्षणः ।

चत्वारि तस्य नश्यन्ति आयुःप्रज्ञायशोबलं" ॥

तदुपवाससमाचे नित्यव्रतसिद्ध्या काम्यव्रतानुष्ठानाभावे [3]बोध्यं ।

देवलः,—"शिरोऽभ्यङ्गावशेषेण तैलेनाङ्गं विलेपयेत्" ।

नेतिसम्बन्धः । शिरःकार्य्यार्थं पृथगेव तैलमित्यर्थः ।

"सर्वदा तु तिलैः स्नानं पुण्यं व्यासोऽब्रवीन्मुनिः" ।

इति वचनान्निषेधाभावाच्च तिलपिष्टेन सर्वदिने स्नाने न दोषः

यत्तु चिन्तामणौ,—

"सप्तमीं चाप्यमावास्यां संक्रान्तिग्रहणेषु च ।

धनपुत्रकलत्रार्थी तिलपिष्टं न संस्पृशेत्" ।

(१) येऽत्र तैलं न सेवते । (२) विधिवन्नानिषेधाभावः ।

(३) बोद्धव्यं ।

तथा,—सर्व्वदा स्नानविधिपुष्पतावाक्यवशाद्धनपुत्रकलत्रकामस्य काम्यो निषेधः ।

यत्तु,—

"प्रतिपद्यनपत्यः स्यात् द्वितीयायामपत्नीकः ।
दशम्यामधनं स्नानं सर्वं हन्ति त्रयोदशी" ॥

तदारोग्यस्नानविषये राजमार्त्तण्डोपसंहारात्परमेव ।

शिष्टाः पठन्ति,—

"श्रीकामः सर्व्वदा स्नानं कुर्य्यादामलकै[1]र्नरः ।
तुष्यत्यामलकैर्विष्णुरेकादश्यां विशेषतः ॥
गङ्गास्नानाधिका धात्री प्रोक्ता माधववासरे ।
विघ्नानि नैव जायन्ते धात्रीस्नाने न वै नृणां" ॥

अत्र विशेषः,—

"नवम्यां दर्शसप्तम्यां संक्रान्तौ रविवासरे ।
चन्द्रसूर्य्योपरागे च स्नानमामलकैस्त्यजेत्" ॥

एतच्च श्रीकामनाभावेऽवगन्तव्यं । इदं च मलापकर्षणस्नान-स्यावश्यकर्त्तव्यत्वात्तन्निषेधदिने तिलपिष्टेनामलकपिष्टेन वा वहि-रुद्धृतोदकेन मलापकर्षणस्नानं कृत्वा माध्याह्निकस्नानारम्भः कार्य्यः ।

दक्षः,—

"चतुर्थे च यथा भागे स्नानार्थं मृदमाहरेत् ।
तिलपुष्पकुशादीनि स्नानं चाकृत्रिमे जले" ॥

---

(१) द्विजः ।

तत्र स्नानदेशाः प्रातःस्नानप्रकरणेनोक्ताः। नदीषु देवखाते-ष्वित्यादिना। तदुपलक्षणमन्नाचिमे जल इति।

कात्यायनः,— अतो नित्यं स्नानं नद्यादौ मृद्गोमययवकुश तिलसुमनस आहृत्योदकान्तं गत्वा शुचौ देशे प्रतिष्ठाप्य प्रक्षाल्य पाणिपादं कुशाग्रग्रहैः बद्धशिखायज्ञोपवीती चाचम्यो[१]रुगृह्णाति तोयमामन्त्र्यतर्जं"यतेऽशतमिति" "सुमित्रा न" इत्यपामञ्जलि-मादाय "दुर्मित्रा" इति द्वेष्यं प्रतिषिञ्चेदनभिमन्त्रितस्तूत्तरस्यां दिशि कटिवस्त्रूरुजंघे चरणौ करौ मृदा त्रिस्त्रः [२]प्रक्षाल्या-चमनमस्योदकमालभतेऽङ्गानि मृदेदं विष्णुरितिसूर्य्याभिमुखो मज्जेदापो अस्मानिति स्नात्वा [३]दिताभ्य इत्युन्मज्य निमज्ज्योन्म ज्ज्याचम्य गोमयेन विलिम्प्य"मानस्तोक" इति ततोऽभिषिञ्चेदिमं "मेवरुण" इति "तिसृभिर्मापउदुत्तमं मुञ्चन्ति" मावभृथेत्यन्ते चैतन्निमज्ज्योन्मज्ज्याचम्य दर्भैः पावयेत्"आपोहिष्ठेति" तिसृभि-रिदमापोहविष्यति "देवीरापो" इति द्वाभ्यां। "अपोदेवा-द्रुपदा"दिव" शन्नोदेवी" अपाग्ं ममपोदर्वि पुनन्तु मे नवभि-स्त्रिरपतिर्मेत्योंकारेण व्याहृतिभिर्गायत्र्या द्वावन्ते चान्तर्जलेऽघमर्षणं त्रिरावर्त्तयेद्रुपदां वायं गौरीत्यृच[४] वा प्राणायामं वा यश्चिर-स्कमोमिति विष्णोर्वा स्मरणं।

योगी याज्ञवल्क्यः,—

"मृद्गोमयतिलान् दर्भान् पुष्पाणि सुरभीणि च।

(१) बध्नीति। (२) प्रक्षाल्याचम्य नमस्योदकं।

(३) उदिदाभ्य। (४) गौ॰ति वा स्मर्षं वा।

आहरेत् स्नानकाले तु स्नानार्थं प्रयतः शुचिः ॥
गत्वोदकान्तं विक्त[1]तुमास्थाप्यैतत् पृथक् चितौ ।
त्रिधा कुर्य्यान्मृदन्तां तु गोमयं च विचक्षणः ॥
अधमोत्तममध्यानामङ्गानां चालनं तु तैः ।
भागैः पृथक् पृथक् कुर्यात् चालनं मृद्वस्तरः ॥
अद्भिर्मृद्भिश्च चरणौ प्रक्षाल्याचम्य वै शुचिः ।
उरुं हीतिवपस्तोयमुपस्थाय प्रदक्षिणं ॥
आवर्त्तयेत्तदुदकं ये ते शतमिति स्मृता ।
सुमित्र्या न इत्यञ्जलिमुद्धरेद्देवतं स्मरेत् ॥
सुमित्र्या न इति द्वेष्यां ध्यायं चापः प्रक्षेपयेत् ।
अद्भिर्मृद्भिश्च गात्राणि क्रमशः स्त्ववनेजयेत् ॥
एकया तु शिरः चाल्य द्वाभ्यां नाभेरधो[2]ऽपि च ।
कटित्रस्युरुजंघे च चरणौ च त्रिभिस्त्रिभिः ॥
प्रक्षाल्य हस्तावाचम्य नमस्कृत्य जलं ततः ।
यत्किंचिदिति मन्त्रेण नमस्येत्प्रयताञ्जलिः ॥
यत्र स्नाने[3] तु यत्तीर्थं नदी पुण्यतमा तु या ।
तां ध्यायेत् मनसा वाह्याद्न्यत्रेष्टं विचिन्तयेत् ॥
गङ्गादिपुण्यतीर्थानि कृच्छ्रमादिषु संस्मरेत् ।
उदुत्तममिति विशेषात्तज्जलं प्राङ्मुखः शुचिः ॥
येन देवाः पवित्रेति कुर्य्यादालम्भनं त्रिभिः ।

(१) विविक्त- ।    (२) रथोपरि ।
(३) स्थाने ।

महाव्याहृतिभिः पश्चादाचामेत् प्रयतोऽपि सन् ॥
आलभेत हृदङ्गानि इदं विष्णुरिति तृचा ।
भास्कराभिमुखो मज्जेदापो अस्मानिति तृचा ॥
ततोऽवहृष्य गात्राणि निमज्ज्योन्मज्ज्य वै पुनः ।
आचम्य गोमयेनापि मानस्तोक्या समालभेत् ॥
ततोऽभिषिंचेन्मन्त्रैस्तु वारुणैश्च यथाक्रमं ।
इमं मे वरुण इत्यृग्भ्यां त्वन्नः सत्वन्न इत्यपि ॥
आप उदुत्तममिति मुञ्चत्वावभृथेषु च ।
अभिषिच्य तदात्मानं निमज्ज्योन्मज्ज्य वै पुनः ॥
दर्भैस्तु पावयेन्मन्त्रैरलिङ्गैः पावनैः शुभैः ।
आपोहिष्ठेति तिसृभिरिदमापोहविष्मती ॥
देवीराप इति द्वाभ्यामापोदेवा स इत्यृचा ।
द्रुपदादिव इत्यृचा शन्नोदेवीरपां रसं ॥
आपोदेवी पावमान्यः पुनं[1]वादाहृतेन च ।
चित्पतिर्मेति च शनैः पाद्यात्मानं समाहितः ॥
जलमध्य स्थितो विप्रः शुद्धभावं हरिं स्मरन् ।
ओंकारेण व्याहृतिभिर्गायत्र्या च समाहितः ॥
आदावन्ते च कुर्वीत अभिषेकं यथाक्रमं ।
अपां मध्ये स्थितस्यैवं मार्जनं च विधीयते ॥
अन्तर्जले जपन्मग्नस्त्रिकृत्वमघमर्षणं ।
द्रुपदां वा त्रिरावृत्य अथ गौरितित्र्यृच ॥

(१) एतत्त्वाद्यातृचा न वा ।

हंसः शुचिषदित्यृचं चिरावृत्य जपेदथ।
अन्यानि चैव सूक्तानि स्मृतिदृष्टान्यनुस्मरेत्॥
सव्याहृतिं सप्रणवां गायत्रीं त्रिर्जपेदथ।
आवर्त्तयेद्वा प्रणवं स्मरेद्वा विष्णुमव्ययं॥
विष्णुरायतनं ह्यापः स ह्यपां पतिरुच्यते।
तस्यैव सूनवस्त्वेतास्तस्मात्त्वं ह्यप्सु संस्मरेत्॥
नराद्यपः प्रसूता वै तेन नारा इति स्मृताः।
ता एवास्यायनं यस्मात्तेन नारायणः स्मृतः॥
यो हि व्रतीनां देवानां यमस्य नियमस्य च।
भोक्ता च यज्ञतपसां योगिनां ध्येय एव च॥
ध्यायेन्नारायणं देवं स्नानादिषु च कर्मसु।
प्रायश्चित्तेषु सर्वेषु दुष्कृतान्मुच्यते पुमान्॥
प्रमादात्कुर्वतां कर्म प्रच्यवेताध्वरेषु यत्।
स्मरणादेव तद्विष्णोः सम्पूर्णं स्यादिति स्मृतिः॥
तद्विष्णोरिति मन्त्रेण मज्जेदप्सु पुनः पुनः।
मृद्भिरद्भिश्च कर्त्तव्यं शौचमादौ यथाविधि"॥

इति शङ्खवचनात् स्नानस्य प्रागेवाधमोत्तममध्यमाङ्गक्षालनं मृदा कृत्वा गोमयेनापि कर्त्तव्यं एतदनन्तरमेव [१]प्रभाते विद्यमानेत्येवं स्नानोपक्रमविधानादिति वदन्ति। तेन एकधा तु शिरःक्षालनं इत्यादिक्षालनानन्तरं स्नानमध्यगतमत्यवगन्तव्यं। "ततोभिषिञ्चेन्मन्त्रैस्तु वारुणैस्तु यथाक्रम"मित्यत्र त्वं नः सत्वं न

(१) प्रभूते।

इत्यनयोरग्निवरुणत्वाद्वृष्टिन्यायेन वारुणावारुणसमुदाये वारुणशब्दः, क्रमकथनादेव मन्त्रक्रमप्राप्तेर्यथाक्रममिति प्रतिवचनं। अभिषेकस्य प्रति मन्त्रं भेदकथ[१]नाय, अन्यथा हि मन्त्रवद्भुत्वस्य विवक्षितत्वा-दृष्टमन्त्रकरणक एवाभिषेकः स्यात्।

यथाक्रमं इत्यस्य लिङ्गस्यानन्यगतत्वात्तु तद्भेदः। सूर्यस्याभि-मुखो मज्जेदिति तडागादिपरं।

स्रवत्स्रोतः स्थित इति नरसिंहपुराणवचनादिति लक्ष्मीधरः।

शङ्खः,—

"क्रियास्नानं प्रवक्ष्यामि यथावदनुपूर्वशः।

मृद्भिरद्भिश्च कर्त्तव्यं शौचमादौ यथाविधि॥

जले निमग्नस्तून्मज्ज्य उपस्पृश्य यथाविधि।

तीर्थस्यावाहनं कुर्य्यात्तत्प्रवक्ष्याम्यतः परं॥

प्रपद्ये वरुणं देवमम्भसां पतिमूर्ज्जितं।

याचितं देहि मे तीर्थं सर्वपापापनुत्तये॥

तीर्थमावाहयिष्यामि सर्वाघ[२]विनिसूदनं।

सान्निध्यमस्मिन् वै तोये भजतां मदनुग्रहात्"॥

अयं चावाहनमन्त्रः। याज्ञवल्कीये स्नानेऽस्मरणादरक्[३]रवगन्तव्यं साकाङ्क्षत्वात्। बौधायनः,— "हस्तौ प्रक्षाल्य कमण्डलुं मृत्पिण्डं च परिगृह्य तीर्थं गत्वा त्रिः पादौ प्रक्षालयेत्त्रिरात्मानमथ हैके

(१) भेदज्ञापनाय। (२) सर्वाघविनिसूदनं।

(३) याज्ञवल्क्यस्नानेऽस्यावाहने मन्त्रान्तराग्रहणादवगन्तव्यमाकाङ्क्षि-तत्वात्।

मुचते श्मशानमपोदेव गृहं गोष्ठं चैत्यं च ब्राह्मणाः [१]प्रक्षाल्य तु पादौ मान्तः प्रवेष्टव्यं ।

यथाऽम्भोभिरभिपद्यते,

"हिरण्यशृङ्गं वरुणं प्रपद्ये तीर्थं मे देहि याचत ।
यन्मयाभुक्तमसाधूनां पापेभ्यश्च प्रतिग्रहः ॥
यस्मान्मे मनसा वाचा कर्मणा दुष्कृतं कृतं ।
तन्न इन्द्रो वरुणो बृहस्पतिः सविता च पुनः पुनः" ॥

तत्र पादप्रक्षालनार्थं अप्प्रवेशमन्त्रस्य । साकांक्षत्वादेव याज्ञवल्क्यस्नानविधिना गृह्यते ।

पद्मपुराणे,—

"नैर्मल्यं भावशुद्धिश्च विना स्नानं न विद्यते ।
तस्मान्मनोविशुद्ध्यर्थं स्नानमादौ विधीयते ॥
अनुद्धृतैरुद्धृतैर्वा जलैः स्नानं समाचरेत् ।
[२]इदं प्रकल्पयेद्विद्वान् मूलमन्त्रेण मन्त्रवित् ॥
ॐ नमो नारायणायेति मूलमन्त्र उदाहृतः ।
दर्भपाणिस्तु विधिना ह्याचान्तः प्रयतः शुचिः ॥
चतुर्हस्तसमायुक्तं चतुरस्रं समन्ततः ।
प्रकल्प्यावाहयेद्गङ्गामेभिर्मन्त्रैर्विचक्षणः ॥
विष्णोः पदप्रसूतासि वैष्णवी विष्णुपूजिता ।
पाहि नस्त्वेनमस्तस्मादाजन्ममरणान्तिकात् ॥
तिस्रःकोट्योऽर्द्धकोटी च तीर्थानां वायुरब्रवीत् ।

(१) मुखं । (२) तीर्थं ।

दिवि भुव्यन्तरीक्षे च तानि ते सन्ति जाह्नवि ! ॥
नन्दिनीत्येव ते नाम देवेषु नलिनीति च ।
नन्दा पृथ्वी च शुभगा विश्वकाया शिवाशिता ॥
विद्याधरी सुप्रसन्ना तथा लोकप्रसादिनी ।
क्षेमा च जाह्नवी चैव शान्ता शान्तिप्रदायिनी ॥
भागीरथी भोगवती जाह्नवी त्रिदशेश्वरी ।
गङ्गे देवि नमस्तुभ्यं प्रसीद परमेश्वरि ! ।
एतानि पुण्यनामानि स्नानकाले प्रकीर्त्तयेत् ॥
भवेत् सन्निहिता तत्र गङ्गा त्रिपथगामिनी ।
सप्तवाराभिजप्तेन करसंपुटयोजितः ॥
मूर्द्ध्नि कुर्य्याज्जलं भूयः त्रिचतुः पञ्च सप्त वा ।
स्नानं कुर्य्यान्मृदा (१)तेन आमन्त्र्य तु विधानतः ॥
अश्वक्रान्ते रथक्रान्ते विष्णुक्रान्ते वसुन्धरे ।
मृत्तिके हर मे पापं यन्मया दुष्कृतं कृतं ॥
उद्धृतासि वराहेण कृष्णेन शतबाहुना ।
नमस्ते सर्वलोकानां प्रभवारिणि सुव्रते " ॥

अयं स्नानविधिर्वेदमन्त्रशून्यत्वात् सर्ववर्णसाधारणः। शूद्रस्यापि पुराणमन्त्रेण ग्रहणाधिकारादित्याहुः। वस्तुतस्तु "तूष्णीमेव हि शूद्रस्य च नमस्कारकं स्मृत"मिति वचनात्तम इत्युक्त्वा मज्जनमात्रं शूद्रस्येत(२)श्रीधरः। अथ तीर्थकल्पनसाकाङ्क्षत्वात् याज्ञवल्कीय-

---

(१) तत्र। (२) शूद्रस्येति।

स्नानेऽपि ग्राह्यं। गङ्गाश्रवण[१]मन्त्रोऽपि तीर्थस्मरणे प्रवर्त्तते। सप्तवारं जलाभिषेकस्त्वभिषेकान्तरादिवद्बहुत्वाच्च प्रवर्त्तते अनुक्त-मन्त्रके मृद्ग्रहणे अश्वक्रान्ते इत्ययमपि मन्त्रः प्रवर्त्तत इति वदन्ति।

वशिष्ठः,—

"अथाग्निर्वाचयेत् स्नानं मध्याह्नात् प्राग्विशेषतः।
प्रयतो मृदमादाय दुर्गमाचं[२] च गोमयं॥
स्थापयित्वा तथाचम्य ततः स्नानं समाचरेत्।
मृदैकया शिरः चाल्य द्वाभ्यां नाभेस्तथोपरि॥
अधश्च तिसृभिः कायमधः पादौ तथैव च।
प्रक्षाल्य सर्वकायं च द्विराचम्य यथाविधि॥
ततः संमार्जनं कुर्य्यान्मृदा पूर्वं तु मन्त्रवित्।
अश्वक्रान्ते रथक्रान्ते विष्णुक्रान्ते वसुन्धरे॥
मृत्तिके हर मे पापं यन्मया दुष्कृतं कृतं।
उद्धृतासि वराहेण कृष्णेन शतबाहुना॥
मृत्तिके त्वां प्रगृह्णामि प्रजया च धनेन च।
मृत्तिके ब्रह्मदत्तासि काश्यपेनाभिमन्त्रिता॥
मृत्तिके जहि नः सर्वं यन्मया दुष्कृतं कृतं।
मृत्तिके देहि मे पुष्टिं त्वयि सर्वं प्रतिष्ठितं॥
पुनश्च गोमयेनैवमग्रमग्रमिति ब्रुवन्।
अग्रमग्रं चरन्तीनामोषधीनां रसं वने॥

(१) गङ्गास्मरणमन्त्रोऽपि। (२) दूर्वामाग्रं।

(१)आसामृषभपत्नीनां (२)पतितं कायशोधनं।
(३)तस्मै रोगांश्च शोकांश्च पापं मे नुद गोमय! ॥
काण्डात्काण्डादिति द्वाभ्यां दूर्वयाङ्गमुपस्पृशेत्।
कृत्वैवं मार्जनं मन्त्रैरश्वक्रान्तादिभिस्ततः ॥
"ये ते शत"मिति द्वाभ्यां तीर्थान्यावाहये(४)त्पुनः।
कुरुक्षेत्रगयागङ्गाप्रभासपुष्कराणि च" ॥

अत्र मध्याह्नात् प्रागिति चतुर्थभागोपलक्षणं, अतएव क्रम-विधानमात्रं स्नानादीनां न कालविधानमिति भ्रमो न कर्त्तव्यः। गोमयालम्भनकाले क्रियमाणानुवादिमन्त्रो अग्रमग्रमिति याज्ञ-वल्कीये गोमयालम्भे माकांचलात्प्रवर्त्तते मानस्तोक इति मन्त्रस्य मन्त्रकरणमन्त्रत्वेन विरोधाभावात्। काण्डादिति द्वाभ्यां दूर्वा-मार्जनमधिकत्वात् याज्ञवल्कीये वैकल्पिकं।

याज्ञवल्क्यः,—

"सन्ध्यात्रयं तु कर्त्तव्यं द्विजेनात्मविदा सदा"।

तथा,—

"पूर्वा सन्ध्या तु गायत्री सावित्री मध्यमा स्मृता"।

मध्यमां सन्ध्यामभिधाय शङ्खः,—

"एष एव विधिः प्रोक्तः सन्ध्ययोश्च द्विजातिषु।
तस्यां मध्यमसन्ध्यायां सावित्री द्विजसत्तम! ॥
युवतीं शुक्लवर्णां च चारुरूपां चतुर्भुजां।

---

(१) तासां। (२) पवित्रं।
(३) त्वं मे। (४) ततः।

शुक्लवासद्वयोपेतां तार्क्ष्यस्कन्धगतां शुभां ॥
शङ्खचक्रगदापद्मधारिणीं विष्णुदेवतां।
विष्णुलोकनिवासां तामायान्तीं सूर्य्यमण्डलात् ॥
रक्षा भवति गायत्री सावित्री शुक्लवर्णिका।
इति अत्र सूर्य्यमण्डलादिति सप्तम्यर्थे पञ्चमी"।

योगीयाज्ञवल्क्यः,—

"आचम्य पश्चादात्मानं त्रिराचम्य शनैरसून्[१]।
अथो[२]पतिष्ठेदादित्य[३]मर्द्धं पुष्पान्वितं जलं ॥
प्रक्षिप्योदयमुदूत्यं चित्रं तच्चक्षुरित्यपि।
हंसः शुचिषदेतानि पावनानि शुभानि च ॥
एतज्जपेदूर्द्ध्वबाहुः सूर्य्यं वीक्ष्य समाहितः।
गायत्र्या च यथाशक्ति चोपस्थाय दिवाकरं ॥
विभ्राड़ित्यनुवाकेन सूक्तेन पुरुषस्य च।
शिवसंकल्पेन तथा मण्डलब्राह्मणेन च ॥
दिवाकीर्त्त्यैश्च सौरैश्च मन्त्रैरन्यैश्च शक्तितः।
जपयज्ञो हि कर्त्तव्यः सर्व[४]यज्ञप्रणीतकैः ॥
पवित्रैर्विविधैश्चान्यैर्ब्रह्मोपनिषदा तदा।
अध्यात्मविद्या विविधा जप्तव्या जपसिद्धये।
प्रदक्षिणं समासाद्य नमस्कृत्योपविश्य च ॥

---

(१) स्मून्। (२) अथोपदिष्टे।
(३) मूर्द्धं। (४) वेद।

दर्भेषु दर्भपाणिः स्यात् प्राङ्मुखस्तु कृताञ्जलिः ।
स्वाध्यायन्तु यथाशक्ति ब्रह्मयज्ञार्थमाचरेत् ॥
आकेशादानखाग्रे च परमं तप्यते जपः ।
यः श्रद्धया द्विजोऽधीते स्वाध्यायं शक्तितोऽन्वहं ॥
आदावारभ्य वेदे तु खाल्योपर्युपरिक्रमात् ।
यदधीतेऽन्वहं शक्त्या स स्वाध्याय इति स्मृतः" ॥

तत्र मध्याह्नसन्ध्यायां जलाञ्जलि[1]प्रक्षेपपुष्पाञ्जितत्वनियमः । यत्प्रदक्षिणं [2]प्रक्रामति तेन पाप्मानमवधुन्वन्नीति तैत्तिरीयश्रुतौ वाक्यशेषे उद्यन्तमस्तं यान्तुमितिश्रवणान्मध्याह्नसन्ध्यायां प्रदक्षिणं ममन्त्रकं नास्तीदित्याहुः । तत्राप्यतिदेशात्प्रवर्त्तते इत्यन्ये शिव-संकल्पस्य मध्याञ्जितप्रसिद्धस्वरूपत्वं । मण्डलब्राह्मणं यदेतन्मण्डलं तपतीत्यादिकाण्वप्रसिद्धं । दिवाकीर्त्त्यः । रुद्राध्यायादिमन्त्रा-श्चाध्येष्टप्रसिद्धाः ।

सौराः । कदाचनस्तरीरसि । कदाचन: प्रयच्छसि । यशो देवानामिति त्रयो ग्राह्याः । अन्ये पवित्रमन्त्राः । अघमर्षणप्रभृतयः । ब्रह्मोपनिषदाः । साक्षाद्ब्रह्मप्रतिपादकवेदभागेन । अध्यात्मविद्या [3]द्विविधाः । सगुणब्रह्मपराऽपि । अत्र जपयज्ञपदं स्तुतिपरं । आदावुपस्थानाभिधानात् । दर्भपाणिः पवित्रोपग्रहव्यतिरिक्त-दर्भत्रयहस्तः ।

प्रदक्षिणनमस्कारोपवेशनादिब्रह्मयज्ञाङ्गं । तेन कालान्तरे

---

(१) प्रक्षिपेत् । (२) प्रक्रामन्ति ।
(३) त्रिविधाः ।

ब्रह्मयज्ञे। अत्र न भवति। यत्र कर्त्तव्यस्तत्र भवति। पैठीनसिः:— सावित्र्या मानसेन स्वाध्यायेन जपो व्याख्यायते। जपयज्ञस्य। जपः। इतरमन्त्रजपः। जपयज्ञो ब्रह्मयज्ञः। यथा स्वाध्याये मानसो सावित्र्या इति कर्त्तव्यता फलं च। तथा ब्रह्मयज्ञेऽपीति। कात्यायनः। प्रदक्षिणीकृत्य नमस्कृत्योपविश्येद्दर्भेषु दर्भपाणिः स्वाध्यायं च यथाशक्त्या वारभ्य वेदं। आपस्तम्बः। तस्य विधि[1]र- कृतप्रातराश उदकान्तं गत्वा प्रातः शुचौदेशे अधीयीत। यथा। स्वाध्यायमुत्सृजन् वाचा मनसा वाऽनध्याये। यद्दधीतं तच्च जानन् वाचाधीयात्। मनसाऽनध्याये तैत्तिरीयश्रुतौ ब्रह्मयज्ञेन यक्ष्य- माणः। प्राच्यां दिशि ग्रामाद्गच्छति। दर्भ उदीच्यां प्रागुदीच्यां वोदितस्यादित्ये दक्षिणत उपनीयोपविश्य हस्तावधनेनिज्य त्रिरा- चामेत् द्विः परिमृज्य सकृदुपस्पृश्य शिरश्चक्षुषा नासिके श्रोत्रे हृदयमालभ्य यत्त्रिराचामति तेन ऋचः प्रीणाति यद्द्विः परि- मृजति। तेन यजुंषि यत्सकृदुपविशति यत्सकृदुपस्पृशति। तेन सामानि। यत्सव्यं पाणिपादौ प्रोक्षति। यच्छिरश्चक्षुषी नासिके श्रोत्रे हृदयमालभते। ते अथर्वाङ्गिरसो ब्राह्मणानितिहासानि पुराणानि कल्पनगाथान् नारायणं सा प्रीणाति।

दर्भाणां बहुरूपास्तीर्योपस्थं कृत्वा प्रागासीनः स्वाध्यायमधी- यीत। तथा तत्रैव, दक्षिणोत्तरौ पाणिपादौ कृत्वा स पवित्रा वोमिति प्रतिपद्यते। तद्वै यजुस्त्रयीं विद्यां प्रत्येषावाचो तत्

(१) रभूत्।

परमक्षरं। यथा भूर्भुवः स्वरित्यादिस्तद्वै वाचः सत्यं यदेव वाचः सत्यं तत्संयुक्ताथ सावित्रीं त्रिरन्वाह पच्छोऽर्द्धर्चशोऽनवानं। सविता श्रियः प्रसविता श्रियमवाप्नोत्यथो प्रज्ञातयैव प्रतिपदा छन्दांसि प्रतिपद्यते। ग्रामे मनसा स्वाध्यायमधीयीत। दिवा नक्तं वा इ स्माहशौचाह्नेय उतारण्ये उत वाचोतिष्ठन्नुतासीन उत शयानोऽधीयीतैव स्वाध्यायं तपस्वी पुण्यो भवति य एवं विद्वान् स्वाध्यायमधीते। नमो ब्रह्मणे, नमोऽग्नये, नमः पृथिव्यै, नम ओषधीभ्यो, नमो वाचे, नमो वाचस्पतये, नमो विष्णवे, नमो बृहते, करोमि मध्यन्दिने प्रबलमधीयीत। नमो ब्रह्मणे इति परिधायत्रिरन्वाह उपस्पृश्य गृहानेति ततो यत्किञ्चिद्ददाति सा दक्षिणा। तत्र ग्रामे मनसाऽधीयीतेति विशेषः। अरण्ये उच्चैरित्यनुवादः। रात्रौ मनसा वाचा वेति विकल्पः। रात्रिरपि ब्रह्मयज्ञस्य एकः कालः; शेषं प्रयोगकाले व्याख्यास्यामः। स चार्वाक् तर्पणात्कार्य्यः। पश्चाद्वा प्रातराहुतेः। वैश्वदेवावसाने वा, नान्यथोक्तनिमित्तत्वादिति छन्दोगपरिशिष्टात्कालत्रय मुक्तं, रात्रौ देव्याः कालः मृत्युक्तः, शतपथश्रुतिः,—अथ ब्रह्मयज्ञः। स्वाध्यायो वै ब्रह्मयज्ञः। यावन्तं ह वा इमां पृथिवीं वित्तेन पूर्णां ददत् लोकं जयतीति तावन्तं। जयति भूयांसं च चाक्षय्यं य एवं विद्वानहरहः। स्वाध्यायमधीते तस्मात् स्वाध्यायोऽध्येतव्यः।

पय-आहुतयो ह वा(1) एता देवानां यदृचः स य एव विद्वानृचोऽहरहः स्वाध्यायमधीते पय-आहुतिभिरेव तद्देवांस्तर्प-

(1) ह वा।

यति(१) योगक्षेमेण प्राणेन रेतसा सर्वात्मना सर्वाभिः पुण्याभिः संपतद्भिर्घृतकुल्यामधुकुल्यापितृस्वधामभिवहन्ति ।

आज्याहुतयो ह वा एता देवानां यद्यजूंषि स य एवं विद्वान् यजूंष्यहरहः स्वाध्यायमधीते आज्याहुतिभिरेव तद्देवांस्तर्पयति त एनं तृप्ता—इत्यादिसमानं(२)। एवं सोमाहुतयो ह वा एष देवानां य सामानि, स य एवं विद्वान् सामान्यहरहः स्वाध्यायमधीते सोमाहुतिभिरेव तद्देवांस्तर्पयति ; त एनं तृप्तास्तर्पयन्ति इत्यादि-समानं। मेद-आहुतयो ह वा एता देवानां यदथर्वाङ्गिरसः स य एवं विद्वानथर्वाऽङ्गिरसोऽहरहः स्वाध्यायमधीते मेद आहुतिभिरेव तद्देवांस्तर्पयति ; त एनं तृप्तास्तर्पयन्तीत्यादि समानं। मध्वाहुतयो ह वा एता देवानां यदनुशासनानि विद्यावाक्यो वाक्यमितिहासपुराणं गाथाम(३)राशंस इत्यादि। तथा, स यदि प्रबलमिव न शक्नुयादप्येकं वेदपदमधीयीतैतत्तथाभूतेभ्यो न हीयते, तथा, यदि ह वा अप्यभ्यक्तोऽलंकृतः सुहितः सुखे शयने शयानः स्वाध्यायमधीत आहैव(४) स नखाग्रेभ्यस्तप्यते (५)यदथवा अथ छन्दसः स्वाध्यायमधीते न तेन हैवास्य यज्ञक्रतुनेष्टं भवति। तथा, तस्मादप्यृचं वा यजुर्वा साम वा गाथां वा कुम्भ्यां(६) वाभिव्याहरेद्व्रतस्य अव्यवच्छेदाय, अतः पय-आहुतिभिरेव तद्देवांस्तर्पय इत्यादेरथवा(७)हुत्वं, न च रात्रिसत्रवत्फलसमाचे यो निर्देशादि

(१) त-एनं तृप्तास्तर्पयन्ति । (२) इत्यादिमानं ।
(३) न— । (४) आं हव । (५) यद्यदाह ।
(६) पुण्यां वा । (७) गर्यवाहुत्वं ।

त्वर्थं(१)वादमेव फलं स्यादिति वाच्यं, पुरोडाशनिष्पत्तिद्वारा क्रतुफलनिराकांक्षप्रथनादेर्यज्ञपतिमेव प्रजया पशुभिश्च प्रथयति इत्याद्यर्थवादोक्तफलानाकांक्षवत् दृष्टरूपक्रतुज्ञानाभ्यामद्वारा क्रतुफलसिद्धेर्निराकांक्षत्वेन क्रतुपरभागाध्ययनस्यार्थवादोक्ते तु फलाकांक्षाभावात्। तदुक्तं भट्टाचार्य्यैः,—

"कर्माभ्यामानुसन्धानं विध्यर्थस्तत्र गम्यते." इति।

यत्त्वश्वमेधादिभागस्य ब्राह्मणेनाध्ययनं तस्यादृष्टकल्पनावश्यकत्वेन तेन तेनैवास्य यज्ञक्रतुनेष्टं भवतीति क्रतुफलमेव स्वल्पतरं कल्प्यत इति न घृतकुल्यादि फलं। यद्वा का ते च वाचमं न ह्यविद्वान् विहितो भवतीत्युक्तदिशा ऋत्विक्त्वविद्वत्ताया अपि कर्माङ्गत्वात् कर्मविधिभिस्तस्याप्यपेक्षितत्वेनाक्षिप्यार्थ ब्राह्मणस्याश्वमेधादितुल्यब्रह्मयज्ञाभ्यासः। अथ पश्वादीनां कथंचिदपि दृष्टार्था सम्भवेन तदध्ययनब्रह्मयज्ञस्यापि क्रतुफलमेव किंचिदर्थफलं कल्प्यते, तत्र फलमात्रे यो निर्देशादिति न्यायात्. न चैकस्य विधेः पुरुषभेदबोधकत्वमदृष्टतरं। प्रारब्धकाम्यस्य वैगुण्ये समापनविधेः तत्फलकामं प्रति तत्फलबोधकत्वमन्यपापक्षयफलं प्रति बोधकत्वमिति भट्टाचार्य्यैरेवोक्तत्वात् नानाशाखीयनानाविधानात् कस्यचित् प्रतिफलभेदबोधकत्वाच्चेति।

याज्ञवल्क्यः,—

"वेदाथर्वपुराणानि सेतिहासानि शक्तितः।

---

(१) इत्यते — ह्यनुमानं— स्यादित्युक्तं। नित्यार्थवादिकमेकफलं स्यादिति वाच्यं।

जपयज्ञार्थसिद्ध्यर्थं विद्यां चाध्यात्मिकीं जपेत्" ।

एवं क्रमेण वेदाध्ययनशक्तो "ब्रह्मयज्ञे जपन् सूक्तं पौरुषं चिन्तयन् हरिं" इति तावन्मात्रस्य जपः ।

अन्यच्च,—

"अनुष्टुप् त्रिष्टुप् गायत्री विज्ञेया सा शताक्षरा ।
शताक्षरां समावर्त्य चतुर्वेदफलं लभेत्" ॥

अनुष्टुप् त्र्यम्बकः, त्रिष्टुप् जातवेदाः ।

याज्ञवल्क्यः,—

"गायत्रीमि[१]त्यधिकृत्य विज्ञेया सा शताक्षरा ।
शताक्षरां समावर्त्य चतुर्वेदफलं लभेत्" ॥

बौधायनः,—

"प्रणवो व्याहृतयः सावित्री[२]त्येते पञ्च ब्रह्मयज्ञा अहरहः ब्राह्मणं किल[३] पावयन्ति," आपस्तम्बः,—"भूर्भुवः, स्वः, सत्यं तपः श्रद्धायां जुहोमीत्येते नैवास्य तदहः स्वाध्यायः समाप्तो भवति." आथर्वणीयतापनीयश्रुतौ,—"यः प्रणवमधीते स सर्वमधीते एतं सर्वं अशक्तस्य कल्प्याः । तर्पणं, शातातपः,–

"तर्पणं तु शुचिः कुर्य्यात् प्रत्यहं स्नातको द्विजः ।
देवेभ्यश्च ऋषिभ्यश्च पितृभ्यश्च यथाक्रमं" ॥

शुचिर्मन्त्रस्नानादिनापीति लक्ष्मीधरः । एवं प्रधानतया तर्पणमुक्तं प्रत्यहमिति वचनान्नित्यं ।

(१) गायत्रीमधिकृत्य :—"सोंकारा सव्याहृता— ।
(२) सावित्रीत्येषां च— । (३) किल्बिषात् ।

मनुयमातातपयाज्ञवल्क्याः,—

"यदेव तर्पयत्यद्भिः पितॄन् स्नात्वा द्विजोत्तमः।

तेनैव सर्वमाप्नोति पितृयज्ञक्रियाफलं" ॥

तर्पणाधिकारे छन्दोगपरिशिष्टे,—

"छायां यथेच्छेच्छरदातपार्त्तः,

पयःपिपासुः क्षुधितो यथान्नं।

बालो जनित्रीं जननी च बालं,

योषित् पुमांसं पुरुषश्च योषां ॥

तथा सर्वाणि भूतानि स्थावराणि चराणि च।

विप्रादुदकमिच्छन्ति सर्वे ह्युदककाङ्क्षिणः ॥

तस्मात् सदैव कर्त्तव्यमकुर्वन् महतैनसा।

युज्यते ब्राह्मणः कुर्वन् सर्वमेतद्बिभर्त्ति हि" ॥

विष्णुः,—

"स्नातश्चार्द्रवासा देवर्षिपितृतर्पणमम्भस्थ एव कुर्य्यात् परिवर्त्तितवासास्तीर्थतीरमुत्तीर्य्य"।

पद्मपुराणे,—

"देवान् ब्रह्म ऋषीन् सर्वान् तर्पयेदक्षतोदकैः"।

अक्षता यवाः,—

यदाभि(१)तर्पयेद्देवानिति छन्दोगपरिशिष्टात्।

शङ्खलिखितौ,— "नेष्टकाचिते पितॄंस्तर्पयेत्।

---

(१) अद्भिः।

वाप्यौ तड़ागोदकपानकूपेषु पंच चौन् पिण्डानुद्धृत्य देव-पितॄंस्तर्पयेत्" ।

उशनाः,—

"न वेष्टितशिराः कृष्णकाषायवाससा वा पितृतर्पणं कुर्य्यात्",

शंखः,— "स्नातः कृतजपोऽप्सुजानुदङ्मुखश्च दिव्येन तीर्थेन देवानुदकेन तर्पयेत्" ।

तथा,—

"विना रूप्यसुवर्णेन विना ताम्रमयेन वा ।
विना दर्भैश्च मन्त्रैश्च पितृणां नोपतिष्ठते ॥
सुवर्णरजताभ्यां तु खड्गेनोदुम्बरेण वा ।
दत्तमक्षयतां याति पितृणां तु तिलोदकं ॥
हेमेन सह यद्दत्तं क्षीरेण मधुनाथवा ।
तदप्यक्षयतां याति पितृणां तु तिलोदकं" ॥

अत्र सौवर्णेन पात्रेण रजतोदुम्बरखड्गेन पात्रेण शङ्खेनाप्युदकं पितृतीर्थं स्पृशन् दद्यादिति शङ्खेनैवापीत्यभिधानात् । सुवर्ण-रजत-ताम्रखड्गानां प्रत्येकं समस्तेन वा यथासम्भवमङ्गलं मधुक्षीरचन्द-नानां गुणफलार्थेन तर्पणसम्बन्धः पितृतीर्थं स्पृशन्निति पात्रेणापि दाने यथा पितृतीर्थे जलसंसर्गो भवति तथा कर्त्तव्यमित्यर्थः ।

योगियाज्ञवल्क्यः,—

"सौवर्णं रजतं ताम्रं मुख्यं पात्रं प्रकीर्त्तितं ।
तदभावे स्मृतं पात्रं स्रवते यच्च धारितं" ॥

नारिकेलकाष्ठादिपात्रमित्यर्थः ।

शंखः,—

"स्नातः स तर्पणं कुर्य्यात्पितॄणां तु तिलाम्भसा।

पितृलोकमवाप्नोति प्रीणाति च यथा पितॄन्" ॥

मरीचिः,—

"मुक्तहस्तं तु दातव्यं न मुद्रां तत्र धार[1]येत्।

वामहस्ते तिलान् ग्राह्यान् मुक्त्वा हस्तं तु दक्षिणं" ॥

मुद्रा तर्जन्यङ्गुष्ठसंयोग इति लक्ष्मीधरः. एवं मुक्तहस्त इत्यनेन मुद्रानिरासस्तस्यैव विवरणं न मुद्रां दर्शयेदिति मध्यमाङ्गुष्ठादिसंयोगस्य प्राप्तेरेव निषेधः। पितृतीर्थलाभाय तर्जन्या एव दानौचित्यात्।

योगियाज्ञवल्क्यः,—

"यदुद्धृतं प्रसिञ्चेद्वै तिलान् संमिश्रयेज्जले:।

अतोऽन्यथा तु सव्येन[2] तिला ग्राह्या विचक्षणैः" ॥

मानेन वामहस्तस्य तिलप्रक्षेपकत्वमुच्यते, किन्तु वामहस्ते तिला ग्राह्या इति मरीचिवचनादधिकरणत्वं तदयमित्यर्थः यदुद्धृतं कूपादितः पात्रान्तरे स्थापितं नद्यादेर्वा पात्रेण हस्ते गृहीतं सिञ्चेत्तदा जले कूपोद्धृत-जलपूर्ण-भूमिष्ठपात्रगते जले नद्याद्युद्धृततर्पणपात्रस्थे वा जले तिलान् मिश्रयेदुद्धृतपदस्याविशेषात्।

अतोऽन्यथा। यदा पात्राभेदेन भूमिष्ठपात्रगते जले अम्बुलिप्त-पात्रगतजले वा मिश्रणं न संभवति तदा जलग्रहणात्पूर्वं

(१) दर्शयेत्। (२) सव्येन।

वामहस्तभागे तिलान् दक्षिणहस्तेनैव स्थापयित्वा जलाञ्जलिं गृहीत्वा तर्पणं कार्य्यं, एवं सर्वं दृष्टार्थत्वे नियममात्रविधाना-ल्लघुत्वं। कूपोद्धृतभूमिष्ठपात्रगते अनेकाञ्जलिं तर्पणार्थं सकृदेव जलेन मिश्रणस्य तत्र न्यायसिद्धत्वात्, तेन कूपोदकभूमिष्ठपात्रा-त्पात्रं विनाञ्जलि[१]ग्रहणेऽपि न वामहस्ताधारकतिलग्रहणपूर्वकं जलग्रहणं, भूस्थपात्रतिलेनैव सतिलत्वशुद्धौ प्रयोगविधे[२]र्व्यापारा-न्तरप्रवेशासहनात् "अङ्गुष्ठेन तिलैः कुर्य्याद्देवता-पितृतर्पणं," इति स्मरणाद्धूर्वादौ स्थापनीयं। तिलसंख्यानियमे मानाभावात् कपिञ्जलाधिकरणन्यायेन बहुवचनस्य त्रिष्वेव चरितार्थत्वं, अधिक-प्रवेशे तस्यानङ्गत्वादेव न दोषः।

"तिलैः सप्तषुभिर्वापि समवेताम्बमाञ्जलीन्।

भक्तिनम्रः समुद्दिश्य भुव्यस्माकं प्रदास्यती"ति विष्णुपुरा-णीयं। अङ्गासम्भवे प्रत्याम्नाततर्पणविषयं, न तस्येह प्रसङ्गः।

मरीचिः.—

"तिलानामप्यलाभे तु सुवर्णरजतान्वितं।

तदभावे निषिञ्चेत दर्भैर्मन्त्रेण वाप्यथ" ॥

अङ्गा[३]सम्भवे प्रधानानुष्ठानात् प्रत्यवायपरिहारात्।

अङ्गवैगुण्येऽपि यद्यपि न दोषस्तथापि विशेषाभ्यनुज्ञानादभि-मन्त्रमात्रयुक्ततर्पणेऽपि पापक्षयरूपफलमपि भवतीत्यवगम्यते।

---

(१) अञ्जलिना। (२) प्रयोगविधिना। (३) तत्रासम्भवे।

अथ पठन्ति,—

"पितृश्राद्धे रवौ शुक्रे सप्तम्यां निशि सन्ध्ययोः।
संक्रान्त्यां जन्मदिवसे न कुर्य्यात्तिलतर्पणं॥
अयने विषुवे चैव ग्रहणे चन्द्रसूर्य्ययोः।
उपाकर्म्मणि चोत्सर्गे युगादौ पितृवासरे॥
रविशुक्रदिने वापि न दुष्येत्तिलतर्पणं।
तीर्थे तिथिविशेषे च गङ्गायां प्रेतपक्षके॥
निषिद्धेऽपि दिने कुर्य्यात्तर्पणं तिलमिश्रितं"।

अत्र पितृश्राद्धे निषेधो युगाद्ययनविषुवन्मृताहप्रेतपक्षव्यतिरिक्तविषयः, रविशुक्रदिने निषेधः सर्वापवादविषयः, सप्तमीनिषेधः तीर्थव्यतिरिक्ते तिथिविशेषे चेत्यभिधानात्।

सन्ध्यारात्रिनिषेधोऽपवादाऽभावः, संक्रान्तिनिषेधोऽयनविषुवगङ्गाप्रेतपक्षव्यतिरिक्तविषयः, जन्मदिवसनिषेधोऽपि गङ्गाप्रेतपक्षव्यतिरिक्तविषय-इति देवलः।

बौधायनः,—

"स्नातः[1] पञ्चभिर्ब्रह्मयज्ञैरद्भिरेवाप्सु देवतास्तर्पयति," पञ्च ब्रह्मयज्ञा बौधायनोक्तप्रणवव्याहृतित्रयगायत्र्यः, ब्रह्मयज्ञोत्तरमित्युक्तं भवति, तथा च स्थलतर्पणेऽपि तर्पणजलप्रक्षेपो जले कर्त्तव्य इत्युक्तं भवति। पुनर्बौधायनः,—

"नार्द्रवासा नैकवस्त्रो दैवानि कर्म्माण्युपसंचरेत्पितृकर्म्माणि चेत्येकेषां," अत एव स्थलतर्पणमेव बौधायनेनोपक्रान्तं।

(१) पञ्चः।

एकेषामिति वचनाज्जलतर्पणे पुनरार्द्रवाससेत्युक्तं भवति ।

शंखः,—

"नोदकेषु न पात्रेषु न क्रुद्धो नैकपाणिना ।
नोपतिष्ठति तत्तोयं यच्च भूमौ प्रदीयते" ।

तेन शंखमते स्थलस्थेन स्थल एव कर्त्तव्यमिति एवं च स्थलस्य स्थले प्रक्षेपो जले वा प्रक्षेपः कर्त्तव्यः, एवं च "उदकेनोदकं दद्यात्पितृभ्यश्च कदाचन," जले जलप्रक्षेपनिन्दावचनं शंखस्य स्थलप्रक्षेपस्तुत्यर्थं, उदितहोमनिन्दायां अनुदितप्रशंसापरत्ववत् । केवलं व्यवस्थासम्भवे अव्यवस्थानौचित्यात् । नद्यादितीरस्थेन स्थले स्थित्वा नद्यादौ तर्पणे क्रियमाणे जले प्रक्षेपः कर्त्तव्यः । तटाकादा-वुद्धृतोदकेन तर्पणे शङ्खमतेन स्थल—एवेति व्यवस्थापक्षः साधीयान् । जल एव तर्पणे जल—एव प्रक्षेपः । यदाह सुमन्तुः,—"आकाशे तु क्षिपेद्वारि जलस्थो दक्षिणामुखः," आकाशे जलोपर्य्याकाशे ।

अत एवाह वृहस्पतिः,—

"भूमौ यदापो दीयेत दाता चैव जले स्थितः ।
वृथा तद्दीयते तोयं नोपतिष्ठति कस्यचित्" ॥

तथा,—

"असंस्कृतप्रमीतानां स्थले दद्याज्जलाञ्जलिं" ।

इत्यविशेषजलस्थेन स्थलस्थेन वा असंस्कृतप्रमीतानां स्थल एव वस्त्रनिःपीडितानि[१] तोयानि देयानीत्यर्थः ।

तथा,— "प्रादेशमात्रमुद्धृत्य सलिलं सलिले क्षिपेत्" ।

---

(१) वस्त्रनिष्पीडिततोयं देयमित्यर्थः ।

कात्यायनः,—

"यद्वाङ्गिरसर्पयेद्देवान् सलिलैश्च पितॄनपि।
नमोऽन्ते तर्पयामीति आदावोमिति च ब्रुवन्"॥

ब्रह्माणं विष्णुं रुद्रं प्रजापतिं देवान् छन्दांसि, देवान् ऋषीन् पुराणाचार्य्यान् गन्धर्वाचार्य्यानितराचार्य्यान् सम्वत्सरं सावयवं देवीरप्सरसोदेवानुगान् नागान् सागरान् पर्वतान् सरितो दिव्यान् मनुष्यान् यक्षान् रक्षांसि पिशाचान् सुपर्णान् पृथिवीमोषधीः पशून् वनस्पतीन् भूतग्रामचतुर्विधमित्युक्तं भवति।

ततो निवीति मनुष्यांश्च

"सनकश्च सनन्दश्च तृतीयश्च सनातनः।
कपिलश्चासुरिश्चैव वोढुः पञ्चशिखस्तथा"॥

ततोऽपसव्यं तिलमिश्रं कव्यवालनलं सोमं च यमसर्यमणं च, अग्निष्वात्तान् सोमपा पितॄन् वर्हिषदः पितॄन् यमांश्चैके।

"यमाय धर्मराजाय मृत्यवे चान्तकाय च।
वैवस्वताय कालाय सर्वभूतक्षयाय च॥
औदुम्बराय दध्नाय नीलाय परमेष्ठिने।
वृकोदराय चित्राय चित्रगुप्ताय वै नमः॥
एकैकस्य तिलैर्मिश्रां[१]-प्रदद्यात् सलिलाञ्जलीन्।
यावज्जीवकृतं पापं तत्क्षणादेव नश्यति"॥

जीवत्पितृकोऽप्यनन्यांश्चेतरः, उदीरतामङ्गिरसोन आयान्तुनोऊर्जं वहन्ति पितृभ्यो ये चेह मधुवाता इत्युक्तं, जपन् सिञ्चन्। तृप्यध्व-

(१) स्त्रीं स्त्रीन् दद्याज्जलाञ्जलीन्।

मिति चिः, नमो व इत्युक्ता मातामहाचार्य्यगुरुश्वशुरशिष्यर्त्विक्-
ज्ञातिबान्धवाः, अतर्पिता देहाद्रुधिरं पिबन्ति।

ब्रह्मयज्ञानन्तरं, योगियाज्ञवल्क्यः,—

"ततः सन्तर्पयेद्देवानृषीन् पितृगणांस्तथा।
ब्रह्माणं तर्पयेत्पूर्वं विष्णुं रुद्रं प्रजापतिं॥
देवान् छन्दांसि वेदांश्च ऋषींश्चैव सनातनान्।
आचार्य्यांश्चैव गन्धर्वानाचार्य्यानितरांस्तथा॥
सम्वत्सरं सावयवं देवीरप्सरसस्तथा।
तथा देवानुगान्नागान् सागरान् पर्वतानपि॥
सरितोऽथ मनुष्यांश्च यक्षान् रक्षांसि चैव हि।
पिशाचांश्च सुपर्णांश्च भूतानि च पशूंस्तथा॥
वनस्पतींश्चौषधींश्च भूतग्रामचतुर्विधं।
अन्वारब्धेन सव्येन पाणिना दक्षिणेन च॥
तृप्यतामिति सक्तव्यं नाम्ना तु प्रणवादिना।
आवाह्य पूर्ववन्मन्त्रैरास्तीर्य्य च कुशान् शुभान्॥
प्रागग्रेषु शुभान् सम्यक् दक्षिणाग्रेषु वै पितॄन्।
सव्यं पाणिं ततो न्युब्जपाणिभ्यां दक्षिणामुखः॥
तल्लिङ्गैस्तर्पयेन्मन्त्रैः, पितॄन् पितृगणांस्तथा।
मातामहांश्च सततं श्रद्धया तर्पयेद्बुधः॥
प्राचीनावीत्युदकं च प्रसिञ्चेद्वै तिलान्वितं।
यद्युद्धृतं प्रसिञ्चेद्वै तिलान् सम्मिश्रयेज्जले॥
अतोऽन्यथा तु सव्येन तिला ग्राह्या विचक्षणैः।

दक्षिणे पितृतीर्थेन जलं सिञ्चेत् यथाविधि ॥
दक्षिणेनैव गृह्णीयात् पितृतीर्थसमागतः।
तिलानामप्यलाभे तु सुवर्णरजतान्वितं ॥
तदभावे निषिञ्चेत्तु दर्भमन्त्रेण वाप्यथ।
कव्यवालनलं सोमं यममर्य्यमणं तथा ॥
अग्निष्वात्तांसोमपांश्च तथा वर्हिषदः पितॄन्।
यदि स्याज्जीवपितृक एतान् दिव्यपितॄंस्तथा ॥
येभ्यो वापि पिता दद्यात्तेभ्यः पुत्रः प्रदापयेत्।
एतांश्च वक्ष्यमाणांश्च प्रमीतपितृको द्विजः ॥
वसून् रुद्रान् तथादित्यान् नमस्कारस्वधान्वितान्।
एते सर्वस्य पितर एष्वायत्ताश्च मानुषाः ॥
आचार्य्यांश्च पितॄन् स्वांश्च पितृप्रभृतिनामतः।
मन्त्रैश्च देयमुदकं पितॄणां प्रीतिवर्द्धनम् ॥
उदीरतामङ्गिरसो न आयान्तुनोर्य्यमित्यपि।
पितृभ्य इति ये चेह मधुवाता च इत्यृचम् ॥
पितॄन् ध्यायन् प्रसिञ्चेद्दै जपन् मन्त्रान् यथाविधि।
तृप्यध्वमिति च त्रिर्वै ततः प्राञ्जलिरानतः ॥
नमो व इति जप्त्वा च ततो मातामहान् सर्व्वान्।
संतर्पयेदात्मतृप्त्यै धर्मं परममास्थितः ॥
माता मातृष्वसा चैव मातुलानी पितृष्वसा।
दुहिता च स्वसा चैव शिष्यर्त्विक्ज्ञातिबान्धवाः ॥
नामतस्तु स्वधाकारैस्तर्प्यास्तु रनुपूर्वशः ॥

सवर्णेभ्यो जलं दद्यान्नासवर्णे कदाचन ।
पूर्वं स्वपितरस्तर्प्याः पश्चादन्यांश्च तर्पयेत् ॥
नास्तिक्यभावाद्यश्चैतान्न तर्पयति वै सुतः ।
पिबन्ति देहिनस्तोयं पितरश्च जलार्थिनः ॥
ततः स तर्पयेद्देवान् ऋषीन् पितृगणांस्तथा" ।

इत्यत्र ऋषितर्पणं मनुष्यतर्पणं च पद्मपुराणीयं सूचितं । तथा पद्मपुराणे, देवतर्पणानन्तरं ।

"कृतोपवीती देवेभ्यो निवीति च भवेत्ततः ।
मनुष्यांस्तर्पयेद्भक्त्या ऋषिपुत्रानृषींस्तथा ॥
सनकश्च सनन्दश्च तृतीयश्च सनातनः ।
कपिलश्चासुरिश्चैव वोढुः पञ्चशिखस्तथा ॥
सर्वे ते तृप्तिमायान्तु मद्दत्तेनाम्बुना सदा ।
मरीचिमत्र्यङ्गिरसौ पुलस्त्यं पुलहं क्रतुम् ॥
प्रचेतसं वशिष्ठं च भृगुनारदमेव च" । एतेन सनकादि-
मरीच्यादितर्पणं याज्ञवल्क्यानुक्तत्वादैकल्पिकमिति निरस्तम् । ब्रह्माणं तर्पयेत् पूर्वमितिनिर्देशादेव पूर्वत्वे प्राप्ते पूर्वपदं प्रत्येकं तर्पणप्राप्त्यर्थमित्यर्थः । पुराणनित्याचार्य्यविशेषणं कात्यायन-सम्वादात् । गन्धर्वानित्याचार्य्या[1]निति सम्बन्धः । सावयवमिति सम्वत्सरविशेषणं । अन्वारम्भेनेति अन्वारम्भः, कुशैरेवेति श्रौत-परिभाषायां इह प्रवेश मानाभावात् । पलाशशाखया पशु-मन्वारभते । भूत्वा समन्वारभेरन्नित्यादौ परस्परसंस्पर्शोऽन्वारम्भ-

(१) गन्धर्वान् तथाचार्यमितिसम्बन्धः ।

शब्ददर्शनादामहस्ते च वाङ्मयदर्शना[1]चारः। तृप्यतामिति तृपि-धातोः परस्मैपदित्वेऽपि छान्दस आत्मनेपदप्रयोगः। ब्रह्मणेति कर्त्तृवाचितृतीयान्तपदाध्याहारेण भावे प्रत्ययादात्मनेपदसाधुत्वो-पपत्तेश्छान्दसत्वं कथं कल्प्यमिति चेत्; इत्थं नाम्ना सेकव्यमिति नाम्नः सेकं प्रति करणत्वं निरपेचस्य तृतीयाश्रुत्योच्यते। समर्थः पदविधिरिति नैरपेचलचणसामर्थ्ये विभक्तिविधानात्। पद-विधि[2]रिति सार्वविभक्तिविधानेपि नैरपेच्यस्य महाभाष्ये लिख-नात्। नाम्नस्तु करणत्वमर्थज्ञानवारकं दृष्टं सत्यदृष्टाकल्पनात्। तथा च प्रयोगकाले कारकविभक्त्यन्तनामोच्चारणे विधिवाक्यश्रुतं नैरपेच्यं नाम्ना बाध्यते। कारकज्ञानसहितनामार्थज्ञानस्य तर्पण-क्रियाङ्गत्वापत्तेः। तेनानधिकारार्थप्रथमान्तनामोच्चारणं शब्दसाधु-त्वाय कार्य्यमिति तृप्यतामिति कर्त्तर्येव छान्दसमात्मनेपदमिति। अतएव तृप्यध्वमिति च त्रिवै इति कर्त्तृबहुत्वापेचं बहुवचनमपि दृश्यते।

भावे प्रत्यये बहुत्वासंगतेः। अतएव कल्पतरुकारो ब्रह्मा तृप्यता-मिति देवतर्पणवाक्यमाह। कर्काचार्यैस्तु ब्रह्माणमिति तर्पण-क्रियाकर्मत्वेन ब्रह्मादीन्[3] विधाय भूतग्रामचतुर्विधस्तृप्यतामिति प्रयोगमाचार्य्यो दर्शयति। ततश्च ब्रह्मा तृप्यतामित्येवं वाक्य-

(१) —समाचारः।

(२) पदविधिरिति सर्व्वविभक्तिकसमाश्रयणात् पदाय विधिरिति-विभक्तिविधानेपि नैरपेच्यस्य महाभाष्ये लिखितत्वात्।

(३) ब्राह्मादीन् विधाय—।

मित्युक्तं। एवं देवा[१]स्तृप्यन्तामितीत्येवं बहुवचनान्तप्रयोगः कर्त्तव्यः। दिव्यान्मनुष्यानिति छन्दोगपरिशिष्टस्मरणात्। मनुष्ये दिव्यपदं विशेषणमित्येके। अत्र सेक्तव्यमित्युक्तेऽपि प्रथमं ततः सन्तर्पये-द्देवानिति अद्भिरेव देवताः पितॄंस्तर्पयतीत्यादिवाक्याच्च द्रव्य-देवतासंयोगप्रतीतेः। देवतामुद्दिश्य जलत्यागः प्रक्षेपसमकालं कर्त्तव्यः। सेक्तव्यमिति प्रक्षेपस्यापि विधानाद्देवतामुद्दिश्य त्यागः प्रक्षेपश्चेति द्वयं तर्पणशब्दार्थः। न तत्प्रक्षेपस्याङ्गं,[२] सेकानुवादेन मन्त्रविधानात्तस्य तर्पणान्तर्भावे तर्पणाङ्गमन्त्रसम्बन्धायोगात्। उक्तं च तृप्यतामिति सेक्तव्यमिति। एवं पितृतर्पणेऽपि।

तत्र च।

"क्षिरपः प्रीणनार्थाय देवानामुप[३]वर्जयेत्।
पितॄणां च यथान्यायं सकृच्चापि प्रजापतेरिति" ॥

विष्णुपुराणवचनाद्देवतातर्पणे त्रिरभ्यासः।

यत्तु; "एकैकमञ्जलिं देवा द्वौ द्वौ तु सनकादयः।
अर्हन्ति पितरस्तांस्तान् पितॄन् स्त्रियस्त्वेकैकमञ्जलिं" ॥

इति। तेन देवतातर्पणे सकृत्त्रिर्वेति विकल्पः।

अत्र मन्त्रेण देवतोद्देशत्यागो मानस इति केचित्।

तदयुक्तं। चतुर्थ्यन्तपदेनैव देवतोद्देशात्। ब्रह्मा तृप्यतामिति मन्त्रे द्रव्यपदाभावेन देवतोद्देशत्यागस्मारकत्वेनैवाङ्गत्वात्। प्रतिक्षेपं च सोमयागग्रहाभ्यासन्यायेन देवतोद्देश इतिमन्त्रस्य तत्करणत्वेन

(१) वेदास्तृप्यन्तामित्येवं बहुषु—।
(२) -तत्प्रक्षेपस्याङ्गत्वं। (३) सपवर्ज्जयेत्।

चिराद्वृत्तिः। यत्तु, मन्त्रे द्रव्यवाचकद्रव्यपदाभावात्। वेदिं त्रिः-प्रोक्ष इति वेदिप्रोक्षणमन्त्रवत् मन्त्रस्यानावृत्तिरिति तन्न। एक-द्रव्ये कर्मावृत्तौ सकृन्मन्त्रवचनमित्येवं वेदिप्रोक्षणेन मन्त्रावृत्ति-[1]रभ्यासविशिष्टस्य सकृदेव कृत्वानुष्ठानात्। इह जलात् पृथक्करणं विना जलाञ्जलौ त्यागस्याशक्यत्वेन त्यागसमान[2]कालीनस्य देवतोद्देशत्यागस्यापि प्रत्यञ्जल्यावृत्तौ तत् स्मारकमन्त्रस्याप्यावृत्ते-र्न्याय्यत्वात्। न ह्येकदा भिन्नकालीनोद्धृतजलाञ्जलिषु त्यागसम-कालो देवतोद्देशः सम्भवति। न च तन्त्रेण सकृत् पूर्वं कृतो देवतोद्देशः त्यागत्रयमन्वेतीति वाच्यं। इदमिति द्रव्यनिर्देशं विना देवतोद्देशाभावात्। द्रव्यसम्बन्धित्वेन हि देवतोद्देशो न स्वतन्त्रः। प्रथमाञ्जलिकाले द्वितीयतृतीयाञ्जल्योरभावेन तदिदमिति निर्देशा-सक्तेः[3]। यत्त्वयुतहोमादौ सकृदेव सर्वाहुतीर्बुद्धौ कृत्वा देवतो-द्देशेन [4]त्यागसमाचार[5]स्तत्रानेककर्तृहोमे प्रत्येकयजमानेन देवतोद्देशस्य समकालं कर्त्तुमशक्यत्वेन तुल्यकामतावाधे सकृदेव लाघवात्करणं युक्तं। तत्र च मन्त्रस्य दृष्टार्थत्वेऽपि यजमानकर्त्तृक-देवतोद्देशे स्मारकत्वेनाङ्गत्वं। किन्त्वध्वर्युगतदेवतहविःपक्षे चास्मार-कत्वेनैव कर्माङ्गत्वं। अन्यथा तत्र मन्त्रवर्णिकदेवताकल्पनापत्तेः। व्याहृतिभिर्जुहुयादिति विधौ देवताविधानाभावेन मन्त्रवर्णा-देवाग्निवायुसूर्य्याणां देवतात्वकल्पनात्। तच्च मन्त्रस्याध्वर्युगता-स्यादिसम्बन्धिहविःप्रकाशकत्वे सङ्गच्छते। नान्यथा। जुहुं चाग्नये

(१) चिरभ्यास—। (२) -सम--।
(३) शक्तेः। (४) समाचारात्। (५) तत्रा-।

जुष्टं निर्वपामि इत्यादि मन्त्राणां देवतासम्बन्धिहविःस्मारकत्वेन दृष्टार्थत्वं। ऐन्द्रवायवं गृह्णातीत्यादीनां तथात्वेन देवताकल्पकत्वं च। अन्यथा, यजमानगतदेवतोद्देशार्थत्वे तत्र यजमानेन सकृदेव देवतोद्देशस्य कृतत्वात् पश्चाद्धोमेषु मन्त्रप्रयोगो न स्यात्। इह तु स्वयं क्रियमाणे प्रत्यक्षत्यागो नेमौ कर्त्तुं [१]शक्याविति वैषम्यं। आवाह्य पूर्ववन्मन्त्रैरिति याज्ञवल्क्यसंहितायां श्राद्धप्रकरणोक्तैर्मन्त्रैरित्यर्थः। तत्र विशेषः। श्राद्धे ब्राह्मणे देवपित्रावाहन, देवे प्रागग्रकुशत्रयास्तरणपूर्वकं तत्र देवतानामावाहनं। पित्र्ये तु [२]पितृब्राह्मणात् पूर्वं तदेव कुशत्रयं दक्षिणाग्रं कृत्वावाहनं। एतेनास्तृतकुशेष्वेव प्रागग्रदेवताङ्गत्वेन पित्र्याङ्गत्वेन च दक्षिणाग्रतासंस्कार उच्यते। न तु कुशास्तरणमिति भ्रमः कार्य्यः। अत्र च श्राद्धे ब्राह्मणे देवतावाहनं। तत्रैव हविःप्रक्षेपः। एवं दर्शादौ चाग्नौ देवतावाहनं, हविःप्रक्षेपश्च दृष्ट इति तर्पणजलप्रक्षेपेषु आवाहनाधारकुशेष्वेव कर्त्तव्य इति केचित्। तदयुक्तं। सामान्यतो दृष्टस्य धर्मे प्रमाणत्वात्। जलस्थस्यास्थलस्थस्य वा प्रक्षेपाधारस्य विहितस्य कुशान्तर्द्धाने मानाभावाच्च। तेन कुशानास्तीर्य्य कुशेषु प्रागग्रेषु पितॄनावाह्य तृप्यतामिति सेक्तव्यमिति प्राचीनान्वयः कर्त्तव्यः। अन्यथा वाक्योक्तत्वात् प्रत्ययस्यासंगतिप्रसङ्गात्। एवमुत्तीर्य्य वाससा धौतेन परिधायेत्युप[३]क्रम्य स्थलतर्पणस्य प्रस्तुतत्वात्तत्र च भूमेः प्रक्षेपाधारत्वस्य शङ्खेनोक्त-

(१) शक्ताविति —। (२) पितृतर्पणात् —।
(३) परिधयेत्यपक्रमेण।

त्वात्तत्र स्थले कुशानास्तीर्य्य तत्रावाह्य तत्रैव जलसेकः कर्त्तव्य इति वाक्यार्थः। जले तर्पणे तु यदि जलाशये प्रक्षेपाधारे कुशास्तरणासम्भवस्तदा तत्र कुशेष्वेव जलप्रक्षेपः। प्रवाहादिनास्तरणसम्भवे गुणलोपे तु मुख्यस्येतिन्यायेन यथा कथंचित् कुशान् यत्र क्वापि कृत्वा तत्रावाह्य जले जलप्रक्षेपणं इति विवेकः। अत्रावाहनमन्त्रमात्रातिदेशेऽपि प्रश्नस्यानुज्ञानार्थत्वादनुज्ञालोपे प्रश्नस्यापि लोपः। कार्य्यकारकत्वादतिदेशस्य कार्य्याभावेऽप्रवृत्तेः। न च प्रश्नस्यावाहनस्मारकत्वेन इह सम्बन्धः स्यादिति वाच्यं। विकृतौ कार्य्यान्तराकल्पनात्। तथा सति कृष्णलेष्ववघातस्यादृष्टकल्पनयाकृत्वापत्तेरिति प्राचीनावीत्युदकमिति, निवीती च भवेत्तत्र इति मध्ये मनुष्यतर्पणार्थं निवीतित्वं बोध्यं। मनुष्यत्वाविशेषात् सनकाद्यृषिपुत्रतर्पणे मरीच्याद्यृषिपुत्रतर्पणे च निवीतित्वं। [१]निवीतमनुमनुष्याणामिति श्रुतेरर्थवादत्वेऽपि संवीते[२] मानुषमिति श्रुतेरनन्यपरत्वाद्यज्ञोपवीतप्रकरणे पाठात्।

यत्तु, योगियाज्ञवल्क्यीये;—

"ब्रह्मादीनुपवीती तु देवतीर्थेन तर्पयेत्।

निवीती कायतीर्थेन मनुष्यान् सनकादिकान्॥" इति-

सनकादितर्पणं[३] तदपि पद्मपुराणे सनकाद्यनन्तरं मरीच्याद्युपादानात् सनकादिग्रहणेन मरीच्यादीनामपि संग्रहः। अतएव पद्मपुराणे, "निवीती च भवेत्तत्र" इत्युपक्रम्य सनकादि

(१) निवीतिं। (२) संवीति।

(३) ग्रहणं।

मरीच्यादितर्पणमुक्त्वा पश्चादेवापसव्यं, ततः कृत्वेति अपसव्यता विहिता। किंच बौधायनेनापि निवीती ऋषींस्तर्पयामीति-वाक्यमेव मनुष्यतर्पणे निवीतित्वमुक्तं। तथा च तैत्तिरीयश्रुतौ यज्ञोपवीतप्रकरणे अजिनं वासो दक्षिणत उपवीत्यदक्षिणं बाहु-मुद्धरेत्। अविधत्ते सव्यमिति यज्ञोपवीतं विपरीतं प्राचीना-वीतं। अत्र विपरीतमिति दक्षिणेऽवधत्ते सव्यमुद्धरत एवमपसव्यं भवतीत्युक्तं। संवीतं कण्ठपार्श्वद्वयलग्नं; तच्च मानुषमित्यर्थः। निवीतित्वं प्राचीनावीतित्वं चोत्तरीयवस्त्रस्यापि कर्त्तव्यं। यज्ञ-सूत्रत्वाविशेषात्।

"यथा यज्ञोपवीतं तु धार्य्यते च द्विजोत्तमैः।
तत्र संधार्य्यते यत्नादुत्तरात् साधनं शुभम्"॥

इति वाक्यदर्शनाच्च। अतएव श्राद्धप्रकरणे अपसव्यं वासो यज्ञोपवीते कृत्वेत्युक्तं। दक्षिणेनैव गृह्णीयादिति जलाञ्जलिपूरणं दक्षिणहस्तपितृतीर्थद्वारा। पात्रे पाणिग्रहणे तेनैव मन्त्रैर्दर्भेणेति।

"ऋजुदर्भैस्तु दैवं स्यात् कार्य्यं मानुषकं तथा।
मूलाग्रम्लिष्टदर्भैस्तु पितृणां तर्पणं स्मृतं"॥ इति

वाक्याद्दैवे मानुषे च ऋजवो दर्भाः। पित्र्ये द्विगुणीकृताः। तथा।

"अग्रे तु तर्पयेद्देवान् मनुष्यान् कुशमध्यतः।
पितॄंस्तु कुशमूलाग्रैरिति व्यवस्था मन्तव्या"॥

अग्निष्वात्तानित्यादिषु त्रिषु पितॄनिति सम्बध्यते।

एतदनन्तरं यमांश्चैक इति कात्यायनवचनाद्यमतर्पणं

वैकल्पिकं। यदि स्याज्जीवत्पितृक इति कात्यायनेन यमतर्पणा-नन्तरमेवमुक्तेर्वैकल्पिकं यमतर्पणमिव जीवत्पितृकस्य। यत्तु, मातृमरणे मातृतर्पणे समाचारः; स; "येभ्यो वापि पिता दद्यात्तेभ्यो वापि प्रदापयेदि"त्युक्तपक्षाश्रयणादेव; तस्य च पितृ-संस्कारत्वात्पितामहादीनां पितृतर्पणे [1]निषिद्धे पुत्रेण मातुः क्रियते। नमस्कारस्वधान्वितामिति वस्त्रादितर्पणमात्रविषयं। व्यवायेन भिन्नवाक्यत्वात्। तेन कव्यवालनलस्तृप्यतामित्येव प्रयोगः। तृप्यतामिति सेतत्व्यमित्यविशेषोपादानात्। यमतर्पणे तु यमाय नम इत्येवं वाक्यं। वस्त्रादितर्पणे वसवस्तृप्यन्तामिदं जलं तेभ्यः स्वधा नमः। इत्येवं वाक्यं। आचार्य्यास्विति चकारेण वस्त्रादिवन्नमस्कारं स्वधान्वितमतिदिश्यते। पितॄंस्त्वां स्वधेति नमःस्वधान्वितानिति दृश्यते चकारेण। पितृशब्दस्य सम्बन्धि-शब्दत्वे पितॄनित्युक्ता स्वस्यैव पित्रादयो लभ्यन्त एव। स्वानिति पुनर्वचनं प्रयोगवाक्ये स्वप्रकाशकपदोच्चारणार्थं। तेनास्मत्पिता इत्येवं प्रयोगः। एवं नामत इति नामोच्चारणे प्राप्ते पितृप्रभृतिपदं पित्रादिपदोच्चारणार्थं। एवं पितृप्रभृतीनि पदानि नामत इति द्वन्द्वः। तातस्तृतीयार्थे[2] पितृपितामहप्रपितामहादिपदनामाभ्यां देयमित्यर्थः।

अतएव पद्मपुराणे,--

"दर्भपाणिस्तु विधिना प्रेतान् स्वान् तर्पयेद्बुधः।
पित्रादिनामगोत्रेण तथा मातामहानपि" ॥

(१) तपशान सिद्धः। (२) तृतीयार्थं तच्छौमः।

अत्रापि स्वाभित्यसत्शब्दप्रयोगार्थं। गोत्रवाचकपदोच्चारणं अस्मादेव वचनात्।

"नामतस्तु स्वधाकारैरि"ति योगियाज्ञवल्क्यवचने नामगोत्र-स्वधाकारैरिति पाठान्तरपक्षे च व्यक्तमेव गोत्रपदोच्चारणं। नाम पदस्य विशेष्यपरत्वेनाभ्यर्हितत्वात् पूर्वनिपातेऽपि नामगोत्रयोः प्रयोगे पौर्वापर्य्यनियमे मानाभावात् प्रयोगकाले विशेषणसमर्पक[१]-त्वेन गोत्रस्य पूर्वं निर्देशः, पितृप्रभृतिपदस्य नाम्नां समासेन नामपूर्वं निर्देशः। तत्र सन्ततिर्गोत्रचरणमिति पर्य्यायपाठात् पुत्रपौत्रगोत्रशब्दार्थः। पुत्रपौत्रपरम्परामात्रविशिष्टमिति विशेष-लाभाय तदादिभूतपुरुषेणावच्छिन्नं गोत्रशब्दार्थः। यद्यप्यनादि-संसारे सृष्ट्याद्यभावपक्षेऽनादिपुरुषसम्भवस्तथापि कौत्सस्य ये पित्रादयः पूर्वे ये च तत्पुत्रादयोऽर्वाञ्चः सर्वे कौत्सत्वेन गोत्रान्तरेभ्यो व्यावृत्ताः कौत्सोपलक्षितपुत्रपौत्रपरंपरात्वेन गोत्रशब्दाभिधेयाः। एवं च गोत्रशब्दस्य परंपरारूपधर्मवाचित्वात्तद्धर्मविशिष्टव्यक्ति-लाभाय सगोत्र इति। तेनावच्छेदकपुरुषसमानपुत्रपौत्रपरंपराक इत्येवं विशेषणविशेष्यभावात्। कौत्ससगोत्र[२] निर्देशो भवति। अतएव "सगोत्रां मातुरप्येके नेच्छन्त्युद्वाहकर्मणी"ति। "असगोत्रा च या पितुरि"ति स्मृतिषु निर्देशः। यत्तु; अमुकामुकगोत्रैतत्तुभ्यमस्तु स्वधा नमः। तद्धर्मवाचिगोत्रपदस्य व्यक्तिलक्षणया न च स्वायत्ते प्रयोगे लक्षणा युक्ता। अत्र च

(१) सम्बन्धकत्वेन। (२) कौत्ससगोत्र-इति निर्देशः।

"शर्मान्तं ब्राह्मणस्योक्तं वर्मान्तं क्षत्रियस्य वै।

वैश्यस्य गुप्तसंयुक्तं दासान्तं शूद्रजन्मनः"॥ इति शर्म-पदस्यान्ते प्रयोगः। यत्तु; देवकरधर इत्यादि, अमुकदेवामुक-करामुकधर इत्येवं प्रयुज्यते तत्समाचारात्। यदा कल्पतरुलिखित-यमस्मृतिवाक्यस्य।

"शर्मदेवश्च विप्रस्य वर्मत्राता च भूभृतः।

गुप्तोदासाश्च वैश्यस्य दासः शूद्रस्य कारक"॥ इति देवपदस्य नाग्निप्रवेशः, शर्मा तु वचनाच्च शर्मपदस्य चान्ते प्रयोगः, तदा वचनमपि, मन्त्रेश्च देयमुदकमिति, अत्र मन्त्राणां करणत्व-निर्देशात् तस्य चोपक्रमस्थत्वेन बलीयस्त्वात्। "पितॄन् ध्यायन् प्रसिञ्चेद् जपेन्मन्त्रान् यथाविधि"रित्यस्य वाक्यस्य स्वपितृप्रभृति त्रयाणामञ्जलित्रकेण च मन्त्रव्यवस्थापरत्वेन जपश्चिति समान-कालनिर्देशानुवादत्वादविवक्षित इति न क्रियमाणानुवादित्वादि-भ्रमः कार्य्यः। एवं च कात्यायननिर्देशोऽप्येतत्समानत्वात्क्रिय-माणानुवादित्वपरमित्यवगन्तव्यं। भागश्चितिपूर्वदृष्टत्वेन अदृष्टे सति पित्रादिमात्रकल्पन तृप्यध्वमिति च त्रिर्वै इति बहुवचन-प्रयोगात्। पितृपितामहप्रपितामहाः तृप्यध्वमिदं जलं तेभ्यः स्वधा नम इत्येवमञ्जलित्रयं दातव्यमितिशब्दाच्च पूर्वेनवाञ्जलिभिः समुच्चयः। ततो मातामहानिति, तत्र इति श्रौत[1]कर्मत्वाभाव, तच स्मृत्यन्तरे मातृतर्पणस्य पितृतर्पणमातामहतर्पणमध्ये विधानाच्छ्रु-दासार्थं। किंच, "मातामहांश्च सततं श्रद्धया तर्पयेद्बुधः"।

(१) क्रम—।

इति मातामहादितर्पणस्य पूर्वमेव विहितत्वादिवचनं क्रमार्थमेव।

तथा च कात्यायनः, नमो व इत्युक्त्वा मातामहानां च।

विष्णुपुराणे,—

"पितॄणां प्रीणनार्थाय चिरपः पृथिवीपते!।
पितापिता[1]महेभ्यश्च प्रीणयेत् प्रपितामहान्" ॥
मातामहाय तत्पित्रे तत्पित्रे च समाहितः।
दद्यात् पैत्रेण तीर्थेन काम्यं चान्यच्छृणुष्व मे ॥
मात्रे प्रमात्रे तन्मात्रे गुरुपत्न्यै तथा नृप!।
गुरवे मातुलादीनां स्निग्धमित्राय भूभुजे" ॥

प्रमाता पितामहभार्य्या, तन्माता पितामहस्य वृद्धिस्थत्वा[2]-त्पितामही, एवं याज्ञवल्क्यकात्यायनयोर्मातृतर्पणमन्यत्र पतिना सहेतिन्यायेन पितृतर्पणान्तर्गतत्वान्न पृथक्कर्त्तव्यं, मातादिप्रीतिविशेषकामनया पृथक्कर्त्तव्यं चेन्मातामहादितर्पणानन्तरं कर्त्तव्यं। न कथंचिदपि पितृपितामहप्रपितामहतर्पणानन्तरं मातृपितामहीप्रपितामहीतर्पणं कार्य्यं, कल्पतरुकारेण तु मात्रादितर्पणमपि नित्यमेव स्मृत्यन्तरात् काम्यत्वं तु नित्यस्यैव सतः संयोगपृथक्त्वादितिवदता मातामहादितर्पणानन्तरं नित्यमेव मातृतर्पणमित्युक्तं, नित्यतोक्त्या याज्ञवल्कीयकात्यायनीययोर्मात्रादितर्पणं न पित्रादितर्पणान्तर्गतं। अत्र मातुः पृथक्श्राद्धमन्यत्र पतिना सहेत्यस्य श्राद्धपदस्य तर्पणविषयत्वे मानाभावे न याज्ञवल्कीयादौ मात्रादि-

(१) पितामहेभ्यश्च तथा—।
(२) वृद्धिस्थत्वात्-तत्प्रपितामहभार्य्या।

तर्पणमनुक्तमेव विष्णुपुराणाद्याखां, तथा च तन्मतेऽपि न माता-महादितर्पणात्पूर्वं मातृतर्पणं।

यत्तु मनुः—

"पित्रे पितामहाभ्यां च मात्रे दद्यात्ततो जलं।
पितामहस्ततो दद्यान्मातामहकुले ततः"॥ इति।

तथा च मरीचिः—

"पितॄणां तर्पणं पूर्वं मातॄणां तदनन्तरं"।

इति, गोभिलः, त्रीन् पितॄनः, त्रीन् मातृनः, तदपि याज्ञ-वल्क्यीयकात्यायनयोर्वाजसनेयिपरिगृहीतत्वेन, स्वशाखाश्रयत्वात्, विष्णुपुराणीयस्य प्रायेण वाजसनेयिनां परिगृहीतत्वेन।

"येनास्य पितरो याता येन याताः पितामहाः।
तेन गच्छेत्सतां मार्गं तेन गच्छंस्तरिष्यति"॥

इति मनुवचनादैकल्पिकविषये पूर्वपरिगृहीतमार्गाश्रयत्वस्य स्नातकधर्मत्वेन कथनात् तत्त्यागे स्नातकव्रतलोपापत्तेर्वाजसनेयिभिः पितृतर्पणानन्तरं मातामहादितर्पणं, तदनन्तरं च मातृपितामही-प्रपितामहीतर्पणं कर्त्तव्यमिति, तथा शाखान्तराधिकरणे,—

"स्वाध्यायग्रहणंनैकशाखाभिः परिगृह्यते।
एकार्थानां विकल्पस्तु कर्मैकत्वे भविष्यति"॥

इति शाखानां विकल्पेनाध्ययनमुक्त्वा तर्हि शाखाध्ययने न नियमः पित्रादिक्रमागतशाखां त्यक्त्वा शाखान्तरमपि कथं नाधीयत इति शङ्कायां वार्त्तिककारः संप्रदायगतमुक्त्वा स्वां समाख्यामनुवर्त्तिनौ।

"शाखां शाखान्तरं युक्तं नाश्रितुं सदृशे सति" इति पूर्व-परिगृहीतस्य ग्रहणमावश्यकमित्याह, यत्तु होलाधिकरणे स्मृतीनां सर्वधर्मत्वमुक्तं तदपि स्वशाखाश्रयाविरुद्धपरशाखाश्रयस्मृतिबोधिताधिकर्मण्यधिकारसिद्धिपरं।

स्वशाखाश्रयमभ्भवे वानुकल्परूपेण परशाखागतस्यापि पक्षस्यानुष्ठानेऽपि नाधिकारहानिरित्येवं परं च।

अन्यथा,

"स्वशाखाश्रयमुत्सृज्य परशाखाश्रयं तु यः।
कर्त्तुमिच्छति दुर्मेधा मोघं तत्तस्य चेष्टितं"॥

इत्यादिवचनानां निरालम्बनत्वापातात्। तथा बलाबलाधिकरणे स्वशाखाश्रयेण परशाखाश्रयं वाध्यत इत्युक्तं, यत्तु विकल्प[१]-माष्टदोषेषु, अङ्गीकृत्यापि तौ दोषौ पूर्वं केनापि हेतुना प्रयोगान्तरकाले तु पुनर्दोषद्वयं भवेदिति, एकस्यैव विकल्पे पक्षद्वयाश्रयणमुक्तं। तत्पक्षान्तरस्य पूर्वपरिगृहीतत्वेन व्यवस्थितप्रायविकल्पव्यतिरिक्तविकल्पविषयमेव। एवं च "कुरु वाजपेये सप्तदशैव वा गवास्तं कुरुवाजपेयमित्याचक्षत" इति परशाखागतशौनकल्पदक्षिणाश्रयणं वाजसनेयिनामनुकल्पमेव, यद्वा, वेदान्तर्गतशाखात्वात्सामशाखापि [२]स्वशाखा। त्रय्या विद्ययेति वेदत्रयात् शाखात्रयस्य सर्वेषां पूर्वपरिगृहीतत्वादिति। एवं च यत् पठन्ति:-

"मातामहानां यः कृत्वा मातॄणां संप्रयच्छति।
उदकं पिण्डदानं वा नरकं स तु गच्छती"ति तदाज-

---

(१) विकल्पस्याष्टदोषेषु —। (२) यच्छाखा।

सन्ध्येतरकालविषयं। प्रातः प्रातरनृतं ते वदन्ति पुरोदयाज्जुह्वति येऽग्निहोत्रमिति निन्दायथोदितहोमप्रसङ्गार्थं। तत्त्वनुदितहोमनिषेधार्थमिति सपत्न्यादिमातृविषयं चेति। न च याज्ञवल्क्ये, मातृतर्पणस्याप्यनुक्रम्य स्मृत्यन्तरात्समुच्चये स्मृत्यन्तरोक्तस्यानस्य समुच्चयाश्रयणात् शाखान्तरीयाङ्गप्रवेश इव क्रमस्थानेरदोषत्वाच्च स्वशाखाश्रयविरोध इति वाच्यं। ततो मातामहानिति श्रुतिक्रमबाधप्रसङ्गात्। विष्णुपुराणोक्तस्थाने निवेशविरोधाभावात्। शाखान्तरीयाङ्गमपि श्रुतिक्रमादिविरोधेनाङ्गानां पाठक्रमबाध एव शाखान्तराधिकरणे उक्तः। मातामहतर्पणानन्तरं मातृतर्पणप्रवेशेन श्रुतिक्रमबाध इति सर्वमनवद्यं, अथवा, ततो मातामहान् सर्वोनितिमध्ये सखितर्पणमुक्त्वा माता(१)मातृष्वसेति याज्ञवल्क्य आह, ततो मातृतर्पणं स्मृत्यन्तरसम्वादात् पितामह्यादितर्पणोपलक्षणं। "पूर्वं स्वपितरस्तर्प्याः पश्चादन्यांश्च तर्पयेत्"। इति वचनाच्च। सखितर्पणस्य पश्चाद्भावः, स्वपितृपदस्य सपत्नीकस्वकीयप्रेतपरत्वात् सख्यादीनां स्वपितृत्वाभावात्। अत्र यदि स्याज्जीवत्पितृक एतानेवेति नियमवन्मातामहे जीवति तर्पणनिषेधाभावात्। प्रमातामहादिषु पुरुषत्रयतर्पणं। "पितरो यत्र पूज्यन्ते तत्र मातामहा अपी"तिनियमवचनात् बहूनां प्राप्ते तर्पणोत्पत्तिवाक्ये च "मातामहांश्च सन्ततमि"ति मातामहपदोपस्थापितपितृमात्रादिवर्गस्य बहुत्वं प्रापितमिति प्रमातामहवृद्धप्रमातामहयोरेव द्वयोस्तर्पणं न तृतीयस्येति मतमिति संवन्धः, मातृतर्पणे तु "न

(१) मातापितृस्वसा।

जीवितु[1]मितिद्ध्यादि”तिनिषेधो जीवितु[2]मिति पुंस्त्वस्योद्देश्य-
विशेषणत्वेनाविवक्षितत्वान्मातामहवर्गवत्पितृपूजासाहित्यनियमस्य
“मातामहांश्च सतत”मितिवत्तर्पणनियमवचनस्य च निषेध-
प्रतिप्रसवहेतोरभावात् । मातरि जीवन्त्यां न पितामह्यादितर्पणं ।
पितामह्यां जीवन्त्यां मातृमात्रतर्पणमिति ।

“पिता यस्य तु वृत्तः स्याज्जीवेद्यापि पितामहः ।

पितुः स्वनाम संकीर्त्य कीर्त्तयेत् प्रपितामह” ॥ इति-
वत्प्रतिप्रसवाभावेन जीवितुमितिद्ध्यादितिनिषेधप्रवृत्तेः, पितुः
स्वनाम कीर्त्तयेदित्यत्र पितृपदस्य मात्रुपलक्षणपरत्वे पितामहपदस्य
पितामह्युपलक्षणपरत्वे मानाभावात् पितृपदेऽपि पितामांचेत्येक-
शेषः कथंचित् स्यात् । न तु प्रपितामहपदस्य प्रमातामहपरत्वे
किंचित् प्रमाणमस्ति, पितृप्रातिपदिकोत्पन्नप्रपितामहपदस्य
मातृपरत्वे प्रमाणसत्त्वे तद्द्वारा प्रमातामहलक्षकः स्यात्तत्र प्रमाण-
मिति, प्रमाणसत्त्वे भवतु तथा, मतामह्यादितर्पणे । केचिदन्ते
नमः शब्दं नेच्छन्ति, पितृन् स्वानितिवचने पितृशब्दस्य स्वकीय-
सपिण्डीकृतप्रेतपरत्वेन मातामह्यादिसंग्रहात् । तत्र स्वधानम
इति संगतेः । सख्यादितर्पणे तु नामतस्तु स्वधाकारैरित्युक्ता
नमः शब्दाभाव इति वदन्ति, नामशब्दस्य गोत्रसम्बन्धयोरुप-
लक्षकवत् स्वधाशब्दस्यापि पूर्वोक्तनमःशब्दोपलक्षणपरत्वं न्याय्यं
प्रतिभाति; अन्यथा, तृप्यतामिति पदं नामादिप्रणवोच्चारणमपि
परिशंक्षितं । तेनामुवादित्वात्तर्पणान्तरतुल्यं, तेनाच यथासम्प्रदायं

(१) जीवन्तमिति । (२) जीवन्तमिति ।

नमःशब्दप्रयोगः। अथ सख्यादिपुंलिङ्गान्तानां तर्पणं तर्पयेद्वा-नृशंस्यार्थमितिवचनात् काम्यमिति केचित्, तदसत्, कात्यायनेन ज्ञातिबान्धवान्तानामेषामेव तर्पणमुक्त्वा अतर्पिता देहाद्रुधिरं पिबन्तीति दोषोक्तेः, तेनानृशंस्यार्थं स्तुतिमात्रार्थं। अथ माता-महीप्रमातामहीवृद्धप्रमातामहीनां आचार्य्याचार्य्यपत्नीगुरुगुरु-पत्नीनां बौधायनोक्तं वैकल्पिकं, ज्येष्ठभ्रातृपितृव्यमातुलादीनां छन्दोगपरिशिष्टोक्तं वैकल्पिकं, स्मृतिशास्त्रविकल्पन्यायात्, अथ क्रमवाक्यं पठन्ति;—

"देवं पिता च माता च मातामहपितृव्यकौ।
भ्राता च पितृभगिनी मातुलः श्वशुरस्तथा॥
मातुः स्वसा च भगिनी पत्नी पुत्रस्तथैव च।
गुरवः स्वामिनश्चैव भावुकाश्चात्तबान्धवाः॥
पितृतर्पणकाले च कारणात् श्राद्धकर्मणि।
क्रमेणैते प्रयोक्तव्याः शौनकस्य वचो यथा"॥ इति—

अस्य च क्रमस्य पूर्वं स्वपितरस्तर्प्या इति याज्ञवल्क्यविरोधात् तद्विरोधं विहायायं क्रम आदरणीयः, स च प्रयोगो लिख्यते। "यथा श्राद्धं यथा प्रकाशं" इति शङ्खवचनात्। यस्य नाम प्रकाशते तत् स्मर्य्यते, श्रद्धायां सत्यां तस्य तर्पणं कार्य्यं। नामवर्णं कदाचनेति निषेधात्। आब्रह्मभ्य एव देयं, विष्णुपुराणे, "श्रिमध-मिषाय भूभुज" इत्युक्त्वा पितृतर्पणमुक्त्वा—

"इदं चापि जपेदम्बु दद्यादात्मेच्छया नृप!।
उपकाराय भूतानां कृतदेवादितर्पणः"॥

"देवासुरास्तथा यक्षा-नागा-गन्धर्व-राक्षसाः ।
पिशाचाः गुह्यकाः सिद्धाः कुष्माण्डास्तरवः खगाः ॥
जलेचरा भूनिलया वाय्वाहाराश्च जन्तवः ।
तृप्तिमेते प्रयान्त्याशु मद्दत्तेनाम्बुना ऽखिलाः ॥
नरकेषु समस्तेषु यातनासु च ये स्थिताः ।
तेषामाप्यायनायैतद्दीयते सलिलं मया ॥
ये बान्धवा अबान्धवा अन्यजन्मनि बान्धवाः ।
ते तृप्तिमखिलां यान्तु ये चास्मत्तोयकांक्षिणः ॥
काम्योदकप्रदानं ते मयैतत्कथितं[1] नृप!" ।

इदं जपेदम्बुदद्यादिति लिङ्गवाक्याभ्यां मन्त्रस्याम्बुदाने सम्बन्धः। अग्निहोत्रं जुहोति, यवागूं पचतीतिवत्करणश्रुत्यभावेऽप्यदृष्टार्थत्वप्रसङ्गभयेन लिङ्गवाक्याभ्यां विनियोगात्, न तु मन्त्रपाठो नित्यः, अम्बुदानं मन्त्रेण वैकल्पिकं, समन्त्रकाम्बुदानमेव काम्यं, काम्योदकप्रदानमित्युपसंहारात्, अम्बुदानेन मन्त्रसम्बन्धस्य काम्यत्वे तदसंगतेः । पितृतर्पणानन्तरं पाठाच्च प्रायश्चित्तदर्शने न पैत्रेण तीर्थेन इति पूर्वोक्तानुषङ्गात् पित्र्यविधया तर्पणं पाठक्रमे बाधकाभावाच्च, यथापाठमिहैव कृतदेवादितर्पणमिति लिङ्गाच्च, इदं च सर्वं स्नानाङ्गतर्पणेऽपि । तथाच विष्णुः,— ततः सम्बन्धिबान्धवाः, ततः सुहृदः, एवं नित्यस्नायी भवतीति स्मृत्यन्तरोक्तानां सर्वेषां तर्पणं स्नानाङ्गमित्युक्तं भवति । कात्यायनः,— निष्पीड्य स्नानमाचम्य ब्राह्म्यवैष्णवरौद्रमाविचीमैत्रावरुणैस्तु लिङ्गैरर्चयेत् ।

---

(१) कथितं तव ।

स्नानवस्त्रमित्येकत्वमविवक्षितं, "स्नानशाट्यां प्रदातव्या मृदस्तिस्रो विशुद्धये," इति वचनान्मृत्त्रयेण शोधयित्वा निष्पीडनं ।

याज्ञवल्क्यः,—

"वस्त्रनिष्पीडनं तोयं स्नातस्योच्छिष्टभागिनां ।
भागधेयं श्रुतिः प्राह तस्मान्निष्पीडयेत् स्थले" ॥

अस्य प्रकरणतस्थापमध्येन पीडनं, तथा,— "असंस्कृतप्रमीतानां स्थले दद्याज्जलाञ्जलिं," एतच्च प्रतिपत्तिकर्मापि, स्विष्टयावत् यागाङ्गमेनादृष्टार्थं च, तेन भाव्या स्नानवस्त्रस्य निष्पीडनेनाग्ने वा अकृतस्नानस्य वा तर्पणे तिलान्तरेणास्य असंस्कृतप्रमीतानुद्दिश्य जलत्यागः कार्य्यः । स्नातस्येति वाक्येन प्रकरणं बाधित्वास्य स्नानाङ्गत्वं । तेन तर्पणरहिते क्रियाङ्गस्नाने पाठं प्रवर्त्तत इति केचित् । तन्न, स्नानपदस्य प्रकृतमाध्याह्निकस्नानपरत्वात्, अन्यथा, प्रयाजे कृष्णलं जुहोतीत्यत्र प्रकृतप्रयाजनाधेन सर्वयागाय प्रयाजशेषतापत्तेः, वै [1]मृधेऽपि न प्रकरणबाधो व्यवस्थामात्रं तु प्रकरणेन दर्शाङ्गतापि प्राप्ता, तच्च उच्छेद्य पौर्णमाससमाप्ते व्यवस्थापनात् । सान्नाय्यधर्माणां लिङ्गेन दर्शाङ्गत्वात् ।

याज्ञवल्क्यः,—

"पीडयित्वा ततः पश्चाज्जपं कुर्य्यात् सुविस्तरं" ।

"अजपो पूयशोणित"मित्यादिना विष्णुपुराणे नित्यजपो य उक्तस्तस्यायं कालविधिः । ततो ब्रह्मयज्ञ एव जपयज्ञः ।

(१) वै मृधेऽपि ।

"ये पाकयज्ञाश्चत्वारो विधियज्ञसमन्विताः।
सर्वे ते जपयज्ञस्य कलां नार्हन्ति षोड़शीं" ॥

इति ब्रह्मयज्ञे जपयज्ञप्रयोगात्।

तथा,—

"यश्च श्रुतिजपः प्रोक्तो जपयज्ञः स उच्यते"। इति वाक्यं।

याज्ञवल्क्ये,—

"तर्पणात् पूर्वमारभ्य वेद"मित्यादिना ब्रह्मयज्ञमुक्ता तर्पणान्ते पुनर्जपं कुर्य्यादिति विधानात्, न च तस्यैव कालविधिः। अनुपादेयं कालं प्रति जपकरणे विधाने कर्मान्तरत्वात्। मासमग्निहोत्रं जुहोतीतिवत्। न च विविदिषन्ति यज्ञेन दानेनेत्यादिवत् रूपाज्ञानादकर्मान्तरत्वं। नाघमर्षणात्पर-मन्त्रर्जले जपो न व्याहृतिभ्यः परं होमेन सावित्र्याः परं जप्य इति ग्रंथेन जपसामान्यमुद्दिश्य गायत्रीविधानात्। न च तथा सति तर्पणाङ्गत्वप्रसङ्गः, स्नानवस्त्रजलप्रतिपत्त्या तर्पणसमापनात्। "निष्पीड़यति यः पूर्वं स्नानवस्त्रं तु तर्पणा"दिति पूर्वं तर्पणसमाप्तेः पूर्वं वस्त्रनिष्पीड़ने दोषकथनं। अन्त्र[1] च वस्त्रनिष्पीड़नकथनं आचमनान्तं तर्पणसमाप्तिं द्योतयन्ति। न च समाप्तस्य पुनरङ्ग-सम्भवः। किंच मनुना स्नातकव्रतकरणे,— "ऋषियज्ञं देवयज्ञं भूतयज्ञमित्यत्र ऋषियज्ञपदेन ब्रह्मयज्ञमुक्ता,—

"मङ्गलाचारयुक्तानां नित्यं च प्रयतात्मनां।
जपतां जुह्वतां चैव विनिपातो न विद्यते" ॥

(१) अन्ते च।

इति जपस्य फलार्थत्वमुक्त्वा "वेदमेव जपेन्नित्य"मिति तत्रैव जपस्य वेदमन्त्रसाध्यस्य नित्यत्वमादर्शितं। सन्ध्याजपादिकं च पृथक् तत्रैव कथितं। तेन पुरुषार्थस्यैव जपस्यायं कालः। एतेनास्य स्नानाङ्गत्वं प्रत्युक्तं। अतएव ब्रह्मविष्णुप्रमुखानां देवानां पूजनमपि न स्नानाङ्गं। न वा तर्पणाङ्गं। वस्त्रनिष्पीडनान्ते तर्पणस्नानयोः समाप्तत्वात्। तीर्थविसर्जनमात्रमेव हि स्नानाङ्ग-लिङ्गात् तदादावेव स्नान[1]विधेरेव इति कात्यायनस्यान्ते उपसंहारः। यथा प्रायणीयां वर्हिर्गृहमेधीयस्य करणाद्वर्हिर्होम-मात्रस्योत्कृष्टस्य गृहमेधीय समाप्तौ प्रायणीयाङ्गं सह स्याप्येति वचनं वर्हिर्होममात्रमपेक्ष्य, अतएवैषां तर्पणोत्तरकर्म इति समाख्या, यत्तु याज्ञवल्क्ये,—

"उपस्थानादिर्यस्तावान् मन्त्रवान् कीर्त्तितो विधिः।
निवेदनान्तं तत्स्नानमित्याहुर्ब्रह्मवादिनः" ॥

इति, उदगुंचौतितोयमुपस्थापयेदित्यादि देवाः पान्त्विदं जप्य निवेदनमित्यन्तकर्मकलापस्य स्नानपरिभाषा, नानेन[2] तर्पणादीनां सन्ध्याब्रह्मयज्ञादीनामपि स्नानाङ्गता।

तथा सति प्रातःस्नानादावतिदेशे बहुविरोधात्, किन्तु [3]स्नानप्रसङ्गैर्दयं। बहुप्रकरणत्वेन यथासम्भवं, तीर्थविसर्जनान्तरित-कर्मसम्पत्त्या, अन्यथा उपस्थानप्रागनपादप्रक्षालनाचमनादे[4]रङ्गता-पत्तेः, न च परिभाषायाः प्रयोजनान्तरं दृश्यते। तथा सति

(१) विधिरेष। (२) अन्तर्गतानां।
(३) स्नानप्रशंसैव। (४) रनङ्गतापत्तेः।

तदेव प्रयोजनं, न तु तत्तन्मध्यगतानां सर्व्वेषां पुरुषार्थत्वेनावगतानां दर्शप्रकरणगतगोदोहादीनां स्नानाङ्गत्वं । अतएव यद्विष्णुस्मृतौ,—वस्त्रनिष्पीडनानन्तरं ततो यज्ञोपवीती भूत्वा सदाचम्य पुरुषसूक्तेन प्रत्यृचं पुरुषाय पुष्पाञ्जलिं दद्यात्, उदकाञ्जलिं वा एवं नित्यस्नायी स्यादिति तेनापि पुरुषसूक्तपूजायाः स्नानाङ्गत्वं, येन प्रातःस्नानेनेतिदेशः, एवं पदेन वस्त्रनिष्पीडिना तु पदार्थानामेव परामर्षात् । तत् सिद्धं नित्य[1]स्नायं कालः ।

विष्णुपुराणे,—

"आचम्य च ततो दद्यात्सूर्य्याय सलिलाञ्जलिं ।
नमो विवस्वते ब्रह्मन् भास्वते विष्णुतेजसे ॥
आगच्छ[2] सवित्रे शुचये सवित्रे कर्मदायिने" ।

नरसिंहपुराणे,—

"ततोऽपि[3] भाजने दद्यात्तिलपुष्पजलान्वितं ।
उत्थाप्य मूर्द्धि पर्य्यन्तं हंसः शुचिषदित्यृचा" ॥

हंसः शुचिषदित्यर्घ्यं दद्याद्भानवे इत्यर्थः ।

प्रधानक्रियान्वयस्याभ्यर्हितत्वात् । तथाच नमो विवस्वत-इति मन्त्रेण सह विकल्पः ।

पद्मपुराणे,—

"आचम्य विधिवत्सम्यगालिख्येत्पद्ममग्रतः ।
अक्षताभिः सपुष्पाभिः सतिलारुणचन्दनैः ॥

---

(१) नित्यजपस्य —। (२) जगत्सवित्रे।
(३) ततोऽर्घ्यं भाजने—।

(१)अर्घ्यं दद्यात्प्रयत्नेन सूर्य्यनामानुकीर्त्तनैः।
नमस्ते विष्णुरूपाय नमस्ते विष्णुरूपिणे॥
सहस्ररश्मये तुभ्यं नमस्ते सर्वतेजसे।
नमस्ते रुद्रवपुषे नमस्ते भक्तवत्सल!॥
जगत्स्वामिन्नमस्तेऽस्तु कुण्डलाङ्गदभूषित!।
पद्मनाभ! नमस्तेऽस्तु दिव्यचन्दनरूपधृक्॥
नमस्ते सर्वलोकेश! सुप्तानामपि बुध्यसे।
सुकृतं दुष्कृतं चापि सर्वं (२)पश्यति सर्वदा॥
सत्यदेव! नमस्तेऽस्तु प्रसीद मम भास्कर!।
दिवाकर नमस्तेऽस्तु प्रभाकर नमोऽस्तु ते॥
एवं सूर्य्यं नमस्कृत्य त्रिः कृत्वा च प्रदक्षिणं।
द्विजं गां काञ्चनं स्पृष्ट्वा ततो विष्णुगृहं व्रजेत्॥

अत्र अक्षताभिः अर्घ्यं दद्यादिति पूर्वेण सम्बन्धः।

सूर्य्यनामानुकीर्त्तनैः—

नमस्कृत्येति परेण सम्बन्धः, तेनार्घदानानन्तरं नमस्ते विष्णुरूपायेत्यादिना सूर्य्यनमस्कारः प्रदक्षिणत्रयं चार्घदानाङ्गं।

याज्ञवल्क्यः,—

"निष्पीड्य स्नानवस्त्रं तु आचम्य प्रयतः शुचिः।
देवानामर्चनं कृत्वा ब्रह्मादीनामसत्सरः॥
ब्राह्मवैष्णवरौद्रैस्तु सावित्रैर्मन्त्रवारुणैः।
तल्लिङ्गैस्तर्पयेन्मन्त्रैः सर्वान् देवान् समाहितः॥

---

(१) अर्घं। (२) पश्यसि।

ध्यात्वा प्रणवपूर्वं तु दैवतं तु समाहितः ।
नमस्कारेण पुष्पाणि विन्यसेत्तु पृथक् पृथक् ॥
आवाहनादिकं कर्म यत्तु नोक्तं मया त्विह ।
तत्सर्वं प्रणवेनैव कर्त्तव्यं चक्रपाणिनः ॥
दद्यात् पुरुषसूक्तेन यः पुष्पाण्यप एव वा ।
अर्चितं स्याज्जगदिदं तेन सर्वं चराचरम् ॥
विष्णुर्ब्रह्मा च रुद्रश्च विष्णुर्देवो दिवाकरः ।
तस्मात् पूज्यतमं[१] नान्यमहं मन्ये जनार्दनात् ॥
सावित्र्या दद्याद्धूपादि यथाशक्ति समाहितः ।
एवं संपूज्य देवेशं चणं ध्यात्वा निरञ्जनम् ।
ततोऽवलोकयेदर्कं हंसः शुचिषदित्यृचा ॥
स याति ब्रह्मणः सद्म स्नात्वैवं कृतवान् तु यः ।
अदृश्रमस्येति मन्त्रैरुपस्थाय दिवाकरम् ॥
संवर्चस्येति पाणिभ्यां तोयेन विसृजेन्मुखम् ।
स्वयम्भूरित्युपस्थाय सूर्य्यस्येति प्रदचिणम् ॥
आवृत्य तु नमः कुर्याद्दिशोदिग्देवता अपि ।
ब्रह्मणेऽग्नये पृथिव्यै ओषधीभ्यस्तथैव च ॥
वाचे च वाचस्पतये विष्णवे महते तथा ।
एताभ्य देवताभ्यश्च नमस्कारादि वै जलं ॥
दत्त्वा नमस्ये क्रमशः स्नाने वै सर्वकर्मणां ।
नमोऽद्भ्योऽपां पतये वरुणाय नमो नमः ॥

---

(१) पुण्यतमं ।

इत्युक्त्वापो नमस्कृत्यावनौ वेदांश्च नामवत्।
इदमापः प्रवहत धाम्नो धाम्नस्तथैव च॥
विमोचनं तु तीर्थस्य चाप्यायस्वेति वै जपेत्।
देवा गातु[१] विद इति कृत्वा जप्यनिवेदनं॥
प्रचाल्य तीर्थदेशं तु गत्वा स्वं धर्ममाचरेत्"।

ब्रह्माविष्णुमहेश्वरा एकैकेन मन्त्रेणार्चनीयाः, सविता मित्रो वरुणश्च त्रिभिरेव उपादेयगतबहुत्वस्य विवक्षितत्वात् तल्लिङ्गैर्ब्रह्मादिदेवताप्रकाशनसमर्थैः। ध्यात्वेति पुराणोक्तरूपां देवतामूर्त्तिं ध्यात्वा तल्लिङ्गमुच्चार्य्य तदन्ते प्रणवदेवतानां नमःपदान्युक्त्वा, ॐ ब्रह्मणे नम इत्येवं पृथक् पृथक् प्रतिदैवतं पुष्पं विन्यसेत्, जले क्षिपेदिति पूजाप्रकारः पुष्पदानमन्त्रेणेत्यर्थः, विष्णुपूजायां विशेषः, प्रणवेनावाहनादि पुरुषसूक्तेन समस्तेन पुष्पदानं, समस्तस्य करणत्वेन श्रुतेः, तेन तद्विरुद्धं, विष्णुस्मृतिगतं प्रत्येकस्य पुष्पदानसाधनत्वमन्त्रं न ग्राह्यं, उदकदानं वा पुष्पाभावे, गायत्र्याद्युपवासनान्तं कर्म निरञ्जनं निष्प्रपञ्चं ब्रह्म, अथ नियुक्तान् पुरुषान् ब्रह्मपुरुषेण नारायणेनाभिष्टौतीत्यथ श्रुत्या मन्त्रगतपुरुषपदस्य नारायणपरत्वेन व्याख्यानान्मन्त्रलिङ्गस्यापि नारायणपरत्वादिवहुश्रुतिगतपुरुषोत्तमनरसिंहविष्णुचक्रपाणिपदानां पूजावाक्यश्रुतानामप्यनादरः, नरसिंहपुराणे, ध्येयः सदेति नारायणमूर्त्तिध्यानमुक्तं एवं नारायणाय पुष्पं ददामीति प्रयोगः, अतएव प्राचीनपद्धतौ तथैव लिखनं समाचारोऽप्येवं, द्विजः

(१) देवा गात्र-विद-इति।

प्रतिच्याद्दिकाः, दिग्देवता इन्द्राद्या। दिग्भ्यो नमः, दिग्देवताभ्य इति केचित्, अवनौ भूमौ देवनमस्कारो नामवत्, ऋग्वेदाय नम इत्येवंक्रमेण, आप्यायस्वेति जपस्य देवाः गातु विद इति-वेदनं अनेन जपेन परमात्मा प्रीयतामित्येवं रूपेण।

अथ स्नानपद्धतिः, चतुर्थभागे-उत्कलचणमृत्तिकास्त्रीगोमयभिन्न-दिवसगृहीतगोमय-तिल-पुष्प-यव-कुश-दूर्वा-चन्दनादिकमादाय ग्रामात् पूर्वेणोत्तरेण वा वहिर्भूय जलाशयं गत्वा जलाशयसमीपे स्नानोपकरणस्थापनं द्विवासां पवित्रोपग्रहस्य[१] आचमेत्, नारायण-नमस्कारः, त्रिमात्रप्रणवोच्चारणं, नारायणमन्त्रेण समन्ताच्चतुर्हस्त-परिमिततीर्थकल्पनं।

"विष्णोः पादप्रसूतासि वैष्णवी विष्णुपूजिता।
पाहिनस्त्वेनसस्तस्मादाजन्ममरणान्तिकात्॥
तिस्रः कोट्यर्द्धकोटी च तीर्थानां वायुरब्रवीत्।
दिवि भुव्यन्तरीचे च तानि ते सन्ति जाह्नवी॥
नन्दिनीत्येव ते नाम देवेषु नन्दिनीति च।
नन्दा पृथ्वी च सुभगा विश्वकाया शिवा शिता॥
विद्याधरी सुप्रसन्ना तथा लोक[२]प्रसाधिनी।
चेमा च जाह्नवी चेवं शान्ता शान्तिप्रदायिनी॥
भागीरथी भोगवती जाह्नवी चिदशेश्वरी।
गङ्गे! देवि! नमस्तुभ्यं प्रसीद परमेश्वरी॥

---

(१) चोपग्रहस्यः। (२) प्रसादिनी।

गङ्गे ऽऽगच्छेत्यावाहनं मृदः किंचित् पृथक् स्थापयित्वा अपरं च वक्ष्यमाणविनियोगानुरोधेन अधिकन्यूनमध्यपरिमितिं कृत्वा स्थापनं, गोमयं द्विधा विभज्याद्यस्य त्रिभागकरणम्।

"अश्वक्रान्ते! रथक्रान्ते! विष्णुक्रान्ते! वसुन्धरे!।
मृत्तिके! हर मे पापं यन्मया दुष्कृतं कृतं॥
उद्धृतासि वराहेण कृष्णेन शतबाहुना।
नमस्ते सर्वलोकानां प्रभवारणि सुव्रते!"॥ इति—

मन्त्रेण मृद्भागानामभिमन्त्रणं। आद्यभागैकदेशेन नाभेरधः, द्वितीयभागांशेन शिरसस्तृतीयभागांशेन मध्यकायस्य चालनं, मृद्भागानां शिष्टानां रक्षणं।

"अग्रमग्रं चरन्तीनामोषधीनां रसं वने।
तासामृषभपत्नीनां पवित्रं कायशोधनं॥
तन्मे[१] रोगांश्च शोकांश्च पापं च नुद गोमय!"।

इति चालनकाले पठता गोमयाद्यभागेनाधःकायस्य, द्वितीयभागेन शिरसः; तृतीयभागेन मध्यकायस्य चालनं। त्रिधा कृतगोमयस्य न रक्षणं कार्याभावात्। मृत्त्रयेण पादयोः क्षालनं, एतच्चाङ्गप्रक्षालनं पादक्षालनं च तीरे कृत्वा मज्जनाचमनं।

"हिरण्यशृङ्गं वरुणं प्रपद्ये तीर्थं मे देहि याचितः।
यन्मया भुक्तमसाधूनां पापेभ्यश्च प्रतिग्रहः।
यन्मे वाचा च मनसा कर्मणा दुष्कृतं कृतं"॥

"तन्म इन्द्रो वरुणो वृहस्पतिः सविता पुनातु पुनः"रिति,

(१) त्वं मे।

जले प्रवेशः। शुनःशेपऋषिः त्रिष्टुप्छन्दः, वरुणो देवता। जलोपस्थाने विनियोगः। "ॐ उरुं हि राजा वरुणश्चकार सूर्याय पन्था मन्वे तवाऽउ। अपदे पादाप्रतिधातवे करुतापवक्ता हृदयाविधश्चित्" । इति बद्धाञ्जलिं तोयाभिमुखं पाठः। शुनःशेफऋषिः [1]अनुष्टुप्छन्दः, वरुणसवितृविष्णुविश्वमरुत्स्वर्का देवताः, जलावर्त्तने विनियोगः। "ॐ ये ते-शतं वरुण-ये सहस्रं यज्ञियाः पाशावितता महान्तः, तेभिर्नो अद्य सवितोतविष्णुर्विश्वे मुञ्चन्तु मरुतः स्वर्क्काः"। इति जलस्य हस्तेन प्रदक्षिणावर्त्तनं। परमेष्ठिऋषिः, यजुः, वरुणो देवता, "ॐ सुमित्रियानऽ आपऽ ओषधयःऽ सन्तु" इति वरुणं स्मृत्वा जलाञ्जलिग्रहणं, परमेष्ठी प्रजापतिऋषिः, यजुः, वरुणो देवता, ॐ दुर्मित्रियास्तस्मै सन्तु योऽस्मान् द्वेष्टि यं च वयं द्विष्म इति द्वेष्यं ध्यात्वा यस्यां दिशि [2]द्वेष्टास्ति तत्र जलाञ्जलिप्रक्षेपः, द्वेष्याभावे तूत्तरस्यां प्रक्षेपः।

कटिनाभ्यधोदेशोरुद्वय-जंघाद्वयपादद्वयानां प्रत्येकं आद्यभागमृदा त्रिः क्षालनं, द्वितीयभागमृदा नाभ्यूर्द्ध्वकण्ठपर्यन्तं द्विःक्षालनं, ततो हस्तद्वयोर्मृदा त्रिः प्रक्षालनं, सर्वकायक्षालनं, द्विराचमनं. जलाय नम इति जलनमस्कारः, वशिष्ठऋषिः, त्रिष्टुप्छन्दः, वरुणो देवता, यत्किञ्चेदं दैव्ये जनेऽभिद्रोऽहं [3]मनुष्याश्चरामि, अचित्तय [4]भव धर्मायुयोऽसि सिमानस्तस्मादेनसो देवरीरिषः। जलाय नम इति जलनमस्कारः।

(१) त्रिष्टुप्छन्दः। (२) द्वेष्योऽस्ति.
(३) मनुष्याश्चरामसि। (४) तव।

"प्रपद्ये वरुणं देवमम्भसां पतिमूर्जितं।
याचितं देहि मे तीर्थं सर्वपापापमुक्तये॥
तीर्थमावाहयिष्यामि सर्वापद्विनिसूदनं।
सान्निध्यमस्मिन् मे तोये भजतां मदनुग्रहात्"॥

गङ्गेऽत्रागच्छेत्येवं तीर्थमामन्त्र्यावाहनं, उद्धृतस्नाने यस्मात्तीर्थाज्जलमाहृतं तस्यैव तीर्थस्यावाहनं, आवाहनकाले मनसा तीर्थदेवता-सान्निध्यचिन्तनं, क्वचिमेऽक्वचिमे प्रसिद्धनामके कुरुक्षेत्रगयागङ्गापुष्करान्यतमस्मरणं। शुनःशेपऋषिः, त्रिष्टुप्छन्दः, वरुणो देवता, "उदुत्तमं वरुणपाशमस्मदवाधमं वि मध्यमं श्रथाय, अथा वयमादित्य व्रते तवानागसो अदितये स्याम"। इति मन्त्रेण प्राङ्मुखस्य नारायणस्मरणेन जलप्रवेशपरिकल्पिततीर्थस्मृत्यन्तराज्जलावतरणनिमित्तकं सकृदाचमनमिति केचित्। नाभिमात्रे प्राङ्मुखस्य स्मरणं। येन देवा इत्यस्य मधुच्छन्दऋषिः, द्वयोरनुष्टुप्छन्दः, तृतीयस्य त्रिष्टुप्छन्दः, [१]पवमानः सोमो देवता, जलालम्भे विनियोगः। "येन देवाः पवित्रेण आत्मानं पुनते सदा, तेन सहस्रधारेण पावमान्यः पुनन्तु मां"। "प्राजापत्यं पवित्रं च ततोद्दामं हिरण्मयं, तेन ब्रह्मविदो वय पूतं ब्रह्मपुनीमहे," "इन्द्रः सुनीती सहमा पुनातु सोमः [२]स्वस्त्यावरुणः समीच्या। यमोराजा [३]प्रमृणाभिः पुनातु मा जातवेदा मूर्जयन्त्या पुनातु," इति परिकल्पिततीर्थजलस्य हस्तेना[४]वमर्षः, ततस्तीरं

(१) तीर्थमान। (२) स्वस्त्य।
(३) प्रमृच्याभिः। (४) स्पर्शः।

गत्वा भूर्भुवः स्वरिति व्याहृतित्रयेण द्विराचमनं, सकृद्वा, मेधातिथिर्ऋषिः, गायत्रीछन्दः, ॐविष्णुर्देवता, "इदं विष्णुर्विचक्रमे त्रेधानिदधे पदं समूढमस्य पांसुरे" इति त्रिधाहृतव्यतिरिक्तमृदा सर्वाङ्गलेपनं, नात्र चालनं, सकृदाचमनं, नारायणं स्मरतः शनैर्जले प्रवेशः, प्रजापतिर्ऋषिः। यजुः, आपोदेवता। "ॐ आपोऽस्मान्मातरः शुन्धयन्तु घृतेन नो घृतः पुनन्तु, विश्वमंहिरिप्रं प्रवहन्ति देवीः," इति मन्त्रेण प्रवाहाभिमुखस्य प्रवाहाभावे सूर्याभिमुखस्य वा जलमज्जनं, हरिस्मरणं, प्रजापतिर्ऋषिः, यजुः, आपोदेवता, "ॐ उदिदाभ्यः शुचिरा पूत एमिं उथ्थानं," ततो गात्रमुद्‌घृष्य पुनःपुनर्निमज्ज्योन्मज्जनं। सकृदाचमनं पुनस्तीरगमनं। कुत्सऋषिः, जगती छन्दः, रुद्रोदेवता, "मानस्तोके तनये मानगोषु मानोऽश्वेषुरीरिषः, मानोवीरान्रुद्रभामिनो वधीर्हविष्मन्तः सदमित्वाहवामहे" इति गोमयेन सर्वाङ्गलेपनं, लेपनकालेऽयमग्रं चरन्तीनामित्यस्य क्रियमाणानुवादिनोऽपि जपः। वशिष्ठोक्तकाण्डादितिदूर्वया अङ्गस्पर्शनं वैकल्पिकं। गोमयलिप्ते गात्रस्यैव जलस्यस्याभिषेकः। स च यथाक्रममितिवचनात् प्रत्येकमन्त्रेण, शिरसि जलाञ्जलिदानरूपः, मन्त्रस्याष्टभेदादष्टभिन्नः, शुनःशेफऋषिः, गायत्रीछन्दः, वरुणोदेवता, "ॐ इमं मे वरुण श्रुधी हव मद्या च मृडय त्वामवस्युराचके," प्रथमाभिषेकमन्त्रः, शुनःशेफऋषिः, त्रिष्टुप्छन्दः, वरुणो देवता, "तत्वायामि ब्रह्मणा वन्दमानस्तदाशास्तेयजमानोहविर्भिः, अहेडमानो वरुणेहवोध्युरुशंस मान आयुः प्रमोषीः," द्वितीयः, प्रजापतिर्ऋषिः त्रिष्टुप्छन्दः अग्नि-

वरुणौदेवता, “त्वन्नो अग्ने वरुणस्य विद्वान्, देवस्य हेडो अवयासि-सीष्ठाः, यजिष्ठो वह्नितमः शोशुचानो विश्वाद्वेषाꣳसि प्रमुमुग्ध्य-स्मत्”। तृतीये च, प्रजापतिरृषिः, त्रिष्टुप्छन्दः, अग्नीवरुणौ देवता, “सत्वन्नो अग्नेऽवमो भवोती नेदिष्ठो अस्या उषसो व्युष्टौ, अवयक्ष्वनो वरुणꣳ रराणो वीहिमृडीकꣳ सुहवो न एधि” चतुर्थः, [१]प्रजापतिरृषिः, गायत्रीछन्दः, वरुणोदेवता, “ॐ मापो मौषधीर्हिꣳसीर्द्धाम्नो धाम्नोराजंस्ततो वरुण नो मुञ्च”।

“यदाहुरघ्न्या इति वरुणेति शपामहे ततो वरुण नो मुञ्च”। पञ्चमः, उदुत्तममिति। षष्ठः, अथर्वणऋषिः, अनुष्टुप्छन्दः, ओषधयो देवता, “मुञ्चन्तु मा शपथ्यादथो वरुण्यादुत। अथो यमस्य पड्वीशात् सर्वस्माद्देवकिल्बिषात्। सप्तमः, प्रजापतिरृषिः, यजुः, अवभृथो देवता, “अवभृथ निचुम्पुण निचेरुरसि निचुम्पुणः। अवदेवै-र्देवकृत मेनोऽयासिषमवमर्त्यैर्मर्त्यकृतं पुरुराव्णोदेवरिषस्पाहि”। अष्टमः, इदमाप इति स्थाने पञ्चम्याभिषेको मापो मौषधीरिति यजुर्मुञ्चेत्यन्तं, कण्डिकात्मकं चेत् कुर्वन्ति पाठभेदमभ्युपगम्य प्राच त्विदमाप इति पाठः, ततः पूर्ववज्जले निमज्योन्मज्याचमनं, ततो मार्जनारम्भः, कुशत्रयेणान्तर्गर्भं, साग्रेण शिरसि जलप्रक्षेपः, प्रणवेन शिरस्यञ्जलिनाभिषेकः, ततो व्याहृतित्रयेणाभिषेकः गायत्र्या-भिषेकः, पुनः प्रणवेन शिरसि कुशैर्मार्जनं, अथ व्याहृतित्रयेण, अथ गायत्र्या मार्जनं, आपोहिष्ठेति त्र्यृच इत्यन्तेनैकं मार्जनं,

(१) प्रभासऋषिः।

योवोमान्तर इत्यन्ते च द्वितीयं, तस्मात्ररं च न इत्यन्तेन तृतीयं, इदमाप इति चतुर्थं, प्रजापतिऋषिः, अनुष्टुप्छन्दः, आपोदेवता, मार्जने विनियोगः, "ॐ हविष्मतीरिमा आपोहविष्माꣳ आविवासति हविष्मान्देवो अध्वरो हविष्माꣳ अस्तु सूर्य्यः," अनेन पञ्चमं मार्जनं, प्रजापतिऋषिः, अनुष्टुप्छन्दः, गायत्रीछन्दः, आपोदेवता, अग्नये नैकोमन्त्रः, कण्डिकाग्रहणात्, "ॐ देवीरापो अपान्नपाद्योव ऊर्म्मिर्हविष्य इन्द्रियावान्मदिन्तमः, तं देवेभ्यो देवत्रादत्त शुक्रपेभ्यो, येषां भागस्थ स्वाहा"। षष्ठं, प्रजापतिऋषिः, अनुष्टुप्छन्दः, आज्यं आपो देवता, "ॐ कार्षिरसि समुद्रस्य त्वा चित्या उन्नयामि, समापोऽद्भिरग्मत समोषधीभिरोषधीः"। सप्तमं, प्रजापतिऋषिः, त्रिष्टुप्छन्दः, आपो देवता।

"ॐ अपोदेवा मधुमतीरगृभ्णन्नूर्जस्वतीराजस्वश्चितानाः। याभिर्मित्रावरुणा चिभ्यषिंचन्याभिरिन्द्रमनयन् मत्यरातीः"। अष्टमः, "द्रुपदादिव" इति नवमं, प्रजापतिऋषिः, अनुष्टुप्छन्दः, आपो देवता, "शन्नोदेवीरभिष्टय आपो भवन्तु पीतये, शंयोरभिस्रवन्तु नः"। दशमं, बृहस्पतिऋषिः, [१]त्रिष्टुप्छन्दः, आपो देवता, "ॐ अपाꣳ रसमुद्वय सꣳसूर्य्ये सन्तꣳ समाहितं। अपाꣳ रसस्य यो रसस्तम्वो गृह्णाम्युत्तमं"। एकादशं, सिन्धुद्वीपऋषिः, बृहतीछन्दः, आपो देवता, "ॐ अपो देवीरुपसृजमधुमतीरयक्ष्माय प्रजाभ्यः। तासामास्थानादुज्जिहतामोषधयः सुपिप्पलाः"। द्वादशं, प्रजापतिऋषिः, अनुष्टुप्छन्दः, पितरो देवता, "ॐ पुनन्तु मा पितरः

(१) अनुष्टुप्छन्दः।

सोम्यासः पुनन्तु मा पितामहाः, पुनन्तु प्रपितामहाः, पवित्रेण शतायुषा। विश्वमायुर्व्यश्नवै"। चयोदशं, प्रजापतिऋषिः, अनुष्टुप्छन्दः, पितरोदेवता, "ॐ पुनन्तु मा पितामहाः पुनन्तु प्रपितामहाः, पवित्रेण शतायुषा विश्वमायुर्व्यश्नवै"। चतुर्दशं, वैखानसऋषिः, गायत्रीछन्दः, अग्निर्देवता, "ॐ अग्न आयूꣲषि पवस आसुवोर्जमिषं च नः। आरेबाधस्व दुच्छुनां," पञ्चदशं, प्रजापतिऋषिः अनुष्टुप्छन्दः, देवजनाधियो विश्वा भूतानि जातवेदाश्च देवताः, "ॐ पुनन्तु मा देवजनाः पुनन्तु मनसा धियः, पुनन्तु विश्वा भूतानि जातवेदः पुनीहि मा"। षोड़शं, प्रजापतिऋषिः, गायत्रीछन्दः, अग्निर्देवता, "ॐ पवित्रेण पुनीहि मा शुक्रेण देवदीद्यत्। अग्ने क्रत्वा क्रतूꣲ रनु"। सप्तदशं, प्रजापतिऋषिः, गायत्रीछन्दः, [१]अग्निर्देवता, "ॐ यत्ते पवित्रमर्चिष्यग्ने विततमन्तरा ब्रह्म तेन पुनातु मा। अष्टादशं, प्रजापतिऋषिः, गायत्रीछन्दः, सोमोवायुर्देवता, "ॐ पवमानः सो अद्य नः पवित्रेण विचर्षणिः। यः पोता स पुनातु मा"।

ऊनविंशं, प्रजापतिऋषिः, गायत्रीछन्दः, सवितादेवता, "ॐ उभाभ्यां देव सवितः पवित्रेण सवेन च, मां पुनीहि विश्वतः। विंशतितमं, प्रजापतिऋषिः, त्रिष्टुप्छन्दः, [२]मुतकुम्भोदेवता, "ॐ वैश्वदेवी पुनती देव्यागाद्यस्यामिमा बह्व्यस्तन्वो वीतपृष्ठाः। तया मदन्तः सधमादेषु वयꣲ, स्याम पतयो रयीणाम्"। एकविंशं,

(१) अग्निर्ब्रह्मोदेवता। (२) सुराकुम्भादेवता।

प्रजापतिर्ऋषिः, यजुः, चित्पतिर्देवता, "ॐ चित्पतिर्मा पुनातु देवो मा सविता पुनात्वच्छिद्रेण पवित्रेण सूर्य्यस्य रश्मिभिः। तस्य ते पवित्र पते पवित्रपूतस्य यत्कामः पुनेतच्छकेयं"। द्वाविंशं प्रजापतिर्ऋषिः, यजुः, "ॐ वाक्पतिर्देवता, वाक्पतिर्मा पुनात्वच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः। तस्य ते पवित्र पते पवित्रपूतस्य यत्कामः पुनेतच्छकेयं"। त्रयोविंशं, प्रजापतिर्ऋषिः, यजुः, देवः सविता देवता; "ॐ देवो मा सविता पुनात्वच्छिद्रेण पवित्रेण सूर्य्यस्य रश्मिभिः। तस्य ते पवित्रपते पवित्रपूतस्य यत्कामः पुनेतच्छकेयं"। चतुर्विंशं, मार्जनं, एवं मार्जनं कृत्वा तद्विष्णोरिति मन्त्रेण हरिस्मरणं, पुनः प्रणवव्याहृतित्रयगायत्रीभिरभिषेकत्रयं पूर्ववत्, पूर्ववन्मार्जनत्रयं च. [१]पूर्ववदिमं मे वरुणेत्यष्टमन्त्रेण अभिषेकाष्टकं वैकल्पिकं, अन्ते चैतदिति कात्यायनवचनात्, अन्ते मार्जनान्ते च-शब्दान्मार्जनपूर्वं च कथितमेव, पुनर्जले निमज्ज्य, अघमर्षणसूक्तस्य, अघमर्षणऋषिः, इत्यादिस्मरणपूर्वकं त्रिवारं जपः, द्रुपदामन्त्रस्य वा, "ॐ आयं गौः पृश्निरक्रमीदित्यस्य वा, वामदेव ऋषिः, अतिजगतिच्छन्दः, सूर्य्यो देवता। ॐ हंसः शुचिषद्वसुरन्तरीक्षसद्धोतावेदिषदतिथिर्दुरोणसत्। नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत्"। अनेन वारत्रयमन्तर्जलजपः अन्यादि[२]सूक्तानि "ॐ यद्देवा देवहेडन"मित्यादि ऋक्त्रयं कुष्माण्डाख्यं पुरुषसूक्तं, शिव-

---

(१) पूर्वोक्त। (२) अन्य सूक्तानि।

संकल्पसूक्तं, एतेषामन्तर्जलजपः, कात्यायनानुक्तत्वाद्वैकल्पिकः, चमिरस्कादग्रप्रणवयुक्तगायत्र्यान्तर्जलजपो वा प्राणायामो वा कात्यायनवचनात्, प्रणवव्याहृतित्रयसहितगायत्र्यन्तर्जले त्रिवारं जपः।

प्रणवमात्रस्य वा त्रिवारं, "ॐ तद्विष्णो"रिति मन्त्रेण विष्णोः साकारस्य निराकारस्य वा प्रणव[१] मन्तर्जले स्मरणं, तचोत्तमाधिकारिविषं प्रतीति कर्काचार्य्यः, एतच्च यद्यपि वैकल्पिकेनोक्तं, पश्चात् प्रायश्चित्तत्वेनोक्तेराशंकिततद्दैगुण्यसमाधानार्थावश्यमेव विष्णुध्यानं, प्रजापतिर्ऋषिः। "ॐ गायत्रीछन्दः, विष्णुर्देवता। तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः। दिवीव चक्षुराततं"। एतेन स्रोताभिमुखस्य वारत्रयं मार्जनं, संभवे—

"दक्षिणावर्त्तशंखेन तिलमिश्रोदकेन च।
उदके नाभिमात्रे तु यः कुर्य्यादभिषेचनं॥
प्राक् स्रोतसि वै नद्यां नरस्त्वेकाग्रमानसः।
यावज्जीवकृतं पापं तत्क्षणादेव नश्यति"॥

इति वराहपुराणोक्त प्राक् स्रोतसि नद्यां नाभिमात्रोदके स्थित्वा शङ्खस्थतिलमिश्रोदकेनाभिषेकः, सर्वजलाशयेषु तत्ताम्रपात्रोपरि दक्षिणावर्त्तशंखं कृत्वा तत्र जलं पूरयित्वा शिरसि पतने सप्तजन्मकृतपापक्षयः, तदुक्तं,—

"दक्षिणावर्त्तशंखेन पात्रे औदुम्बरे स्थितं।
उदकं यः प्रत्य[२]क्षेत्तु शिरसा हृष्टमानसः।

(१) प्रश्न। (२) प्रतीच्छेत्तु।

तस्य जन्मकृतं पापं तत्क्षणादेव नश्यति" ॥

इति वराहपुराणीयं कर्त्तव्यं ।

विष्णुः,— "[१]शृङ्गोदकं गवां पुण्यं सर्व्वापद्विनिसूदनं" ।

ब्रह्मपुराणे,—

"युद्धे भग्नं च यच्छृङ्गं दक्षिणं पतितं भुवि ।
निर्मांसं प्राप्य विधिवत् पूरयित्वा[२] जलेन च ॥
स्नानं कृतं तु मुनिभिर्देवैः सिद्धैस्तु सर्वदा ।
अलक्ष्मीनाशनं धन्यं सर्वसौभाग्यवर्द्धनं" ॥

एवं

"लाङ्गूलेनोद्धृतं तोयं मूर्द्ध्नि गृह्णाति यो नरः ।
सरित्स्वपि प्रयातानां सर्वपापैः प्रमुच्यते ॥
अच्छिन्नपद्मपत्रेण सर्वरत्नोदकेन च ।
स्रोतस्यपि नरः स्नात्वा सर्वपापैः प्रमुच्यते" ॥

इदं वराहपुराणोक्तं कार्य्यं ।

वराहपुराणे,—

"[३]शृङ्गेण यो गवां स्नायाद्रोहिण्यां द्विजसत्तमः ।
स सर्वपापजातानि दहत्याशु न संशयः" ॥

तथा,—

"धेनोस्स्तनातिनिष्क्रान्तं धारोष्णं वापि यः पयः ।
शिरसि प्रतिगृह्णाति स पापेभ्यः प्रमुच्यते ॥

(१) शंखोदकं गवां मूत्रं ।
(२) पूजयित्वा जलेन च ।
(३) प्रवेशे ।

अथ काम्यान्तर्जलजपाः, हारीतः, शंखः, "ॐ देवीरापः शुद्धाः," "ॐ हिरण्यवर्णाः शुचयः"। "ॐ आपोऽस्मान् मातर" इति शुद्धवतीरष्टजपे पूतो भवति, "ॐ त्वं सोमतनुकृद्भ्य" इति अप्सु जपेत्तनुकृतादन्यकृताच्च पूतो भवति। "ॐ अग्न आयुंषि पव स" इति सप्तवारमप्सु जपेत्, सर्वपापेभ्यः पूतो भवति, ॐ हंसः शुचिषदिति विमलं पतितं अप्सु जपेत् सर्वपापेभ्य इति पूतो भवति। "ॐ देवीराप" इत्यनुवाकमप्सु जपेत् पूतो भवति, अघमर्षणमन्तर्जलचिरावर्त्तयित्वा मुच्यते ब्रह्महत्यायाः, सर्वार्त्तिषु अप्सु वा आममासिकं जपेदापदो मुच्यते।

योगीयाज्ञवल्क्यः—

"द्रुपदा [१]मानसा देवी यजुर्वेदे [२]व्यवस्थिता।

अन्तर्जले चिरावृत्य मुच्यते ब्रह्महत्यया"॥

विद्याकरपद्धतौ, "ॐ आयं गौ पृश्निरक्रमीदित्यृचं गायत्रीं यश्चोऽर्द्धगः, सर्वां वा अन्तर्जले जप्त्वा सर्वपापैः प्रमुच्यते, तथा व्याहृति प्रणवं वा, चत्वारिंशत्कृत्विति जले जप्तं सर्वपापघ्नं, "ॐ आपो हि ष्ठेति" पापद्वयमोचनं, "ॐ देवकृतस्ये"त्यादि मन्त्रषट्कजपः पापापहः, [३]कुम्भकाय स्वाहा इति महदन्तर्जले जप्तं मन्वन्तरकृतस्तैन्यं पापघ्नं, अयं पदद्वयात्मक एव मन्त्रो न तदपजल्पिताच्चकृ, [४]कुम्भकाय द्विपदेत्यनुक्रमणि वचनात्, "ॐ यत्किञ्चेदं वरुण"-मित्यन्तर्जले जप्त्वा सर्वपापक्षयः, "ॐ अग्नेवापिति" व्रतजपादप-

(१) मानसा। (२) प्रतिष्ठिता।
(३) अम्भकाय। (४) अम्भकाय।

पातककोटिभ्रूणहत्या-शत-ब्रह्महत्यादिसर्वपापक्षयः, ॐ आपो हि ष्ठेत्यृचं कुष्माण्डत्रयमेव।

"वृषभं [१]वीरजं, चैव गायत्रीमिति षोड़शः।
अन्तर्जले जपेन्नित्यं सर्वपापैः प्रमुच्यते"॥

कुष्माण्डत्रयं, "ॐ यद्देवा देवहेलनमिति" [२]द्वयं, "ॐ द्रुपदा" चतुष्टयं उदयमित्यनेन सह।

वृषभस्त्वारिशृङ्गेति, [३]वीरजं हंसः शुचिषदिति एतेषां समुदितानां जपेन फलं, उपादेयगत संख्या विवक्षागतः।

"शतं स्नात्वा तु गायत्र्या शतमन्तर्जले जपेत्।
अपः शतेन पीत्वा च सर्वपापैः प्रमुच्यते॥
अयाज्यान् याजयित्वा च तथान्यद्वापि पातकं।
न सीदेत् प्रतिगृह्णानः पृथिवीं च ससागरां"॥

स्नायात् शतेन गायत्र्येति योगीयाज्ञवल्क्य पाठादिकल्प-भये गायत्र्या शतं जप्त्वा स्नात्वा इति साध्याहारं व्याख्या, तेन शतावृत्त गायत्रीं कृत्वा स्नानमेकमेवेति बोद्धव्यं, पुरुषसूक्तजपः, ऋग्वेद-जपसमफलः। तथा,

"अष्टाक्षरेणाभिषिंचेदभ्युक्षेदथवा पिवेत्।
पञ्चविंशतिकृत्वो हि मुच्यते तेन चैनसः"॥

तथा—

"नारसिंहे न च जलं प्रक्षिपेन्मूर्द्ध्नि मन्त्रवित्।
सर्वपापविशुद्धात्मा याति ब्रह्मसनातनं"॥

(१) वागरं। (२) त्रयं। (३) वीरकं।

तथा, नाभिमात्रजले स्थितः, प्रतञ्जलः ॐकारमुक्त्वा जलं पिबेत्, सर्वपापनाशाय, बौधायनोक्तं, ॐ भूर्भुवः स्वरिति शिराचम्य द्विर्मुखं विमृज्य सव्यं पाणिं संयोज्य पादौ शिरसि हृदयं नासिके चक्षुषी श्रोत्रे चोपस्पृशेत्, एतत् सर्वपातकनाशनं, तथा यद्‌र्वाक् महापातकेभ्यः सर्वमनेन पूयत इति उपक्रम्य वशिष्ठेनोक्तं तथा-चामेत्, तथा "ॐ अग्निश्च मा मन्युश्च मन्युपतयश्च मन्युकृतेभ्यः पापेभ्यो [१]मुच्यन्तां यदह्ना पापमकार्षं मनसा वाचा हस्ताभ्यां पद्भ्यां उदरेण शिश्ना ऽहस्तदवलुम्पतु यत्किंचिद्दुरितं मयि, इद-महमापोऽमृतयोनौ [२]सूर्य्ये ज्योतिषि परमात्मनि जुहोमि स्वाहा"। "ॐ सूर्यश्च मा मन्युश्च मन्युपतयश्च मन्युकृतेभ्यः पापेभ्यो रचन्तां। यद्रात्र्या पापमकार्षं मनसा वाचा हस्ताभ्यां पद्भ्यामुदरेण शिश्ना रात्रिस्तदवलुम्पतु, यत् किंचित् दुरितं मयि। इदमहमापोऽमृतयोनौ सूर्ये ज्योतिषि जुहोमि स्वाहा"।

"ॐ आपः पुनन्तु पृथिवीं पृथिवी पूता पुनातु माम्।
पुनन्तु ब्रह्मणस्पतिर्ब्रह्म पूता पुनातु मां॥
यदुच्छिष्टमभोज्यं च यद्वा दुश्चरितं मम।
सर्वं पुनन्तु मामापो असतां च प्रतिग्रहऽ् स्वाहा"॥

अन्तर्जलजपश्च, जलमग्नस्यैव जपक्रियाया उच्चारणरूपाया जलमध्याधारत्वस्यान्यथा सम्भवात्, इति काम्यानि, एवं स्नात्वा तैलस्पर्शन-शिरोवस्त्रा[३]वधूनन-म्लेच्छान्त्यपतितसम्भाषणपर-पात--

(१) रक्षन्तां। (२) मत्ये। (३) मत्र।

जलताडन-जलमध्यसंचलनप्रतरण-वस्त्रमल-निर्णेजनपाचमलक्षालन-हस्तपादकरण-जलताडन-जलक्षोभणानां वर्जनं, प्रमादात् करणे "ॐ नमोऽग्नयेऽप्सुमते, नम इन्द्राय, नमो वरुणाय, नमो वारुण्यै, नमोऽद्भ्य" इत्यपामुपस्थानं प्रायश्चित्तं, अन्यदपि प्रातःस्नानोक्तानि स्नानाङ्गानि तद्वैगुण्ये विष्णुस्मरणं प्रायश्चित्तं, ततः प्रातःस्नान-कथितमार्गेणाचमन-वस्त्रपरिधानतिलकग्रहणादिकरणम् ।

भविष्यपुराणे—

"[१]स्नातस्य वर्णकं हृद्यं नित्यं कुर्याद्विशांपते ।
प्रियङ्गुचन्दनाभ्यां वा विल्वेन तगरेण वेति" ॥

नात्र मृत्तिकाग्रहणं, इति केचित् । समाचाराङ्गत्वान्मृत्तिका-ग्रहणमिति कर्काचार्याः, ततः सन्ध्या प्रातःसन्ध्यावत् अञ्जलि-दानानन्तरं अञ्जलौ पुष्पमिश्रणनियमः, गायत्रीध्यानं, मध्यसन्ध्या. वैष्णवी शङ्खचक्र-गदापद्महस्ता युवती शुक्लवर्णा शुक्लाम्बर-द्वयोपेता गरुडमारुह्य विष्णुलोकादागत्य सूर्य्यमण्डले प्रविष्टेति ध्यानं, तेजोऽसीत्यावाहनं, उपस्थाने विशेषः, प्रस्कण्व ऋषिः अनुष्टुप्छन्दः, सूर्य्योदेवता, उपस्थाने विनियोगः । "ॐ उद्वयं तमसस्परि स्वः पश्यन्त उत्तरं ज्योतिः देवं देवत्रा सूर्य्य-मगन्म ज्योतिरुत्तमं" । अनेन सूर्य्योपस्थानं, उपस्थाने चात्र [२]व्याहृत्यनियमः, एवं "ॐ उदुत्य"मित्यनेन । ॐ चित्रमित्यनेन ॐ तच्चक्षुरित्यनेन चोपस्थानम् ।

---

(१) स्नातस्य । (२) ऊर्द्ध्वबाहुत्वनियमः ।

ॐ हंसः शुचिषदित्यनेन चोपस्थानं, ततो गायत्र्या ऋष्यादि-स्मरणं, [१]पञ्चाङ्गन्यासः, गायत्र्युपासनपूर्वकमुपस्थानं, यथोक्तार्थज्ञान-नियमेन, तिर्यक्पाणिना गायत्रीजपः, शतमष्टदश वा, ततो गायत्र्युपस्थानपूर्वकं गायत्रीविसर्जनं, ऊर्द्ध्वबाहोः सूर्य्याभिमुखस्योप-स्थानं, अस्यंसक्तपार्ष्णिरित्यादि प्रातर्वत्, विभ्राडित्यनुवाकस्य, ब्रह्मा-स्वयम्भूऋषिः, विभ्राडिति बृहस्पतिजगती, ॐ उदुत्यं ॐ येन पावकः, ॐ दैव्या अध्वर्युगायत्र्यस्तिस्रः, ॐ तं प्रत्नथा जगती, ॐ अयमेनः ॐ चित्रं देवानां, ॐ आनद्धाभिस्तिस्रस्त्रिष्टुभिः, ॐ तरणिर्विश्वं, ॐ यदद्यकच्चदृत्ये गायत्र्यौ, ॐ तत्सूर्यस्य। ॐ तन्मित्रस्य, द्वे त्रिष्टुभौ, ॐ बण्महाᳫँ, ॐ बट्सूर्यश्रवसा, ॐ आयन्त इवेति बृहत्यः, ॐ अद्यादेवा, ॐ आक्रष्णेनेति द्वे त्रिष्टुभौ, अथ ॐ तं प्रत्नथा, ॐ अयस्वन चोदनाचित्रं देवानामिति ऋकृचयं, प्रतीकोक्तं, [२]पूर्वस्थापितं स्मारितं, ॐ लोकं पृण, ॐ अयेन्द्र विश्वा इतिवत्, अतएवं च मन्त्रद्वयी भवति, प्रथमं विभ्राडित्यनुवाकः, "ॐ विभ्राड् बृहत् पिबतु सोम्यमध्वायुर्दधद्यज्ञ पतावविह्रुतं। वातजूतोयो अभिरक्षति त्मना प्रजाः पुपोष पुरुधा विराजति। ॐ उदुत्यं जातवेदसं देवं वहन्ति केतवः दृशे विश्वाय सूर्यं। ॐ येनापावक चक्षुषभुरण्यन्तं जनाᳫँ अनु। ॐ त्वं वरुणᳫँ पश्यसि। ॐ दैव्या वध्वर्यू आगतᳫँ रथेन सूर्यत्वचा। मध्वायज्ञᳫँ समञ्जाथे, तं प्रत्नथा पूर्वथा विश्वथे मथाज्येष्ठ तातिं वर्हिषदᳫँ स्वर्विदᳫँ। ॐ प्रतिचीनं वृजिनं दोहसे धुनि माशुञ्जयन्त मनुयासुवर्द्धसे।

(१) पञ्चाङ्गन्यासः। (२) पूर्वाम्नातं।

ॐ अयम्वेनश्चोदयत् पृश्निगर्भा ज्योतिर्जरायुरजसा [१]विमाने। ॐ इममपाᳫँ सङ्गमे सूर्य्यस्य शिशुन्नविप्रामतिभिरिहन्ति। ॐ चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः, आप्राद्यावा पृथिवी अन्तरीक्षं सूर्य आत्मा जगतस्तस्थुषश्च। ॐ आनदूत्याभिर्विद्धेसु-ग्रस्ति विश्वानरः सविता देव एतु, अपिययायुवानो मत्सथानो विश्वं जगदभिपीत्ले मनीषा। ॐ यदद्य कच्चवृत्रहन्नुदगा अभिसूर्य्य। सर्वं तदिन्द्रते वशे। ॐ तरणिर्विश्वदर्शतो ज्योतिष्कृदसि सूर्य। विश्वमा भासि रोचनम्। ॐ तत् सूर्यस्य देवत्वं तन्महित्वं मध्या कर्त्तोविततᳫँ सं जभार। यदेदयुक्त हरितः सधस्था-दाद्रात्री वासस्तनुते सिमस्मै। ॐ तन्मित्रस्य वरुणस्याभिचक्षे सूर्य्यो रूपं कृणुते द्योरुपस्थे, अनन्तमन्यद्रुशदस्य पाजः कृष्णमन्यद्धरितः संभरन्ति ॐ वण्महाᳫँ असि सूर्य्यबलादित्य महाᳫँ असि। महस्ते सतो-महिमापनस्य तेऽद्धादेव महाᳫँ असि। वट्सूर्य्य श्रवसा महाᳫँ असि। सवितादेवमहाᳫँ असि। गङ्गादेवानामसूर्य्यः पुरोहितो विभुज्योतिरदाभ्यं। आयन्त इव सूर्य्यं, विश्वेदिन्द्रस्य भक्षत। वसूनि जाते जनमान ओजसा प्रतिभागं न दीधिम। ॐ अद्या देवा उदिता सूर्य्यस्य निरᳫँहसः पिपृता निरवद्यात्। तन्नो मित्रो-वरुणो मामहन्ता-मदितिः सिन्धुः पृथिवी उत द्यौः। "ॐ आकृष्णेन रजसा वर्त्तमानो निवेशयन्नमृतं मर्त्यं च हिरण्मयेन सविता रथेना देवो याति भुवनानि पश्यन्"। पुरुषसूक्तस्य नारायणऋषिः, पञ्चदशर्चानुष्टुप्छन्दः षोड़शात्रिष्टुप्छन्दः जग-

(१) विमाने।

वीजं, पुरुषो नारायणो देवता, पुरुषमेधे विनियोगः, पुरुषो वै नारायणो कामयत इति ब्राह्मणं, सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्, सभूमिं सर्वतः स्पृत्वा अत्यतिष्ठद्दशाङ्गुलं । पुरुष-एवेदं सर्वं यद्भूतं यच्च भाव्यं, उतामृतत्वस्येशानो यदन्ने नातिरोहति, एतावानस्य महिमातो ज्यायाꣳश्च पुरुषः । पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि, त्रिपादूर्द्ध्व उदैत्पुरुषः पादोऽस्येहाभवत्पुनः, ततो विश्वं व्यक्रामत्साशनानशने अभि, ततो विराडजायत विराजो अधिपुरुषः, सजातोऽत्यरिच्यत पश्चाद्भूमिमथोपुरः तस्माद्यज्ञा सर्वहुतः संभृतं पृषदाज्यं, पशूꣳस्ताꣳश्चक्रे वायव्या नारण्या ग्राम्याश्च ये, तस्माद्यज्ञात् सर्वहुत ऋचःसामानि जज्ञिरे, छन्दाꣳसि जज्ञिरे तस्माद्-यजुस्तस्मादजायत तस्मादश्वा अजायन्त ये के चोभयादतः, गावोऽजज्ञिरे तस्मात्तस्माज्जाता अजावयः ।

तं यज्ञं बर्हिषि प्रौक्षन्पुरुषं जातमग्रतः ।
तेन देवा अयजन्त साध्या ऋषयश्च ये ॥

यत्पुरुषं व्यदधुः कतिधाव्यकल्पयन्, मुखं किमस्यासीत्किं बाहू किमूरू पादा उच्यते ।

ब्राह्मणोऽस्य मुखमासीद्वाहू राजन्यः कृतः ।
ऊरू तदस्य यद्वैश्यः पद्भ्याꣳ शूद्रो अजायत ॥
चन्द्रमा मनसो जातश्चक्षोः सूर्यो अजायत ।
श्रोत्राद्वायुश्च प्राणश्च मुखादग्निरजायत ॥
नाभ्यां आसीदन्तरीक्षं शीर्ष्णो द्यौः समवर्त्तत ।

पद्भ्यां भूमिर्दिशः श्रोत्रात्तथा लोकानकल्पयन्॥
यत्पुरुषेण हविषा देवा यज्ञमतन्वत।
वसन्तो अस्यासीदाज्यं ग्रीष्म इध्मः शरद्धविः॥
सप्तास्यासन् परिधयस्त्रिः सप्तसमिधः कृताः।
देवा यद्यज्ञं तन्वाना अबध्नन् पुरुषं पशुं॥

"यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन्, तेऽनाकं महिमानः सचयन्त यत्र पूर्वे साध्याः सन्ति देवाः," यज्जाग्रत इत्यस्य षड्चस्य प्रजापतिऋषिः, त्रिष्टुप्छन्दः, मनोदेवता, सूर्योपस्थाने विनियोगः, "यज्जाग्रतो दूरमुदैति दैवं, तदु सुप्तस्य तथैवैति, दूरङ्गमं ज्योतिषां ज्योतिरेकं तन्मे मनः, शिवसंकल्पमस्तु"। "येन कर्माण्यपसो मनीषिणो यज्ञे कृण्वन्ति। विदथेषु धीराः, यदपूर्वं यक्षमन्तः प्रजानां तन्मे मनः शिवसङ्कल्पमस्तु"। "यत्प्रज्ञानमुत चेतो धृतिश्च यज्ज्योतिरन्तरमृतं प्रजासु, यस्मान्न ऋते किंचन कर्म क्रियते तन्मे मनः शिवसंकल्पमस्तु"। "येनेदं भूतं भुवनं भविष्यत्परिगृहितममृतेन सर्वं, येन यज्ञस्तायते सप्तहोता तन्मे मनः शिवसङ्कल्पमस्तु"। "यस्मिन्नृचः साम यजूꣳषि यस्मिन् प्रतिष्ठितारथनाभाविवाराः, यस्मिꣳश्चित्तꣳ सर्वमोतं प्रजानां तन्मे मनः शिवसंकल्पमस्तु"। "सुषारथिरश्वानिव यन्मनुष्यान्नेनीयतेऽभीशुभिर्वाजिन इव। हृत्प्रतिष्ठं यदजिरं जविष्ठं तन्मे मनः शिवसंकल्पमस्तु"। मण्डलब्राह्मणं, विनियोज्यत्वेन मन्त्रकार्य्यकरत्वाम्मन्त्रधर्मलाभेन षष्ठ्यादिस्मरणं, प्रजापतिर्ऋषिः, यजुः, सूर्योदेवता, सूर्योपस्थाने विनियोगः। "ॐ यदेतन्मण्डलं तपति तन्महदुक्थन्ता

ऋचꣳ स ऋचां लोकोऽथ यदेतदर्चिर्दीप्यते तन्महाव्रतं तानि सामानि स साम्नां लोकोऽथ य ऽएष ऽएतस्मिन् मण्डले पुरुषꣳ सोऽग्निस्तानि यजूꣳषि स यजुषां लोकः ।१। सैषा त्रय्येव विद्या तपति तद्धैतदप्यविद्वाꣳस आहुस्त्रयी वा एषा विद्या तपतीति वाग्घैव तत्पश्यन्ति वदति ।२। स एष एव मृत्युर्य एष एतस्मिन्मण्डले पुरुषोऽथैतदमृतं यदेतदर्चिर्दीप्यते तस्मान्मृत्युर्न म्रियते मृते-ह्यन्तस्तस्माद् न दृश्यते मृतेह्यन्तः ।३। तदेष श्लोको भवति, अन्तरं मृत्योरमृतमित्यवरꣳ तन्मृत्योरमृतं मृत्यावमृतमाहित-मित्येतस्मिन् हि पुरुष एतन्मण्डलं प्रतिष्ठितं तपति मृत्यु-र्विवस्वन्तं वस्ते ऽत्यसौ वा ऽआदित्यो विवस्वानेष ह्यहोरात्रे विवस्ते तमेष वस्ते सर्व्वतो ह्यनेन परिवृतो मृत्योरात्मा विवस्वतीत्येतस्मिन् हि मण्डल ऽएतस्य पुरुषस्यात्मैतदेष श्लोको भवति ।४। तयोर्वा ऽएतयोरुभयोरेतस्य चार्चिष ऽएतस्य च पुरुषस्यैतन्मण्डलं प्रतिष्ठा तस्मान् महदुक्थं परस्मै नशꣳसेदेतां प्रतिष्ठां छिनदा इत्येताꣳ ह स, प्रतिष्ठां छिनत्त्यथो महदुक्थं परस्मै शꣳसति तस्मादुक्थशंसं भूयिष्ठं परिचक्षते प्रतिष्ठा छिन्नो हि भवतीत्यधिदैवतं ।५। “अथाधियज्ञ”। यदेतन्मण्डलं तपत्ययꣳ स रुक्मोऽथ यदेतदर्चि-र्दीप्यत इदं तत्पुष्करपर्णमापो ह्येता ऽआपः पुष्करपर्णमथ य ऽएष ऽएतस्मिन्मण्डले पुरुषोऽयमेव स योऽयꣳ हिरण्मयः पुरुषस्तदेतदेवे-तमयꣳ सꣳस्कृत्ये ह्युपधत्ते तदुपस्यैवानुसꣳस्थामूर्द्ध्वमुत्क्रामति तदेतमप्येति य ऽएष तपति तस्मादग्निमाद्रियेत परिचक्षुमसुष श्रेष तदा भवतीत्यु ऽएवाधियज्ञं ।६। “अथाध्यात्मं,” यदे-

तन्मण्डलं तपति यस्यैष रुक्मं इदं तच्छुक्लमचक्षुरथ यदेतदर्चिर्दीप्यते यस्यैतत्पुष्करपर्णमिदं तत्कृष्णमचक्षुरथ य ऽएष ऽएतस्मिन्मण्डले पुरुषो यस्यैष हिरण्मयः पुरुषोऽयमेव स योऽयं दक्षिणेऽक्षन्पुरुषः । ७। स ऽएष ऽएव लोक पृणातामेव सर्वोऽग्निरभिसंपद्यते तस्यैतन्मिथुनं योऽयꣳ सव्येऽक्षन्पुरुषोऽर्द्धमु हैतदात्मनो यन्मिथुनं यदा वै सह-मिथुनेनाथ सर्वोऽथ कृत्स्नः कृत्स्नतायै तस्मात्ते द्वे भवतो द्वन्द्वꣳ हि मिथुनं प्रजननं तस्माद् द्वे द्वे लोकं पृणे ऽउपधीयेते तस्माद् द्वाभ्यां द्वाभ्यां चितिं प्रणयन्ति । ८ । स ऽएष ऽएवेन्द्रः । यो यं दक्षिणे-क्षन्पुरुषो येयमिन्द्राणी ताभ्यां देवा ऽएतां विधृतिमकुर्वन्नासि-कान्तेऽस्माज्जायाया ऽअन्ते नाश्नीयाद्वीर्यवान् हास्माज्जायते वीर्य-वन्तमुह सा जनयति यस्या ऽअन्ते नाश्नाति । ९ । तदेतद्देवव्रतं राजन्यबन्धवो मनुष्याणामनुतमां गोपायन्ति तस्माद् तेषु वीर्य-वाञ्जायते मृतवाका वयसाꣳ साक्षिप्राश्येनं जनयति । १० । तौ हृदयस्याकाशं प्रत्यवेत्य मिथुनीभवतस्तौ यदा मिथुनस्यान्त-ङ्गच्छतोऽथ है तत्पुरुषः स्वपिति तद्यथा हैवेदं मानुषस्य मिथुनस्यान्तं गत्वा संविद ऽइव भवत्येवꣳ हैवैतदसंविद ऽइव भवति दैवꣳ ह्येतन्मिथुनं परमो ह्येष ऽआनन्दः ।११। तस्मादेवं वित्स्वप्यात् ॥ लोक्यꣳ हैते ऽएव तद्देवते मिथुनेन प्रियेण धाम्ना समर्द्धयति तस्मादुह स्वपन्तं धूरेव न बोधयेन्नेदेते देवते मिथुनीभव न्त्यौ हिनसानीति तस्माद् हैतत्सुषुपुषः श्लेष्मणमिव मुखं भवत्येते ऽएव तद्देवते रेतः सिञ्चतस्तस्माद्रेतस ऽइदꣳ सर्वꣳ संभवति यदिदं किञ्च ।१२। स ऽएष ऽएव मृत्युः । य ऽएष ऽएतस्मिन्मण्डले

पुरुषो यश्चायं दक्षिणेऽक्षन्पुरुषस्तस्य हैतस्य हृदये पादावतिहितौ तौ हैतदाच्छिद्योत्क्रामति स यदोत्क्रामत्यथ हैतत्पुरुषो म्रियते तस्माद् हैतन्मेतमाङ्गुराच्छेद्यस्येति। १३। एष ऽउ एव प्राणः॥ एष हीमाः सर्वाः प्रजाः प्रणयति तस्यैते प्राणाः स्वाः स यदा स्वपित्यथैनमेते प्राणाः स्वा अपियन्ति तस्मात्स्वाप्यय: स्वाप्ययो हवैतत्ँ स्वप्न ऽइत्याचक्षते परोक्षं परोक्षकामा हि देवाः। १४। स ऽएतैः सुप्तो न कस्यचन वेद न मनसा संकल्पयति न च वाचान्नस्य रसं विजानाति न [1]प्राणेन गन्धं विजानाति न चक्षुषा पश्यति न श्रोत्रेण शृणोत्येतत्ँ ह्येते तदा पीता भवन्ति स ऽएष एकः सन्प्रजासु बहुधा व्याविष्टस्तस्मादेका सती लोकं पृणा सर्वमग्निमनुवितत्यथ यदेक ऽएव तस्मादेकः। १५। तदाहुः। एको मृत्युर्बहव ऽइत्येकस्य बहवस्येतिह ब्रूयाद्यदहामावमुत्र तेनैकोऽथ यदिह प्रजासु बहुधा व्याविष्टस्तेनो बहवः। १६। तदाहुः, अन्तिके मृत्युर्दूरा ऽइत्यन्तिके च दूरेचेतिह ब्रूयाद्यद हायमिहाध्यात्मन्तेनान्तिकेऽथ यदामावमुत्र तेनोदूरे। १७। तदेष श्लोको भवति। अन्ये भात्यपश्रितो रमानात्ँ मंचरेऽमृत इति यदेतन्मण्डलं तपति तदन्नमथ य ऽएष ऽएतस्मिन्मण्डले पुरुषः सोऽत्ताम ऽएतस्मिन्नन्नेऽपश्रितो भातीत्यधिदैवतं।। १८। "अथाध्यात्मं" इदमेव शरीरमन्नमथ योऽयं दक्षिणेऽक्षन्पुरुषः सोऽत्ताम ऽएतस्मिन्नन्नेऽपश्रितो भाति। १९। तमेतमग्निरित्यध्वर्यव ऽउपासते, यजुरित्येष हीदत्ँ सर्वं युनक्ति सामेति छन्दोगा ऽएतस्मिन् हीदत्ँ

(१) न सा प्राणेन —।

सर्वᳬं समानमुक्थमिति वह्वृचा ऽएष ह्येदᳬं, सर्वमुत्थापयति यातुरिति यातुविद ऽएतेन ह्येदᳬं सर्वं यतं विषमिति सर्पाः सर्प इति सर्पविद ऽऊर्गिति देवा रयिरिति मनुष्या मायेत्यसुराः स्वधेति पितरो देवजन ऽइति देवजनविदो रूपमिति गन्धर्वा गन्ध ऽइत्यप्सरसस्तं यथायथोपासते तदेव भवति, तद्धैनान् भूत्वा ऽवति तस्मादेनमेवंवित्सर्वैरेवैतैरुपासीत सर्वᳬं हैतद्भवति सर्वᳬं हैनमेतद्भूत्वा ऽवति ।२०। स ऽएष चीष्टकोऽग्निर्ऋगेका यजुरेका सामैका तद्यास्तामृचोपदधाति रुक्म ऽएव तस्या ऽआयतनमथ-यां यजुषा पुरुष ऽएव तस्या ऽआयतनमथयाᳬं साम्ना पुष्करपर्णमेव तस्या ऽआयतनमेवं चीष्टकः ।२१। ते वा ऽएते उभे ऽएष च रुक्म ऽएतच्च पुष्करपर्णमेतं पुरुषमपीत ऽउभे ह्यृक्सामे यजुरपीत एवमस्येकेष्टकः ।२२। स ऽएष ऽएव मृत्युः, य ऽएष ऽएतस्मिन्मण्डले पुरुषो यश्चायं दक्षिणेऽक्षन्पुरुषः, स ऽएष ऽएवंविद ऽआत्मा भवति स यदैवंविदस्माᳬंल्लोकात्प्रैत्यथैतमेवात्मानमभिसम्भवति सो ऽमृतो भवति मृत्युर्ह्यस्यात्मा भवति ।२३। नैव वा इदमग्रे सदासीन्नैव सदासीत् । इति मण्डलब्राह्मणं दिवाकीर्त्यैर्व्रतरुद्रीय व्रतैरिति महीधरः ।

नमस्ते इति चिसृणां प्रजापतिऋषिः, गायत्रीछन्दः, द्वयोरनुष्टुप्छन्दः, रुद्रोदेवता, सूर्योपस्थाने विनियोगः । "ॐ नमस्ते रुद्रमन्यव उतोऽतऽइषवे नमः बाहुभ्यामुत ते नमः, या ते रुद्रशिवा तनूरघोरा पापकाशिनी, तया नस्तन्वा शन्तमया गिरिशन्ताभिचाकशीहि, यामिषुं गिरिशन्त हस्ते विभर्ष्यस्तवे,

शिवां गिरित्र तां कुरु मा हिंसीः पुरुषं जगत्"। सौराः परमेष्ठिप्रजापतिर्ऋषिः, द्वयोरनुष्टुप्छन्दः, तृतीया विराट् आदित्योदेवता, सूर्योपस्थाने विनियोगः। "कदाचन स्तरीरसि नेन्द्र सश्चसि दाशुषे, उपोपेन्नु मघवन् भूय इन्नु ते दानं देवस्य पृच्यते, आदित्येभ्यस्त्वा"। "कदाचन प्रयुच्छस्युभे निपासि जन्मनी, तुरीयादित्य सवनंत इन्द्रियमातस्थावमृतं दिव्यादित्येभ्यस्त्वा"।

"यज्ञो देवानां प्रत्येति सुम्नमादित्यासो भवता मृडयन्तः, आ वोऽर्वाचि सुमतिर्ववृत्यादंहोश्चिद्या वरिवो वित्तरासदादित्येभ्यस्त्वा। अघमर्षणसूक्तेनोपस्थानं, गुह्योपनिषत्, पूर्णमदः पूर्णमिदं, पूर्णात् पूर्णमदुच्यते।

पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते, ॐखं ब्रह्म खं पुराणं वायुरं खमिति ह स्माह कौरव्यायणी पुत्रो वेदोऽयं ब्राह्मणाविदुर्वेदैनेन यद्वेदितव्यं, अघमर्षणे मण्डलब्राह्मणास्तः, अशक्तौ विभ्राड्डित्यनुवाकमात्रेण वोपस्थानं, ततः प्रदक्षिणमावृत्य नमस्कृत्योपवेशनं, आसनस्थेषु प्रागग्रे दर्भेषु प्राङ्मुखत्वेन सव्यतयोपवीत परामर्शः, हस्तयोस्तोयेनाघमर्षणं, त्रिराचमनं, अङ्गुष्ठमूलेन ओष्ठयोर्द्विर्मार्जनं, ओष्ठयोरेवाङ्गुल्यग्रैः सकृदुपस्पर्शनं, उदकेन वामपाणिप्रोक्षणं, पादयोश्च प्रोक्षणं, शिरश्चक्षुर्द्वयनासिकाद्वयश्रोत्रद्वयानां हस्तेन स्पर्शनं, पवित्रलक्षणोपेतकुशत्रयेण इन्द्रियस्पर्शनं, तदेव पावनं, पञ्चदशमात्राभिः प्रणवेन प्राणायामत्रयं, दक्षिणजानूपरि पवित्रोपयद्व्यतिरिक्तपवित्रलक्षणोपेत-कुशत्रययुक्ताञ्जलि-

धारणं, प्रणवमुच्चार्य्य व्याहृतित्रयोच्चारणं, गायत्र्या द्विपा[१]दादीनां व्यस्तानामुच्चारणं, पुनर्गायत्र्याः पादद्वयरूपमर्द्धर्चमुच्चार्य्य तृतीय-पादोच्चारणं, पुनराचामवान् सर्वं गायत्र्या उच्चारणं, तत आदावारभ्य मन्त्रसंहितायाः, प्रथमाध्यायक्रमेण अनुवाकानुवाकक्रमेण वा प्रति-दिन यावत्समाप्ति पाठः, मन्त्रसमाप्तौ ब्राह्मणसंहिताया, अध्यायाध्यायक्रमेण, ब्राह्मणब्राह्मणक्रमेण वा यावत्समाप्ति पाठः, अशक्तौ कण्डिकाक्रमेण वा, एवमेकां शाखां समाप्य यस्यानेक वेदाध्ययनं तस्यापरस्य वेदस्य एवमेव क्रमेण समापनं, पश्चादाथर्वण प्रणवपुराणेतिहासाङ्गानामपि यथाक्रमेण समापनं।

[२]एभिर्यावद्भिर्दिनैरेतेषां समाप्तिः, पुनरादावारभ्य वेद-मित्येवं क्रमेण यावज्जीवमभ्यासः, अशक्तौ गायत्रीमात्रं, व्याहृति-त्रयं वा प्रणवमात्रं वा फलाविशेषार्थं[३] पुरुषसूक्तस्य जपनियमः, भूर्भुवः स्वः सत्यं तपः श्रद्धायां जुहोमीत्येतावन्मात्रं वा, अशक्तौ सर्ववेदफलार्थिनः, सोंकारचतुरावृत्तिगायत्रीजपः, त्र्यम्बक-जातवेदा गायत्रीरूपशताचरे जपो वा काम्यः, एवं ब्रह्म-यज्ञं कृत्वा अन्ते प्लुतप्रणवोच्चारणं, ॐ नमो ब्रह्मणे, नमोऽग्नये, नमः पृथिव्यै, नमः ओषधीभ्यः, नमो वाचे, नमो वाचस्पतये, नमो विष्णवे, नमो महते, करोमीति त्रिर्जपः, भूमिं स्पृष्टाचमनं, इति तैत्तिरीयश्रुत्यनुसारेण ब्रह्मयज्ञविधिः, अस्य प्रत्यक्षश्रुतिगतत्वात् प्रकारान्तरं न गृह्यते स्मृत्युक्तत्वात्।

(१) गायत्र्याः — पादानां —। (२) एवं —।

(३) फलविशेषार्थिनः —।

अथ तर्पणविधिः, प्रागग्रकुशत्रयास्तरणं ततः, गृत्समद ऋषिः,[१] गायत्रीछन्दः, विश्वेदेवा देवताः, आवाहने विनियोगः, "ॐ विश्वेदेवास आगत शृणुता म इमं हवं, एदं बर्हिर्निषीदत," इत्यक्षतपुष्पाभ्यां ब्रह्मादयो विश्वेदेवा अत्रागच्छतेत्यावाहनं, यवान् विकीर्य्य, सुत[२]होत्रऋषिः, त्रिष्टुप्छन्दः, विश्वेदेवा देवता, जपे विनियोगः, "ॐ विश्वेदेवाः शृणुतेमꣳ हवं ये मे अन्तरीक्ष य उपद्यविष्ठ, ये अग्निजिह्वा उत वा यजत्रा आसद्यास्मिन् बर्हिषि मादयध्वं," इति जपः, दक्षिणजानुपातनं, उदङ्मुखत्वं ऋजुकुशत्रयस्य दक्षिणहस्तेन तर्पणार्थं ग्रहणं, वामहस्तेन दक्षिणहस्तस्पर्शनं, ॐ ब्रह्मा तृप्यतामिति देवतीर्थेन [३]यवाभिः प्रादेशमात्रं उद्धृतजले जलप्रक्षेपणं ब्रह्मतर्पणं, इदं ब्रह्मण इति त्यागः, एवं पुनर्वारद्वयं, यवाभावे प्रतिनिधित्वेन तण्डुलाः, चिन्तामणिकारस्तु यवानां वैकल्पिकमाह. एवं विष्णुस्तृप्यतामिति तर्पणत्रयं, ॐ रुद्रस्तृप्यतामिति वारद्वयं,[४] प्रजापतिस्तृप्यतामिति कनिष्ठाङ्गुष्ठमूलप्रजापतितीर्थेन सकृत् देवास्तृप्यन्तां, छन्दांसि तृप्यन्तां वेदास्तृप्यन्तां, ऋषयस्तृप्यन्तां, पुराणाचार्यास्तृप्यन्तां, इतराचार्यास्तृप्यन्तां, सम्वत्सराः सावयवास्तृप्यन्तां, देव्यस्तृप्यन्तां, अप्सरसस्तृप्यन्तां, देवानुगास्तृप्यन्तां, नागास्तृप्यन्तां सागरास्तृप्यन्तां, पर्वतास्तृप्यन्तां, सरितस्तृप्यन्तां, दिव्या-मानुषास्तृप्यन्तां, यक्षा-

(१) गृत्समदर्षिः। (२) सुहोत्र — ऋषिः।
(३) यवैः। (४) त्रयं।

स्तृप्यन्तां, रक्षांसि तृप्यन्तां ; पिशाचास्तृप्यन्तां ; सुपर्णास्तृप्यन्तां, भूतानि तृप्यन्तां, पशवस्तृप्यन्तां, वनस्पतयस्तृप्यन्तां, पृथिवी तृप्यतामिति वा, ओषधयस्तृप्यन्तां, भूतग्रामचतुर्विधस्तृप्यतां, एतेभ्यो ॐकारनाम्ना देवतीर्थेनाम्वारम्भेन वारत्रयं तर्पणं, प्रतितर्पणं इदं विष्णवे इत्यादिरूपेण त्यागः, जलप्रक्षेपश्च जलस्थस्य जले स्थलस्थस्य तीरसमीपे, चेत्स्थले स्थले चेदुद्धृतोदकेन स्थले सम्भवे चावाहनस्थानकुशेषु जलप्रक्षेपः, जले स्थले वापि, ततो यज्ञसूत्रोत्तरीययोः, कण्ठावसक्तकरणं, तर्पणार्थकुशत्रयमध्यस्य तोयाभिमुखं धारणं, उदङ्मुखत्वमस्त्येव सव्यान्वारम्भे दक्षिणहस्तेन प्राजापत्यतीर्थेन वारद्वयं द्वयं, सनुष्या अत्रागच्छतेत्यावाहनं ; नात्र मन्त्रः, सनकस्तृप्यतां, इदं सनकाय, पुनरपरतर्पणत्यागौ, सनन्द-स्तृप्यतां ; सनातनस्तृप्यतां ; कपिलस्तृप्यतां, वोढुस्तृप्यतां, आसुरि-स्तृप्यतां, पञ्चशिखस्तृप्यतां सर्वेषां प्रणवादिनाम्ना वारद्वयं द्वयं, ऋषितर्पणमिति सनकादितर्पणवत् प्राजापत्येन तीर्थेन वारद्वयं द्वयं च, कुशमध्येन निवीतीत्वेन च कर्त्तव्यं ; मरीचिस्तृप्यतां, इदं मरिचये, पुनरपि वा तर्पणत्यागौ, अत्रिस्तृप्यतां, अङ्गिरास्तृप्यतां, पौलस्त्यस्तृप्यतां, प्रचेतास्तृप्यतां, वशिष्ठस्तृप्यतां, भृगुस्तृप्यतां, नारदस्तृप्यतां, प्रणवादिनाम्ना वारद्वयं तर्पणत्यागौ, ततोऽपसव्य-करणं, यज्ञोपवीतवाससोः, दक्षिणाभिमुखत्वं, सव्यजानुपातनं, आवाहनस्थानात् कुशानां[१] ग्रहणं, तिलपुष्पमादाय। ग्रंखऋषिः

---

(१) आवाहनस्थानकुशानां दक्षिणाग्रकरणं।

त्रिष्टुप्छन्दः पितरो देवता, आवाहने विनियोगः "ॐ उशन्तस्त्वा-
निधीमह्युशन्तः समिधीमहि ; उशन्नुशत आवह पितॄन् हविषे
अत्तवे" । ॐ कव्यवालनलादयो यमो[१] वैवस्वतादयो ऽस्मत्पितृ-
पितामहप्रपितामहा अस्मिन्मातामह-प्रमातामह-वृद्धप्रमातामहा
अस्मिन्मातृपितामही-प्रपितामह्यः अत्रागच्छत, पितरोऽत्रागच्छतेति
वा, सर्वेषां, तिलविकिरणं, शङ्खऋषिः, त्रिष्टुप्छन्दः पितरो देवता,
जपे विनियोगः, "ॐ आयन्तु नः पितरः सोम्यासोऽग्निष्वात्ताः पथि-
भिर्देवयानैः, अस्मिन् यज्ञे स्वधया मदन्तोऽधिब्रुवन्तु तेऽवन्त्वस्मान्"
इतिजपः, राजतेन पात्रेण सौवर्णेन वा, तदभावे खड्गेन तदभावे
ताम्रेण असम्भवे नारिकेलादिपात्रेण वा द्वादशाङ्गुल[२]वारणे वा ;
पात्राभावे रजतादि, तिलयुतेनाञ्जलिना वा तर्पणं । अत्यन्ता-
सम्भवे गुणलोपे तु मुख्यस्येति केवलाञ्जलिना वा, तर्पणसाधन-
कुशत्रयस्य द्विगुणीकृत्य जलेन मोटककरणं, कुशमूलाग्रयोर्जले
प्रवेशाय सव्यहस्तेन कुशमध्यधारणं ; पितृतीर्थेन पात्रे जलपूरणं,
दक्षिणहस्ते अङ्गुष्ठतर्जनीयोगरूपमुद्रां परिहृत्य पात्रस्थेषु जलेषु
तिलमिश्रणं, शुद्धाञ्जलिना ग्रहणे जलग्रहणात्पूर्वमेव दक्षिण-
हस्तेन तिलमादाय वामहस्ते करणं, उद्धृतोदकतर्पणे च भूमिस्थ-
जलपूर्णपात्रे तिलमिश्रणं, तस्मात्पात्रेण सतिलग्रहणं, जीवत्पितृ-
कस्य तिलमिश्रणाभावः न जीवत्पितृकः कृष्णैस्तिलैरिति

(१) यमावस्त्रादयोऽ — ।
(२) द्वादशाङ्गुल—काष्ठे शिलावरेण वा ।

निषेधात्। कृष्णत्वस्य पितृकर्मणोचितं प्राप्तानुवादित्वेन मल-वद्वासोनिषेधवद्विशेषणपरत्वाभावात्।

ॐ कव्यवाडनलस्तृप्यतां, इति पितृतीर्थेन गोमूत्रमात्रं उद्धृत्य क्षिपेत्, [1]इदं कव्यवाडनलादयः पुनर्वारद्वयं, एवं सर्वत्र प्रणवपूर्वकनाम्ना वारत्रयतर्पणत्यागः, सोमस्तृप्यतां, यमस्तृप्यतां, अर्यमास्तृप्यतां, अग्निष्वात्ताः पितरस्तृप्यन्तां, सोमपाः पितरस्तृप्यन्तां, बर्हिषदः पितरस्तृप्यन्तां; ततो यमतर्पणं वैकल्पिकं संयोगपृथक्त्वात् यावज्जीवं पापक्षयस्यास्य फलकरणपक्षे; तच्च देवतीर्थेनेत्येके, देवतीर्थपक्षे ऽप्यपसव्यदक्षिणामुखत्वादयः सन्त्येव, यमाय नम इति वाक्येनाञ्जलित्रयतर्पणं, इदं यमाय एवमन्येभ्योऽञ्जलीत्रयं त्रयं तर्पणं, धर्मराजाय नमः, मृत्यवे नमः, अन्तकाय नमः, वैवस्वताय नमः, कालाय नमः, सर्वभूतक्षयाय नमः, शानाय नमः, औदुम्बराय नमः, दध्नाय नमः, नीलाय नमः, परमेष्ठिने नमः, वृकोदराय नमः, चित्राय नमः, चित्रगुप्ताय नमः, कृष्णचतुर्दश्यामुषसि नदीस्नान-पूर्वकं यमतर्पणं सर्वपापक्षयार्थं, नदीस्नानसहितं कर्मान्तरमेव काम्यं. एतावज्जीवत्पितृकस्य मातरि मृते पितरि जीवति समाचारा-न्मातृपितामहीनां अत्रैव तर्पणं, ततो मृतपितृकस्य कथ्यतेऽधिकं, एवं; ॐ वसवस्तृप्यन्तामिदं जलं तेभ्यः स्वधानम इति त्रिवारं इदं वसुभ्यः, ॐ रुद्रास्तृप्यन्तामिदं जलं तेभ्यः स्वधानमः, ॐ आदित्या-स्तृप्यन्तामिदं जलं तेभ्यः स्वधानमः, ॐ आचार्यास्तृप्यन्तामिदं जलं

---

(१) एवं —।

तेभ्यः। अथ पित्रादितर्पणं, प्रजापतिर्ऋषिः; त्रिष्टुप्छन्दः, पितरो-देवता; "ॐ उदीरतामवर उत्परास उन्मध्यमाः पितरः सोम्यासः, "असुं यईयुरवृका ऋतज्ञास्ते नोऽवन्तु पितरो हवेषु" ॐ अमुक-सगोत्रोऽस्मत्पिता अमुकदेवशर्म्मा तृप्यतामिदं जलं तस्मै स्वधा नमः, इदमस्मत्पित्रेऽमुकदेवशर्म्मणे, अत्र मन्त्रादौ प्रणवोच्चारणं, नामविशेषेण गोत्रादौ च एवं वक्ष्यमाणेषु सर्वत्र, अङ्गिराऋषिः, त्रिष्टुप्छन्दः, पितरो देवता, तर्पणे विनियोगः, "ॐ अङ्गिरसोनः पितरो नवग्वा अथर्वाणो भृगवः सोम्यासः, तेषां वयं सुमतौ यज्ञीयानामपि भद्रे सौमनसे स्याम"। ॐ अमुकसगोत्रो ऽस्मत्पिताऽमुकदेवशर्म्मा तृप्यतामिदं जलं तेभ्यः स्वधानमः, इद-मस्मत्पित्रे, शङ्खऋषिः, त्रिष्टुप्छन्दः, पितरोदेवता, तर्पणे विनि-योगः, "ॐ आयन्तुनः पितरः सोम्यासो ऽग्निष्वात्ता पथिभिर्देवयानैः, अस्मिन् यज्ञे स्वधया मदन्तोऽधिब्रुवन्तु ते ऽवन्त्वस्मान्"। अमुक-सगोत्रोऽस्मत्पिताऽमुकदेवशर्म्मा तृप्यतामिदं जलं तस्मै स्वधानमः, इदमस्मत् पित्रे, प्रजापतिर्ऋषिः, यजुः, पितरो देवता, तर्पणे विनि-योगः, "ॐ ऊर्जं वहन्तीरमृतं घृतं पयःकीलालं परिस्रुतं, स्वधास्थ तर्पयत मे पितॄन्"। अमुकसगोत्रोऽस्मत्पितामहोऽमुकदेवशर्म्मा तृप्यतामिदं जलं तस्मै स्वधानमः, इदमस्मत्पितामहायाऽमुक-देवशर्म्मणे, प्रजापतिर्ऋषिः, यजुः, पितरोदेवता, तर्पणे विनियोगः, स्मार्त्तकर्मणि परादिना पूर्वान्त इति श्रौतवन्मन्त्रपरिच्छेदत्व-दर्शनात्कण्डिकापरिच्छेदस्य स्मार्त्तविनियोगार्थत्वात्, यजुःस्वयमन्त्रः एकः; "ॐ पितृभ्यः स्वधायिभ्यः स्वधानमः, ॐ पितामहेभ्यः

स्वधायिभ्यः स्वधानमः, ॐ प्रपितामहेभ्यः स्वधायिभ्यः स्वधानमः, "अद्यन्पितरो ऽनुमदन्त पितरोऽतितृप्यन्तु पितरः पितरः शुन्धध्वं"। अमुकसगोत्रोऽस्मत्पितामहोऽमुकदेवशर्मा तृप्यतामिदं जलं तस्मै स्वधानमः, इदमस्मत्पितामहायामुकदेवशर्मणे। प्रजापति ऋषिः, त्रिष्टुपछन्दः, पितरो देवता, तर्पणे विनियोगः।

"ॐ ये चेह पितरो ये च नेहयांश्च विद्मयां उपन प्रविद्म, त्वं वेत्थ यति ते जातवेदः सुधाभिर्यज्ञं सुकृतं जुषस्व"। अमुकसगोत्रोऽस्मत्पितामहोऽमुकदेवशर्मा तृप्यतामिदं जलं तस्मै स्वधानमः, इदमस्मत्पितामहायामुकदेवशर्मणे। गौतम ऋषिः, गायत्री छन्दः, विश्वेदेवा देवता, तर्पणे विनियोगः, "ॐ मधुवाता ऋतायते मधु चरन्ति सिन्धवः, माध्वीर्नः संत्वोषधीः"। अमुकसगोत्रोऽस्मत्प्रपितामहोऽमुकदेवशर्मा तृप्यतामिदं जलं तस्मै स्वधानमः, इदमस्मत्प्रपितामहायामुकदेवशर्मणे। गौतम ऋषिः, गायत्रीछन्दः, विश्वेदेवा देवता, तर्पणे विनियोगः, "ॐ मधुनक्तमुतोषसो मधुमत्पार्थिवं रजः मधुद्यौरस्तु नः पिता"। अमुकसगोत्रोऽस्मत्प्रपितामहो ऽमुकदेवशर्मा तृप्यतामिदं जलं तस्मै स्वधानमः, इदमस्मत्प्रपितामहायामुकदेवशर्मणे। गौतम ऋषिः, गायत्रीछन्दः, विश्वेदेवा देवता, तर्पणे विनियोगः।

"ॐ मधुमान्नो वनस्पतिर्मधुमां अस्तु सूर्यः, माध्वीर्गावो भवन्तु नः"। अमुकसगोत्रो ऽस्मत्प्रपितामहो ऽमुकदेवशर्मा तृप्यतामिदं जलं तस्मै स्वधानमः. इदमस्मत्प्रपितामहायामुकदेवशर्मणे। अमुकसगोत्रोऽस्मत्पितृपितामहप्रपितामहा अमुकदेव-अमुकदेव-

अमुकदेवशर्माणः, तृप्यध्वमिदं जलं तेभ्यः स्वधानमः, इदमस्मत्पितृपितामहप्रपितामहेभ्योऽमुक-अमुक-अमुक-देवशर्मभ्यः, एवं पुनर्वारद्वयं तर्पणत्यागौ, पितामहे जीवति प्रपितामहे पितामहसम्बन्धिमन्त्राः, वृद्धप्रपितामहे प्रपितामहमन्त्राः; एवं प्रपितामहे जीवत्यूह्यं, ततः कृताञ्जलिरिमं मन्त्रं पठेत् । प्रजापति ऋषिः, यजुः, पितरो देवता, जपे विनियोगः, "नमो वः पितरः शुष्मा[१]य, नमो वः पितरस्तपसे, नमो वः पितरो यज्जीवं तस्मै नमो वः पितरो रसाय, नमो वः पितरो घोराय मन्यवे स्वधायै वः पितरो नमः" । ततो मातामहादितर्पणं, अमुकसगोत्रोऽस्मन्मातामहो-ऽमुकदेवशर्मा तृप्यतामिदं जलं तस्मै स्वधानमः, इदमस्मत् मातामहायामुकदेवशर्मणे, एवमपरवारद्वयं तर्पणत्यागौ, अमुक सगोत्रोऽस्मत्वृद्धप्रमातामहोऽमुकदेवशर्मा तृप्यतामिदं जलं तस्मै स्वधानमः, इदमस्मत्वृद्धप्रमातामहायामुकदेवशर्मणे, एवमपर-वारद्वयं तर्पणत्यागौ ।

मात्रादितर्पणं, अमुकसगोत्रा-ऽस्मन्माताऽमुका[२]देवी तृप्यता-मिदं जलं तस्यै स्वधानमः, इदमस्मन्मात्रे अमुका देव्यै एवमपर वारद्वयं तर्पणत्यागौ, अमुकसगोत्रास्मत्पितामही अमुका देवी तृप्यतामिदं जलं तस्यै स्वधानमः, इदमस्मत्पितामह्यै अमुकादेव्यै, एवमपरवारद्वयं तर्पणत्यागौ, अमुकसगोत्राऽस्मत्प्रपितामही अमुका देवी तृप्यतामिदं जलं तस्यै स्वधानमः, इदमस्मत्प्रपितामह्यै

(१) शोषाय । (२) अमुकी देवी ।

अमुकादेव्यै एवमपरवारद्वयं तर्पणत्यागौ, अमुकसगोत्रा अस्मत्-ज्येष्ठमाता अमुकादेवी तृप्यतामिदं जलं तस्यै स्वधानमः, एकोऽञ्जलिः, इदमस्मत्ज्येष्ठमात्रे, ततः कनिष्ठमात्रे, ततो ज्येष्ठ-कनिष्ठक्रमेण पितृतर्पणं, अनेनैव क्रमेण भ्रातृतर्पणं, एवं माता-मही-प्रमातामही-वृद्धप्रमातामहीनां, भगिनीनां ज्येष्ठादिक्रमेण, एवं मातुलादीनां, श्वशुरमातृभगिनीनां ज्येष्ठादिक्रमेण, ततः स्वपत्नीनां ज्येष्ठादिक्रमेण, ततः स्वपुत्राणां ज्येष्ठादिक्रमेण, ततः स्वदुहितॄणां, ततो गुरूणां, शिष्याणां, मित्राणां यथास्मरण-मश्लिष्टज्ञातीनां क्रमेण, भावुक-श्याल-बान्धवानां च, स्वामिना-मन्येषां च, कारुण्यात् स्मरणे तर्पणं, एतेभ्योऽरेकैकाञ्जलिः, यथानाम त्यागः. ततः,

"देवासुरास्तथा यक्षा नागा गन्धर्वराक्षसाः।
पिशाचाः गुह्यकाः सिद्धाः कुष्माण्डास्तरवः खगाः॥
जलेचरा भूनिलया वाय्वाहाराश्च जन्तवः।
तृप्तिमेते प्रयान्त्वाशु मद्दत्तेनाम्बुनाखिलाः"॥

इति जलाञ्जलिदानं।

एते च प्रेतभावं गता इति बुद्ध्या तर्पणं। तथा,—

"नरकेषु समस्तेषु यातनासु च ये स्थिताः।
तेषामाप्यायनायैतद्दीयते सलिलं मया"॥

इत्येकोऽञ्जलिः।

"ये बान्धवा अबान्धवा अन्यजन्मनि बान्धवाः।
ते तृप्तिमखिलां यान्तु ये चास्मत्तोयकाङ्क्षिणः"॥

इत्येकोऽञ्जलिः, ततो मृत्तोयं दत्त्वा वस्त्रचालनं, समाचारा-द्वास्तरणकुशत्रयं तर्पणकुशांश्चैकीकृत्य भूमौ संस्थाप्य तत्र वस्त्रनिष्पीडनं ।

"ये चास्मत्कुले जाता अपुत्रा गोत्रिणो मृताः ।
ते गृह्णन्तु मया दत्तं वस्त्रनिष्पीड़ितोदकं" ॥

निष्पीड़नकाले चासंस्कृतप्रमृतानां बुद्धौ करणं, तथात्यागिनां कुशयोषितां, दासवर्गतत्पितृवर्गस्य च, ततो यज्ञोपवीती भूत्वा पूर्वमुखस्थः सकृदाचमनं, प्रातःस्नानं काम्यतीर्थस्नानादौ तर्पणाङ्गत्वेन एतावत्पर्यन्तकरणं, मध्याह्ने तु स्नानवत्तर्पणमपि प्रधानं प्रधान-भूतेनापि तर्पणेन स्नानाङ्गत्वनिर्वाहः, ततो जपयज्ञः, गायत्र्या ऋष्यादिस्मरणं, यथाशक्ति गायत्रीजपः, स च द्विविधः दशप्रणव-संयुक्तः सप्तव्याहृतिशिरःसहित एकः, प्रणवव्याहृतिसहितोऽपर इत्युक्तं प्राक्, एवं अघमर्षणद्रुपदा, हंसपावमानि कुष्माण्डसंज्ञक-प्रभृतीनां शक्तौ सत्यां जपः, जपधर्माश्चोक्ताः, अथ सूर्यार्घ्यः, ततोऽष्टदलपद्मलिखनं, तिलयवरक्तचन्दनयुतजलपात्रं गृहीत्वा हंसः शुचिषदिति पठित्वा मूर्द्धपर्यन्तमुपस्थाप्य सूर्यायार्घं नम इति मण्डलेऽर्घजलप्रक्षेपः शिरस्यञ्जलिं निधाय जपः ।

"ॐ नमस्ते विष्णुरूपाय नमस्ते ब्रह्मरूपिणे ।
सहस्ररश्मये नित्यं नमस्ते सर्वतेजसे ॥
नमस्ते रुद्रवपुषे नमस्ते भक्तवत्सल! ।
जगत्स्वामिन्नमस्तेऽस्तु दिव्यचन्दनरूपधृक्! ॥
पद्मनाभ! नमस्तेऽस्तु कुण्डलाङ्गदभूषित! ।

नमस्ते सर्वलोकेश! सुप्तानामपि बुध्यसे ॥
सुकृतं दुष्कृतं चैव सर्वं पश्यसि सर्वदा।
सत्यदेव! नमस्तेऽस्तु प्रसीद मम भास्कर! ॥
दिवाकर! नमस्तेऽस्तु प्रभाकर! नमोऽस्तु ते"।

एवं नमस्कृत्य त्रिःप्रदक्षिणकरणं, तर्पणोत्तरकर्म, ब्रह्माणं, चतुर्वक्त्रं [१]कनकवर्णं कमण्डलुस्रुक्स्रुवाक्षसूत्रकरं ध्यात्वा हिरण्यगर्भ इत्यस्य, प्रजापतिऋषिः, त्रिष्टुप्छन्दः, हिरण्यगर्भो देवता, पूजायां विनियोगः।

"हिरण्यगर्भः समवर्त्तताग्रे भूतस्य जातः पतिरेक आसीत्।
सदाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम"॥

इति जलेषु पुष्पप्रक्षेपः, नात्रावाहनादि, पुष्पदानमात्र-पूजा एवं रुद्रादिषु, विष्णुपूजायां विशेषः, प्रणव ऋष्यादिस्मरणं अर्घसंस्कारः, ॐ नारायणमावाहयामि, नारायण अत्रागच्छ, इति पुष्पाक्षताभ्यां जले ध्येयः सदेवलक्ष्मीकस्यावाहनं, ॐ नारायणाया-सनं ददानीत्यासनदानं, ॐ नारायणाय पाद्यं ददानीति पुष्पा-क्षतसहितं पाद्यजलदानं, ॐ नारायणाय अर्घोदकं इत्यर्घदानं, ॐ नारायणायाचमनं ददानीत्याचमनीयदानं, ॐ नारायणाय स्नानीयं ददानीति स्नानीयदानं, पुनराचमनीयं, ॐ नारायणाय वस्त्रयुग्मं ददानीति वस्त्रयुग्मदानं, ॐ नारायणाय यज्ञोपवीतं ददानीति यज्ञोपवीतदानं, ॐ नारायणाय गन्धं ददानीति गन्ध-दानं, पुरुषसूक्तऋष्यादि स्मृत्वा ॐ सहस्रशीर्षेत्यादि साध्याः सन्ति देवा इत्यन्तं सूक्तमुच्चार्य्य नारायणाय पुष्पं ददानीति पुष्पदानं।

(१) रक्तवर्णं।

गायत्र्या स्वाद्यादि कृत्वा गायत्रीमुच्चार्य्य नारायणाय धूपं स्वाहेति धूपः, एवं गायत्रीमुच्चार्य्य दीपं स्वाहेति दीपः, गायत्री-मुच्चार्य्य नैवेद्यं ददानीति नैवेद्यं, आचमनं, गायत्रीमुच्चार्य्य नारायणाय नम इति पुष्पाञ्जलिदानं, गायत्रीमुच्चार्य्य नारायण! स्वस्थानं गच्छेति हृदयकमले गतिचिन्तनं अग्नौ गन्धादिपञ्चोप-चारेण वा, पुष्पेणैव गन्धधूपदानं पुष्पस्याभावे जलेनैव सर्वोप-चाराः, तदन्ते निरञ्जनब्रह्मज्ञानेन सूर्य्यध्यानं, ततो रुद्रध्यानं, अघोरऋषिः, गायत्रीछन्दः, रुद्रोदेवता, पूजायां विनियोगः, "रुद्रं वृषारूढं शूलहस्तं शुक्लवाससं, ॐ नमस्ते रुद्रमन्यव इति उच्चार्य्य रुद्राय नमः, इति पुष्पदानं, नारायण ऋषिः, यजुः, सूर्य्योदेवता, नारायण ऋषिः, गायत्रीछन्दः, सवितादेवता, विश्वामित्र ऋषिः, सवितादेवता, सूर्य्यपूजायां विनियोगः, "आदित्यं रक्तवर्णं द्विभुजं पद्महस्तं ध्यात्वा, देव सविता प्रसुव यज्ञ प्रसुव यज्ञपतिं भगाय, दिव्यो गन्धर्वः केतपूः केतन्नः पुनातु वाचस्पतिर्वाचन्नः सवितुः, विश्वानि देव सवित दुरितानि परासव, यद्भद्रं तन्न आसुव गायत्रीमुच्चार्य्य सवित्रे नम इति पुष्पदानं। प्रजापति ऋषिः, गायत्रीछन्दः, मित्रोदेवता, मित्रपूजायां विनियोगः, मित्रस्य चर्षणि धृतो वो देवस्य सानसि, द्युम्नं चित्रश्रवस्तमं, मित्रो न एहि सुमित्र्या इन्द्रस्योरुमाविशदक्षिणं उशन्, उशन्तस्‌योनः स्योनं, धृते दृंहस्यामि मित्र ममाचक्षुषा सर्वाणि भूतानि समीक्षतां, मित्रस्याहं चक्षुषा सर्वाणि भूतानि समीक्षामहे," इति मन्त्रमुच्चार्य्य

(१) समीक्ष।

मित्राय नम इति जले पुष्पप्रक्षेपः, "इमं मे वरुण" "तत्त्वायामि" "उदुत्यं होति" मन्त्रत्रयस्य ऋष्यादिस्मरणं, शुक्लवर्णं पाशहस्तं मकरवाहनं वरुणं ध्यात्वा मन्त्रत्रयमुच्चार्य्य वरुणाय नम इति जले पुष्पप्रक्षेपः। पुष्पाभावे सर्वत्र जलं। "ॐ हंसः शुचिषदि"ति सूर्यावलोकनं। प्रजापति ऋषिः, गायत्रीछन्दः, सूर्योदेवता, उपस्थाने विनियोगः। अदृश्रमास्य केतवो-विरश्मयोजानां[१] अनु भ्राजतो अग्नयो यथा। इति सूर्याभिमुखस्योर्द्ध्वाञ्जलिरवस्थानं, प्रजापति ऋषिः, त्रिष्टुप्छन्दः, त्वष्टा देवता, मुखविमार्जने विनियोगः। "ॐ संवर्चसा पयसा संतनूभिरगान्महिमनसासं [२]शितेन त्वष्टा सुदत्रोविदधातु रायोऽनुमार्ष्टितन्वोयद्विलिष्टं"। अनेन तोयेन पाणिभ्यां मुखमार्जनं। प्रजापति ऋषिः, यजुः, सूर्योदेवता, उपस्थाने विनियोगः। "ॐ स्वयंभुरसि श्रेष्ठोरश्मिर्वर्चोदा असि वर्चोमे धेहि सूर्य्यस्यावृतमन्वावर्त्ते"। अनेन सूर्योपस्थानं। सूर्यस्येत्यस्य, प्रजापति ऋषिः, यजुः, सूर्योदेवता, प्रदक्षिणे विनियोगः। "ॐ सूर्यस्यावृतमन्वावर्त्तः"। अनेन प्रदक्षिणकरणं। उपविश्य दिग्देवतानां नमस्कारः। दिग्भ्यो नमः, दिग्देवताभ्यो नमः, इति कर्काचार्याः; दिशां च देवतानां च प्रत्येकं नमस्कार—इत्याहुः। प्राच्यै दिशे नमः; प्रागदक्षिणायै दिशे नमः; दक्षिणायै दिशे नमः; दक्षिणापरायै दिशे नमः; पश्चिमायै दिशे नमः; पश्चिमोदीच्यै दिशे नमः; उदीच्यै दिशे नमः; अर्वाच्यै दिशे नमः; इन्द्राय नमः; अग्नये नमः; यमाय नमः। नैर्ऋताय नमः, वरुणाय नमः,

(१) जनाँ२ऽ।        (२) सिवेन।

वायवे नमः, कुवेराय नमः, ईशानाय नमः, ब्रह्मणे नमः, अनन्ताय नमः, ॐ ब्रह्मणे नम इति मूर्द्ध्नि नमस्कृत्य जलाञ्जलिदानं। ॐ अग्नये नम इति जलाञ्जलिदानं। नमः पृथिव्यै, नमो वाचे, नमो वाचस्पतये, ॐ ओषधीभ्यो नमः, नमो विष्णवे, नमो महते, नमोऽव्भ्यो अपांपतये वरुणाय नमः। एतेभ्य नमस्कृत्य जलाञ्जलिदानं, तीर्थदेशप्रचालनं, नमोऽव्भ्यो अपांपतये वरुणाय नमो नमः इति नमस्कारः। अत्र भूमौ शिरः कृत्वा वेदनमस्कारः। ऋग्वेदाय नमः, यजुर्वेदाय नमः, सामवेदाय नमः, अथर्ववेदाय नमः, परमेष्ठी प्रजापति ऋषिः, अनुष्टुप्छन्दः, वरुणोदेवता, तीर्थविसर्जने विनियोगः, प्रजापति ऋषिः, धाम्नोधाम्न इति यजुः, यदाऊरम्या इति गायत्रीछन्दः, वरुणोदेवता, तीर्थविसर्जने विनियोगः। "ॐ मापोमौषधीर्हिंसीर्द्धाम्नो धाम्नो [१]राजस्ततो वरुण नो मुञ्च, यदाऊरम्या इति वरुणेति[२]शपामहे ततो वरुण नो मुञ्च"। गङ्गे स्वस्थानं गच्छ इति तीर्थविसर्जनं। प्रजापति ऋषिः, गायत्रीछन्दः, सोमोदेवता, जपे विनियोगः। "ॐ आप्यायस्व [३]समेतं ते विश्वतः सोमवृष्णां। भवावाजस्य संगथ" इति शतं दश वा जपः। प्रजापति ऋषिः, यजुः, [४]शान्तविदो देवता, [५]जपनिवेदने विनियोगः। "ॐ देवाशान्तविदो शान्तमित्वाशान्तमिति मनमस्यत इमं देवायज्ञं

(१) राजस्ततो। (२) शपामहे।
(३) समेतु। (४) गातुविदो।
(५) अघमर्षणे।

स्वाहा" वा चेधा। अनेन जप्येन परमात्मा विष्णुः प्रियतां। इति जपनिवेदनं। अनेनैव विधिना नैमित्तिकं काम्यं प्रातःस्नानं च काय्यं। नैमित्तिकं संक्रान्तिग्रहोपरागार्द्धोदयादिविशिष्टयोग-निमित्तकं। यत्तु चाण्डालादिस्पर्शननिमित्तकं तदमन्त्रक-मित्युक्तमेव, संक्रान्तिस्नानं नैमित्तिकं। संक्रान्तिस्वरूपं ज्योतिः-शास्त्रे।

"मृगकर्कटसंक्रान्ति यत्तु दिग्दक्षिणायने।
विषुवतीतुलामेषे विष्णुपद्यः स्थिरात्मके।
षड़शीति [१]द्विस्वभावे द्वादशैवं प्रकीर्त्तिताः"॥

मृगो मकरः, स्थिरा वृष-सिंह-वृश्चिक-कुम्भराशयः। [२]द्विः स्वभावते, मिथुन-कन्या-धनु मीनाः, देवीपुराणे, "त्रुटेः सहस्र-भागो यः स कालो रविसंक्रमे"। देवलः,—

"संक्रान्तिसमयः सूक्ष्मो दुर्लक्ष्यः [३]पिशितेक्षणैः।
तद्योगादप्यधश्चोर्द्ध [४]त्रिंशन्नाड्यः प्रकीर्त्तिताः॥"

इदं संक्रान्तिपूर्वकालीनषष्टीदण्डात्मकतदुपलक्षिताहोरात्रपरं उपवासादिविषयं तैलस्त्रीमांसवर्जनविषयं चेति प्राञ्चः।

देवीपुराणे,—

"षड़शीतिमुखेऽतीते वृत्ते च विषुवद्वये।
भविष्यत्ययने पुण्यमतीते चोत्तरायणे॥"

---

(१) द्विशरीरे। (२) द्विःशरीराः।
(३) पिशितोपमैः। (४) त्रिंशन्नाड्यः।

विशेषमाह देवलः,—

"त्रिंशत्कर्कटके नाड्यो मकरे विंशतिः परा।
वर्त्तमाने तुलामेषे नाड्यस्तूभयतो दश॥"

उभयतः तुलामेषयोः—

"षडशीत्यामतीतायां षष्टीरुक्ता तु नाडिका।
पुण्यायां विष्णुपद्यां च प्राक्पश्चादपि षोड्श॥
अह्नः संक्रमणे पुण्यमहः कृत्स्नं प्रकीर्त्तितं।
रात्रौ संक्रमणे पुण्यं दिनार्द्धं स्नानदानयोः"॥

इति रात्रिसंक्रमणेन पुण्यकालविधिपरत्वात्तत्राहः। पुण्यत्वं यथा प्राप्तानुवादः, एतेषां वचनानां दिवस-संक्रान्तिविषयत्वं. रात्रौ वचनान्तरेण व्यवस्थावगमात्।

देवीपुराणे,—

"मानार्द्धं भास्करे पुण्यमपर्णा शर्वरीदले।
पूर्णं तूभयतो ज्ञेयमतिरेकेऽपरेऽहनि॥"

मानार्द्धं भास्करे भास्करोपलक्षितदिवसेऽर्द्धमित्यर्थः, विशेष-माह वशिष्ठः,—

"अर्द्धरात्रादधस्तस्मिन् मध्याह्नस्योपरि क्रिया।
ऊर्द्धं संक्रमणे चोर्द्धमुदयात्प्रहरद्वयं॥"

मध्याह्नस्योपरि पूर्वदिवसस्य, दिनं पुण्यमनागतमिति-देवीपुराणात्।

"संपूर्णे चेदर्द्धरात्रे रविसंक्रमणं भवेत्।
प्राक्तद्दिनद्वयं पुण्यं मुक्त्वा मकरकर्कटौ॥

आदौ पुण्यं विजानीयाद्यदभिन्ना तिथिर्भवेत्”।

इति वचनात्संक्रान्तिकालीनतिथेः पूर्वदिनगामित्वे पूर्वदिने पुण्यकालः, यदा तिथिभेदे भेदद्दिने पुण्यकालः। एवं च सपूर्णार्द्धरात्रे संक्रमणे संक्रान्तिकालीनतिथेः पूर्वदिनगामित्वे उभयदिनगामित्वेऽपि पूर्वदिनमध्याह्नादूर्द्धं पुण्यकालः। संक्रान्तिकालीन तिथेरुत्तरदिनगामित्वे चोत्तरदिनार्द्धमेव पुण्यकाल इति व्यवस्था, आदौ पुण्यमिति वचनस्य दिनद्वयव्यापितिथिकेऽपि [१]प्रवृत्त्य विशेषात्। वृद्धगार्ग्यः—

“यद्यस्तमनवेलायां मकरं याति भास्करः।
प्रदोषे वार्द्धरात्रे वा स्नानं दानं परेऽहनि॥
अर्द्धरात्रे तदूर्द्धं वा संक्रान्तौ दक्षिणायने।
पूर्वमेव दिनं ग्राह्यं यावन्नोदयते रविः॥”

भविष्योत्तरेऽपि—

“मिथुनात्कर्कसंक्रान्तिर्यदि स्यादंशुमालिनः।
[२]प्रदोषे वा निशीथे वा कुर्यादहनि पूर्वतः॥”

एतच्च यद्यपि कल्पतरुकारेण न लिखितं तथापि प्रामाणिक बहुनिबन्धलिखितत्वेन सर्ववैदिकदेशपरिगृहीतत्वेन च निःसन्दिग्धत्वादेतद्विरुद्ध आचारो नादरणीयः।

एताः संक्रान्तयः प्रत्येकं सप्तधा,

“उत्तराचयरोहिण्यो मन्दा संक्रान्तिरुच्यते।
तत्र त्रिनाड़िकाकालस्तु प्रशस्ततम उच्यते॥

(१) प्रवृत्ति। (२) प्रभाते।

चित्रानुराधामृगशिरोरेवतीषु च संक्रमे।
मन्दाकिनीचतुर्नाड्यस्तत्र पुण्यतमाः स्मृताः॥
पुष्याश्विहस्तसंक्रान्तौ ध्वांक्षा पञ्चैव नाड़िकाः।
द्विजामघाचिपूर्वासु घोरायां सप्त नाड़िकाः॥
श्रवणादित्रय-स्वाति-पुनर्वसुषु संक्रमे।
महोदरी पुण्यतमास्तत्र कालोऽष्टनाड़िकाः॥
मूलाश्लेषार्द्रासु शाक्रे राचस्यां नव नाड़िकाः।
विशाखाकृत्तिकास्वेवं मिश्रिता तत्र संक्रमे॥
शस्ता द्वादशनाड्यस्तु सर्वचैव च कल्पयेत्।
या याः सन्निहिता नाड्यस्तास्ताः पुण्यतमाः स्मृताः॥
यस्य यः पुण्यकालस्तु तन्मध्ये नाड़िकास्त्विमाः।"

तथा—

"रविसंक्रमणे पुण्ये न स्नायात् यदि मानवः।
सप्त जन्मन्यसौ रोगी निर्द्धनश्चापि जायते॥
अयने कोटिगुणितं लक्षं विष्णुपदीफलं।
षड़शीति सहस्रं तु षड़शीत्यां स्मृतं बुधैः॥"

शातातपः,—

"संक्रान्तौ यानि दत्तानि हव्यकव्यानि दातृभिः।
तानि तेषां ददात्यर्कः पुनर्जन्मनि जन्मनि॥"

आपस्तम्बः,—

"अयने विषुवे चैव ग्रहणे चन्द्रसूर्ययोः।
अहोरात्रोषितः स्नातः सर्वपापैः प्रमुच्यते॥"

इत्यत्रोपवासो गृहस्थेतरेषां।

स्मृतिमीमांसायां,—

"आदित्येऽहनि संक्रान्त्यां ग्रहणे चन्द्रसूर्य्ययोः।
उपवासो न कर्त्तव्यो गृहिणा पुत्रिणा सदा॥"

विष्णुपुराणे,—

"विशाखायां यदा सूर्य्यश्चरत्यंशं तृतीयकं।
तदा चन्द्रं विजानीयात्कृत्तिकाशिरसि स्थितं॥
कृत्तिकायां यदा सूर्य्यः प्रथमांशं तु गच्छति।
विशाखायां तदा ज्ञेयस्तृतीयांशे दिवाकरः॥
तदेव विषुवाख्योऽयं कालः पुण्यो विधीयते।
तदा दानानि देयानि विप्रेभ्यः प्रयतात्मभिः॥"

अत्र च स्नानदानादिकं यथोक्तदिने कर्त्तव्यं नत्वयं विषुवाख्यसंक्रान्तिकालः।

किन्त्वन्यः पारिभाषिकः।

देवीपुराणे,—

"द्वादशैते समाख्याताः स्नानाः पुनरवार्षिताः।
अलक्ष्मीनाशनात् धन्या महापातकनाशनाः॥"

द्वादशसंक्रान्तिषु द्वादशविधं स्नानमुक्तं।

"कुंकुमं रोचना मांसी मुराचन्दनवालुकं।
हरिद्रारस्य(१) संयुक्तं मेषे स्नानं महापहं॥

(१) हरिद्रारससंयुक्तं।

प्रियङ्गुपद्मकं कुष्ठं लवामांसी निशाकरं।
रोचनागुरुसंयुक्तं वृषे स्नानं महाफलं॥"

निशाकरः कर्पूरः।

"उशीरं पद्मकं कुष्ठं रोचनाग्रन्थिपर्णकं।
कुङ्कुमागुरुसंयुक्तं मिथुने राज्यदं मतं॥
रोचना-वालुकं मुस्तां मुराशैलेयचन्दनं।
हरिद्रा-कुष्ठसंयुक्तं कर्किसंक्रमणे शुभं॥
पद्मकं रोचनं मुक्ता मांसी गन्धं च चन्दनं।
सिंहे स्नानं मुराश्चैव! राज्यायुःपुत्रवर्द्धनं॥
हरिद्रा-वालुकं कुष्ठं मांसी रोचन-चन्दनं।
कन्ये स्नानं प्रकर्त्तव्यं सन्तानरतिवर्द्धनं॥
रोचना-तगरं कुष्ठं पद्मकोशीर-पद्मकं।
हरिद्रावालसंयुक्तं तुले दुष्कृतनाशनं॥
प्रियङ्गुं स्फटिकं मांसी पद्मकं रोचनागुरुं।
मुस्ता-कुष्ठ-समोपेतं वृश्चिके राज्यदं मतं॥
प्रवाल-मौक्तिकं कुष्ठं रोचनागुरुपद्मकं।
मुरामांसी-समोपेतं धनुः-संक्रमणे शुभं॥
रोचना-वालुकं कुष्ठं चन्दनागुरुकुंकुमं।
उशीरं समभागांशं मकरे सर्वसौख्यदं॥
ग्रन्थिपर्णं लवावालं केशरं जाति-पत्रिका।
रोचना सह संयुक्तं कुम्भे पुत्रीयराज्यदं॥"

जातिः जातिफलं। पत्रिका तेजपत्रम्।

"कर्पूर-फलमूलैला-मांसी-चन्दनपङ्कजं ।
कक्कोल-[१]सगन्धोशीरं त्वचं मौने सुखावहं ॥"

अथ ग्रहणस्नानं । तत्र निमित्तनिर्णये जाबालिः शातातपश्च ।

"संक्रान्तेः पुण्यकालस्तु षोड़शोभयतः कलाः ।
चन्द्रसूर्योपरागे तु यावद्दर्शनगोचरः" ॥

अत्र चन्द्रसूर्य्यग्रहणे स्नायादित्यादौ स्नानान्ते [२]नैमित्तिके चन्द्रसूर्य्योपरागमात्रस्य निमित्तश्रवणेऽपि वाक्यान्तरेण "यावद्दर्शनगोचर" इति निमित्तस्य विशेषणान्तरमुपादीयते ।

"यावज्जीवमग्निहोत्रं जुहुया"दिति [३]जीवनस्य निमित्तत्वश्रुतावपि सायंप्रातर्जुहोतीति वाक्यान्तरेण सायंप्रातःकालावच्छिन्नजीवस्य निमित्तवत् संक्रान्तिपुण्यकालसाहचर्य्याच्चैवमेव निर्णयः, दर्शनं चाक्षुषज्ञानं द्विचिचणस्थायित्वान्न स्वरूपेण निमित्तविशेषणं । दर्शनकाले स्नानश्राद्धादेरसंभवात्, तेन तद्योग्यता लक्ष्यते, यद्यपि स्नानादिकाले स्वदर्शनाभावे परदर्शनमस्ति, तथापि तद्ज्ञानं योग्यतावशादेव लभ्यत इति लाघवाद्योग्यतैव निमित्तविशेषणं, मेघाच्छन्ने च यद्यपि देशान्तरमनुष्यैर्दृश्यत्वायोग्यतास्ति, तथा यत्र मेघाच्छादनं तत्र योग्यतानिश्चयाभावान्निमित्तानिश्चयान्न श्राद्धाद्यनुष्ठानं, निमित्तनिश्चये स्यादेव, स्वदर्शनयोग्यता वा निमित्तविशेषणं, मेघाच्छन्ने तदानीं स्वदर्शनयोग्यतैव नास्ति. न च ग्रहणस्नानाङ्गत्वेन, चाक्षुषज्ञानविधिरेव

---

(१) स्नपनो । (२) नैमित्तिक ।
(३) वचनस्य ।

किं मत्स्यादिति वाच्यं तथा सत्यदृष्टान्तरकल्पनाप्रसंगात्, न च ग्रहणे निमित्ते विधानान्निमित्तनिश्चयोऽङ्गमिति तत्रैव चाक्षुषलविशेषविधाने लाघवमवशिष्टमिति वाच्यं, विषये प्रायदर्शनादितिन्यायेन संस्कारप्राये दर्शनार्थवत् समालभेतेति स्पर्शनविधिरिति न यागविधिरितिवत्।

संक्रान्तिपुण्यकालसाहचर्य्येण निमित्तविशेषण अनिश्चयात्,

"नेक्षेतोद्यन्तमादित्यं नास्तं यान्तं कदाचन।

नोपरक्तं न वारिस्थं न मध्यं नभसोगतमि"ति यद्यप्येतत्पर्युदासरूपेणाशौचसंकल्परूपं विधीयते नतु निषेधः, तथापि स्नातकव्रतमध्यपाठादकरणे प्रत्यवायात् स्वस्य चाक्षुषदर्शनं विधातुं शक्यते। वाक्यार्थबोधे हि यस्मिन्नर्थे न विध्यन्तरविरोधः, स एव गृह्यते, [१]यथा दक्षिणावाक्ये गोश्वाश्वस्याश्वतरस्येत्यादौ द्वादशशतसंख्या नाश्वविषया विध्यन्तरविरोधादित्युक्तं, अश्वाश्चोपकारकतरा भवेयुर्यद्येषां दानप्रतिग्रहौ प्रतिषिद्धौ न स्यातामिति, तस्मिद्धं स्वदर्शनयोग्यतानिमित्तविशेषणं, तेन स्वयमदृष्टेऽपि स्नानादधिकार आप्तवाक्यादिना योग्यतानिश्चयात्। यद्वा मनुष्याधिकारशास्त्रमिति मनुष्ययोग्यता विशेषणं। तेनान्धादेरप्यधिकारसिद्धिः, चाक्षुषज्ञानविषयस्यैव निमित्ततेति लक्ष्मीधरव्याख्या स्फुटमेव दर्शयति, तेन दृष्टोरिष्टप्रदो राहुरित्यादिदोषेण यो न पश्यति तेनापि स्नानादिकं कार्य्यं।

(१) तथा।

ज्योतिःशास्त्रे,—

"जन्मर्क्षे जन्मनक्षत्रे सप्तमे चाष्टमे तथा।
चतुर्थे द्वादशे चन्द्रे न कुर्य्याद्राहुदर्शनं॥"

एतद्दोषभीत्या सूर्य्ये च स्नातकव्रतभङ्गभीत्या स्वयमदर्शनेऽपि स्नानादावधिकारः।

"सूर्य्यग्रहे तु नाश्नीयात्पूर्वं यामचतुष्टयं।
इन्दुग्रहे तु यामांस्त्रीन् बालवृद्धातुरैर्विना॥"

पूर्वभोजननिषेधः पुरुषार्थः, (१)निमित्तग्रहणकालीनस्नानाद्यङ्गं मानाभावात्, तथा ग्रहणकाले तु (२)नाश्नीयात्।

"मुक्ते शशिनि भुञ्जीत यदि न स्यान्महानिशा।"

ग्रस्तास्तयोस्तु। स्नात्वा दृष्ट्वा परेऽहनि ग्रस्तास्तमितयोस्तयेति, (३)परेद्युरिति सूर्य्ये (४)परेह्नि चन्द्रे परराचावित्यर्थः, परदिने तूदयकाले मेघाच्छादने।

"मेघकालादिदोषेण मुक्तयोरनवेक्षणे।
आकालाख्यस्ततः कालं भुञ्जीत स्नानपूर्वकं॥"

इति वाक्याद्दर्शनाभावेऽपि शास्त्रान्निश्चित्य भोजनमिति, ततः स्नानफलं स्मृतिसमुच्चये,—

"सर्वं भूमिसमं दानं सर्वे व्याससमा द्विजाः।
सर्वं गङ्गासमं तोयं राहुग्रस्ते दिवाकरे॥

(१) ननु।  (२) स्नानीयात्।
(३) परेऽह्नी।  (४) परेऽह्नी।

इन्दोर्लक्षगुणं प्रोक्तं रवेर्दशगुणं स्मृतं ।

(१)गङ्गातीरे तु संप्राप्ते इन्दोः कोटि रवेर्दश ॥"

अन्यत्स्नानं इन्दुग्रहे लक्षगुणं, सूर्यग्रहे तु दशगुणं, शिष्टाः पठन्ति ।

"(२)कोटिजन्मकृतं पापं पुरुषोत्तमसन्निधौ ।

कृत्वा सूर्य्यग्रहे स्नानं विमुञ्चति महोदधौ ॥

दशजन्मकृतं पापं स्नानान्नश्यति पुष्करे ।

शतजन्मकृतं पापं गङ्गासागरसंगमे ॥

जन्मान्तरसहस्रेण यत्पापं समुपार्जितं ।

तत्सर्वं सन्निहत्यायां राहुग्रस्ते दिवाकरे ॥"

संहत्या कुरुक्षेत्रे तीर्थं ।

देवीपुराणे—

"कार्त्तिके ग्रहणं पुण्यं गङ्गासागरसङ्गमे ।

मार्गे तु ग्रहणं पुण्यं देवीकायां महामुने ॥

पौषे वै नर्मदा पुण्या माघे सन्निहिता शुभा ।

फाल्गुने श्रवणा पुण्या चैत्रे पुण्या सरस्वती ॥

वैशाखे तु महापुण्या चन्द्रभागा सरिद्वरा ।

ज्येष्ठे तु कौशिकी पुण्या आषाढ़े (३)अविकानदी ॥

श्रावणे सिन्धुनाम्ना च तथा भाद्रे च गण्डकी ।

आश्विने सरयू श्रेष्ठा भूयः पुण्या तु नर्मदा ॥

(१) गङ्गाद्वारे। (२) कुर्य्यात्।

(३) तापकी।

गोदावरी महापुण्या चन्द्रे राहुसमन्विते ।
सूर्ये च राहुणा ग्रस्ते तमोभूते महामुने ॥
नर्मदातोयसंस्पर्शात् कृतकृत्या भवन्ति ते ।
एवं गङ्गापि द्रष्टव्या तद्वदेव सरस्वती ॥"

स्मृतिसमुच्चये—

"सूर्य्यग्रहः सूर्य्यवारे सोमे सोमग्रहस्तथा ।
चूड़ामणिरिति ख्यातस्तत्रानन्तफलं स्मृतं ॥"

अथ ग्रहणस्नानमन्त्रः—

"स्वस्थानं गम्यतां राहो त्यज्यतां [१]चन्द्रसंगमः ।
[२]कर्मचाण्डालयोने! त्वं मम पाप क्षयं कुरु" ॥

सूर्यसंगम इति सूर्यग्रहे—

तीर्थस्नाने तीर्थस्नानमन्त्रं वाधित्वा अस्य निवेशः वैश्यादि-निमित्त-पांचदश्यवन्नैमित्तिकत्वान्निरवकाशत्वाच्च । इदं च स्नानं सुतकादावपि कर्त्तव्यमेव ।

तथाच लिङ्गपुराणे—

"चन्द्रसूर्य्यग्रहे स्नायात्सुतके मृतकेऽपि च ।
अस्नायात् मृत्युमाप्नोति स्नाया[३]त्पापं न विन्दति ॥"

तथा दानादिकमपि सुतकिना कर्त्तव्यं ।

तत्रैव—

"सुतके मृतके चैव न दोषो राहुदर्शने ।
तावत्कालं भवेच्छुद्धिर्यावन्मुक्तिर्न दृश्यते ॥"

(१) सूर्य्यसङ्गमः । (२) परं । (३) मर्त्यः ।

अथ मुक्त्यभिधानं, दानश्राद्धार्थमेव पूर्व्वेण स्नानस्य प्राप्तेः।

तथा—

"सर्व्वेषामेव वर्णानां सूतकं राहुदर्शने।

स्नात्वा कर्माणि कुर्व्वीत शृतमन्नं विवर्जयेत्॥"

ग्रहणनिमित्तमशौचं यत्तदपि स्नानापनोद्यमेव केवलं मुक्ति-पर्य्यन्तं पाकस्पर्शादिनिषेधपरं।

शातातपः—

"सर्व्वस्वेनापि कर्त्तव्यं श्राद्धं वै राहुदर्शने।

अकुर्व्वाणस्तु तत् श्राद्धं पङ्के गौरिव मज्जति"॥

इदं श्राद्धमामश्राद्धमेव, आमश्राद्धं सग्रहे चेति वचनात्, हेमश्राद्धमपि क्वचित् श्रूयते "हेम्ना वामेन सग्रह" इति द्वयो-र्व्विकल्पः, आमश्राद्धे च पिण्डनिषेधः।

मार्कण्डेयः,—

"ग्रहणे च व्यतीपाते नवग्रस्यसमागमे।

नित्यश्राद्धे च संक्रान्तावपिण्डं श्राद्धमिष्यते॥"

दानं तु मुक्तिकाले, विमोक्षे चन्द्रसूर्य्ययोरिति शातातप-वचनात्।

मत्स्यपुराणे,—

"यस्य राशिं समासाद्य भवेद्ग्रहणसंभवः।

स्नानं तस्य प्रवक्ष्यामि मन्त्रौषधिविधानतः॥"

उपरागात्पूर्व्वं कुम्भे नवौषधिरत्नाद्याहरणं, उपरागकाले स्वस्तिवाचनं ब्राह्मणचतुष्टयपूजनं, शुक्लमाल्यवस्त्रैः, कुम्भचतुष्टय-

स्नापनं सागरबुद्ध्या, गजाश्वरथ्या-वल्मीकसंगमात् ह्रदगोकुलात्, राजद्वाराच्च मृदमानीय प्रक्षेपः, पंचगव्य-शुद्धमुक्ताफल-गोरोचना-पद्म-शंख-आम्र-पत्र-जम्बु-वट-प्लक्ष-पिप्पलपल्लवस्फटिक-श्वेतचन्दन-तीर्थवारि-श्वेतसर्षप-गजदन्त-कुमुदोशीर-गुग्गुलूनां कुम्भेषु प्रक्षेपः।

अत्र तीर्थाद्यावाहनं।

"सर्वे समुद्राः सरितस्तीर्थानि जलदा नदाः।
आयान्तु यजमानस्य दुरितक्षयकारकाः॥
योऽसौ [१]वज्रधरो देव आदित्यानां प्रभुर्मतः।
सहस्रनयन[२]श्चेन्द्रो ग्रहपीड़ां व्यपोहतु॥
मुखं यः सर्वदेवानां सप्तार्चिरमितद्युतिः।
चन्द्रोपरागसम्भूतामग्निः पीड़ां व्यपोहतु॥
यः कर्मसाक्षी लोकानां धर्मो महिषवाहनः।
यमश्चन्द्रोपरागोत्थां पीड़ां वै स व्यपोहतु॥
रक्षोगणाधिपः साक्षात्प्रलयानलसप्रभः।
खड्गव्यग्रोऽतिभीमोऽसौ रक्षःपीड़ां व्यपोहतु॥
नागपाशधरो देवो सदामकरवाहनः।
स जलाधिपतिश्चन्द्रो ग्रहपीड़ां व्यपोहतु॥
प्राणरूपेण यो लोकान् पाति कृष्णमृगाश्रयः।
वायुश्चन्द्रोपरागोत्थां ग्रहपीड़ां व्यपोहतु॥
योऽसौ निधिपतिर्देवः खड्गशूलगदाधरः।
चन्द्रोपरागकलुषं धनदोऽयं व्यपोहति॥

(१) चक्रधरो। (२) शक्रो

योऽसौ विन्दुयुतो रुद्रः पिनाकी वृषवाहनः ।
चन्द्रोपरागपापानि स नाशयतु शंकरः ॥
त्रैलोक्ये यानि भूतानि स्थावराणि चराणि च ।
ब्रह्मविष्ण्वर्कयुक्तानि तानि पापं हरन्तु वै ॥"

प्रतिकुम्भमेभिर्मन्त्रैरभिमन्त्रणं । ते च पूजितास्त्वारो ब्राह्मणाः शुक्लमाल्यानुलेपनाः ऋग्यजुःसाममन्त्रैर्यजमानं [1]स्नपयेयुः । स्नातो यजमानो वस्त्र-गोदानैर्ब्राह्मणान् पूजयेत्, इष्टदेवताश्च । तच्च कस्मिंश्चित् पट्टे अनेन मन्त्रान्विलिख्य तत्पट्टकं कनकपञ्चरत्नं पट्टे कृत्वा तत्पट्टं यजमानस्य शिरसि चत्वारो ब्राह्मणा बध्नीयुः एवमुपरागमोक्षपर्य्यन्तं स्थित्वा स्नात्वा कृतस्वस्त्ययनः तत् पट्टं ब्राह्मणाय दद्यात्, इष्टदेवतां नमस्कृत्य ।

"अनेन विधिना यस्तु ग्रहणस्नानमाचरेत् ।
न तस्य ग्रहपीडा स्यान्न च [2]बन्धुजनक्षयः ॥"

सूर्य्यग्रहे सूर्य्यनामग्रहं मन्त्रेषु [3]कीर्त्तयेत्, कुम्भेष्वधिकत्वेन पद्मपरागप्रक्षेपः, गोदाने कपिलागावः पराशरः, जन्मर्क्षोपरागे वृषभस्य शृङ्गमूत्रे तद्वर्णायाश्च पयः कुशांश्चोदकुम्भे निधायाभिषेकः, इति ग्रहणस्नानं, शिष्टाः ।

"आषाढ़ी-कार्त्तिकी-माघी-वैशाखीषु कृतं च यत् ।
तदनन्तफलं प्रोक्तं स्नानदानजपादिकं ॥

(१) स्नापयेयुः । (२) बन्धुविपर्य्ययः ।
(३) कीर्त्तनात् ।

अमावास्या द्वादशी च संक्रान्तिर्भानुवासरः।
तत्र स्नानं जपो होमो देवतार्च्चनमेव च॥
उपवासस्तथा दानमेकैकं पावनं स्मृतं।"

तथा,—

"व्यहस्पृशि तिथौ स्नानं दानं च जप एव च।
सहस्रगुणितं प्राहुरेवमेव दिनक्षये"॥

तथा— "षष्ठ्यष्टम्यावमावास्या उभे पक्षे चतुर्दशी।
अस्नातानां गतिं गच्छेद्यद्यहं नागमेत् पुनः॥"

अत्र काम्यस्नानस्यैव फलाभावेन निन्दा, न तु पृथक् (१)स्नानान्तरं नित्यं।

एवं महाभ्ययोगेषु स्नानं काम्यं—

"अमार्कपातश्रवणैर्युक्ता चेत् पुष्यमाघयोः।
अर्द्धोदयः स विज्ञेयः कोटिसूर्य्यग्रहैः समः॥
तदेव कोटिगुणितं पुरुषोत्तमसन्निधौ।"

आग्नेये—

"अनुमत्यामतीतायां प्रतिपद्रोहिणी शशी।
यदा भवति संयोगः कार्त्तिकान्ते विशेषतः॥
कोटिसन्निहितं पुण्यं स्नात्वा चैव महोदधौ।"

कौर्म्मे,—

"मार्गे मासि शिनिवाल्यां सागरे यत्र कुत्रचित्।
स्नात्वाश्वमेधावभृथस्नानस्य लभते फलं॥

---

(१) स्नानान्तरं।

विशाखायास्तृतीयेऽंशे शेषचन्द्रे गते रवौ ।
तथा मैत्रगते भानौ षड्गुणं फलमश्नुते ॥
तथैवेन्द्र[1]गते सूर्य्ये षड्गुणात् षड्गुणं फलं ।
सोमवारे विशेषेण साध्यदा फलदा कुहूः ॥"

ब्रह्माण्डे,—

"कुम्भस्थे भास्करे राजन् मकरे चाङ्गिरःशनी ।
द्वादशी शुक्लपक्षस्य पुष्यर्क्षे यदि जायते ॥
गोविन्द-द्वादशीनाम महापातकनाशिनी ।
तस्यां जलोदधिस्नानं दृष्ट्वा च पुरुषोत्तमं ॥
त्रयोदश्यां महाज्येष्ठ्याः फलं प्राप्नोति मानवः ।"

कौर्म्मे,— "ऐन्द्रे गुरुः शशी चैव प्राजापत्यगते रवौ ।
पौर्णमासी गुरौ ज्येष्ठी महाज्येष्ठीति सा स्मृता ॥
महाज्येष्ठ्यान्तु यो गच्छेत् देवान्तपुरुषोत्तमं ।
त्रयोदश्यां महाज्येष्ठ्याः फलं प्राप्नोति मानवः ॥"

कौर्म्मे,—

"व्रजेत् पदानि यावन्ति क्रतुतुल्यानि तानि तु ।
तत्र गत्वा चरेद्धर्म्मान् दृष्ट्वा श्रीपुरुषोत्तमं ॥
विश्रम्य विधिवत्स्नायात् प्रतितीर्थेषु वै क्रमात् ।"

ब्रह्माण्डे,—

"पुनर्वसौ देवगुरौ निशाकरे निशाकरवारे ऽमरपूज्यकेऽथवा ।
कुम्भे रवौ मत्स्यगते वृहस्पतावेकादशी स्यात्किल पापनाशिनी ॥

(१) तथैव भृगते

क्षीरोदके वार्यवगाह्य यो नरः संपूज्य कृष्णं रजनीमुपोषितः।
एतेन पापं दशजन्मभिः कृतं जेप्नीयते तस्य समस्तमाशु तत्॥"

शिष्टाः—

"पुनर्वसु-बुधोपेता चैत्रे मासि शिताष्टमी।
तस्यां नदीषु स्नानेन वाजपेयफलं लभेत्॥
सप्तमी रविवारेण बुधवारेण चाष्टमी।
अङ्गारकदिने प्राप्ते चतुर्थी वा चतुर्दशी॥
सोमवारे त्वमावास्या सूर्यपर्वशताधिका।"

योगी याज्ञवल्क्यः—

"स्नानं दानं जपो ध्यानं पितृदेवार्चनं तथा।
पावनानि मनुष्याणां दुष्कृतस्येह कर्मणः॥
अगम्यागमनात् स्तेयात् पापेभ्यश्च प्रतिग्रहात्।
रहस्याचरितात् पापान्मुच्यते स्नानमाचरन्॥
प्रकर्त्तुमसमर्थश्चेज्जुहोति यजति क्रिया।
स्नानध्यानजपैर्होमैरात्मानं पावयेद्बुधः॥
यदेव स्नानं कुरुते विशुद्धेनान्तरात्मना।
तेनैव सर्वमाप्नोति विधियज्ञक्रियाफलं॥"

एवमादि-स्नानं काम्यं, यथोक्तविधिना कर्त्तव्यं, मुख्यासामर्थ्ये ऽनुकल्पेऽधिकारः।

एवं तीर्थस्नानेषु—

आदिब्रह्मपुराणे समुद्रस्नानविधिः।

"उग्रसेनं पुरा दृष्ट्वा स्वर्गद्वारेण सागर।
गत्वाचम्य शुचिस्तत्र ध्यात्वा नारायणं परं॥"

इत्यभिधानादुग्रसेनदर्शनं स्वर्गद्वारगमनमपि समुद्रस्नानाङ्गं।

तथा—

"शतानामश्वमेधानां फलं प्राप्नोति मानवः।
सर्वपापविनिर्मुक्तो विमानेनार्कवर्चसा॥
कुलैकविंशमुद्धृत्य विष्णुलोकं च गच्छति॥
भुक्त्वा तत्र वरान् भोगान् मन्वन्तरशतं पुनः।
वेदशास्त्रार्थवित् विप्रो भवेद्यज्वा तु वैष्णवः॥
योगं च वैष्णवं प्राप्य ततो मोक्षमवाप्नुयात्।"

इति सामान्यतः पुरुषोत्तमक्षेत्रावच्छिन्नं समुद्रस्नानफलं। "पौर्णमास्यां विशेषेण हयमेधफलं लभेत्" इति वचनात् पौर्णमास्यामेतदेव फलमधिकं।

तथा—

"ग्रहोपरागे संक्रान्त्यामयने विषुवे तथा।
युगादिषु षडशीत्यां व्यतिपाते दिनक्षये॥
आषाढ्यां चैव कार्त्तिक्यां माघ्यां चान्यशुभे दिने।
ये तत्र दानं विप्रेभ्यः प्रयच्छन्ति सुमेधसः॥
फलं सहस्रगुणितमन्यतीर्थाल्लभन्ति ते।"

अत्र यद्यपि ग्रहणादिषु दानस्य फलाधिक्यमुक्तं न स्नानस्य तथापि माघ्यां चेति चकारेण स्नानस्यापि ग्रहणादिषु फलातिशयजनकत्वं बोध्यं।

तथापि—

"पितॄणां ये प्रयच्छन्ति पिण्डं तत्र विधानतः ।
अक्षयां पितरस्तेषां प्रीतिं संप्राप्नुवन्ति वै" ॥

अत्र च दानस्य पृथक् फलकथनाच्च स्नानाङ्गत्वमसंयुक्तं, प्रकरणादितिकर्त्तव्यतार्थत्वादिति फलवतां प्रकरणेनाङ्गत्वबोधनात्, विष्णुपूजा [१]तु तदङ्गमेव, एवं स्नात्वा तीर्थे नारायणमन्त्र-मभ्यर्च्येत्यनुवाद्य विशिष्टस्योक्तं फलकथनात् । अत्र च उत्तीर्य्य वाससी धौते प्राणानायम्य, आचम्य गायत्रीं जपेदष्टोत्तरशतं, स्वाध्यायं प्राङ्मुखः कृत्वा इत्यादि कीर्त्तनं, मध्याह्नकालीन समुद्र-स्नानस्य तत्कालीनसन्ध्यासाहचर्य्यात् यथाप्राप्तानुवादः, न तु समुद्र-स्नानाङ्गत्वेन सन्ध्याब्रह्मयज्ञादेर्विधितर्पणस्यापि वाक्यान्तरप्राप्त-स्यानुवादः, तर्पणाङ्गविधानं सन्ध्याङ्गविधानं च पुरुषार्थविषयं, न समुद्रस्नानाङ्गत्वेन, वरुणप्रपा सप्तकरणे सौमिक प्रणयनाङ्ग पैत्र-वारवादि विधिवत् कातीयसूत्र इति, तत्र प्रथमं श्वेतमाधवा-द्दक्षिणतः शतपादे स्थितस्योग्रसेनस्य दर्शनं, नमस्कारः, समुद्रस्नाने अनुज्ञाप्रार्थनं । समाचारात्—

"उग्रसेन ! महाबाहो ! बलवन् ! सत्यविक्रम ! ।
[२]समुद्रे स्नातुकामोऽस्मि अनुज्ञां दातुमर्हसि" ॥

ततो धन्वन्तर-शतचये स्वर्गद्वारकाष्ठस्तम्भद्वयदर्शनं, तयोः पूजनं, परिष्वङ्गः ।

---

(१) वत् । (२) तीर्थस्नानं करिष्यामि ।

ततः प्रार्थना,—

"सागराम्भः समुत्पन्नौ काष्ठौ सर्वगुणान्वितौ।
मध्येन युवयोर्यामि प्रसन्नौ भवतः सदा"॥

इति प्रार्थ्य तयोर्मध्यमार्गेण समुद्रतीरगमनं, तत्र भूमौ-मण्डलाकारं लिखित्वा तन्मध्ये उपवेशनं, आचमनं संकल्पः, सर्वपापविनिर्मुक्तिसहितशताश्वमेधफलप्राप्तिपूर्वकस्वकीयैकविंशकुलोद्धरणोत्तरार्कवर्णविमानद्वारकविष्णुलोकगमनपूर्वक तत्रत्य-मन्वन्तर-शतकालीन-वरभोगोपभोगोत्तरभूतलवेदविद्ब्राह्मणजन्मलाभपूर्वक-वैष्णवयोगप्राप्तिपूर्वक मोक्षकामः समुद्रस्नानमहं करिष्ये; निष्काम-एव वा, नारायणमन्त्रस्य ऋष्यादिस्मरणं, ॐ अष्टाक्षरनारायण-मन्त्रस्य, साध्यनारायणऋषिः, दैवी गायत्रीछन्दः, अकारोबीजं, उकारः शक्तिः, मकारः कीलकं, परमात्मा देवता, समुद्रस्नाने विनियोगः, करन्यासः, अङ्गन्यासः, ध्येयः सदा इति ध्यानम्।

आब्रह्मस्तम्भपर्य्यन्तं जगदेतच्चराचरं सर्वं नारायणात्मक-मिति ध्यानं, समुद्रमभिमुखीभूय ॐ नमो नारायणाय इति समुद्रोदकोपस्थानं, उपविश्याङ्गुलिष्वष्टाक्षरन्यासः, ॐ नम इति दक्षहस्ताङ्गुष्ठे, ॐ नम इति वामहस्ताङ्गुष्ठे, अक्षरषट्कमवशिष्टं, तत्रस्य दक्षतर्जन्यादित्रये। अपरत्रयस्य वामतर्जन्यादित्रये, नमो नम इति दक्षतर्जन्यां। ॐ नां नमस्तन्मध्यमायां, ॐ रां नमस्तदनामिकायां। ॐ यं नमः वामतर्जन्यां, ॐ णां नमस्तन्मध्यमायां, ॐ यं नम-स्तदनामिकायां,

"ॐकारं वामपादे तु नकारं दक्षिणे न्यसेत्।

मोकारं वामकक्ष्यां तु नाकारं दक्षिणे कटौ ॥
राकारं नाभिदेशे तु यकारं वामबाहुके ।
णाकारं दक्षिणे बाहौ यकारं मूर्द्धि विन्यसेत्" ॥

ॐ नम इति देहाधः । ॐ नं नमः देहोर्द्धे, ॐ मों नमः हृदये, ॐ नां नमः दक्षिणपार्श्वे, ॐ रां नमः वामपार्श्वे, ॐ यं णांयं नम इति वर्णत्रयं पृष्ठे, अथवा अध-आदिस्थानषट्के सर्वस्य मन्त्रस्य न्यासः, नारायणध्यानं ।

कवचबन्धनं—

"पूर्वे मां पातु गोविन्दो दक्षिणे मधुसूदनः ।
पश्चिमे श्रीधरो देवः केशवस्तु तथोत्तरे ॥
पातु विष्णुस्तथाग्नेये नैर्ऋत्यां, माधवोऽव्ययः ।
वायव्ये च हृषीकेशस्तथेशाने च वामनः ॥
भूतले पातु वाराहस्तथोर्द्धे च त्रिविक्रमः ।
अहं नारायणो देवः शङ्खचक्रगदाधरः" ॥

इतिध्यानं ।

वक्ष्यमाणमन्त्रेण त्रिज्ञात् समुद्रस्य दण्डवत् प्रणामः ।

"त्वमग्निर्धिषणं नाथ! रेतोधानामदीपनः ।
प्रधानं सर्वभूतानां जीवानां प्रभुरव्ययः ॥
अमृतस्यारणिस्त्वं हि देवयोनिरपांपते! ।
वृजिनं हर मे सर्वं तीर्थराज! नमोऽस्तु ते" ॥

समाचारादनेन मन्त्रेण समुद्रे पाषाणप्रक्षेपः ।

"पिप्पलाद समुत्पन्ने कृत्ये लोकभयंकरि।
पाषाणं ते मया दत्तमाहारं परिकल्पय" ॥

ततो वृहत् स्नानविधिना तदसम्भवे त्रिरावृत्त्याघमर्षणविधिना वा स्नानं, तत्र मज्जनाङ्गमन्त्रस्थाने, "अग्निश्च तेजोनिहला च देहे रेतोधा विष्णोरमृतस्य नाभिः", इति भारतीयो मन्त्रः, न चात्र जलजपे कथं नारायणमन्त्रः, तत्र मन्त्रस्याकरणत्वात्, एतदब्रुवन्, ततोऽवगाह्येति, ततः शब्देन पूर्वकालीनत्वा-प्रतीत्यास्य मन्त्रस्य दृष्टार्थत्वायकरणत्व लाभेन करणमन्त्रस्थाने निवेशसम्भवे दृष्टान्तरपादकप्रकृतकार्य्यक्रियमाणानुवादेन विनि-योगात्, पश्चात्त्रिरावृत्त्याघमर्षणजपो जलमग्नस्य, इदं च प्राकृतं सर्वस्नानविधिषु समुद्रस्याधिकमङ्गं, साजलादवाक्येन विधिप्रतीतेः, पश्चादित्यप्राकृतपाठाच्च, ततो जलमध्ये वा, उत्तीर्य्य वाससी परिधाय स्थले तर्पणं, वस्त्रनिष्पीड़नान्तं, माध्याह्निकं तन्त्रेण चेत्, "देवागा तु विद" इति निवेदनान्तं। अथ नारायणपूजा, प्रथमं वालुकां समीपे कृत्य हस्तमात्रं चतुर्द्वार-चतुरस्रलिखनं, यथास्थानं पूजोपकरणस्थापनं, आसनमेकं पद्मादिना। समा-श्रित्यायेण तालत्रयं, दिग्बन्धनं, वह्निप्राकारचिन्तनं, नाराच-मुद्रया विघ्ननिवारणं, अथ भूतशुद्धिः। यमिति वायुवीजं, धूम्रवर्णं ध्यात्वा तदुत्थितवायुना देह[1]शोधनं, रमिति अग्निवीजं रक्तवर्णं ध्यात्वा तदुत्थितशिखवह्निना पापेन सह देहदहनं, पापपुरुषं वामकुक्षौ ध्यात्वा तथैव यथोक्त शोषणदहने, वमितिवीजं चन्द्र-

(१) शोषणं।

मण्डलमध्यस्थं शुक्लं मूर्द्धि ध्यात्वा तदुत्थितामृतवृष्ट्या देहप्लावनं, ततः करशुद्धिः, अष्टाक्षरेण पञ्चविंशतिजपे प्राणायामत्रयं । मातृकान्यासः, ततो भावनाचतुष्टयं, अष्टाक्षरं देहे न्यासः, यथा, ॐ शुक्लं भूर्नम इति वामपादे, ॐ नं रक्तं भुवः नम इति दक्षिणपादे, ॐ मों श्यामं स्वर्नम इति वामकट्यां, ॐ नां रक्तं महर्नम इति दक्षिणकट्यां, ॐ रां कुंकुमाभं जनः नम इति नाभौ, ॐ यं पीतं तपः नम इति वामांशे, ॐ णां कज्जलाभं सत्यं नम इति दक्षांशे, ॐ यं बहुवर्णं सर्वलोकाधिष्ठानं नम इति शिरसि, ॐ नारायणाय नमः हृदयाय नमः, ॐ विष्णवे नमः, शिरसि स्वाहा, ॐ ज्वलनाय नम इति शिखायै वषट् । ॐ विष्णवे नमः कवचाय हुं, ॐ विष्णवे मुरद्विषे बन्धाय हुं फट् अस्त्राय फट्, इत्यङ्गन्यासः ।

ॐ शिरसि शुक्लो वासुदेवः, इति शिरसि न्यासः, ॐ अं ललाटे रक्तः संकर्षणो गरुत्मान् वह्निस्तेज आदित्य इति ललाटे न्यासः, ॐ आं ग्रीवायां, पीतः प्रद्युम्नो वारिमेघाभ इति कण्ठे, ॐ आं हृदये कृष्णो ऽनिरुद्धः सर्वशक्तिसमन्वित इति हृदये न्यासः ।

इति चतुर्व्यूहन्यासः । अथ कवचं—

"ममाग्रतस्थितो विष्णुः पृष्ठतश्चापि केशवः ।
गोविन्दो दक्षिणे पार्श्वे वामे तु मधुसूदनः ॥
उपरिष्टात्तु वैकुण्ठो वाराहः पृथिवीतले ।
अवान्तरदिशो यास्तु तासु सर्वासु माधवः ॥

गच्छंस्तिष्ठतो वापि जाग्रतः स्वपतोऽपि वा।
नरसिंहकृता गुप्तिर्वासुदेवमयो ह्ययं" ॥

इति विष्णुमयत्वचिन्तनं, अष्टाक्षरविधिनार्घसंस्कारः, ॐ नम इति मन्त्रेण पूजोपयोगि-सर्वद्रव्यप्रोक्षणं, अथ हृदये पूजा, हृदये पद्मचिन्तनं, तदुपरि सूर्य्यबिम्बं। तदुपरि चन्द्रबिम्बं। तदुपरि वह्निबिम्बं चिन्त्यं, तत्र पवनमण्डलं, तत्र आकाशमण्डलं च चिन्त्यं। तत्र ॐकारात्मकं [१]विद्युज्ज्योति तत्रस्थं चिन्तयित्वा तत्राष्टाक्षर-मन्त्रस्य मनसा न्यासः, अष्टाक्षर-प्रत्येकवर्णैः, ॐ नारायणाय नमः, नं नारायणाय नमः, इत्यादिना मनसा पूजनं, समस्तेन अष्टाक्षरमन्त्रेण गन्धपुष्पादिना पूजनं, पश्चाद्द्वादशाक्षरमन्त्रेण पूजनं, एवं मनसा पूजयित्वा पाद्यादिकं संस्कृत्य वहिः पीठपूजा, ततो लिखितपद्मस्य कर्णिकायां प्रतिमां संस्थाप्य शालग्रामं वा तथैव स्थण्डिले वा, चतुर्भुजं शंख, चक्र, गदा, पद्मधरं नारायणं सूर्य्य कोटिप्रतीकाशं विचिन्त्यावाहनम्।

तत्र मन्त्रः—

"मीनरूपो वराहश्च नरसिंहो ऽथ वामनः।
आयान्तु देवो वरदो मम नारायणोऽग्रतः" ॥

ॐ नमो नारायणाय नम इति चिन्तयित्वा नारायण अत्रा-गच्छ, इह तिष्ठेत्यावाहनं।

"सुमेरुः पद्पीठं ते पद्मकल्पितमासनं!
सर्वसत्वहितार्थाय तिष्ठस्व मधुसूदन!" ॥

(१) विद्युज्ज्योतिस्थं।

ॐ नमो नारायणाय इत्यासनं समर्प्य तत्र स्थापनं।

ॐ त्रैलोक्यपतीनां पतये देवदेवाय हृषीकेशाय श्रीविष्णवे नमः, ॐ नमो नारायणाय नमः, अर्घं ददामीति अर्घदानं।

"पाद्यं ते पादयोर्देव! पद्मनाभ! सनातन!।
विष्णो! कमलपत्राक्ष! गृहाण मधुसूदन"!॥

ॐ नमो नारायणाय नमः, पाद्यं ददामीति पाद्यं।

"मधुपर्कं महादेव! ब्रह्माद्यैः कल्पितं तव।
मया निवेदितं भक्त्या गृहाण मधुसूदन"!॥

ॐ नमो नारायणाय नमः मधुपर्कं ददामीति मधुपर्कं।

"मन्दाकिन्यास्तु ते वारि सर्वपापहरं शुभं।
गृहाणाचमनीयं (१)त्वं मया भक्त्या निवेदितं"॥

ॐ नमो नारायणाय नमः, आचमनीयं ददामीति।

"त्वमापः पृथिवी चैव ज्योतिस्त्वं वायुरेव च।
लोकसंवृतिमात्रेण वारिणा (२)स्नावयाम्यहं"॥

ॐ नमो नारायणाय नमः स्नानं कारयामीति।

"वेदतत्त्व समायुक्ते यज्ञ (३)क्रतुसमन्विते।
स्वर्णवर्णप्रभे देव! वाससी तव केशव!"॥

ॐ नमो नारायणाय नमः वस्त्रं ददामि।

"शरीरं ते न जानामि चेष्टां चैव च केशव!।
मया निवेदितान् गन्धान् प्रतिगृह्य विलिप्यतां"॥

---

(१) नु। (२) स्नापयाम्यहं।
(३) तन्तु।

ॐ नमो नारायणाय नमः, गन्धं ददामि ।

"ऋग्यजुःसाममन्त्रेण निर्वृत्तं पद्मयोनिना ।

सावित्रीग्रन्थिसंयुक्तमुपवीतं तवाच्युत" ! ॥

ॐ नमो नारायणाय नमः यज्ञोपवीतं ददामि ।

"दिव्यरत्नसमायुक्ता वह्निभानुसमन्विताः ।

गात्राणि शोभयन्ते ते अलंकाराश्च माधव" ! ॥

ॐ नमो नारायणाय नमः अलंकारं ददामि ।

अष्टाक्षरप्रत्येकवर्णैः ॐ नमः पुष्पं ददामि, ॐ नं नमः पुष्पं ददामि, इत्येवं रूपेणाष्टपुष्पाञ्जलिं दत्त्वा । ॐ नमो नारायणाय नमः पुष्पं ददामीति एवं मन्त्रव्यस्तसमस्ते पुष्पदानं, ततः ॐ पुरुषोत्तमाय नम इति पुष्पाञ्जलिदानम् ।

"वनस्पति रसो दिव्यो गन्धाढ्यः सुरभिश्च ते ।

मया निवेदितो भक्त्या धूपोऽयं प्रतिगृह्यतां" ॥

ॐ नमो नारायणाय नमः धूपं ददामि स्वाहा,

"सूर्य्यचन्द्रमसोर्ज्योतिर्विद्युदग्न्योस्तथैव च ।

त्वमेव ज्योतिषां देव! दीपोऽयं प्रतिगृह्यतां" ॥

ॐ नमो नारायणाय नमः दीपं स्वाहा ।

"अन्नं चतुर्विधं चैव रसैः षड्भिः समन्वितं ।

मया निवेदितं भक्त्या नैवेद्यं तव केशव" ! ॥

ॐ नमो नारायणाय नमः नैवेद्यं ददामि स्वाहा, पूर्व-मन्त्रेणाचमनीयं, मुखवासं करशुद्धं ताम्बूलं च दत्त्वा, आवरण-पूजा, पूर्वादिचतुर्दिक्षु दलेषु, वासुदेव, संकर्षण, प्रद्युम्न, अनि-

स्त्रूणां, स्थापनं पूजनं, आग्नेयादिकोणदलेषु, वराह-नृसिंह-वामनत्रिविक्रमाः स्थाप्याः पूज्याः, एषामष्टाक्षरेण पूजा गन्ध-पुष्पाभ्यां, वक्ष्यमाणानां स्वनामचतुर्थी नमो मन्त्रेण । पुरतो गरुडं संस्थाप्य पूजनं, दक्षे चक्रं, वामे शंखं, गदां दक्षे, शार्ङ्गं वामे, दक्षिणे चेषुधी, खड्गं वामे, श्रियं दक्षे, पुष्टिमुत्तरे, पुरतो वनमालां, ततः श्रीवत्सकौस्तुभौ, पूर्वादिचतुर्दिक्षु, हृदयादीनि, कोणेष्वस्त्रं, अष्टदिक्षु, अध ऊर्द्ध्वं, इन्द्रादीन् ब्रह्मान्तान संस्थाप्य पूजनं, आवरणपूजां समाप्य मुद्रादर्शनं, पद्म, शंख, श्रीवत्स, गदा, गरुड, वाण, चक्र, शार्ङ्गाख्या, अष्टौ मुद्राः, ततः पुष्पाञ्जलिं दत्त्वा, अष्टाक्षरमन्त्रेणाष्टशतं अष्टाविंशतिं वा जपः, समर्पणं, स्तुति-प्रदक्षिण-नमस्काराः, पुनरर्घं दत्त्वात्मानं समर्प्य विसर्जनं ।

"गच्छ गच्छ परं स्थानं पुराण पुरुषोत्तम ! ।
यत्र ब्रह्मादयो देवा न विदुस्ते परं पदं" ॥

ॐ नमो नारायणाय नमः, क्षमस्वेति हृत्पद्मे संहरणं । ततः शिरसा प्रणम्य सागरप्रसादनं ।

"प्राणस्त्वं सर्वभूतानां योनिश्च सरितांपते ! ।
तीर्थराज ! नमस्तुभ्यं ! त्राहि मामच्युतप्रिय" ! ॥

ततो रामाय नमः, कृष्णाय नमः, सुभद्रायै नमः, सागराय नमः । इति नमस्काराः, ततो ऽच्छिद्रावधारणं, इति स्नानं ।

"अर्चनं ये न जानन्ति हरेर्मन्त्रं यथोदितं ।
तेन ते मूलमन्त्रेण पूजयन्त्वच्युतं तदा" ॥

इति वचनात् उक्तपौराणिकवत् [1]मन्त्रध्याने अष्टाक्षरमूल-मन्त्रेण यथोक्तोपचारैः पूजा । तदावरणपूजा ऽनेनैव प्रकारेण क्रमोऽप्ययमेव, इति ब्रह्मपुराणोक्त-समुद्रस्नानविधिः ।

अथ मार्कण्डेयह्रदस्नानविधिः, नरसिंहपुराणे, मार्कण्डेयं प्रति विष्णुवाक्यं,—

"इदं तीर्थं महाभाग! त्वन्नाम्ना ख्यातिमेष्यति" ।

ब्रह्माण्डपुराणे,—

"मार्कण्डेयह्रदं गत्वा नरश्चोदङ्मुखः शुचिः ।
निमज्जयेत्त्रिश्चतुरान् इमं मन्त्रमुदीरयेत् ॥
संसारसागरे मग्नं पापग्रस्तमचेतनं ।
त्राहि मां भगनेत्रघ्न! त्रिपुरारे! नमोऽस्तु ते ॥
नमः शिवाय शान्ताय सर्वपापहराय च ।
स्नानं करोमि देवेश! मम नश्यतु पातकं ॥
नाभिमात्रे जले [2]स्नात्वा विधिवद्देवतापितॄन् ।
तिलोदकेन मतिमान् पितॄंश्चान्यांश्च तर्पयेत्" ॥

अन्यानपि करुणतया येषां तर्पणमनावश्यकमित्यर्थः ।

"प्रविश्य देवतागारं कृत्वा तं त्रिः प्रदक्षिणं ।
मूलमन्त्रेण संपूज्य मार्कण्डेयस्य चेश्वरं ॥
अघोरेण च ये विप्राः प्रणिपत्य प्रसादयेत् ।
त्रिलोचन! नमस्तेऽस्तु नमस्ते शशिभूषण! ॥
त्राहि मां त्वं विरूपाक्ष! महादेव! नमोऽस्तु ते" ।

---

(१) मन्त्राध्याने । (२) स्थित्वा ।

मूलमन्त्रः पञ्चाक्षरः—

"मार्कण्डेयह्रदे त्वेवं स्नात्वा दृष्ट्वा च शंकरं ।
दशानामश्वमेधानां फलं प्राप्नोति मानवः ॥
शिवलोके वरान् [१]भुक्त्वा चेन्द्रलोके भवेत्पुनः ।
शंकरं योगमासाद्य ततो मोक्षमवाप्नुयात्" ॥

अथेन्द्रद्युम्नस्य सरः,—

"गत्वा तत्र शुचिर्धीमान् [२]आचम्य मनसा हरिं ।
ध्यात्वोपस्थाय च जलमिमं मन्त्रमुदीरयेत् ॥
अश्वमेधाङ्गसंभूत ! तीर्थ ! सर्वाघनाशन ! ।
स्नानं त्वयि करोम्यद्य पापं हर नमोऽस्तु ते ॥
एवमुच्चार्य्य विधिवत् स्नात्वा देवानृषीन् पितॄन् ।
तिलोदकेन चान्यांश्च संतर्प्याचम्य वाग्यतः ॥
दत्त्वा पितॄणां पिण्डांश्च संपूज्य पुरुषोत्तमं ।
दशाश्वमेधिकं सम्यक् फलं प्राप्नोति मानवः ॥
सप्तावरान् सप्त परान् वंशानुद्धृत्य वैष्णवं ।
[३]भोगं भुक्त्वा चिरं पश्चादिह मोक्षं लभेद्ध्रुवं" ॥

तत्र क्रमः, तत्र गत्वाचमनं, हरिध्यानं, जलोपस्थानं तूष्णीं, मन्त्रेण स्नानं, तर्पणं, पिण्डदानं, श्रीपुरुषोत्तमपूजनं चेति, स्नानं प्रधानमन्यान्यङ्गानि ।

श्वेतगङ्गायां, ब्राह्मे श्वेतं प्रति विष्णुवाक्यं ।

---

(१) भूत्वा । (२) संस्मरन् ।
(३) लोकं ।

"प्रासादस्य समीपे त्वं कुण्डं कारय सुव्रत ! ।
श्वेतगङ्गेति नाम्नाग्नि यावदाभूतसंप्लवं ॥
कुशाग्रेणापि कौन्तेय श्वेतगाङ्गेयमम्बु च ।
स्पृष्ट्वा स्वर्गं गमिष्यन्ति मद्भक्ता ये समाश्रिताः" ॥

इति वचनात् । मज्जने महत् फलं गम्यते ।

अथ गङ्गास्नानं—

"सर्वतीर्थं निषेवेत गंगां चैव पुनःपुनः ।
सर्वतीर्थमया गंगा (१)सर्वतीर्थमयो हरिः ।
अवगाहनमात्रेण मानवानां सदैव हि ॥
पापौघं निर्दहेत् गंगा तूलराशिमिवानलः ॥
गच्छध्वं विबुधा गंगां स्नात्वा विश्वमशाश्वतं ।
सुघोरेऽस्मिन् कलौ प्राप्ते मुक्तिर्वा वांछिता यदि" ॥

तथा,—

"अहो किं बहुनोक्तेन गंगा सेव्या सदा नरैः ।
नान्यत्संसारदुःखस्य नाशकं मोक्षकारकं ॥
स्मृताभिलषिता दृष्टा पीता स्पृष्टावगाहिता ।
या पावयति भूतानि कीर्त्तिता च दिने दिने ॥
इन्दुव्रतसहस्रन्तु यः कुर्यात्कायशोधनं ।
पिबेद्यश्चापि गंगाम्भः समौ स्यातां न वा समौ ॥
दृष्ट्वा जन्मशतं पापं स्पृष्ट्वा जन्मत्रयार्जितं ।
स्नानात् जन्मशतोद्भूतं हन्ति गंगा कलौ युगे" ॥

(१) सर्वदेवमयो ।

तत्र गंगास्नाने मन्त्रः ।

"[१]विष्णुपादार्घ्यसंभूते ! गंगे ! त्रिपथगामिनि ! ।
धर्मद्रवीति विख्याते पापं मे हर जाह्नवि ! ॥
श्रद्धया भक्तिसंपन्ने श्रीमातर्देवि जाह्नवि ! ।
अमृतेनाम्बुना देवि ! भागीरथि ! पुनिहि मां" ॥

तथा,— "गौतमी जाह्नवी रेवा चतुर्थी च पुनः पुना ।
कावेरी गोमती कृष्णा ब्राह्मी वैतरणीति च ॥
[२]विष्णुपादार्घसंभूता गंगेह नवधा स्मृता" ।

इतिवचनात् [३]आसु गंगाशब्दप्रयोगस्य कार्यत्वाद्गंगामन्त्र एतास्वपि प्रयोज्यः, गोदावर्य्यां तु ।

"गोदावरी जलस्पर्शाद् वातो यत्र प्रवर्त्तते ।
तद्देशवासिनां मुक्तिः किमु तत्तीरवासिनां" ॥

ततः स्नानमन्त्रः—

"त्र्यम्बकजटोद्भूते ! गौतमस्याघनाशिनि ! ।
सप्तधा सागरं [४]यान्ति गोदावरि ! नमोऽस्तु ते ॥
गोश्रोत्र-धाम्नि ! दिव्यन्ति गोमदामविहारिणि ! ।
गोभागकृतसंचारे ! गोदावरि ! नमोऽस्तु ते" ॥

वैतरण्यां विशेषः, महाभारते,—

"उपस्पृश्यैव भगवनस्यां नद्यां महामते[५] ! ।
मानुषादस्मि विषयादपेतः पुरुषर्षभ !" ॥

---

(१) विष्णुपादाग्र । (२) विष्णुपादाग्र । (३) नदीषु ।
(४) याति । (५) महामुने ! ।

इति युधिष्ठिरस्य लोमशं प्रति वाक्यं।

तत्र मन्त्रः—

"यथातथामं सर्वेभ्यो भागेभ्यो भागमुत्तमं।
देवाः संकल्पयामासुर्भयाद्रुद्रस्य शाश्वतं॥
इमां गाथामनुस्मृत्य य इह्होपस्पृशेन्नरः।
देवयानस्तस्य पन्थाश्चाक्षुषेव प्रकाशते"॥

कृष्णवेण्यां च;—

"सह्यपादोद्भवा देवी श्रीशैलोत्सङ्गगामिनी।
कृष्णवेणीति विख्याता सर्वपापप्रणाशिनी"॥

तत्र स्नानमन्त्रः—

"सह्यपादोद्भवे! देवि कृष्णवेणीति विश्रुते!।
सर्वपापविशुद्ध्यर्थं स्नास्ये देवि तवाम्भसि॥
प्रसीद मे देवि! सदामरेश!
देवेश! स्रष्टा[१] जगतां त्रिमूर्त्ते।
स्नानेन यस्या मलधौतपापः
प्राप्नोति विष्णोः पदमेव मर्त्यः॥
ब्रह्मामृतानन्दरसेन पूर्णं
जलेन पूर्णामिव मेनिरेऽज्ञाः।
तां त्वावगाह्यामि पिवामि कृष्णे!
देवानृषींस्तर्पयिष्ये पितॄंश्च"॥

(१) स्रष्टा।

नर्मदायां च,—

"आद्ये ! नमः पुण्यजले ! नमः सागरगामिनि ! ।
नर्मदे ! पापनिर्वारे ! नमो देवि ! वरानने ! ॥
नमोऽस्तु ते मुनिगणसिद्धसेविते
नमोऽस्तु ते ! [१]शंकरदेहनिःसृते ! ।
नमोऽस्तु ते धर्मभृतां वरप्रदे !
नमोऽस्तु ते सर्वपवित्रपाविनि" ॥

तत्र गंगासागरस्नानमन्त्रः,—

"त्वं देवि ! सरितां [२]नाथ ! त्वं देवि ! सरितां वरे ! ।
उभयोः सङ्गमे स्नात्वा मुञ्चामि दुरितानि वै" ॥

करतोयास्नानमन्त्रः,—

"करतोये ! सदा गौरे ! सरित् श्रेष्ठेति विश्रुते ! ।
[३]आप्लावयसि [४]गोत्राणां पापं हर नमोऽस्तु ते" ! ॥

कौशिकीस्नानमन्त्रः,—

"गाधिराजसुते ! देवि ! विश्वामित्रमुनेः स्वसः ।
ऋचीकभार्य्ये ! सत्तोये । पापं मे हर कौशिकि" ॥

भीमरथीमन्त्रः,—

"भीमखेदसमुद्भूते ! रथनेमिविनिःसृते ! ।
सर्वपापप्रशान्त्यर्थं स्नास्ये देवि ! तवाम्भसि " ॥

---

(१) शंकरदेहनिर्गते । (२) गौरी ।
(३) अप्लावयामि । (४) गोत्राणि ।

लौहित्यसमुद्रसंगमे,—

"ब्रह्मपुत्र! महाभाग शान्तनोः कुलवर्द्धन!।
अमोघागर्भसंभूत! पापं लौहित्य! मे हर"॥

तथा—

"देव्यास्त्रिंशत्सहस्रं जलधिगतनदीस्नानमन्योन्यतुल्य"मिति-वचनात् समुद्रगानदीस्नानं गायत्री-त्रिंशत्सहस्रजपफलकामिना कार्य्यं।

"लक्षं देव्ययुतं चैव प्राणायामशतत्रयं।
समुद्रगानदीस्नानं सममेतच्चतुष्टय"मिति॥

दशप्रणवयुक्तं देव्ययुतं परं।

यत्तु,—

समुद्रगानदीतीरवासिनामभ्यासत्वात्तेषां स्नानं देव्ययुतसमं, अन्येषां त्रिंशत्सहस्रसममिति।

भविष्यपुराणे,—

"भास्करायतनाभ्यासे यत्तोयं पुरतः स्थितं।
सूर्य्यगङ्गेति तत्तोयं तत्र स्नात्वा दिवं व्रजेत्"॥

तथा,—

"शिवलिङ्गसमीपस्था नद्यः सर्वास्तु भारत!।
वापीकूपतड़ागाश्च शिवतीर्था इति स्मृताः॥
स्नात्वा तेषु नरो भक्त्या शिवतीर्थेषु मानवः।
ब्रह्महत्यादिभिः पापैर्मुच्यते नात्र संशयः"॥

एवमादिषु पृथगेव स्नानान्तरं, माध्याह्निकस्नानं तु चतुर्थभाग-

स्नातेन तीर्थस्नानेन प्रसंगात् सिध्यति, प्रातःसन्ध्योत्तरं तीर्थस्नानेन माध्याह्निकस्नानसिद्धिः, किं तु चतुर्थभागे पृथगेव कार्य्यं, प्रातः-स्नानकाले तु न तीर्थस्नानादेः काम्यस्नानान्तरस्य वा प्रसंगः।

"सन्ध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु।
यदन्यत् कुरुते कर्म न तस्य फलभाग्भवेदि"ति॥

सन्ध्यानुष्ठानात् पूर्वमनधिकारात्, यत्तु प्रातःस्नानकाल-एव विशेषेण विहितं, माघस्नानं तस्य प्रातःकाल एव कालः सन्ध्यातः पूर्वमपि तदनुष्ठानं।

यथा,— "प्रातः स्नात्वा मुनिश्रेष्ठाः! शिवतीर्थेषु मानवः।
अश्वमेधफलं प्राप्य रुद्रलोकं च गच्छति"॥

इत्यादावपि प्रातःसन्ध्यातः पूर्वं कालः।

"प्रातःस्नाय्यरुणकिरणग्रस्तां प्राचीमवलोक्य स्नाया"दिति नित्यकाम्यफलप्रातःस्नानोद्देशेनारुणोदयकालविधेः।

यथा,—

य इष्ट्वा पशुना सोमेन यजेत सोऽमावास्यायां पौर्णमास्यां वा यजेतेति नित्यकाम्यसोमयागानां कालविधिः। कार्त्तिक-स्नाने तु यद्यपि विष्णुस्मृतौ प्रातःशब्दो नास्ति।

तथापि,—

"कार्त्तिकेऽहं करिष्यामि प्रातःस्नानं जनार्दन!"।

इति मन्त्रलिङ्गात्।

"तुलामकरमेषेषु प्रातःस्नायी भवेन्नरः।
हविष्यभुक् ब्रह्मचारी सर्वपापैः प्रमुच्यते"॥

इति वाक्ये वाक्यान्तरैः कार्त्तिकादिमासचयविहितानां व्रतानां तत्रैव फलसम्बन्धकथनार्थमिदं वाक्यं। मूलत्वात् कल्प्यते।

तथाग्निनापरपक्षश्राद्धमेव कन्यागतापरपक्षश्राद्धमिति गौरभावेन व्यपदिश्यत इति वसन्ते वसन्ते ज्योतिषा यजेतेति वाक्ये ज्योतिष्टोमस्य ज्योतिःपदेनानुवादेन [१]निमित्तसम्बन्धवत्, अनुवादस्य गौणत्वेऽप्यदोषात्, न च संहतानां तुलादिमासानां व्रतसम्बन्धो मासस्य कालस्योद्देश्यत्वेन साहित्याविवक्षणात्।

अन्यथा आकामा वेषु यत्स्नानमित्यादावपि पौर्णमासीचतुष्टयकालीन पृथक् स्नानविधिनापत्तेः, न चैतत् कस्यचिदिष्टं, अस्मिन् पक्षे सुतरां कार्त्तिकस्नानं प्रातःकालीनमिति, तथापि सन्ध्यातः पूर्वमधिकारः, काम्यस्नानानां सर्वेषां सन्ध्यारात्र्यतिरिक्ते ऽनुष्ठानमिति सर्वं रमणीयं, एवं स्नात्वा गृहागमनं, माध्याह्निककर्मान्तरं।

याज्ञवल्क्यः,—

"प्रक्षाल्य तीर्थदेशं तु गत्वा स्वं धर्ममाचरेत्"।

तथा—

"स्नानाद्यादिव्यथाचम्य सोपानत्कोऽप्य संस्पृशन्।
आगतः सोदपादस्तु यत्नेन शुचिरेव सः॥
तेनोदकेन द्रव्याणि प्रोक्ष्याचम्य पुनर्गृहे।
ततः कर्माणि कुर्वीत नित्यं वै यानि कानिचित्"॥

(१) नित्य।

द्रव्याणि पूजापंचयज्ञोपयुक्तानि ।

"पाद्यादिरहितं तोयमुद्धृतं सव्यपाणिना ।

न तेन प्रोक्षणं कुर्य्यादस्त्रनिष्पीड़नेन च" ॥

शातातपः—

"नाधोवस्त्रैकदेशेन यज्ञार्थमप आहरेत् ।

यदानीतं तु सव्येन प्रोक्षयेत्[१] दक्षिणेन तु" ॥

अत्र प्रोक्षणमुपलक्षणं ।

पूजा पञ्चयज्ञ भोजनाद्यर्थमीदृशमेव जलमित्यवगन्तव्यं ।

विष्णुपुराणे तर्पणानन्तरं,—

"ततो गृहार्चनं कुर्य्यादभीष्टसुरपूजनं ।

जलाभिषेकपुष्पाणां धूपादीनां निवेदनैः" ॥

पद्मपुराणे,—

"द्विजं गां कांचनं स्पृष्ट्वा ततो विष्णुगृहं व्रजेत् ।

आश्रयस्तु ततः पूज्य प्रतिमां वापि पूजयेत्" ॥

नरसिंहपुराणे,—

"जले देवं नमस्कृत्य ततो गृहगतः पुनः ।

विधिना पुरुषसूक्तस्य ततो विष्णुं समर्चयेत्" ॥

एवंगतप्रातर्विष्णुपूजायां कृतायामपि पुरुषसूक्तेन मध्याह्ने पूजावश्यं कर्त्तव्या नित्यवद्विधानात् ।

तथाच शिष्टाः,—

"प्रातस्तु पूजयेद्विष्णुं पंचरात्रविधानतः ।

(१) — दर्पणेन ।

मध्याह्ने पूजयेद्विद्वान् विष्णुं पुरुषसूक्तकैः" ॥

पुरुषसूक्तपूजाविधिश्च नरसिंहपुराणोक्तो ग्राह्यः।

नरसिंहपुराणे,—

"आनुष्टुभस्य सूक्तस्य, त्रिष्टुभे तस्य देवता।
पुरुषो यो जगद्बीजमृषिर्नारायणः स्मृतः ॥
आद्ययावाहयेद्देव मृचान्तपुरुषोत्तमं।
द्वितीययासनं दद्यात् पाद्यं दद्यात् तृतीयया ॥
चतुर्थ्यार्घं प्रदातव्यं पंचम्याचमनीयकं।
षष्ठ्या स्नानं प्रकुर्वीत सप्तम्या पीतवाससी ॥
यज्ञोपवीतमष्टम्यां नवम्यां गन्धमेव च।
पुष्पं दद्यात् दशम्यां तु एकादश्यां तु धूपकं ॥
द्वादश्यां दीपदानं स्यात् त्रयोदश्यां निवेदनं।
चतुर्दश्यां जलं[१] कुर्यात् पञ्चदश्यां प्रदक्षिणं ॥
षोड़श्योद्वासनं कुर्यात् शेषकर्माणि पूर्ववत्।
स्नाने वस्त्रे च नैवेद्ये दद्यादाचमनीयकं ॥
षण्मासात् सिद्धिमाप्नोति देवदेवं समर्चयन्।
संवत्सरेण तेनैव सायुज्यमुपगच्छति" ॥

अत्र शेषकर्माणि पूर्ववदिति नारसिंहे द्वात्रिंशाध्याये यानि काम्यानि घृतादिस्नानादीनि श्रूयन्ते, अन्यत्रापि कामनायां सत्यां कार्याणीत्यतिदिश्यन्ते, नत्वावाहना[२]द्यो तत्र यद्द्रव्यं श्रुतं तस्यातिदेशः, शेषकर्माणीत्यनेन उक्तषोड़शोपचारातिरिक्तकर्मणामेवाभि-

(१) चतुर्दश्याञ्जलिं। (२) नत्वावाहनाद्योः।

हितत्वात्, तेनाच षष्ठ्या स्नानं कर्त्तव्यमित्युक्तं तद्वलेन कार्य्यं पापमुक्तिपूर्वकविष्णुलोकप्राप्तीच्छायां घृतेन स्नानं शंखभेरी-निनादादिसहितं षष्ठ्या ऋचा पृथक् कर्त्तव्यमित्यतिदिश्यते, एवमन्यद्दूह्यं।

तथाहि दाचिंशाध्याये श्रूयते,—

"आगच्छ नरसिंहेत्यावाहनाक्षतपुष्पकैः।
एतावतापि राजेन्द्र! सर्वपापैः प्रमुच्यते॥
दत्वार्घ्यमासनं पाद्यं स्नानमाचमनीयकं।
देवदेवस्य विधिना स्वर्गलोके महीयते॥
तोयेन स्नापयेद्भक्त्या नरसिंहं नराधिप!।
सर्वपापविनिर्मुक्तो विष्णुलोके महीयते॥
स्नाप्य दध्ना महाविष्णुं निर्मलः प्रियदर्शनः।
विष्णुलोकमवाप्नोति सेव्यमानः सुरोत्तमैः॥
यः पुनर्नृहरेरर्घं मधुना स्नापयेन्नरः।
अग्निपुरे स मोदित्वा पुनर्विष्णुपुरे वसेत्॥
घृतेन स्नपनं यस्तु पर्वकाले विशेषतः।
नरसिंहे ततः कुर्यात् शंखभेरीनिनादितं॥
पापकञ्चुकनिर्मुक्तो विष्णुलोके महीयते।
पञ्चगव्येन देवेशं स्नापयेत् योऽतिभक्तितः॥
ब्रह्मकूर्चविधानेन विष्णुलोके महीयते।
कुशपुष्पोदकैः स्नात्वा ब्रह्मलोकमवाप्नुयात्॥
रत्नोदकेन सावित्रं वैरजं हेमवारिणा।

नरसिंहन्तु संप्राप्य कर्पूरागुरुवारिणा ॥
इन्द्रलोके स मोदित्वा पश्चाद्विष्णुपुरं व्रजेत् ।
पुष्पोदकेन गोविन्दं स्नाप्य भक्त्या नरोत्तमः ॥
सावित्रं लोकमासाद्य विष्णुलोके महीयते ।
वस्त्राभ्यामच्युतं भक्त्या परिधाप्य विचित्रकं ॥
सोमलोके वसित्वा तु विष्णुलोके महीयते ।
कुंकुमागुरुश्रीखण्डकर्दमैरच्युताकृतिं ॥
आलेप्य भक्त्या राजेन्द्र! कल्पकोटिं वसेद्दिवि ।
मल्लिकामालतीजातीकेतक्याशोकचम्पकैः ॥
· पुंनागवकुलैः पद्मैरुत्पलैर्जातिपुष्पकैः ।
तुलसीकरवीरैश्च पालाशावर्त्तौ[1]कुब्जकैः ॥
एतैरन्यैश्च कुसुमैः प्रशस्तैरच्युतं नरः ।
अर्चयन् दशसुवर्णस्य प्रत्येकं फलमाप्नुयात् ॥
मालां कृत्वा यथालाभमेतेषां यः प्रयच्छति ।
कल्पकोटिसहस्राणि कल्पकोटिशतानि च ॥
दिव्यं विमानमास्थाय विष्णुलोके स [2]मोदते ।
नरकेशरिणं [3]भक्त्या विल्वपत्रैरखण्डितैः ॥
निश्छिद्रैः पूजयेद्भक्त्या तुलसीभिश्च भक्तितः ।
सर्वपापविनिर्मुक्तो विष्णुलोके महीयते ॥

---

(१) कुब्जलैः— । (२) महीयते ।
(३) दृष्ट्वा ।

सद्दिषाख्यं गुग्गुलं यः साज्ययुक्तं सशर्करं ।
धूपं ददाति राजेन्द्र! नरसिंहाय भक्तिमान् ॥
वायुलोकं समासाद्य विष्णुलोके महीयते ।
घृतेन तिलतैलेन दीपं यो ज्वालयेन्नरः ॥
ज्योतिष्मता विमानेन विष्णुलोके महीयते ।
हविःशाल्योदनं दिव्यमाज्ययुक्तं सशर्करं ॥
निवेद्य नरसिंहाय यावकं पायसं तथा ।
[१]समास्तु कुलसंख्याता यावत्यस्तावती नृप ॥
विष्णुलोके महाभोगान् भुञ्जानास्ते सवैष्णवः" ।

एवं देवगृहस्य समन्तादलिदानं, [२]नैवेद्यविशेषेण लोकपालेभ्यः शान्तिकरं, प्रदक्षिणकरणं पृथ्वीप्रदक्षिणफलं, नमस्कारेण विष्णुलोकफलप्राप्तिः, स्तोत्रजपेन विष्णुलोकं, सन्ध्यायां गीतवाद्येन पर्वसु विशेषेण कामरूपता, गरुड़ध्वजदानाद्विष्णुलोकप्राप्तिः, मुकुटकटककेयूरादिसुवर्णाभरणै[३]रिन्द्रलोकः, पयस्विनी धेनुदानाद्गोसहस्रदानफलं। अत्र पुष्पमध्ये तुलसीकीर्त्तनं पुष्पफलं, अत्रोपक्रमे, "राजपुत्र! शृणुष्वेवं हरिपूजाविधिक्रम"मिति कीर्त्तनादुपसंहारे च इत्येवमुक्तं भृगुचोदितेन मया तवेहार्चनमच्युतस्येति पूजोपसंहारात्, सर्वेषां पृथक् पृथक् फलवतां पृथगेव पूजात्वं। नहि षोड़शोपचार, एव पूजा।

(१) समास्तत्कुल। (२) नैवेद्यशेषेण।
(३) रुद्रलोकः।

किन्तु प्रीतिहेतुक्रिया मात्रं, तेन गृहसंमार्जनो लेपनादीनि गोदानादीन्यपि प्रीतिहेतुत्वात् पूजा।

तदुक्तं भट्टैः, स्तुतेरपि हि पूजात्वादिति, नाच पुरुषसूक्त-पूजायामेवमादीनां गुणफलत्वमप्रकरणात्, नापि गुणविधिमात्रत्वेन फलश्रुतेरर्थवादत्वं, अव्यभिचरितक्रतुसम्बन्धाभावेन पूजागतस्या-वाहनादेरनुपस्थितेः, अनेकगुणविधाने वाक्यभेदभयेन बलात्कर्मा-न्तरत्वे फलापेक्षयामुक्तिफलान्वयात्।

तेन सधर्मकमिदमावाहनं, पुरुषसूक्तपूजायामावाहनमधर्मकं। तेनास्मादक्षतपुष्पादिधर्मान्तरं गृह्णातीति, एवं यान्यच पुष्पाण्यनु-लेपनादीनि वा तान्येव पुरुषसूक्तपूजायामपि पुष्पदानविधिना अक्षत्य धर्मग्रहणात् शेषकर्माणि पूर्ववदित्यनेन तु कर्माण्येवाति-दिश्यते, न द्रव्याणीति, कर्मपदेन द्रव्यलक्षणा वा मन्तव्या, द्रव्याणां वा क्रियायां कर्मत्वात् कर्मपदेनोपादानमिति, कल्पोक्त-विधिना वा पुरुषसूक्तेन पूजयेत्।

याज्ञवल्क्यकल्पे,—

चतुरस्रं परं कृत्वा चतुर्द्वारविभूषितं।
तन्मध्ये विलिखेत्पद्मं कर्णिका केशरान्वितं।
प्रणवेन [1]फडन्तेन करौ संशोधयेत्ततः।
दिग्बन्धनं ततः कुर्य्याद्विधिवद्भूतशोधनं॥
प्रणवं भूतमुच्चार्य्य वीजं मंचिन्त्य निर्दहेत्।
तन्मध्यादूर्द्ध्वरन्ध्रेण मरुता शोषयेत्ततः।

(१) पचकेन।

निर्द्दहेदग्निबीजेन भावयेद्वारुणेन च ॥
[१]एकार्णवमपर्य्यन्तं भावयेत् स चराचरं।
ततोऽण्डं जलमध्यस्थं शुद्धकाञ्चन-सप्रभं ॥
वारुणेन तु संचिन्त्य तन्मध्ये चिन्तयेद्धरिं।
फुल्लारविन्दवदनं पीतनिर्म्मलवाससं ॥
पद्मासनमध्यस्थं शुद्धजाम्बुनदप्रभं।
केयूरकटकोपेतं हारकुण्डलमण्डितं ॥
सशंखचक्रं सश्रीरं मुकुटाद्युपशोभितं।
संचिन्त्य बीजमात्मानं तं हृदिस्थं विचिन्तयेत् ॥
सोऽहमस्मीत्यभेदेन चिन्तयित्वात्मपूजनं।
कृत्वा मुद्राचयं धृत्वा कुर्य्यान्न्यासं विधानतः ॥
चाद्यामृचं न्यसेद्वामे द्वितीयां दक्षिणे करे।
तृतीयां वामपादे तु चतुर्थीं दक्षिणे तथा ॥
पंचमीं वामजानौ तु षष्ठीं वै दक्षिणे न्यसेत्।
सप्तमीं वामकट्यां तु दक्षिणस्यां तथाष्टमं ॥
नवमीं नाभिदेशे तु दशमीं हृदये तथा।
एकादशीं कण्ठदेशे द्वादशीं वामबाहुके ॥
चयोदशीं दक्षिणे च मुखे चैव चतुर्दशीं।
अक्ष्णोः पञ्चदशीं चैव षोडशीं मूर्द्ध्नि विन्यसेत् ॥
एवं न्यासविधिं कृत्वा पश्चात् पापस्य शोधनं।
अस्त्रेण चालयेद्विष्णोर्गायत्र्या जलपूरणं ॥

(१) एकैकार्णवपर्य्यन्तं।

गन्धादि दत्त्वा दशधा बीजं तु प्रणवं न्यसेत्।
मन्त्रन्यासं ततः कृत्वा प्रोक्षयेन्मण्डलाग्निकं॥
अवगुण्ठ्य ततोऽस्त्रेण शंखमुद्रां प्रदर्शयेत्।
हृदये श्रीधरं देवं गन्धाद्यैर्मानसैर्यजेत्॥
पूजयेदासनं तत्र क्रमादाधारशक्तितः।
आधारशक्तिं कूर्मं च अनन्तं चितिमण्डलं॥
धर्मं ज्ञानं च वैराग्यमैश्वर्य्यमपि कोणतः।
पूर्वतोऽधर्ममज्ञानमवैराग्यमनैश्वरं॥
संपूज्याष्टदलं पद्ममर्कसोमाग्निमण्डलं।
उपर्य्युपरि संपूज्य मध्ये तु पुरुषं यजेत्॥
ध्येयः सदा सवितृमण्डलमध्यवर्त्ती।
नारायणः सरसिजासनसंनिविष्टः॥
केयूरवान् मकरकुण्डलवान् किरीटी।
हारी हिरण्मयवपुर्धृतशंखचक्रः॥
आद्ययावाहयेद्देवं पूर्वमुद्राः प्रदर्शयेत्।
एतावन्तः प्रिया विष्णोर्वन्दनीयास्तु भो द्विजाः।
एतावद्दर्शयेन्नित्यः कृतकृत्यस्ततो भवेत्॥
द्वितीययासनं दद्यात् पाद्यं दद्यात्तृतीयया।
स्वदेहे विन्यसेद्देवे सूक्तेन पुरुषस्य तु॥
चतुर्थ्यार्घ्यं ततो दद्यात् पञ्चम्याचमनीयकं।
षष्ठ्या स्नानं प्रकुर्वीत सप्तम्या पीतवाससी॥
यज्ञोपवीतमष्टम्या नवम्या गन्धमुत्तमं।

पुष्पं दद्याद्दशम्यां तु एकादश्यां तु धूपकं ॥
द्वादश्यां दीपदानं स्यात् त्रयोदश्यां निवेदनं।
पूर्ववत् स्नाननैवेद्ये वस्त्रेणाचमनं भवेत् ॥
गणेशं क्षेत्रपालं च नारदं गरुडमेव च।
सर्वतः पूजयेद्विद्वान् मध्ये लोकेशपद्मयोः ॥
इन्द्रमग्निं यमं चैव नैर्ऋतं वरुणं तथा।
वायुं कुवेरमीशानमनन्तं परमेष्ठिनं ॥
स्वासु दिक्षु ततोऽस्त्राणि नामभिः प्रणवादिभिः।
सर्वतः पूजयेद्विद्वान् तत्सर्वं प्रणवे स्थितं ॥
देवं प्रणववीजेन संपूज्याञ्जलिभिस्त्रिभिः।
जपेदष्टोत्तरशतं तन्नमोऽन्तं ततो द्विजाः ॥
गुह्यातिगुह्यगोप्ता त्वं गृहाणास्मत् कृतं जपं।
सिद्धिर्भवतु मे देव! त्वत्-प्रसादाद्धरोत्तम! ॥
एवं निवेद्य विधिवज्जपं श्रीपुरुषोत्तमे।
सदर्पं पुरतो जप्त्वा जज्ञमन्त्रं ततो जपेत् ॥
विधानेन तथैशान्यां प्रणवेनैव पूजयेत्।
गन्धपुष्पादिभिः कृत्वा दक्षिणं [१]वीरहर्षिणं ॥
चतुर्दश्यामर्चितं कुर्यात् पञ्चदश्यां प्रदक्षिणं।
कृत्वा देवस्य पुरतः प्रणमेद्दण्डवत्स्थितौ ॥
ध्यायेन्मण्डलमध्यस्थं सकलं निष्कलं हरिं।
अच्छिद्रमवधार्य्यास्त्विति क्षमस्वेति ततो वदेत् ॥

---

(१) वीरहर्षिणं।

संहृत्य मण्डलाद्देवं षोडशीं प्रणवं पठेत् ।
नासाकर्षणयोगेन हृदि संस्थापयेत् प्रभुं ॥
आदित्यवर्णं पुरुषं पुण्डरीकनिभेक्षणं ।
भक्तिस्निग्धेन मनसा ध्यायेत् पापहरं हरिं ॥
योगमूर्त्तिं चतुर्बाहुं शङ्ख-चक्र-गदाधरं ।
यो वा ध्यायेद्विभुत्यर्थमाप्नोति वसुमीप्सितं" ॥

अथ वीजं संचिन्त्य निर्दहेदिति वीजं वायुवीजं यं संचिन्त्य मरुत्शोषयेदिति सम्बन्धः, निर्दहेदिति वक्ष्यमाणवह्निना दाहस्य शोषणसाध्यत्वदर्शनाय प्रथममुपात्तं, निर्दग्धं शोषये-दित्यर्थः; मध्याद्ब्रह्मरन्ध्रेणेति जीवमात्मानं हृदि संचिन्तयेदिति वक्ष्यमाणत्वान्मध्यात् सुषुम्णामार्गेण ऊर्द्ध्वं ब्रह्मरन्ध्रेण जीवं द्वादशान्तं नयेदित्यथ निर्वपेदिति पाठे स्फुटमेव जीवयनचिन्तनं, रमित्यग्निवीजं, यं वायवीजं, सोऽहमस्मीति विष्णुरहमस्मीत्यर्थः आत्मपूजनमन्त्राभेदचिन्तनमेव मानसपूजाया वक्ष्यमाणत्वात्, मुद्रात्रयमाचं विष्णोरसाधारणं श्रीवत्सकौस्तुभ-वैनतेय-मुद्रात्रयरूपं एतावन्तः प्रिया विष्णोरिति वक्ष्यमाणत्वात्, यदि तु तन्त्रसागर-संहितोक्तं सर्वदेवसाधारणं मुद्रात्रयं स्याद्विष्णोः प्रिया इत्यसंगतं स्यात् । तन्त्रसागरसंहितायां,—

"अञ्जलिः शिरसा रूपं हृदये सैव वन्दिनी ।
अङ्गुलीर्गोपयित्वा तु भ्राम्य संस्थापयेत् हृदि ।
प्रसाधनीति विज्ञेया तिस्रो मुद्रा इमाः समाः" ॥

कुर्य्यान्न्यासविधानं तु इति मातृकान्यासकेशवादिन्यास-

भावनाचतुष्टयरूपन्यासास्तन्नान्तरोक्ताः सूचिताः, पूजाङ्गमन्त्र-न्यासमाह ।

"आद्यामृचं न्यसेद्वाम" इत्यादिना विष्णोर्गायत्र्येति गायत्री-छन्दस्को वैष्णवो मन्त्रस्तद्विष्णोर्गायत्र्येति गायत्रीछन्दस्को वैष्णवो मन्त्रस्तद्विष्णोरितिपाठः, गन्धादित्यादिशब्देन गन्धपुष्पा-क्षतयवकुशाग्रतिलश्वेतसर्षपदूर्वाः, मन्त्रन्यासं ततः कृत्वेति उक्तस्य दशधा प्रणवजपस्यानुवादः, पूर्वोक्तविष्णुगायत्री वा मन्त्रः, पूजाङ्ग-पुरुषसूक्तमन्त्रो वा, प्रोक्षयेन्मण्डलान्तिकमिति, प्रोक्षणं शंखस्थजलस्य जलान्तरेण संस्कारार्थं, मण्डलान्तिकमित्यव-गुण्ठन-स्वरूपकथनाय, मण्डलाकारेण शंखान्तिके चतुरस्रमित्यर्थः, मण्डलं चान्तिकं च यथास्यादिति क्रियाविशेषणं, अर्घ्यसंस्कारान-न्तरमर्घ्योदकेन पूजोपकरणप्रोक्षणं, तन्त्रान्तरसिद्धं कार्य्यं, यद्वार्घ्य-संस्कारस्याप्युक्तस्य दृष्टार्थत्वादर्थक्रमेण वा पाठक्रमवाधात् प्रोक्षयेन्मण्डलान्तिकमिति शंखमुद्रादर्शनानन्तरं सम्बध्यते, तत्र मण्डलं पद्मं तत्पर्य्यन्तं द्रव्यजातं सर्वमर्घ्यं संस्कृत्य प्रोक्षयेदिति सम्बन्धः, पूजयेदासनं तत्रेति, तत्र मानसपूजायां आधारादि-क्रमेणासनपूजा कार्य्या, अर्थात् बाह्यपूजायामप्यनेनैव विधिना आसनपूजेति गम्यते, आसनं पूजयेदिति तत्रापि सम्बन्धात्, आवाहयेदिति तत्रापि सम्बन्धात् आवाहयेदिति हृदये विष्णुं ध्यात्वा नासाद्वारेणावाहनं, नासाप्रवेशेनोद्वासनस्य वक्ष्यमाणत्वात्, आसनपाद्यदानानन्तरं स्वदेवद्वाद्यामृचं न्यसेद्वाम इत्यादिक्रमेण न्यासः, पूर्ववदिति, नारसिंहोक्तपुरुषसूक्तपूजादौत्यर्थः, पुरुषसूक्त

